BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, Nos. 641, 672, 686, 696, 705, 712, 757, 770, 796, 816 and 828.

# THE MADANA PÁRIJÁTA

## A SYSTEM OF HINDU LAW

BY

MADANAPÁLA

EDITED BY

PANḌIT MADHUSÚDANA SMṚITIRATNA

*Professor, Sanskrit College, Calcutta.*

CALCUTTA:

PRINTED BY ŚAŚIBHÚSHAṆA BHAṬṬÁCHÁRYYA,
AT THE GIRIŚA-VIDYÁRATNA PRESS,
24, GIRIŚA-VIDYÁRATNA'S LANE,
UPPER CIRCULAR ROAD,
AND PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL,
57, PARK STREET.

1893.

# विज्ञापनम् ।

मदनपारिजात-नामधेय-निबन्धोऽयं प्राचीनः अर्व्वाचीनै-र्विख्यातै-र्नानादेशीयैः प्रामाणिकैः वाचस्पति-मिश्र-चण्डेश्वर-रघुनन्दन-मित्रमिश्र-कमलाकर-नन्दपण्डित-प्रभृतिभि-र्ग्रन्थकारैः समादृततयातिप्रामाणिकश्च। परन्तु अस्य कियत्कालावध्य-ध्ययनाध्यापना-विरहतो विलुप्तप्रायत्वं मन्यमानाया आसियाटीक-समितेः संशोधनपूर्व्वक-मुद्राङ्कनाय नियुक्तेन मया राजकीय-पुस्तकालयात् संस्कृत-विद्या-भवनात् श्रीनन्दकुमार-विद्यारत्न-स्वर्गीय-राजपण्डित-वैद्यनाथोपाध्याय-श्रीकेदारनाथ-काव्यतीर्थ रामनाथ-तर्करत्नानां सदनेभ्यश्च आदर्श-पुस्तक-षट्कं संगृहीतम्। तेषाञ्च पुस्तकानां पाठापाठ-विनिर्णयार्थं मूल-वेदसंहिता-स्मृतिसंहिता-पुराणादीन् प्राचीनार्व्वाचीन-प्रामाणिक-मिताक्षरा-हेमाद्रि-पराशरभाष्य-हलायुध-शूलपाणि-रघुनन्दन-निबन्ध-निर्णयसिन्धु-वीरमित्रोदयादीन् निबन्धांश्चालोक्य आदर्शपुस्तकानां परस्परविरोधे तैः संवादिततया पाठं निर्णीय क्वचिन्मूले निवेशितमादर्शान्तरस्य पाठान्तरं निम्ने निवेशितञ्च क्वचित्। क्वचिच्च सुसङ्गततया मूलसंहितादेः ग्रन्थान्तरस्य च पाठान्तरं निम्ने सन्निवेशितम्। अपिच नाना-वेदसंहिताभ्यः संगृह्य प्रयोगसौकर्य्यार्थञ्च सूक्तमन्त्रादयोऽत्र निम्ने निवेशिताः। एवं स्मृतिपुराण-मन्त्रादीनां प्रायेण गूढार्थ-पदानि विषम-पदानि च संस्कृतेन अनूदितानि।

अस्य ग्रन्थस्य प्रणेता धर्म्मशीलः प्रबल-क्षितिपालो मदनपालः । स तु मिताक्षरायाः सुबोधिनी-नामक-टीका-प्रणेतृत्वेन कर्म्मविपाकादि-संग्रह-निबन्ध-कर्त्तृत्वेन च प्रथित-यशसः पण्डित-प्रवरस्य विश्वेश्वर-भट्टस्य साहाय्येन नवभिः स्तवकैर्विभक्तं मदनपारिजाताभिधं निबन्धमभिनिनीतवान् । अपरांश्च आनन्दसञ्जीवन-तिथिनिर्णयसार-यन्त्रप्रकाश-शूद्रधर्म्मबोधिनी-सिद्धान्तगर्भ-स्मृतिकौमुदी-पालनिघण्टु-वैद्यक-नामधेयान् बहून् निबन्धान् निर्म्मितवान् । तस्य दिल्ली-नामक-प्रसिद्धनगर्य्या उत्तरस्यां दिशि महानदी-यमुना-तट-प्रदेशवर्त्तिनी काष्ठेति नाम्ना प्रसिद्धा महानगरी राजधानी आसीत् । सोऽयं प्रसिद्ध-विशुद्ध-राजकुले एकत्रिंशदधिक-चतुर्द्दशशत-विक्रमाब्दे साधारण-नामधेय-प्रथित-भूपात् जातः । तस्य ज्येष्ठ-सहोदरः सहजपालः, पितामहश्च हरिश्चन्द्रः, प्रपितामहो भवपालो, वृद्धप्रपितामहश्च रत्नपालः ।

निबन्धोऽयमस्य बहुदर्शितां सुधीरताञ्च विज्ञापयति स्म । यदिह प्रमादतो मुद्राङ्कनकारदोषतो वा अन्यथा मुद्रितं पतितं विस्मरणाद्वा असन्निवेशितञ्च, तदिदानीं यथामति आद्यन्तमवलोक्य यथास्थानं संस्कृतम् । एवमपि यद्यपि क्वचिद्भ्रमो लक्ष्यते, तथापि प्रथमसङ्कलनमिति विवेकिन क्षन्तव्यं पाठकेनालमिति ।

श्रीमधुसूदन-स्मृतिरत्नस्य ।

# निर्घण्टः ।







# विषयसूची।



## अ

## उ



## ए



## क

## प

## श



## स

---

# ऋष्यादिनामसूची ।



*** । एतच्चिह्नपूर्व्ववर्त्तिसंख्याः पृष्ठाङ्कबोधिकाः ; , एतच्चिह्नपूर्व्ववर्त्तिसंख्याश्च पङ्क्त्यङ्कबोधिका इत्यवगन्तव्यम् ।



## ऋषिनामानि ।

मनुः—११।१९, १२।४, १२।१९, १४।६, १७।४, २०।२, २०।१३, २१।७, २२।५, २४।४, २५।८, २६।३, २७।२२, २९।७, २९।१३, ३०।९, ३२।८, ३४।१, ३५।६, ३६।५, ३७।४, ३७।१५, ३९।४, ४१।११, ४२।६, ४२।८, ४३।१०, ४५।१४, ४६।६, ४७।१, ४७।११, ५०।९, ५१।७, ५३।१०, ५७।२, ६८।१७, ७१।१३, ७८।२, ८४।२, ९५।१०, ९७।१, ९९।१०, १००।३, १००।१२, १०२।४, १०२।१०, १०३।२, १०५।१५, १०६।२, १०९।५, १०९।११, ११४।४, ११७।१९, १२०।३, १२०।१०, १२०।२०, १२३।१२, १२६।३, १३१।१६, १३२।७, १३३।१३, १३५।६, १३६।८, १४३।१०, १४४।१३, १४७।२२, १४८।१४, १५३।४,

मनुः (क्रमागतः)—

१५४।४, १५४।१०, १५५।१, १५५।१८, १५६।२, १५८।४, १५९।२, १६०।२, १६१।१७, १६२।७, १७०।१५, १७५।१५, १८८।१, १८९।१८, १९०।५, १९०।१७, १९२।९, १९३।६, १९५।१७, २०४।५, २०६।१३, २०८।६, २१५।२, २१५।१८, २१६।६, २१६।१८, २१७।१४, २१८।१६, २२०।५, २२१।४, २२२।२, २२४।१७, २२६।३, २२७।४, २२९।१२, २३०।७, २३१।१९, २३३।१२, २४६।१६, २४९।१, २५७।८, २५८।३, २६९।८, २७४।४, २८१।१०, २८२।११, ३०५।१६, ३१५।१७, ३१६।८, ३२१।५, ३२४।१४, ३२७।१, ३२८।१७, ३३५।१६, ३४१।१४, ३४६।१०, ३४७।९, ३५५।५, ३५७।११, ३६०।२, ३६१।१, ३६२।१२, ३७४।५, ३७५।९, ३७७।१, ३८४।९, ३९१।९, ३९३।१२, ३९५।९, ४०५।८, ४०६।१५, ४१५।८, ४२६।१७, ४२७।२, ४२७।८, ४२८।९, ४३१।१४, ४३१।१८, ४३५।१, ४४३।११, ४४६।३, ४४९।५, ४५३।९, ४५८।२, ४६१।१०, ४६८।५, ४६८।१०, ४८३।१९, ४९५।१, ५२०।८, ५२४।१८, ५३६।१४, ५४२।१६, ५४३।१५, ५५०।१३, ५५६।६, ५५७।२, ५५८।१५, ५५९।४, ५६०।११, ५८१।१७, ५८९।३, ५९९।१६, ६०१।५, ६०१।१७, ६०९।४, ६५१।२०, ६५२।६, ६५४।४, ६५५।१३, ६६६।१८, ६६७।११, ६६७।२१, ६७५।८, ६७५।१५, ६७५।१९,

मनुः (क्रमागतः)—

६८२।६, ६८२।११, ६८५।६, ६८६।८, ६८६।१२, ६९१।१८, ७००।६, ७०२।१६, ७०५।१६, ७१०।११, ७१५।९, ७३५।१२, ७४२।२०, ७४६।१०, ७४८।३, ७७४।९, ७८४।१०, ७८६।४, ७८७।१०, ७८८।१३, ७९०।३, ७९७।१५, ८००।१७, ८०१।१९, ८०२।८, ८०९।१२, ८१३।२०, ८१४।१७, ८१५।१६, ८१८।१, ८२२।१७, ८२४।७, ८२५।२, ८२५।८, ८२६।९, ८३६।१, ८३६।१२, ८३७।११, ८४०।९, ८४३।१२, ८४९।५, ८५१।७, ८५९।११, ८५९।२१, ८७१।९, ८७४।१, ८७४।१७, ८७५।१२, ८९१।१८, ९०२।५, ९०५।१, ९०९।४, ९१७।११, ९१८।१६, ९२०।१५, ९२५।१२, ९२७।७, ९३२।४, ९४९।१९, ९५०।६, ९५०।१८, ९५४।१७, ९५७।५, ९६४।१०, ९६६।१२, ९९३।५, ९९४।४

वृद्धमनुः—२९६।१२, २९७।८, ३२९।१, ३२९।१७, ४०५।१३, ४२९।६, ४८७।२०, ५७८।५, ८४०।२

बृहन्मनुः—३८२।४

अत्रिः—१५०।२, ३२९।८, ४७०।१३, ४७१।७, ५७९।४, ९०१।१५, ९८१।१

विष्णुः—२७।१२, २७।१६, ४०।२०, ४२।१२, ४५।१२, ५२।३, १२१।१२, १२२।५, १२२।७, १२६।१२, १२६।१४,

**हारीत: (क्रमागत:)—**

७८२।२०, ८१९।९, ८४५।१३, ८६८।३, ८७९।१२, ९२६।१९, ९३१।१७, ९३४।१७, ९५८।३, ९५९।६, ९६१।२, ९६७।१५

**लघुहारीत:**—६२७।२२

**वृद्धहारीत:**—८३६।४, ८५०।१६

**याज्ञवल्क्य:**—१०।२२, १४।१५, २३।१९, २५।२, ३०।४, ३२।४, ३३।८, ३४।११, ३५।१५, ३६।११, ३८।२, ४१।१६, ४४।८, ५४।१३, ५५।१८, ५७।७, ६१।१५, ७७।१६, ८३।६, ९५।४, ९७।८, ९९।८, १०१।४, १०२।१५, १०४।४, १०८।१७, ११०।१२, ११२।१९, १२०।१७, १२२।८, १३२।२, १४१।१३, १४२।९, १४५।९, १५०।१७, १५५।७, १५६।११, १८८।८, १८९।९, १९०।२, १९३।१, १९५।४, २११।६, २१२।८, २१५।५, २१७।५, २१९।१०, २२१।१, २२१।७, २२९।८, २२९।१५, २३१।२, २३५।६, २४३।४, २४३।६, २४५।१७, २४७।१५, २५२।६, २५३।२, २९०।१८, ३११।१७, ३२६।४, ३२७।७, ३३५।१३, ३३६।२०, ३३७।२, ३४०।१५, ३४६।२, ३४७।१२, ३५०।१८, ३५५।८, ३७३।१४, ३७६।१४, ३७७।९, ३८५।१०, ३८८।१८, ३९१।१६ ३९२।१९, ३९६।१, ३९७।७, ३९७।१७, ३९८।१४, ४०२।८, ४०४।१३, ४०५।१८, ४११।१९, ४२७।१५, ४३१।७, ४३३।१६. ४३६।७, ४३७।१४, ४४५।३, ४४६।१९, ४४९।२, ४५१।४, ४५२।११, ४५३।१५, ४५८।८, ४६२।१६, ४७१।१०, ४७३।६, ४८६।१, ५५९।७,

**याज्ञवल्क्यः (क्रमागतः)**

योगियाज्ञवल्क्यः (क्रमागतः)—
२८४।१२, २८६।८, २९२।७, २९७।१७, २९९।९, ५०५।२१, ७३८।१, ८४३।८

वृद्धयाज्ञवल्क्यः—२१०।२, ३८३।१२, ४०९।१९, ९१९।१५

उशना—१०४।१, २५९।१७, ५६६।११, ६२७।१४, ८७८।१, ८९०।१७, ८९५।१९, ८९६।१६, ९४३।१६

अङ्गिराः—४१।४, ४२।१५, ५७।१६, ३८३।१, ३८९।१९, ४०६।१०, ४०७।२, ४१४।११, ४१७।१७, ४२३।५, ४५०।१६, ५३५।८, ६१७।१, ६१८।१५, ७०४।६, ७११।७, ७१३।९, ७७५।१, ७७७।२, ७७८।९, ७७९।३, ७९१।१, ७९२।२१, ८०२।१३, ८०९।१५, ८१६।८, ८१७।८, ८६८।३, ८६८।७, ९३३।१५

यमः—२८।७, ३७।१४, ४१।१९, ४४।१६, ४६।९, ५१।१६, ५३।९, ५९।४, ७१।२२, ८१।१८, १०२।७, ११८।१४, १२०।१४, १४९।४, १५२।३, २०८।९, २१०।१४, २१९।५, २४९।९, २५४।६, २६२।१७, २६३।१८, २८९।२, ३०५।२, ३०५।१३, ३२७।१०, ३५८।५, ३६०।५, ३६१।४, ३८५।२३, ४३९।२०, ४५२।५, ४६०।७, ४६३।५, ४६६।१७, ४६७।१, ४६९।१३, ४८४।१५, ४८५।८, ५०४।६, ५१७।७, ५४६।५, ५६२।१६, ५६४।२, ५६५।१, ५६७।७, ५६९।७, ५६९।१५, ५७०।२०, ५७३।४, ५८५।१०, ६०३।४, ६२३।१०, ६२४।१, ६९५।२, ७१६।८, ७२१।१२, ७२३।५, ७३२।१५, ७५०।१९,

यमः (क्रमागतः)—

८०१।१२, ८१०।१२, ८३५।४, ८४७।१५, ८६४।७, ८६८।१४, ८७१।३, ८८४।१७, ८९०।६, ९४८।१८, ९५६।११, ९६०।१८

वृद्धयमः—८२२।१३, ८४८।१

आपस्तम्बः—२४।८, २४।१४, २५।१५, ३०।१, ५२।१५, ५९।१, १२७।१०, १३१।५, १३७।३, २४०।१३, ३१०।८, ३१२।५, ३१४।२१, ३२७।३, ३३४।१, ४१५।१६, ४४८।१७,४५४।१६, ४६६।७, ४७४।५, ५४३।१९, ६१९।१२, ६६३।१६, ६७४।२१, ७९४।४, ८६५।८, ८६६।३, ८६८।२०, ८९६।९, ९१३।४, ९३६।४, ९३६।१२, ९३७।३, ९४०।३, ९४६।१, ९६१।९

संवर्त्तः—६५।१, ११७।१, १५०।७, ३७५।१७, ३८२।१७, ४०७।१८, ४१६।११, ४१९।१४, ४५६।१७, ७८८।७, ८२८।१०, ८४३।१६, ८६५।१५, ८८९।४, ९११।१९,९३७।९, ९३९।१

वृहत्संवर्त्तः—८९६।६

कात्यायनः—२३।९, २४।१९, ५६।१५, ६२।७, ६२।१२, ६६।२२, ८६।५, १४२।१५, १५३।१६, १७१।८, १७३।७, १७६।१, २०५।१२, २०६।१६, २०८।१, २३८।८, २४१।३, २५०।९, ३०६।१, ३१०।१५, ३१२।१०,३१४।१७, ४०२।२२, ४८०।४, ४८०।१२, ४९०।२, ४९४।८, ५०१।८, ५४१।१६, ५५२।१, ५६४।१७, ५६८।१, ५७१।१६, ५७५।६, ५८०।७, ५८२।६, ५८५।६, ५८६।१, ५९२।५, ६०२।५, ६१२।१७, ६१७।८,

**कात्यायनः (क्रमागतः)—**

६२४।१८, ६२५।२२, ६१९।१०, ६३२ १४, ६३५।१५, ६३६।२०, ६३८।१५. ६५४।७, ६७१।४, ६७२।७, ६८५।३, ६८५।१९, ८४३।१

**बृहस्पतिः**—२८।१७, ४९।१, ५८।१, ७८।१५, ११७।८, १२४।१६, २१९।१९, २३०।१, २३०।१०, २६१।६. २८१।१९,२८३।१३, ३३३।१६, ४१९।१०, ४२२।११, ४२९।९, ४३२।३, ४४२।१९, ४६४।१३, ४६५ ९, ४७०।१८, ४७१।१७, ५१० १६. ५४५।९, ६११।२०, ६७७।७, ६८०।७, ६८५।१६, ६८६।१, ६९०।३, ८०४।६, ८१६।१७, ८५३।८, ९४८।१५, ९५६।८, ९५७।१४

**पराशरः**—४१।१२, ६८।५, १०१।१६, २३०।१३, २४७।११, २६१।१६, २६२।४, २७३।७, २९६।१, ३५०।४, ४०९।८, ४१३।१८, ४३६।१७, ४५८।१४, ४७८।१५, ७२८।८, ७३५।१७, ७३६।३, ७३६।१२, ७४८।२५ ७५३।१४, ७७६।१२, ८०९।१८, ८५१।१२, ८६६।१०, ८६८।४, ८७०।७, ८९६।३, ९११।२३, ९३३।२१, ९३६।१९, ९३७।१७, ९३९।११, ९५१।१३

**बृहत्पराशरः**—४८।७, ४८।१४, ५३।९

**व्यासः**—३३।१४, ६४।१७, ६६।१२, ६७।७, ६८।१२, ७२।८, ७३।१६, ७४।१०, ९२।१, १०२।१, ११३।६, १२५।५ १७०।१२, २१०।१०, २१७।१८, २४६।१९, २६८।१०, २७०।२, २७८।२०, ३०८।१४, ३१४।१, ३२७।१५, ३३४।२२,

व्यासः (क्रमागतः)—

३३६।१२, ३४४।१, ३५३।२, ३५४।६, ३६२।१, ३८३।७, ४५२।१४, ४५७।१५, ४८२।१२, ४९५।१६, ४९५।२०, ५३४।११, ५४५।२, ५४८।१४, ५७७।१२, ६००।६. ६०९।१५, ६१४।११, ६३१।३, ६८८।३, ८१५।५, ८१९।१५, ८६५।२१, ८६६।१२

शङ्खः—१२।१४, ४६।१२, ५५।४, ६१।१९, ६४।१२, १२१।९, १४०।२, १९५।७, २१७।१०, २३६।१७, २३९।१९, २५७।४, २७०।८, २९६।४, ३२८।८, ३३७।१५, ३५६।११, ३५६।१, ३५७।५, ३५७।८, ३६०।८, ३६४।१३, ३८४।६, ३९९।१०, ४०३।१०, ४३७।४, ४४६।९, ४४८।४, ४४८।१२, ४५१।१६, ४५५।७, ४५६।२२, ४५९।१८, ४६१।१, ४६९।१०, ४८५।१४, ५१९।१, ५५२।४, ५५४।१४, ५६८।१३, ५८९।५, ६०२।८, ६१२।६, ६१४।४, ६२३।१९, ६४७।१८, ६८०।१, ६८४।९, ६९४।१७, ७०।१४, ७३१।१२, ७३७।२, ७४२।१७, ७४६।६, ७४९।१७, ७५०।४, ७८०।१३, ७८१।४, ७८८।१९, ७९१।१५, ७९७।११, ८२४।१६, ८२७।१३, ८७९।१६, ८८७।१३, ९३४।९, ९४२।१०, ९५९।२२, ९६१।१३

बृहच्छङ्खः—५४।१९

लिखितः—२९।१५, ३५६।७, ३६१।७, ३६१।१०, ४५५।४, ७३३।१८, ८३६।१५, ९४६।१४

दक्षः—४४।१३, ४५।२१, ४६।९, ४७।९, ४८।१, ५३।४, ५४।७,

दक्षः (क्रमागतः)—
६२।१५, ९६।१२, १००।८, ११२।१६ २११।१५, २१२।२, २२७।१३, २८९।६, ३६६।१९, ९८९।११

गौतमः—२०।५, २९।९, ३४।१६, ३८।१९, ५३।१२, ९६।१५, ११४।१, ११८।११, २३०।१८, ३१३।१०, ३३५।२०, ३३९।६, ३६४।५, ३९३।६, ३९७।१२, ४०२।२, ४०६।१४, ४१५।११, ४३९।१, ४५८।१२, ४७१।१५, ५१८।९, ६१६।१४, ६६५।८, ६६६।१४, ६६८।१३, ६७५।१४, ६८७।१, ७०२।२०, ७०८।१२, ७११।११, ७१६।५, ७६०।६, ७८७।१४, ७८९।३, ८२३।७, ८२७।८, ८८७।२, ९५८।१९, ९६४।१८, ९६६।१६

वृद्धगौतमः—५३७।१९

शातातपः—२३।६, २८।१०, ४५।३, ४६।५, ४९।१२, ७९।११, १५४।१३, १७०।१७, २६०।१७, २६१।११, २७४।८, २७४।१२, २८३।१६, २८४।१५, ३१२।१, ४३५।१९, ४३९।६, ४३९।१०, ४६०।१६, ४६६।१४, ४९१।१, ४९५।१३, ५१८।१९, ५४४।२०, ५७९।६, ६०३।२१, ६२३।१५, ६२४।१०, ६३२।५, ७८७।७, ९५४।१३, ९९४।१०

वृद्धशातातपः—४००।१, ५७७।१६, ६२४।१५, ७७८।४, ९२४।५

वसिष्ठः—१२।१७, २०।९, २७।१, ३५।३, ३६।२, ३८।६, ३८।१५, ७६।१७, ७९।७, ९८।१, ९८।५, ११७।११, १२७।६, १३९।१, १३९।६, १४१।७, १५३।८, १७१।३, २२५।१९, २५२।३, ३१७।१५, ३२२।१२, ३३०।१७, ३४३।१६, ३४८।७,

जैमिनिः—३५३।११, ३८२।१२
वैजवापः—३५३।१८, ३५७।१
अगस्त्यः—५४७।११

---

## संग्रहकारनामानि।

नारायणः—६८।१७, ७१।१०, ७२।१२, ५६५।८
गाङ्गेयः—८६।७, ८६।१०
यज्ञपार्श्वः—५४३।२१, ५७६।३
ग्रह्यकारः—५८६।८
शिवस्वामी—६१८।१०
सुरेश्वरः—१७।२०, ११४।१२, १८६।१२, ३५८।११
मण्डनमिश्रः—१८३।७, १८५।१४
सङ्ग्रहकारः—२१।११
भाष्यार्थसङ्ग्रहकारः—५८४।११, ५८५।६

---

## श्रुतिग्रन्थनामानि ।



—

## स्मृतिग्रन्थनामानि ।



—

# संग्रहग्रन्थनामानि ।



---

## पुराणनामानि।

४७६।१, ५४३ ३, ६१८।७, ६२०।१८, ६२६।१५, ७९०।१२, ७९३।१०, ८०१।१, ८०२।३, ८०३।१६, ८१६।१०, ८३१।११

भविष्योत्तरपुराणम्—८७।१०, ९०।२

लिङ्गपुराणम्—५३५।१, ५३८।१०

स्कान्दपुराणम्—७९।१९, १२३।३, १९३।१७, २०५।९, २९६।९, ३०३।३, ४९५।११, ५०४।९, ६२३।१६, ८७८।१०

गरुड़पुराणम्—३०२।१८

ब्रह्माण्डपुराणम्—६९।७, १०५।६, २५५।९, २७९।५, २७९।८, ३२२।२२, ५१५।१६, ५२५।१०, ५२६।२२, ५५५।७, ५६५।१६, ५६७।१८, ५७१।१४

मत्स्यपुराणम्—१३।९, २६४।१, ३०८।१७, ३७५।४, ५२५।७, ५३४।१८, ५३७।३, ५४०।८, ५४०।१३, ५५८।७, ५६८।८, ५७५।१०, ६१२।९, ६२१।१२

कूर्मपुराणम्—७४।३, २०६।९, २५८।२३, २७२।१३, २८२।४, २८४।१५, २८६।१९, ३०९।६, ३१२।१३, ८७८।१४

वराहपुराणम्—२१०।५, ५६१।२, ६११।११

नरसिंहपुराणम्—२११।१२, २९८।१, ३०१।१

वामनपुराणम्—६२।१८

आदिपुराणम्—४८।४, ३३३।११, ४४९।११, ४५६।१४, ५५२।१२

आदित्यपुराणम्—४७।२०, ३३१।३

देवीपुराणम्—१२२।१, ३०४।७

कालिकापुराणम्—९०।५, २२८।३

## अन्यान्यग्रन्थनामानि ।



---

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 641.



# मदनपारिजातः ।

# THE MADANA PÁRIJÁTA

EDITED BY

PAṆḌIT MADHUSÚDANA SMṚITIRATNA

*Professor, Sanskrit College, Calcutta.*

FASCICULUS [illegible]




CALCUTTA:

PRINTED BY ŚAŚIBHÚSHAṆA BHAṬṬÁCHÁRYYA, AT THE GIRIŚA-VIDYÁRATNA PRESS,

24, GIRIŚA-VIDYÁRATNA'S LANE, UPPER CIRCULAR ROAD.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1887.

**LIST OF BOOKS FOR SALE**

AT THE LIBRARY OF THE

**ASIATIC SOCIETY OF BENGAL**

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS.**

**TRÜBNER & CO.**

**57 AND 59, LUDGATE HILL, LONDON, E. C.**

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Átharvaṇa Upanishads, (Sanskrit) Fasc. I—V @ /6/ each .. Rs. | 1 | 14 |
| Áśvaláyana Gṛihya Sútra, (Sans.) Fasc. II—IV @ /6/ each .. | 1 | 2 |
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /6/ each .. .. | 5 | 4 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /6/ each | 1 | 14 |
| Aphorisms of Śáṇḍilya, (English) Fasc. I .. .. .. | 0 | 6 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III, V—XIII @ /6/ each .. | 3 | 12 |
| Ashṭasáhasriká Prajnápáramitá, Fasc. I—III @ /6/ each .. .. | 1 | 2 |
| Áśvavaidyaka, (Sans.) Fasc. I—III @ /6/ each .. .. | 1 | 2 |
| Brahma Sútras, (English) Fasc. I .. .. .. .. | 1 | 2 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /6/ each .. .. .. | 0 | 12 |
| Bṛihad Áraṇyaka Upanishad, (Sans.) Fasc. VI, VII & IX @ /6/ each | 3 | 0 |
| Ditto (English) Fasc. II—III @ /6/ each .. .. | 1 | 2 |
| Bṛihat Saṃhitá, (Sans.) Fasc. II—III, V—VII @ /6/ each .. .. | 0 | 12 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /6/ each .. | 1 | 14 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11 ; II, I—25 ; III, 1—XVII @ /6/ each Fasc. .. .. .. .. | 0 | 12 |
| Chhándogya Upanishad, (English) Fasc. II .. .. .. | 19 | 14 |
| Daśa Rúpa, (Sans.) Fasc. II—III @ /6/ each .. .. .. | 0 | 6 |
| Gopatha Bráhmaṇa (Sans. & Eng.) Fasc. I and II @ /6/ each .. | 0 | 12 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /6/ each .. | 0 | 12 |
| Hindú Astronomy, (English) Fasc. I—III @ /6/ each .. | 4 | 8 |
| Institutes of Paráśara .. .. .. .. | 1 | 2 |
| Kátantra, (Sans.) Fasc. I—VI @ /12/ each .. .. .. | 0 | 6 |
| Kathá Sarit Ságara, (English) Fasc. I—XIV @ /12/ each .. .. | 4 | 8 |
| Kála Mádhava, (Sans.) Fasc. I—III, @ /6/ each .. .. | 10 | 2 |
| Kauśítaki Bráhmaṇopanishads, Fasc. II .. .. | 1 | 2 |
| Kúrma Puráṇa, (Sans.) Fasc. I—IV @ /6/ each .. .. .. | 0 | 6 |
| Lalita Vistara, (Sans.) Fasc. II—VI @ /6/ each .. .. | 1 | 8 |
| Ditto (English) Fasc. I—III @ /12/ each .. .. | 1 | 14 |
| Madana Párijáta, (Sans.) Fasc. I. @ /6/ .. .. .. | 2 | 4 |
| Manutíká Saṅgraha, Fasc. I—II @ /6/each .. .. | 0 | 6 |
| Mímáṃsá Darśana, (Sans.) Fasc. II—XIX @ /6/ each .. .. | 0 | 12 |
| Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /6/ each .. .. | 6 | 12 |
| Nyáyavártikam, Fasc. I .. .. .. .. | 1 | 8 |
| Nrisiṃha Tápaní, (Sans.) Fasc. I—III @ /6/ each .. .. | 0 | 6 |
| Niruktá, (Sans.) Vol. I, Fasc. 1—6 ; Vol. II, Fasc. 1—6 ; Vol. III, Fasc. I—6 ; Vol. IV, I—IV @ /6/ each .. .. | 1 | 2 |
| Nárada Pancharátra, (Sans.) Fasc. IV @ /6/ each .. .. | 8 | 4 |
| Nárada Smṛiti (Sans.) Fasc. I & II @ /6/ each .. .. | 0 | 6 |
| Nyáya Darśana, (Sans.) Fasc. III @ /6/ each .. .. | 0 | 12 |
| Nítisára, or, The Elements of Polity, By Kámandaki (Sans.) Fasc. II—V | 0 | 6 |
| Pariśishṭaparvan, (Sans.) Fasc. I—IV @ /6/ each .. .. | 1 | 8 |
| Pingala Chhandaḥ Sútra, (Sans.) Fasc. II—III @ /6/ each .. .. | 1 | 8 |
| Prithiráj Rásau, (Hindí) Fasc. I—VI @ /6/ each .. .. | 0 | 12 |
| Ditto (English) Fasc. I .. .. .. | 2 | 4 |
| Páli Grammar, (English) Fasc. I and II @ /6/ each .. .. | 0 | 12 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I .. .. | 0 | 12 |
| | 1 | 8 |

(Continued on the third page of cover.)

# मदनपारिजातः ।

———

## प्रथमः स्तवकः ।

प्रवालाद्रिप्रख्यद्युतिनिचयपर्य्यायवपुषे
नमो विघ्नश्रेणीविघटनपटिष्ठाय महसे ।
जगत्प्रादुर्भावस्थितिलयनिरायासरचना-
विनोदासक्ताय प्रणतफलसिद्धिप्रतिभुवे ॥ १ ॥
प्रकृष्टचलकुण्डलस्तवकघृष्टगण्डस्थलं
महार्हमणिमेखलं मरकताङ्कुरश्यामलम् ।
करोतु करुणां सदा कलितपञ्चबाणक्रमं
महः किमपि मोहनं कपटशैशवं केशवम् ॥ २ ॥
कान्ते कृतागसि रुषा परुषं ब्रुवाणा
कुण्ठीकृतात्मवसनार्द्धनियन्त्रणेन ।
मौलेन मानमधिगच्छति या ददातु
सा पार्व्वती हरविभक्ततनुः शिवं वः ॥ २ ॥
अस्ति प्रशस्तविभवोपगतप्रशस्ति-
विस्तारिणी भुवि शकाधिपराजधानी ।
दिल्लीति विश्वविदिता नगरीमतल्ली
पल्लीव भाति पुरतस्त्रिदिवोऽपि यस्याः ॥ ४ ॥

तामुत्तरेण यमुनातटदेशनिष्ठा
काष्ठेत्यभूदनुपमा नगरी गरिष्ठा ।
यस्यामनन्यविभवोपचिता बभूवुः
काष्ठान्वया महितकीर्त्तियुतो महीशाः ॥ ५ ॥
तस्मिन्नभूद्विमलकाष्ठकुलाम्बुराशे-
रुदयभूतशुभकीर्त्तिघनप्रकाशः ।
लोकैः सदा हृदि धृतो गुणसन्निविष्टः
श्रीरत्नपालनृपतिर्भुवनैकरत्नम् ॥ ६ ॥
तस्यात्मजो भवनपाल इति प्रसिद्धः
सिद्धाङ्गनाजनसमाजसमिद्धकीर्त्तिः ।
दानेन यः सुकृतिनां क्षिपति स्म दैन्यं
सैन्यञ्च वैश्वसदृशः प्रतिभूपतीनाम् ॥ ७ ॥
सुतोऽस्य जातः सुकृतीसतस्य
न तस्य कश्चित्सदृशो बभूव ।
यमस्खलत्सत्यमवेक्ष्य तातो
नाम्ना हरिश्चन्द्र इति व्यधत्त ॥ ८ ॥
सत्यान्वितो हरिरतो गिरिजेशयोगी
लक्ष्मीयुतो जगति वर्णचतुष्टयेन ।
वर्ण्यान्वयः स तु हलाविधया* प्रतीत-
स्तन्नावतेरमराः पुरुषाः पवित्राः ॥ ९ ॥

---

* कृषिव्यापारेण ।

महीपतेस्तस्य महानुभावौ
सुतावभूतां सुकृतोन्नतस्य ।
आद्यो महौजाः सहजेन्द्रनामा
तदाश्रयः श्रीमदनो द्वितीयः ॥ १४ ॥
अपारदः सिद्धरसो जनाना-
मनभ्रवृष्टिर्विभवौषधीनाम् ।
अनन्तको मृत्युरहो रिपूणा-
मासीदसौ श्रीसहजाधिनाथः ॥ १५ ॥
तस्यानुजः श्रीमदनो नु नाम्ना
धाम्ना च रूपेण च सङ्गतार्थः ।
रोषारुणे चक्षुषि यद्विपक्षो
नितान्तकान्तारसमाश्रितोऽभूत् ॥ १६ ॥
विश्राणनेषु व्यसनं यदीयं
विद्याप्रसङ्गेषु विनोदसौख्यम् ।
यस्यावदातस्य यशोवितानं
दिग्मण्डलीमण्डलमेकमास्ते ॥ १७ ॥
परिशीलयता कलाकलापं
विदधानेन च भूरिशः प्रबन्धान् ।
मदनेन महीभृताथ येन
प्रथिता नूतनभोजराजकीर्त्तिः ॥ १८ ॥
यः कूपानारामान्धर्म्मायतनानि सन्निबन्धांश्च ।
कृत्वा स्वकीर्त्तिमेकामदीदृशन्मूर्त्तिभेदेन ॥ १९ ॥

श्रीमानयं मदनपूर्व्वकपारिजात-
नामाङ्कितं स्मृतिपथानुगतं निबन्धम् ।
वर्णाश्रमप्रमुखधर्म्मविवेचनायं
विद्वन्मुखेन सुजती मितमातनोति ॥ २० ॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमिया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥ २१ ॥
माता पुण्यपवित्रकीर्त्तिविभवा यस्याम्बिका नामतः
सा कन्या परमूर्त्तिराय्यचरितः श्रीपेद्दिभट्टः पिता ।
सोऽयं कौशिकवंशभूषणमणिः श्रीभट्टविश्वेश्वरो
वेदस्मार्त्तमते नये च सपदे वाक्ये कृती वर्त्तते ॥ २२ ॥
हेमाद्रिकल्पद्रुमसापरार्क-
स्मृत्यर्थसारान् स्मृतिचन्द्रिकाञ्च ।
मिताक्षरादीनवलोक्य यत्ना-
न्निबध्यते संग्रहतो निबन्धः ॥ २३ ॥
स्तवकः प्रथमो ह्यत्र ब्रह्मचर्य्याभिधोऽपरः ।
गृहस्थाख्यस्तृतीयः स्यादाह्निकं तदनन्तरम् ॥ २४ ॥
गर्भाधानादिसंस्कारास्तुरीयस्तवको मतः ।
अशौचस्तवकः पश्चात् द्रव्यशुद्धादयो मताः ॥ २५ ॥
सप्तमः श्राद्धसंज्ञो हि विभागाख्योऽष्टमस्ततः ।
नवमस्तवकश्चात्र प्रायश्चित्ताभिधो मतः ॥ २६ ॥

स्तवका नव निर्द्दिष्टा निबन्धेऽस्मिन्ननुक्रमात् ॥ २७ ॥
स्मृतिप्रदर्शनं कर्म्मप्रशंसा तदनन्तरम् ।
धर्म्माः साधारणाः कालादयो मौञ्जीविधिर्विधिः ॥ २८ ॥
नमस्कारस्य गुर्व्वादिलक्षणानि ततः परम् ।
भिक्षाचर्य्याप्रकारादिनियमा ब्रह्मचारिणः ॥ २९ ॥
उच्चारस्य विधिः शौचविधिश्चाचमनस्य च ।
प्रातःस्नानस्य सन्ध्यायाः प्राणायामस्य चैव हि ॥ ३० ॥
मार्जनादिविधिः सन्ध्या मध्याह्नस्य तथापरा ।
जपसंख्याविधानाद्या उपाकर्म्म ततः परम् ॥ ३१ ॥
उत्सर्जनं तथा वेदव्रतान्यध्ययने विधिः ।
ततः परमनध्यायाः कुले वासो गुरोस्ततः ॥
नैष्ठिकस्य तथा धर्म्माः समावर्त्तनमेव च ।
स्नातकस्य व्रतादीनीत्येवं प्रकरणानि तु ॥
स्तवके ब्रह्मचर्य्याख्ये प्रथमे सप्तविंशतिः ।
सापिण्ड्यवर्णनं पश्चाल्लक्षणानि वरस्य च ॥
दारानुकल्पो दत्तस्य निरूपणमतः परम् ।
विवाहभेदास्त्वाधानमावसथ्यानलस्य च ॥
आवसथ्यस्य कालाद्या गौणकालनिरूपणम् ।
द्विरागमनकालश्च ततः स्याद्दाधिवेदनम् ॥
स्त्रीधर्म्माश्च द्वितीयेऽस्मिन् स्तवके गृहमेधिनः ।
एवं प्रकरणान्येकादशाख्यातानि संग्रहात् ॥
ब्राह्मे मुहूर्त्ते कर्त्तव्यं ततः स्याद्दन्तधावनम् ।

केशप्रसाधनाद्याश्च पोष्यवर्गस्य चिन्तनम् ॥
वृत्तिः क्षत्रस्य वैश्यस्य शूद्रवृत्तिस्ततः परम् ।
आयवृत्तिश्च मध्याह्ने स्नानं नैमित्तिकं तथा ॥
काम्यस्नानं ततः प्रोक्तं माघस्नानविधिस्ततः ।
मलापकर्षणस्नानं क्रियास्नानमतः परम् ॥
गौणस्नानानि वासांसि तिलकस्य विधिस्तथा ।
ब्रह्मयज्ञविधानञ्च तर्पणं यमतर्पणम् ॥
अर्च्चनं देवतानाञ्च पुण्याध्यायस्तथैव च ।
नित्यश्राद्धमहायज्ञस्वरूपाणि ततः परम् ॥
नित्यश्राद्धं ततो वैश्वदेवं तत्पाकनिर्णयः ।
तत्कालनिर्णयः पूजा चातिथेर्भोजने विधिः ॥
भोज्याभोज्यं तथा भोज्याभोज्यान्नाः शयने विधिः ।
एवं प्रकरणान्यत्र द्वाविंशत्याह्निकाह्वये ॥
तृतीये स्तवके सम्यग्वर्णितानि यथाक्रमात् ।
ऋतुकालस्तथा गर्भाधानं पुंसवनं ततः ॥
सीमन्तोन्नयनं जातकर्म्म स्यान्नामकर्म्म च ।
ततो निष्क्रमणाख्यस्य संस्कारस्य विधिः स्मृतः ॥
कर्णवेधस्तथैवान्नप्राशनं चौड़कर्म्म च ।
स्त्रीसंस्कारास्ततो विद्यारम्भो वैखानसाश्रमः ॥
तुर्य्याश्रमस्तुरीयेऽस्मिन्नेवं प्रकरणानि तु ।
गर्भाधानादिसंस्कारास्तवके दश पञ्च च ॥
शावाशौचन्तु पूर्व्वं स्यात्सवाशौचमेव च ।

अशौचमनुपेतस्य दशाहप्रमुखास्ततः ॥
अनुलोमसपिण्डस्य त्वशौचं स्यादतः परम् ।
समानसलिलानाञ्च प्रोषितोपरतौ तथा ॥
मृतस्य प्रोषितस्यैव दाहे विधिरतः परम् ।
उपाध्यायाद्युपरतौ चैत्रजादिमृतौ तथा ॥
अनुगच्छन्तु वाशौचमशौचानां परस्परम् ।
सङ्करे निर्णयो दाहकालेऽग्नौ विरते विधिः ॥
दशाहमध्ये दर्शस्य सम्पाते कल्पनिर्णयः ।
देशान्तरे गते जीवद्वार्त्तानाकर्णने विधिः ॥
एवं प्रकरणान्यत्र स्तवके दश पञ्च च ।
पञ्चमे च विनिर्दिष्टान्यशौचपदसंश्रिते ॥
शुद्धिः सौवर्णपात्रादेर्वस्त्रादेस्तदनन्तरम् ।
धान्यादेश्चापि शुद्धिः स्यात्लिन्नान्नादेस्ततः परम् ॥
भूम्यादेश्च ततः शुद्धिरपवादस्तथेति षट् ।
षष्ठेऽस्मिंस्तवके द्रव्यशुद्धौ प्रकरणानि तु ॥
आदौ श्राद्धस्य महिमा तत्स्वरूपञ्च तद्भिदा ।
तत्राधिकारिणस्तद्वदामश्राद्धाधिकारिणः ॥
श्राद्धदेशास्तथा काला अन्वाधानस्य चैव हि ।
अन्वाधानस्य पिण्डादि पितृयज्ञस्य चाप्यथ ॥
दर्शश्राद्धस्य चैत्येषामेकस्मिन्वासरे कृतिः ।
अपराह्णस्य समय अमावास्याविनिर्णयः ॥
मृताहकालस्तस्यैवाज्ञाने कालविनिर्णयः ।

आमश्राद्धस्य कालश्च नित्ये नैमित्तिके तथा ॥
प्रत्याम्नातं श्राद्धयोश्च ततश्चापरपक्षिकम् ।
काम्यकालाश्च संक्रान्तिकाला राहुग्रहे तथा ॥
काला युगादिमन्वाद्याः श्राद्धे जीवत्पितुस्तथा ।
विहितानि निषिद्धानि मलमासे ततः पुनः ॥
हविर्विशेषा वर्ज्ज्यानि ब्राह्मणानां परीक्षणम् ।
पङ्क्त्यग्रा ब्राह्मणास्तेषामनुकल्पस्ततः परम् ॥
वर्ज्ज्या विप्रा ब्राह्मणानामामन्त्रणविधिस्ततः ।
दिने श्राद्धस्य पूर्व्वाह्णे ज्ञात्वा यथापराह्णिकम् ॥
अग्नौकरण्यग्निमीमांसा तथाग्नौकरणे विधिः ।
परिवेशनकर्म्मादि श्राद्धं द्विपितृकस्य च ॥
सङ्कल्पसंज्ञकं श्राद्धमेकोद्दिष्टमतः परम् ।
नवश्राद्धानि तद्वच्च सपिण्डीकरणं ततः ॥
वृद्धिश्राद्धविधानञ्च जीवच्छ्राद्धमतः परम् ।
इत्थं प्रकरणान्येकचत्वारिंशदनुक्रमात् ॥
श्राद्धाह्वये सप्तमेऽस्मिंस्तवके तु समासतः ।
आदौ विभागकालाः स्युर्मुख्यगौणसुतास्ततः ॥
विजातीयसुतानाञ्च विभागस्तदनन्तरम् ।
पैतामहधने पौत्रभागमात्रांशसम्मितिः ॥
असुतस्त्रीधनग्राहे त्वधिकारिनिरूपणम् ।
तथापुत्रधनग्राहे भागः संसृष्टिनां ततः ॥
अंशानर्हास्ततो द्रव्यमविभाज्यमतः परम् ।

शेषः सर्व्वविभागस्थेत्येवं प्रकरणानि तु ॥
एकादशास्मिंस्तवके दायभागपदेऽष्टमे ।
पूर्व्वं पापफलोद्देशो नरकास्तदनन्तरम् ॥
विपाकः कर्म्मणां प्रायश्चित्तकर्त्तव्यनिर्णयः ।
कामाकाममहापापप्रायश्चित्तविकल्पनम् ॥
कृच्छ्रचान्द्रायणादीनां लक्षणानि पृथक् पृथक् ।
इतिकर्त्तव्यता तेषां प्रत्याम्नायास्तथैव च ॥
सामान्येन तथा सर्व्वपापनिष्कृतिहेतवः ।
पर्षत्पर्षदुपस्थानं प्रायश्चित्ते विनिर्णयः ॥
व्रतस्य ग्रहणे कालो विप्रशस्तग्रहे तथा ।
उद्देशः पातकानाञ्च ब्रह्महत्यादिनिष्कृतिः ॥
उपपातकनिर्द्देशस्तन्निष्कृतिरतः परम् ।
असत्प्रतिग्रहादीनां निष्कृतिस्तदनन्तरम् ॥
जातिभ्रंशकरादीनां निष्कृतिश्च ततः परम् ।
प्रकीर्णकेषु पापेषु प्रायश्चित्तमिति क्रमात् ॥
एवं प्रकरणान्येकविंशतिर्नवमे पुनः ।
प्रायश्चित्ताभिधानेऽस्मिंस्तवके तु समासतः ॥

धर्म्मशास्त्रप्रवृत्तानां तदधिगमोपायतया तच्छास्त्रप्रणेतारः प्रदर्शनीयाः ।

तत्र मनुर्वै यत्किञ्चिदवदत्तद्भेषजम्भेषजताया इति मनोर्वेदाहृतत्वेन तत्प्रमुखा धर्म्मशास्त्रप्रणेतारः प्रथमं प्रदर्श्यन्ते ।

तत्र याज्ञवल्क्यः ।

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः॥

इति, नेयं परिसंख्या किन्तु प्रदर्शनार्थमेतत्, यतो बौधायनादयोऽपि धर्म्मशास्त्रप्रयोजका भवन्ति। न चैतेषां मन्वादिधर्म्मशास्त्राणां वेदमूलत्वेन परस्परमनपेक्षप्रमाणत्वादन्योऽन्यमाकाङ्क्षा तत्र च क्वचिदधिकाङ्गकर्म्मविधिः क्वचित् न्यूनाङ्गकर्म्मविधिरिति परस्परविरोधादप्रामाण्यप्रसङ्ग इति चेत्। नैवं, सर्व्वशाखाप्रत्ययमेकं कर्म्म इति न्यायेन सर्व्वत्र विधेयस्य कर्म्मण एकत्वेन प्रधानविरोधाभावादङ्गेषु प्रातीतिको यः परस्परविरोधस्तत्परिहारो मृग्यः। स च परिहार आकाङ्क्षावशात्, आकाङ्क्षा चेतिकर्त्तव्यतायां, सा चेतिकर्त्तव्यता यस्मिञ्छास्त्रे न्यूना तच्छास्त्रं स्वावगतार्थेऽनपेक्षप्रमाणमप्यनवगतांशे शास्त्रान्तरमपेक्षत इति नात्यन्तमनपेक्षा, अतएवाविरोधान्नाप्रामाण्यम्। एवं समग्राङ्गकर्म्मानुष्ठिते धर्म्मोऽपि समग्रो भवेत्। धर्म्माच्चेष्टसिद्धिः। धर्म्मश्चाचारायत्तः।

तथाच मनुः।

आचारः परमो धर्म्मो विद्वद्भिः परिकीर्त्तितः। इति।

अत्र कार्य्यकारणयोरभेदोपचारः। धर्म्मस्तज्जन्यं सुकृतापूर्व्वम्।

तथा।

श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः ।
तमाचारं निषेवेत धर्म्मकामो जितेन्द्रियः ॥ इति ।

आचारश्च मध्यदेशादिप्रसूतेभ्यो विज्ञेयः ।

यथाह मनुः ।

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥
तस्मिन्देशे य आचारः पारम्पर्य्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ।

विनशनं सरस्वत्या अन्तरालदेशः ।

प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥
आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः ॥ इति

शङ्खस्तु प्रकारान्तरेणार्य्यावर्त्तमाह ।

कृष्णमृगो यावद्विचरति तावदार्य्यावर्त्तः स्यादिति ।

यावद्विचरति स्वत इत्यर्थः ।

आर्य्यावर्त्त इत्यनुवृत्तौ वशिष्ठोऽपि ।

यावद्वा कृष्णमृगो विचरतीति ।

अन्यच्च मनुराह ।

कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥

अनन्तर ईषदून इत्यर्थः ।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व्वमानवाः ॥
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ॥

तथा ।

एवमाचारतो दृष्ट्वा धर्म्मस्य मुनयो गतिम् ।
सर्व्वस्य तपसो मूलमाचारं जगृहुः परमिति ॥

## अथ कर्म्मप्रशंसा ।

तत्र मत्स्यपुराणम् ।

ज्ञानयोगसहस्राद्धि कर्म्मयोगः प्रशस्यते ।
कर्म्मयोगोद्भवं ज्ञानं तस्मात्तु परमं पदम् ॥
कर्म्मज्ञानोद्भवं ब्रह्म न च ज्ञानमकर्म्मणः ।
तस्मात्कर्म्मणि युक्तात्मा तत्त्वं प्राप्नोति शाश्वतम् ॥
वेदोऽखिलो धर्म्ममूलमाचारश्चैव तद्विदाम् ।
अष्टावात्मगुणास्तस्मिन् प्रधानत्वेन संस्थिताः ॥
दया सर्व्वेषु भूतेषु क्षान्ती रक्षातुरस्य च ।
अनसूया तथा लोके शौचमन्तर्वहिर्द्विजाः ॥
अनायासस्तु कार्येषु मङ्गलाचारसेवनम् ।
न च द्रव्येषु कार्पण्यमात्मपार्ज्जितेषु च ॥
तथास्पृहा परस्त्रीषु परार्थेषु च सर्व्वदा ।
अष्टावात्मगुणाः प्रोक्ताः पुराणे चैव कोविदैः ॥

अयमेव क्रियायोगो ज्ञानयोगस्य साधकः ।
कर्म्मयोगं विना ज्ञानं कुत्रचिन्नेह दृश्यते ॥
देवानाञ्च मनुष्याणां पितृणाञ्चैव सर्व्वदा ।
तृप्तिं करोति विपुलां कर्म्म कुर्व्वन्यथोदितम् ॥

## अथ साधारणधर्म्माः ।

तत्र मनुः ।

यद्यत्परवशं कर्म्म तत्तद्यत्नेन वर्ज्जयेत् ।
यद्यदात्मवशं कर्म्म तत्तत्सेवेत यत्नतः ॥
सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥
यत्कर्म्म कुर्व्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्व्वीत विपरीतन्तु वर्ज्जयेत् ॥

यत्कर्म्म कुर्व्वत इति शास्त्राविरुद्धमित्यर्थः । शास्त्राविरुद्धेऽपि क्वचिदपवादो दृश्यते ।

यथाह याज्ञवल्क्यः ।

कर्म्मणा मनसा वाचा यत्नाद्धर्म्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु ॥

तत्र कर्म्म कथं कार्य्यमित्याकाङ्क्षायां सारसंग्रहे ।

यज्ञोपवीतिना कार्य्यं सर्वं कर्म्म प्रदक्षिणम् ।
मनःप्रसादात्सत्योक्त्या तपसा ज्ञानकर्म्मणा ॥
आचान्तोऽप्याचमेच्छुद्धिं कृत्वा कर्म समारभेत् ।

कर्म्मायथाकृतं ज्ञात्वा तावदेव पुनश्चरेत् ॥
प्रधानस्याक्रियायान्तु साङ्गं तत्क्रियते पुनः ।
तदङ्गाकरणे कुर्य्यात्प्रायश्चित्तं न कर्म्म तत् ॥
प्राची दिशामनुक्तौ स्यादुदीचीशानदिक् तथा ।
तिष्ठत्वमकृतानुक्तावासीनत्वञ्च कर्म्मसु ॥
कर्त्रङ्गानां*मनुक्तौ तु दक्षिणाङ्गं भवेत्तथा ।
कुत्सिते† वामहस्तः स्याद्दक्षिणः स्यादकुत्सिते ॥
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
स नाप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः‡ ॥
बह्वल्पं वा स्वगृह्योक्तं यस्य यत्कर्म्म चोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्व्वं कृतं भवेत् ॥
श्रौतेषु सर्व्वशास्त्रोक्तं सर्व्वस्यैवं यथोदितम् ।
स्मार्त्तं साधारणं तेषु ग्राह्यं श्रौतेषु कर्म्मसु ॥
ग्रामाचाराः परिग्राह्या ये च विध्यविरोधिनः ।
युगधर्म्माः परिग्राह्याः सर्व्वैरेव यथोचितम् ॥
देवरेण सुतोत्पत्तिर्वानप्रस्थाश्रमग्रहः ।
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य वै ॥

---

* दक्षिणहस्तादीनाम् ।

† मलप्रक्षालनादौ ।

‡ न साम्परायिकं तस्य दुर्मतेर्विद्यते फलमिति कश्चिदाह ।

समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
कमण्डलुविधारणमिति नैष्ठिकब्रह्मचारी भण्यते ।

महाप्रस्थानगमनं गोपशुश्च सुराग्रहः ।
सुराग्रह इति सौत्रामणी ।

अग्निहोत्रहवण्याश्च लेहो लोचापरिग्रहः ।
अग्निहोत्रहवणी यज्ञपात्रविशेषः, तत्र स्थितस्य हविषो लेहः आस्वादनं चमसस्थितसोमवत् । लोचाया अग्निहोत्रहवण्याः परिग्रहः स्वीकारः ।

असवर्णासु कन्यासु विवाहश्च द्विजातिषु ।
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ॥
वृत्तं यायावरगृहस्थाद्याचारः, स्वाध्यायो वेदः, अघमशौचम् ।

प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् ।
संसर्गदोषः पापेषु मधुपर्के पशोर्वधः ॥
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।
शामित्रञ्चैव विप्राणां सोमविक्रयणं तथा ॥
शमिता यज्ञपशुहिंसकः तस्य कर्म शामित्रम् ।

दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ।
कलौ युगे त्विमान्धर्म्मान्वर्ज्ज्यानाहुर्मनीषिणः ॥
इत्याचारदमाहिंसादानस्वाध्यायकर्म्मणाम् ।
अयन्तु परमो धर्म्मो यद्योगेनात्मदर्शनम् ॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्व्वेषां धर्म्मसाधनम् ॥

## अथोपनयनकालादयः ।

द्विजन्मनामुपनीतानामेव श्रौतस्मार्त्तकर्म्माधिकारात्साधारणधर्म्मानन्तर*मुपनयनकालो निरूप्यते ।

तत्र मनुः ।

गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥

अथ काम्यकालाः ।

ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे इति ।

तथा । सप्तमे ब्रह्मवर्च्चसकाममष्टमे आयुष्कामं नवमे तेजस्कामं दशमे अन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकाममुपनयेदिति ।

तथाच ।

वसन्ते ब्राह्मणमुपनयेद्ग्रीष्मे राजन्यं शरदि वैश्यमिति ।

पारस्करोऽपि ।

ब्राह्मणस्याष्टवार्षिकस्य गर्भाष्टवर्षस्य वा क्षत्रियस्यैकादशवार्षिकस्य वैश्यस्य द्वादशवार्षिकस्य उपनयनं कुर्य्यात् । यथामङ्गलं वा सर्व्वेषामुपनयनमिति ।

यथामङ्गलं पूर्व्वोक्तब्रह्मवर्च्चसादिकामानतिक्रमेण ।

तथा मासविशेषादपि फलविशेषः ।

तत्र सुरेश्वरे ।

---

* साधारणकर्म्मानन्तरमिति पाठान्तरम् ।

माघे मासि महाधनो धनपतिः प्राज्ञो बली फाल्गुने
मेधावी भवति व्रतोपनयने चैत्रे च वेदान्वितः ।
वैशाखे सुभगः सुखी पटुमतिर्ज्यैष्ठे बलिष्ठो बुधः
आषाढ़ेऽपि महाविपक्षविजयी ख्यातो महापण्डितः ॥

तथा नक्षत्रादिविशेषा अपि ।

हस्तत्रये दैत्यरिपुत्रये च
शक्रेन्दुपुष्याश्विनिरेवतीषु ।
वारेषु शुक्रार्कबृहस्पतीनां
हितानुबन्धी द्विजमुञ्जबन्धः ॥

तृतीयैकादशी ग्राह्या पञ्चमी दशमी तथा ।
द्वितीयायाञ्च मेधावी भवेद्दर्पबलान्वितः ॥
रिक्तायामर्थहानिः स्यात्पौर्णमास्यां तथैव च ।
प्रतिपद्यपि चाष्टम्यां कुलबुद्धिविनाशकृत्* ॥
सप्तम्यामष्टम्याञ्च प्रतिपदि रिक्ताचतुर्दश्याम् ।
आयुर्विद्यानाशो व्रतबन्धे पञ्चदश्यां वा ॥
न च षष्ठ्यामथाष्टम्यां पञ्चदश्यां न पर्व्वणि ।
प्रतिपत्सु न कर्त्तव्यो न विष्टिकरणे तथा ॥
रिक्तासु च न कर्त्तव्यस्त्र्यहस्पृग्दिवसे तथा ।
न विपज्जन्मतारासु नैधने प्रत्यरौ तथा ॥
सम्पत्करे तथा क्षेमे साधके मित्रसंज्ञके ।
मित्रं परममित्रञ्च ताराः सर्व्वत्र शोभनाः ॥

---

* कुलबुद्धिविनाशकृदिति पाठान्तरम् ।

मेषे भवति सुरायी धीमान् गवि रोगशोकपरिहीनः।
गद्वाग्मिथुनलग्ने विधुरोऽधीरः कुलीरे च॥
करिकुलवैरिणि बलवान्विद्यावानेव* योषिति क्रूरः।
सुभगः सुखोपभोक्ता तौलिनि कीटे विनाशमुपयाति॥
धनुषि धनाढ्यः श्रेयान्यादसि सघटे घनैः परित्यक्तः।
षट्कर्माभिरतः स्वामीने धनवान् प्रवक्ता च॥
वृषभश्च तुला कन्या ब्राह्मणानामुदाहृताः।
सिंहो धन्वी तथा मीनः क्षत्रियाणां प्रकीर्त्तितः॥
युग्मन्तथा कर्कटको वैश्यानां परिकीर्त्तितः।
कुर्य्याद्बाकालवर्षे च व्रतोपनयनं द्विजः।
नानध्याये न भूकम्पे निर्घाते न गलग्रहे॥

एवंविधे पूर्व्वोक्ते विशिष्टकाले आचार्य्यो माणवकं पूर्व्वं भोजयित्वा कर्म्म समारभते।

तथाच गोभिलः।

प्रगे एवैनं तदहर्भोजयन्ति इति।

प्रगे प्रातःपूर्व्वमित्यर्थः। पूर्व्वता च स्वस्वगृह्योक्ता विज्ञेया।

अपरो विशेषः शौनकेनोक्तः।

अलङ्कृतं कुमारं कुशलीकृतशिरसमाहतेन वाससा संवीतमिति।

कुशलीकृतशिरसं कृतशिरोवपनम्। वस्त्रधारणादिकर्म्मक्रमस्तु

---

* बलवानेवेति पाठान्तरम्।

स्वरूपज्ञोक्तो विज्ञेयः ।

वासांसि च मनुनोक्तानि ।

वसीरन्नानुपूर्व्वेण शाणक्षौमाविकानि चेति ।

आनुपूर्व्वेण वर्णानुपूर्व्वेण ।

गौतमः ।

वासांसि शाणक्षौमचीरकुतपाः सर्व्वेषां कार्पासं वा विकृतमिति ।

चीरं वस्त्रखण्डः ।

वशिष्ठः ।

शुक्लमाहतं वासो ब्राह्मणस्य माञ्जिष्ठं क्षौमञ्च क्षत्रियस्य पीतकौशेयं वैश्यस्येति ।

कौशेयं पट्टविशेषः ।

मौञ्जीलक्षणञ्च मनुराह ।

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्व्वी ज्या वैश्यस्य शणतान्तवीति ॥
मुञ्जाभावे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा इति ।

मौर्व्वी मुर्व्वा तेजनी* तन्मयी ज्या धनुर्गुणः । अत्र च त्रिवृत्त्वं नास्ति ज्याविनाशप्रसङ्गात् । मुञ्जाद्यभावे वर्णक्रमेण कुशाद्या ग्राह्याः । अश्मन्तकाख्यं तृणं तथा वल्वजमपि । ग्रन्थिभेदस्तु मुख्यासु गौणीषु च ।

* धनुर्गुणोपयुक्ता लताविशेषः मुरगा इति ख्याता ।

यज्ञोपवीतलक्षणं छन्दोगपरिशिष्टे ।

त्रिवृदूर्द्ध्ववृतं कार्य्यं तन्तुत्रयमधोवृतम् ।

त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ।

तथा ।

पृष्ठवंशञ्च नाभिञ्च धृतं यद्विन्दते कटिम् ।

तत्कार्य्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥

मनुः ।

कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत् ।

शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रजम् ॥

ऊर्द्ध्ववृतलक्षणमाह

संग्रहकारः ।

करेण दक्षिणेनोर्द्ध्वगतेन त्रिगुणीकृतम् ।

वलितं मानवे सूत्रं शास्त्रे ऊर्द्ध्ववृतं स्मृतम् ॥

ऊर्द्ध्वगतेनोर्द्ध्वस्थितेन दक्षिणकरेण यद्वलितं तदूर्द्ध्ववृतमित्यर्थः ।

उक्तोपवीताभावे देवलः ।

कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् ।

सदाऽसम्भवतो धार्य्यमुपवीतं द्विजातिभिः ॥

क्षुमा अतसी । वल्कं तरुत्वक् । असम्भवतः सार्व्वविभक्तिकस्तसिल् । मुख्यासम्भव इत्यर्थः ।

तथा ।

शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके ।

आवर्त्त्य षण्णवत्या तु त्रिगुणीकृत्य यत्नतः ॥

अविङ्क्तैस्त्रिभिः सम्यक् प्रक्षाल्योर्द्धवृतं त्रिवृत् ।
समदक्षिणमावृत्य सावित्र्या त्रिगुणीकृतम् ॥
ततः प्रदक्षिणावर्त्तं समं स्यान्नवसूत्रकम् ।
त्रिरावेष्ट्य दृढं बद्धा ब्रह्मविष्णुीश्वरान्नमेत् ॥

अजिनान्याह मनुः ।

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः ।

तथा दण्डानपि ।

ब्राह्मणो वैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौडुम्बरौ वैश्यो दण्डानर्हति* धर्मतः ॥

तथा ।

केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः ।
ललाटसम्मितो राज्ञां तथा नासान्तिको विशः ॥
ऋजवस्ते तु सर्व्वे स्युरव्रणाः† सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिता इति ॥

यथासमयञ्च गायत्रीमुपदिशेत्ताञ्च प्रणवव्याहृतिपूर्व्विकां‡ । पादार्द्धर्चशस्ततः सर्व्वामिति । गायत्रीच्छन्दस्कां वेदमातरं सूर्य्यदैवतां महाव्याहृतिपूर्व्विकां ब्राह्मणाय ब्रह्मचारिणे क्षत्रियाय त्रिष्टुप्छन्दस्कां बृहस्पतिदृष्टां सवितृदैवतां देवसवित-

* अर्हन्तीति पाठान्तरम् ।

† छिद्ररहिताः ।

‡ पादौ गायत्र्याः पादं श्रावयित्वतोऽर्द्धं ततः सम्पूर्णामित्यर्थः ।

रित्यादिकां वाजपेयनिर्युक्तां वैश्याय प्रजापतिदृष्टां जगतीच्छन्दस्कां सवितृदेवतां रुक्मपाशमोचने उपाभरणे विनियुक्तां विश्वारूपाणि प्रतिमुञ्च इति तामृचं ब्रूयात्। सर्व्वेषां वा ब्रह्मचत्त्वविशां गायत्रीमेवं ब्रूयात्। गायत्रीच्छन्दस्कां सावित्रीमुक्तलक्षणाम्।

आह शातातपः।

तत्सवितुर्वरेण्यमिति सावित्री ब्राह्मणस्य।

देवसवितरिति राजन्यस्य विश्वारूपाणीति वैश्यस्येति॥

कात्यायनोऽपि।

सावित्र्या ब्राह्मणमुपनयेत्त्रिष्टुभा राजन्यं जगत्या वैश्यं सर्व्वेषां वा सावित्रीति।

आह लौगाक्षिः।

ओं भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीं चिरन्वाह। पच्छोऽर्द्धर्चशः* सर्व्वामन्तत इति।

अथ समिदाधानमुपनयनाङ्गभूतं कर्त्तव्यम्। स्वस्वशाखोक्तविधिना एवं प्रतिदिनमपि अग्निकार्य्यञ्च कुर्व्वीत। मेधावी तदनन्तरमिति संवर्त्तस्मरणात्तदनन्तरं सन्ध्योपासनादनन्तरम्। एतच्च कालद्वयेऽपि कार्य्यम्।

आह याज्ञवल्क्यः।

अग्निकार्य्यं ततः कुर्य्यात्सन्ध्ययोरुभयोरपि इति।

---

* पच्छः पादशः।

केचित्सायमेवेच्छन्ति ।

तथाच लौगाक्षिः ।

सायमेवाग्निमिन्धत इत्येक इति ।

मनुस्तु ।

दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥

दूरादन्यापरिगृहीतदेशादित्यर्थः । विहायसि मञ्चपादौ ।
अन्यपरिगृहीतनिषेधमाह आपस्तम्बः ।

यथाकथञ्चित्परपरिग्रहमभिमन्यते स्तेनो हि भवतीति ।

अत्र विशेषः स्मृत्यन्तरे ।

पुरस्तमयात्प्रागुदीचीं दिशं गत्वा समिध आहरे-
दिति ।

पुरास्तमयादित्यभिधानादस्ते निषेधः ।
अतएवापस्तम्बः ।

नास्तमिते समिद्वरो गच्छेदिति ।

समिन्नियमो वायुपुराणे ।

पालाश्यः समिधः कार्य्याः खादिर्य्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसाविति ॥

समिल्लक्षणं कात्यायन आह ।

नाङ्गुष्ठादधिका कार्य्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना तथा नैव द्विशाखिकेति ॥

# अथाभिवादनम्।

तत्र याज्ञवल्क्यः।

ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन्।

ततोऽग्निकार्य्यादनन्तरमित्यर्थः।

ब्रह्मपुराणे।

उत्थाय मातापितरौ पूर्व्वमेवाभिवादयेत्।
आचार्य्यश्च ततो नित्यमभिवाद्यो विजानता॥

मनुः।

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा।
आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत्॥
अभिवादात्परं विप्रो ज्यायांसमभिवादयेत्।
असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत्॥

भिवादादभिवादय इत्येतस्माच्छब्दात्परममुकनामाहमस्मीति नाम परिकीर्त्तयेत्। विप्रग्रहणं द्विजात्युपलक्षणार्थम्।

आपस्तम्बः।

स्वदक्षिणबाहुं* श्रोत्रसमं प्रसार्य्य ब्राह्मणोऽभिवादयेत्।

---

* ब्राह्मणः स्वदक्षिणबाहुं श्रोत्रसममभिवाद्यस्य कर्णसमानं यथा तथा प्रसार्य्य त्प्राञ्जलिः सन्नभिवादयेत्। एवं क्षत्रियोऽभिवाद्यस्य वक्षःसमानं वैश्यः कटि- मानं शूद्रो नीचैर्मध्यदेशादधःसमानं स्वदक्षिणबाहुं प्रसार्य्य प्राञ्जलिः सन्नभिवादये- दित्यन्वयः।

उरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः प्राञ्जलिः सर्व्वत्र ।

मनुः ।

भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भोःशब्द ऋषिभिः स्मृतः ॥
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरः प्लुतः ॥

भोःशब्दो नाम्नां स्वकीयानां स्वरूपभावः स्वरूपस्य संबोध्यं प्रति प्राप्तिहेतुः । अयमर्थः भोःशब्देन हि बोधितोऽसावस्य नाम बुध्यत इति । अत्र भूधातुः प्राप्त्यर्थः । भो भाव इति पाठे भोःशब्दस्य भावः सत्ता । आयुष्मान् भव सौम्येति वाक्यस्यान्ते अस्याभिवादकस्य नाम वाच्यं विप्रशर्म्मन्निति । तस्य चान्ते अकारो वाच्यः तस्य चाकारस्य पूर्व्वाक्षरः प्लुतः । पूर्व्वाक्षरं प्लुतं छान्दसो लिङ्गव्यत्ययः । यद्यपि पूर्व्वाक्षरं नकारस्तथापि तस्य व्यञ्जनत्वेन प्लुतत्वायोगात् शर्म्मन्नित्यत्र योऽयमकारः स एव पूर्व्वपदाभिधेय इति तस्यैव प्लुतता । पूर्व्वाक्षरं प्लुतमित्यपि पाठः । तत्र पूर्व्वमक्षरं प्लुतमस्येति चतुरस्रम् । अथवा अकारश्चास्य नाम्नोऽन्त इत्यस्यायमर्थः । अस्याभिवादकस्य नाम्नोऽन्ते योऽयमकारः अकार इति स्वरमात्रोपलक्षणं सर्व्वेषां नाम्नामकारान्तत्वनियमाभावात् । स एवान्त्यस्वरः पूर्व्वाक्षरम् । पूर्व्वाणि नामगतान्यक्षराणि यस्य स तथोक्तः एवंविधः प्लुतो वाच्यो न पुनरन्य एवाकारो नामान्ते वा इति ।

तथाच वशिष्ठः ।

आमन्त्रिते स्वरोऽन्त्योऽस्य प्लुत इति ।

आमन्त्रिते कर्त्तव्ये अभिवादकनाम्नोऽन्ते यः स्वरः स प्लुतः त्रिमात्रोभवतीत्यर्थः । तत्राभिवादनप्रत्यभिवादनयोरेवं प्रयोगो भवति । अभिवादये चैत्रनामाहमस्मि भो इति । आयुष्मान् भव सौम्य विष्णुशर्म्मन् इति । अभिवादकस्त्रीयोस्तु वर्म्मगुप्त-शब्दप्रयोगः । यौ तु स्वनाम गुप्तं भवति ।

आत्मनाम गुरोर्नाम नाम कृपणस्य च ।

आयुष्कामो न गृह्णीयाज्ज्येष्ठपुत्रकलत्रयोः ॥

इत्यादिविधिनिषेधौ तयोरभिवादनव्यतिरिक्तं स्थलं विषय इति विज्ञेयम् । एतच्चाभिवादनं हस्तद्वयेन कार्य्यमन्यथा-करणे विष्णुना दोषसंकीर्त्तनात् ।

जन्मप्रभृति यत्किञ्चिच्चेतसा धर्म्ममाचरेत् ।

सर्व्वं तन्निष्फलं याति एकहस्ताभिवादनादिति ॥

एतदपि विद्वद्विषयम् ।

यतः स एवाह ।

अजाकर्णेन विदुषो मूर्खाणामेकपाणिना इति ।

अजाकर्णेन श्रोत्रसमौ करौ कृत्वा पुनः संपुटितेन करद्वयेने-त्यर्थः । अपि वाऽजाकर्णौ सम्पुटितौ यथा तथैव सम्पुटितकर-द्वयमपीत्यजाकर्णोक्तिः । प्रत्यभिवादनेऽपि दीक्षितस्य नाम न ग्राह्यम् ।

तथाच मनुः ।

अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
भो-भवत्-पूर्व्वकं त्वेनमभिभाषेत धर्म्मवित् ॥

भो दीक्षित भवन् दीक्षित इति। भो-भवत्-पूर्व्वकं यौगिकैः शब्दैरेनं प्रत्यभिवादनादिष्वभिभाषेतेत्यर्थः ।

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥

यमः ।

अभिवादे तु यो विप्र आशिषं न प्रयच्छति ।
श्मशाने जायते वृक्षः काककङ्कादिसेवितः ॥

शातातपः ।

पाषण्डं पतितं व्रात्यं महापातकिनं शठम् ।
सोपानत्कं कृतघ्नञ्च नाभिवादेत्कदाचन ॥
धावन्तञ्च प्रमत्तञ्च मूत्रोच्चारकृतं तथा ।
भुञ्जानमाचमनार्हञ्च नास्तिकं नाभिवादयेत् ॥
वमन्तं* जृम्भमाणञ्च कुर्व्वन्तं दन्तधावनम् ।
अभ्यक्तशिरसं चैव स्नातं नैवाभिवादयेत् ॥

बृहस्पतिः ।

जपयज्ञगणस्थञ्च समित्पुष्पकुशानलान् ।
उदपात्रार्घ्यभैक्षान्नं वहन्तं नाभिवादयेत् ॥
उदक्यां सूतिकां नारीं भर्त्तृघ्नीं ब्रह्मघातिनीम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ॥

* रमन्तमिति पाठान्तरम् ।

यमदग्निः ।

देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा चिदण्डिनम् ।
नमस्कारं न कुर्य्याच्चेत्प्रायश्चित्तीभवेन्नरः ॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम् ॥

एतच्चाभिवादनमधिकवयसामेव कार्य्यम् ।

तथाच मनुः ।

ज्यायांसमभिवादयेदिति ।

अतएव गौतमः ।

ऋत्विक्श्वशुरपितृव्यमातुलादीनां यवीयसां प्रत्युत्थानमभिवाद इति ।

ज्यायस्त्वञ्च कियता कालेनेत्याकाङ्क्षायाम्

मनुः ।

दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् ।
त्र्यब्दपूर्व्वं श्रोत्रियाणामल्पेनापि स्वयोनिषु ॥

दशाब्दपर्य्यन्तमाख्यायत इति दशाब्दाख्यं, एवं पञ्चाब्दाख्यमिति घञर्थे कविधानमिति कप्रत्ययः। पुरे भवाः पौराः। एकपुरनिवासिनां विद्याहीनानां दशभिर्व्वर्षैः पूर्व्वः सखा भवति। ततोऽधिकः ज्यायान्। कलाभृतां गीतादिविद्यावतां पञ्चाब्दपूर्व्वः सखा श्रोत्रियाणां त्र्यब्दपूर्व्वस्ततोऽधिको ज्यायान्। स्वयोनिषु भ्रात्रादिषु स्वल्पेनापि कालेन एकदिनपूर्व्वत्वेनापि ज्येष्ठता। एकदिनजातत्वे तु।

तदुक्तमापस्तम्बेन ।

वयस्यः समानेऽहनि जात इति ।

अथ प्रसङ्गाद्गुर्व्वादिलक्षणम् ।

तत्र याज्ञवल्क्यः ।

स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददद्वेदमाचार्य्यः स उदाहृतः ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथापूर्व्वमेभ्यो माता गरीयसी ॥

मनुः ।

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते ॥
एकदेशन्तु वेदस्य वेदाङ्गान्यथवा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥

एकस्यैकदेशं* संहितां† ब्राह्मणं‡ वेदाङ्गमात्रं वा धर्म्मार्थ§-मध्यापयति अपरिभाषितवृत्त्यभिधानेन वा पूर्व्वोक्तमध्यापयति एते त्रयोऽ¶प्युपाध्याया इत्यर्थः ।

---

* वेदस्य ।

† मन्त्रात्मकवेदभागः ।

‡ मन्त्रेतरवेदभागः ।

§ वेतननियममकृत्वा इत्यर्थः ।

¶ मन्त्रमात्रात्मकवेदाध्यापयिता, मन्त्रेतरवेदभागमात्राध्यापयिता, वेदाङ्गमात्रा-ध्यापयिता ।

निषेकादीनि कर्म्माणि यः करोति यथाविधि ।
संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥

विप्रपदं पितुरुपलक्षणम्*, एतचानेवंविधः† पितैव न गुरु-‡
रिति गम्यते ।

अग्न्याधानं पाकयज्ञमग्निष्टोमादिकान् मखान् ।
यः करोति व्रती यस्य स तस्यर्त्विगिहोच्यते ॥

तथा ।

उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता ।
सहस्रन्तु पितुर्म्माता गौरवेणातिरिच्यते ॥
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मजन्मनि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥

ब्रह्मजन्मनि ब्रह्मणो वेदाध्ययनार्थं उपनयनम् । प्रेत्य मोक्षसाधन-पर्य्यन्तयोग्यतापादकत्वात् । इह च सर्व्वकर्म्माधिकारापादकत्वात् शाश्वतं स्थायिफलं भवति ।

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥
ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्म्मतः ॥

---

* क्षत्रियादिजातीयपितुरुपलक्षणम् ।

† यथाविधि गर्भाधानादिकर्म्माकारीत्यर्थः ।

‡ न महागुरुरित्यर्थः ।



विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्य्यतः ।
धनधान्येन वैश्यानां शूद्राणामेव जन्मतः ॥

## अथ भिक्षाचरणम् ।

तत्र याज्ञवल्क्यः ।

आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम् ॥

भैक्षं भिक्षाकदम्बकम् । भिक्षादिभ्यो णः ।

मनुः ।

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥

ईप्सितं यद्यस्य विहितम् । वचनान्तरप्रतिनियतदण्डविधानादनेन विजातीयग्रहणनिषेधः । भास्करं सौरैर्मन्त्रैरुपस्थाय । अग्निं प्रदक्षिणीकृत्य एतत्त्रितयं भिक्षाङ्गं विधाय यथाविधि वक्ष्यमाणविधिना भैक्षं चरेत् ।

भवत्पूर्व्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥

चरेदित्यनेन याच्ञा लक्ष्यते । अमुमेवार्थं द्योतयति । भैक्षमिति कर्म्मविभक्त्या तेन चार्थसिद्धां भिक्षां देहीतिवाक्यरचना । तत्र गौरवसम्बोधनार्थं* भवत्पदमादिमध्यावसानेषु

* भवन् भिक्षां देहि विप्रस्य, क्षत्रियस्य भिक्षां भवन् देहि, भिक्षां देहि भवन् वैश्यस्य ।

ब्राह्मणादिभिः क्रमेण कार्य्यं तच्च सम्बुद्ध्यन्तम्। प्रायशोऽन्यगृहमेधिनां गृहे स्त्रिय एव भिक्षां ददतीति सामर्थ्यात्स्त्रीप्रत्ययवच्च तत्पदं भवति। तत्रायं प्रयोगः। भवति भिक्षां देहीति ब्राह्मणः। भिक्षां भवति देहीति क्षत्रियः। भिक्षां देहि भवतीति वैश्यः। नायं नियमः। स्त्रिय एव भिक्षणीया इति।

अतएवाह शौनकः।

अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीञ्चेति।

भिक्षाचरणे विशेषमाह याज्ञवल्क्यः।

ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये।

आत्मवृत्तये स्वशरीरयात्रार्थमेव नाधिकाम्। यदा त्वाचार्य्यः सीदद्वृत्तिर्नैनादिविकलस्तदा तत्पोषणार्थमपि भैक्षं चरेत्। अन्यथा प्रधानभूतवेदाध्ययनविरोधात्। ब्राह्मणेषु चरेदित्येतद्ब्राह्मणविषयम्।

अतएव व्यासः।

ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम्।
सजातीयगृहेष्वेव सार्व्ववर्णिकमेव चेति॥

सर्व्वशब्दः, प्रकृतवर्णत्रयपरः। नायमैच्छिको विकल्पः, अपि तु व्यवस्थितो विकल्पः।

तथाच भविष्यपुराणे।

सर्व्वं वा विचरेद्ग्रामं पूर्व्वोक्तानामसम्भवे।
अन्त्यवर्ज्जं महाभाग इति॥

अन्त्यः शूद्रः।

उक्तिष्वपि क्वचिदपवादमाह मनुः ।

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ॥
भिक्षेत भिक्षां प्रथमम् ।

इत्यनेन विरोधः स्यादिति चेन्नैवम् । एतदुपनयनाङ्गभिक्षाविषयम् ।* पूर्व्वोक्तं तु नित्यभिक्षाविषयम् । एवं भिक्षां भिक्षित्वा ब्रह्मचारी गुरवे भैक्षं निवेद्य अहःशेषं वाग्यतस्तिष्ठेत् आसीनः शयानो वा भवेत् । ततः सायंसन्ध्यां विधाय यस्मिन्नुपनयनहोमो विहितस्तस्मिन्नेवाग्नौ समिधं स्वग्रह्योक्तप्रकारेणाधाय वाचं विसृजेत् । ततश्च तद्भैक्षं भुञ्जीत ।

तत्र याज्ञवल्क्यः ।

कृताग्निकार्य्यो भुञ्जीत वाग्यतो गुर्व्वनुज्ञया ।
आपोशानक्रियापूर्व्वं सत्कृत्यान्नमकुत्सयन् ॥

अमृतोपस्तरणमसीत्यादिना आपोशानक्रिया तां पूर्व्वं कृत्वा भुञ्जीतेत्यर्थः ।

गौतमः ।

सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीतेति ।

सायं† प्रातरित्यनेन मध्ये भोजननिषेधः ।

---

* गुरोः कुले न भिक्षेत इत्यादिकम् ।

† सायं प्रातः पदं रात्रिदिवापरं मध्ये भोजननिषेध इत्यनेन दिवाभोजनात्पूर्वं रात्रिभोजनात् प्रागपरभोजनं न कर्त्तव्यमिति ज्ञापितम् ।




तथाच श्रुतिः ।

सायं प्रातरश्नीव स्यादिति ।

अत्र वशिष्ठः ।

अष्टौ ग्रासान्मुनेर्भुक्तं* वानप्रस्थस्य षोड़श ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥

भोक्तृनियममाह मनुः ।

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतमिच्छन् ह्युदङ्मुखः ॥

आयुषे हितमायुष्यं यशसे हितं यशस्यं श्रियमिच्छन् ऋतमिच्छन्नित्यन्वयः ।

पात्रनियमो हारीतेनोक्तः ।

लौहे† स्वमये वा पात्रे भुञ्जीतेति ।

तच्च स्वयमेव प्रक्षालयेत् । भुक्त्वा स्वयममत्रं प्रक्षालयेदित्यापस्तम्बस्मरणात् । एवं मौनेन वर्त्तयेन्नित्यमित्युक्तम् ।

तत्रापवादमाह याज्ञवल्क्यः ।

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीड़यन्निति ।

---

* ग्रासान् भुक्तमिति क्तो द्विकं गन्तव्यमितिवत् भावाख्यातत्वाभावात् । मुनेरिति भावक्तान्तत्वात्कर्त्तृषष्ठी । क्वचिदष्टौ ग्रासामुनेर्भुक्तमिति पाठः तत्पाठे तु मुनेर्भुक्तं भोजनं कियत्परिमितं—अष्टौ ग्रासा इति ।

† अत्र लौहपदं सर्व्वतैजसपरं वाच्यं वचनान्तरे लौहनिषेधात् यथा सर्व्वत्र तथा पृष्ठे आयसे ताम्रभाजने । करे कर्पटके चैव भुक्त्वा चान्द्रायणं चरेत् अतएव सर्व्वतैजसं लौहमिति वदन्ति ।

व्रतमपीडयन्मधुमांसादि वर्ज्जयन्नित्यर्थः ।

अकामापन्ने मधुनि अदोषमाह वसिष्ठः ।

अकामापन्नं मधु वाजसनेयके न दुष्यतीति ।

उपनयनकालस्य परमावधिमाह

मनुः ।

आषोड़शाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आद्वाविंशात्क्षत्रियस्य आचतुर्व्विंशतेर्व्विशः ॥
अत ऊर्द्ध्वं त्रयोऽप्येते यथाकाले न संस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिताः ॥

उक्तपरमावध्यतिक्रमे व्रात्यस्तोमरूपप्रायश्चित्तानन्तरं संस्कार्य्य एव।

तथाच याज्ञवल्क्यः ।

सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोरिति ।

तथान्योऽपि विशेषः स्मृत्यन्तरे ।

षण्डान्धबधिरस्तब्धजड़गद्गदपङ्गुषु ।
कुब्जवामनरोगार्त्तशुष्काङ्गविकलाङ्गिषु ॥
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तपुंस्त्वेऽपि चैतेषु संस्काराः स्युर्यथोचितम् ॥

यस्मिन्यस्मिन् संस्कारे क्रियमाणे तद्विहितकर्म्मसु समर्थो भवति तैः संस्कार्य्य एवेत्यर्थः। मूकोन्मत्तौ न संस्कार्य्यावित्येके। एतेषामसंस्कारेऽपि पातित्यं नास्ति कर्म्मस्वनधिकारात्। तदपत्यन्तु संस्कार्य्यमेव।

ब्राह्मण्यां ब्राह्मणेनोत्पन्नो वा ब्राह्मण एवेति श्रुतेः। अत्र

ब्राह्मणत्वजात्या क्षत्रियत्वादि अप्युपलक्ष्यते* । असंस्कृतेऽपि जातिमात्रस्यानपायात्† । ब्राह्मण एव भवति न द्विजातिरेवेत्यर्थः । स्त्रीणान्तु विवाह एवोपनयनम् ।

तथाच मनुः ।

वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृत इति ।

यत्तु हारीतेनोक्तम् ।

द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भिक्षाचर्य्येति । सद्योवधूनां तूपस्थिते विवाहे कथञ्चिदुपनयनमात्रं कृत्वा विवाहः कार्य्य इति ।

तत्कल्पान्तराभिप्रायः ।

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवचनं तथा ॥

इति यमस्मरणात् । यदा तु मेखलादीनि त्रुटितानि तदा तेषां प्रतिपत्तिकर्म्म मनुनाभिहितम् ।

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य‡ विनष्टानि गृह्णीतान्यानि मन्त्रवदिति ॥

यस्य गृह्ये यो मन्त्र उदितस्तन्मन्त्रवत् ग्राह्यम् ।

इत्युपनयनम् ।

---

* तथाच क्षत्रियायां क्षत्रियेण जातः क्षत्रिय एव भवति एवं वैश्येनेत्यादि ।

† जन्मना ब्राह्मणो ज्ञेय इति स्मरणात् । संस्कारैर्द्विज उच्यते इति स्मरणाच ।

‡ निक्षिप्य ।

## अथ ब्रह्मचारिनियमाः ।

तत्र याज्ञवल्क्यः ।

मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥

मांसवर्जनं व्याधिराहित्ये वेदितव्यम् ।

तथाच वशिष्ठः ।

स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भैषज्यार्थं सर्व्वं प्राश्नीयादिति ।

व्याधीयीत व्याधिमत्तामनुभवतीत्यर्थः । अञ्जनं तैलादिना शरीरस्य कज्जलादिना नेत्रयोः । एतन्निषेधोऽप्यौषधादन्यत्र ।

तथा स्मर्य्यते ।

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्व्वचनमौषधम् ॥

उच्छिष्टं गुरुव्यतिरिक्तं स्वस्य परस्य च वर्ज्जयेत् ।

तथाच वशिष्ठः ।

उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं चेति ।

गुरुस्तूक्तलक्षणो निषेकादिकृत् । शुक्तं परुषवचः पर्य्युषितान्नञ्च । स्त्रीशब्देन तद्विषयप्रेक्षणालम्भने लक्ष्येते ।

तथाच गौतमः ।

स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायामिति ।

भास्करालोकने तु मनुना विशेषो दर्शितः ।

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।

नोपरक्तं न वारिस्थं न मध्यनभसो गतमिति ॥

अश्लीलं सभाऽयोग्यं वचः। परिवादः सदसद्रूपपरदोषकथनम्। आदिशब्दाद्गन्धमाल्यादिनिषेधः।

मनुः।

वर्ज्जयेन्मधु मांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि चैव सर्व्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणे।
कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम् ॥
द्यूतञ्च जनवादञ्च परिवादं तथानृतम्।
स्त्रीणाञ्च प्रेक्षणालापमुपघातं परस्य वै ॥
एकः शयीत सर्व्वत्र न रेतः स्कन्दयेत्क्वचित्।
कामाद्धि स्कन्दयन्नेतो हिनस्ति व्रतमात्मनः ॥

व्रतं ब्रह्मचर्य्यम्।

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्म्मामित्यृचं जपेत् ॥
पुनर्म्मां तस्मादेनसो विश्वान मुञ्चत्वंहसः।
यदि दिवा यदि नक्तमेनांसि चकृमावयमिति ॥
इन्द्रियाणां विचरतां विषयेष्वपहारिषु।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम्* ॥
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्व्वशः।
कर्म्मेन्द्रियाणि पञ्चैव पाय्वादीनि प्रचक्षते ॥

---

* वाजिनां घोटकानाम्।

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।
यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ ॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥
यश्चैतान् प्राप्नुयात्सर्व्वान् यश्चैतान् केवलांस्त्यजेत् ।
प्रापणात्सर्व्वकामानां परित्यागो विशिष्यते ॥
न तथैतानि शक्यन्ते सन्नियन्तुमसेवया ।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥
इन्द्रियाणान्तु सर्व्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥
वशीकृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ।
सर्व्वान् संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥
सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन् ।
संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥

इन्द्रियाणां विचरतामित्यारभ्याभिहिता धर्म्मा न केवलं ब्रह्मचारिणामपित्वितरेषामपि सम्भवति ।

## अथोच्चारविधिः ।

तत्र विष्णुः ।

ब्राह्मे मुहूर्त्ते उत्थाय मूत्रपुरीषोत्सर्गं कुर्य्यादिति ।

ब्राह्ममुहूर्त्तलक्षणं पितामह आह ।

रात्रेस्तु पश्चिमे यामे मुहूर्त्तो ब्राह्म उच्यते इति ।

पश्चिमे यामे पश्चिमार्द्धप्रहरे ब्राह्ममुहूर्त्त इत्यर्थः ।

अङ्गिराः ।

उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम् ।
अन्तर्द्धाय तृणैर्भूमिं शिरः प्राहृत्य वाससा ॥
वाचं नियम्य यत्नेन निष्ठीवोच्छासवर्ज्जितः ।
कुर्य्यान्मूत्रपुरीषे तु शुचौ देशे समाहित इति ॥

आचम्य स्नापाद्याचमननिमित्ते सति । तृणैरयज्ञीयैः तृणग्रहणं काष्ठादेरप्युपलक्षणार्थम् । तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्टं तृणानि वेति मनुस्मरणात् ।

पराशरः ।

ततः प्रातः समुत्थाय कुर्य्याद्विण्मूत्रमेव च ।
नैर्ऋत्यामिषुविक्षेपमतीत्य ह्यधिकं भुवः ॥
ग्रामात्क्रमशतं* गच्छेन्नगराच्च† चतुर्गुणमिति ॥

याज्ञवल्क्यः ।

दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्य्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥

यमः ।

प्रत्यङ्मुखस्तु पूर्व्वाह्णे पराह्णे प्राङ्मुखस्तथा ।

---

* क्रमशतं पादशतमिति यावत् ।

† चतुर्गुणं चतुःशतानि ।

उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥

देवलोऽपि ।

सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः ।
विण्मूत्रमाचरेन्नित्यं सन्ध्यासु परिवर्ज्जयेत् ॥

सन्ध्यासु वर्ज्जनं निरुद्धेतरविषयम् । न वेगं धारयेन्नोपरुद्धः क्रियां कुर्य्यादिति मनुस्मरणात् । दिङ्नियमे विकल्पो वेदितव्यः ।

यच्च मनुनोक्तम् ।

छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्य्यात्प्राणबाधभयेषु चेति ॥

तन्नीहाराद्यन्धकारजनितदिङ्मोहविषयम् ।

विष्णुः ।

प्राणास्ये समावेष्टयित्वा ब्रह्मचारी ग्रीवायामासज्योच्चरेत् ।

ब्रह्मचारी वृत्तिकाधारी ग्रीवायां यज्ञोपवीतमासज्य ।

अङ्गिराः ।

कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रन्तु गृही कुर्य्याद्यद्वा कर्णे समाहितः ॥

कर्णे निधानमेकवस्त्रविषयम् ।

तथाच सांख्यायनगृह्ये ।

यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्य्यादिति ।

हारीतः ।

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥

उच्चारे पुरीषोत्सर्गे ।

विष्णुपुराणे ।

दूरादावसथा*न्मूत्रं पुरीषञ्च विवर्ज्जयेत् ।
पादावनेजनोच्छिष्टं† न क्षिपेच्च गृहाङ्गने ॥

वृहद्विष्णुः ।

अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ।
वाचं नियम्य यत्नेन निष्ठीवोच्छ्वासवर्ज्जितः ॥

मनुः ।

वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाम् ।
न कदाचित्प्रकुर्व्वीत विण्मूत्रस्य विसर्ज्जनम् ॥

पश्चन्सम्मुखः ।

न फालकृष्टे न जले न चित्यां न च पर्व्वते ।
न जीर्णदेवायतने न वल्मीके न शाद्वले ॥
न ससत्त्वेषु गर्त्तेषु न गच्छन्न पथि स्थितः ।
न नदीतीरमासाद्य न भस्मनि न गोमये ॥

न च पर्व्वतमस्तक इति पाठे पूर्व्वकृतपर्व्वतग्रहणेनैव तन्म-स्तकसिद्धावपि पुनर्ग्रहणाद्दोषाधिक्यं द्योत्यते । तद्भाष्ये तु

---

* गृहात् ।

† पादप्रक्षालनावशिष्टजलम् ।

अत्यन्तार्त्तस्य पर्व्वते दोषाभावप्रतिपादनार्थमित्युक्तम्।

विष्णुपुराणे।

उत्सर्गे वै पुरीषस्य मूत्रस्य च विसर्ज्जने।
तिष्ठेन्नातिचिरं तत्र न च किञ्चिदुदीरयेत्॥

भरद्वाजः।

अपकृष्य च विण्मूत्रं काष्ठलोष्टतृणादिना।
उद्‌धृतवासाः* उत्तिष्ठेद्दृढं विधृतमेहनः॥

## अथ शौचविधिः।

याज्ञवल्क्यः।

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः।
गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः॥

उद्धृतैरिति जलान्तर्निषेधः। गन्धलेपक्षयकरमिति सर्व्वेषां साधारणं शौचम्। वक्ष्यमाणसंख्यानियमस्त्वदृष्टार्थः।

दक्षः।

शौचे यत्नः सदा कार्य्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः॥

यमः।

आहरेन्मृत्तिकां प्राज्ञः कूलात्ससिकतात्तथा।

कूलग्रहणमनुपहतदेशो†पलक्षणार्थम्।

---

* कटिदेशादुत्क्षिप्तवसनः।

† पथ्युदकसुमून्यदेशः।

वापीकूपतड़ागेषु नाहरेदाप्नुतो मृदम् ।
आहरेज्जलमध्यात्तु परतो मणिबन्धनात् ॥

शातातपः ।

शुचिदेशात्तु संग्राह्या शर्कराश्मादिवर्ज्जिता ।
रक्ता गौरा तथा श्वेता मृत्तिका त्रिविधा स्मृता ॥

कश्यपः ।

विप्रे गौरा मृदः प्रोक्ताः क्षत्रे रक्तास्तथोदिताः ।
वैश्यस्य हरिताः प्रोक्ताः कृष्णाः स्त्रीशूद्रयोस्तथा ॥

विष्णुपुराणे ।

वल्मीकमूषिकोत्खातान्मृदमन्तर्जलात्तथा ।
शौचावशिष्टां गेहाच्च मृदः शौचे विवर्ज्जयेत् ॥

विष्णुः ।

अन्तःप्राण्यवपन्नाच्च हलोत्खातां न चाहरेत् ।

मनुः ।

आहृतामन्यशौचार्थं बालुकां पांशुरूपिणीम् ।
न मार्गान्न श्मशानाच्च नादद्यात्कुत्रतः क्वचित् ॥

तथा ।

यस्मिन्देशे च यत्तोयं या च यत्र च मृत्तिका ।
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥

मृत्संख्यानियममाह

दक्षः* ।

* यम इति पाठान्तरम् ।

एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतमिति ।

करे सव्ये एतच्च मूत्रशौचविषयम् ।

एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शुक्रे तद्द्विगुणं भवेत् ॥

इति शातातपस्मरणात् ।

विट्शौचे तु मनूक्तो विशेषः ।

एका लिङ्गे गुदे तिस्रो दश वामकरे तथा ।
उभयोः सप्त दातव्या मृदः शौचोपपादिकाः ॥

यमदक्षौ ।

द्वे लिङ्गे मृत्तिके देये गुदे पञ्च करे दश ।
उभयोः सप्त दातव्या इति ।

शङ्खः ।

अपाने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्त्तिते ।
एकस्मिन् विंशतिर्हस्ते द्वयोर्ज्ञेयाः* चतुर्दश ॥
तिस्रस्तु मृत्तिका देया कर्त्तुं वै नखशोधनम् ।
तिस्रस्तु पादयोर्ज्ञेयाः शौचकामस्य सर्व्वदा ॥
शौचमेतद्गृहस्थानां तथा गुरुनिवासिनाम् ।
द्विगुणं स्याद्वनस्थानां यतीनां त्रिगुणं स्मृतम् ॥
मृत्तिका तु समुद्दिष्टा त्रिपर्व्वी पूर्य्यते ययेति ।

अत्र मृत्तिकाधिक्यं यत्तन्मूत्रपुरीषनिर्हरणाशङ्कायाम् । यदा त्वेवमपि गन्धलेपक्षयो न भवति, तदोक्तसंख्यातिक्रमेणापि कार्य्यम् ।

---

* देयेति क्वचित्पाठः ।

यदाह मनुः ।

यावन्नापैत्यमेध्याक्तो गन्धलेपश्च तत्कृतः ।

तावन्मृद्वारि वा देयं सर्व्वासु द्रव्यशुद्धिष्विति ॥

हस्तशौचे तु हारीतो विशेषमाह ।

दश सव्ये षट् च पृष्ठे सप्तोभाभ्यां च तिसृभिः ।

पादौ प्रक्षालयेदिति ।

पृष्ठे सव्यपश्चाद्भागे ।

लिङ्गशौचे तु सृत्प्रमाणमाह

दक्षः ।

लिङ्गे तु सृत्प्रमाख्याता त्रिपर्व्वी पूर्य्यते यया इति ।

विट्शौचे तु मनुः ।

अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।

द्वितीया च तृतीया च तदर्द्धार्द्धा प्रकीर्त्तिता ॥

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।

वानप्रस्थस्य त्रिगुणं यतीनाञ्च चतुर्गुणम् ॥

न्यूनाधिकं न कर्त्तव्यं शौचे शुद्धिमभीप्सता ।

प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ॥

वाधूलः ।

तीर्थे शौचं न कुर्व्वीत कुर्व्वीतोद्धृतवारिणा ।

कथमप्युद्धरणाशक्तौ आदित्यपुराणे ।

रत्निमात्रं जलं त्यक्त्वा कुर्य्याच्छौचमनुद्धृते ।

पश्चात्तु शोधयेत्तीर्थमन्यथा त्वशुचिर्भवेत् ॥

दक्षः ।

यद्दिवा विहितं शौचं तदर्द्धञ्च निशि स्मृतम् ।

तदर्द्धमातुरे प्रोक्तमातुरस्यार्द्धमध्वनि ॥

आदिपुराणे ।

स्त्रीशूद्रयोरर्द्धमानं शौचं प्रोक्तं मनीषिभिः ।

यो विण्मूत्रोत्सर्ज्जनायोपविष्टः सन्न करोति तस्याप्यर्द्धशौचमाह वृद्धपराशरः ।

उपविश्य तु विण्मूत्रं कर्त्तुं यस्तन्न* विन्दति ।

स कुर्य्यादर्द्धशौचन्तु स्वस्य शौचस्य सर्व्वदेति ॥

यत्र संख्याया विषमत्वेनाङ्गीकरणासम्भवस्तत्र साध्या यदर्द्धपरिमाणा ग्राह्या ।

आर्त्तः कुर्य्याद्यथाशक्ति स्वस्थः कुर्य्याद्यथोचितम् ।

बालस्यानुपनीतस्य गन्धलेपक्षयावहम् ॥

वृद्धपराशरः ।

अरण्ये निर्जने रात्रौ चौरव्यालाकुले पथि ।

कृत्वा मूत्रपुरीषञ्च द्रव्यहस्तो न दूष्यति ॥

मृदादिकं हस्ते धारयित्वा न दूष्यतीत्यर्थः । अन्ये तु द्रव्यहस्तो न दूष्यतीत्यस्यान्यथार्थं वर्णयन्ति । एवंविधस्थले अदनीयद्रव्यं हस्ते गृहीत्वा मूत्रपुरीषकरणेऽपि तद्द्रव्यं शुद्धमेवेति । तद्द्रव्यं हस्ते गृहीत्वैवाचमने कृते शुद्धं भवतीत्यर्थः ।

भोजनकाले शुद्रस्यावे विशेषमाह

---

* यत्निवि पाठान्तरम् ।

बृहस्पतिः ।

भुञ्जानस्य तु विप्रस्य कदाचित्प्रस्रवेद्गुदम् ।
उच्छिष्टमशुचित्वञ्च तस्य शौचं विधीयते ॥
पूर्व्वं कृत्वा तु शौचन्तु ततः पश्चादुपस्पृशेत् ।
ततः कृत्वोपवासञ्च पञ्चगव्येन शुध्यतीति ॥

विप्रग्रहणमुपलक्षणार्थम् ।

शौचे हस्तनियममाह देवलः ।

धर्म्मविद्दक्षिणं हस्तमधःशौचे न योजयेत्* ।
तथा च वामहस्तेन नाभेरूर्द्धं न शोधयेत् ॥

अत्रेदं विचारणीयं विण्मूत्रयोर्म्मिलितयोः करणे एका लिङ्गे गुदे तिस्र इत्येतच्छौचं प्रवर्त्तते, आहोस्वित्† प्रत्येककरणम-पीति‡ । प्रत्येककरणं तावन्न युक्तं केवलमूत्रोत्सर्गे शातातप-वचनविरोधात् । वचनन्तु

एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातमिति ॥

अथ केवलपुरीषोत्सर्गविषयत्वमुच्यते । लिङ्गशौचनिमित्ता-भावेऽपि§ नैमित्तिकं तच्छौचं¶ मापद्येत तथायुक्तमदृष्टार्थप्रस-

* विवर्ज्जयेदिति पाठान्तरम् ।

† किम्वा ।

‡ केवलमूत्रोत्सर्गकरणं केवलपुरीषोत्सर्गकरणमपीत्यर्थः ।

§ मूत्रोत्सर्गरूपनिमित्ताभावे ।

¶ लिङ्गशौचम् ।

ह्वाद्वचनादस्त्विति* चेन्न। एका लिङ्गे इत्यस्यापि केवल-मूत्रोत्सर्गविषयत्वेनाप्युपपत्तेः। अगतिका हीयं गतिः†। यददृष्टकल्पनम् अतो विशिष्टोत्सर्ग एवेति युक्तम्। तत्रापि‡ लिङ्गशौचं पूर्वम्§। वचनप्रतीतक्रमातिक्रमेण कारणाभा-वात्स्वविहितत्वात्प्रथमत‖ एतदकरणे** साक्षान्मूत्रलेपस्य मणिबन्धोपरिभागेऽपि संसर्गप्रसक्तेश्च। हस्तपादादिशौचन्तु तन्त्रेणैव देशकालकर्त्रैक्याच्छौचरूपोपकारस्यैकत्वाच्च।

## अथ विण्मूत्रव्यतिरिक्तशारीरमलशौचम्।

मनुः।

ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्व्वशः।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युता इति॥

खानीन्द्रियच्छिद्राणि।

मलानपि स एवाह।

वसा शुक्रमसृङ्मज्जा मूत्रं विट् कर्णविण्नखाः।

---

* अदृष्टमिति शेषः।

† इयं गतिः अदृष्टकल्पनारूपा गतिः अगतिका नास्ति गतिर्यस्यास्तद्विषयिकेत्यर्थः।

‡ मूत्रपुरीषोभयोत्सर्गकरणेऽपि।

§ पुरीषशौचात्प्राक्।

¶ एका लिङ्गे गुदे तिस्र इत्यादि वचनप्राप्तक्रमोल्लङ्घने।

‖ प्रथमं तत्र तदकरणे इति पाठान्तरम्।

** लिङ्गशौचाकरणे।

श्लेष्मास्तु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥

वसा कायस्नेहः। मज्जा शिरोभवमेदः। कर्णविट् कर्णमलम्। दूषिकाक्षिमलम्।

एतैरुपघाते बौधायनः प्राह।

आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये।
उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुध्यतीति ॥

मनुस्तु।

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्य्यादेयमर्थवत्।
दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि ॥

विण्मूत्रमुत्सृज्य तोयेन* तत्ताद्दशं तच्छुद्ध्यर्थमर्थवत्प्रयोजनवत्। एवञ्च बौधायनमनुवचनयोर्विकल्पः। स च देशकालाद्यपेक्षया।

तथाच बौधायनः।

देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत् ॥

यमः।

मूत्रे तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च।
मृदः पञ्चदशामेध्ये हस्तादीनां विशेषतः ॥
एतदात्मीयमूत्रादिस्पर्शशौचमुदाहृतम्।
उत्सर्गकालादन्यत्र परकीये तु पञ्चते ॥

---

* तोयेन तत्ताद्दशमिति पाठस्तु बहुषु पुस्तकेषु दर्शनादर्पितः परन्तु सार्थक्यं नाप्नोतीति।

परस्य शोणितस्पर्शे रेतोविण्मूत्रजे तथा ।
चतुर्णामपि वर्णानां प्रायश्चित्तिकाः स्मृताः ॥

विष्णुः ।

नाभेरधस्तात्प्रबाहुषु कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्याचान्तः शुध्येत् । अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नात्वैव इन्द्रियोपहतस्तूपोष्य स्नात्वा पञ्चगव्येन दशनच्छदोपहतश्चेति* शौचप्रकरणम्।

## अथाचमनम् ।

तत्र वृद्धपराशरः ।

कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिखकच्छस्तु द्विज आचमनञ्चरेत् ॥

प्रचेताः ।

अनुष्णाभिरफेनाभिरशीताभिराचामेदिति ।
आतुराणामुष्णोदकमप्यविरुद्धम् ।

तथाचापस्तम्बः ।

उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनामिति ।
अत्राचमनं भवतीति शेषः ।

योगीश्वरः ।

अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

---

* ओष्ठाधरोपहत इत्यर्थः ।

तथा ।

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

दक्षः ।

प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम् ।
संहृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ॥

वीक्षितमित्येतदहर्विषयम् ।

रात्रावनीक्षितेनैव शुद्धिरुक्ता मनीषिभिरिति

यमस्मरणात् ।

मनुः ।

त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् ।
खानि* चोपस्पृशेदद्भिरात्मानं† शिर एव च ॥

गौतमः ।

त्रिश्चतुर्वा अप आचामेदिति ।

चतुर्ग्रहणं दैवपित्र्यकर्म्मापेक्षयेति केचित् । निर्ग्रहणेन‡ तुल्य-भाव§ इत्यन्ये ।

भरद्वाजः ।

संहताङ्गुलिभिस्तोयं गृहीत्वा दक्षिणेन तु ।

---

* इन्द्रियाणि ।

† आत्मस्थानं हृदयमित्यर्थः ।

‡ निर्ग्रहणेन निवारणपानेन ।

§ मनस्तुष्टेरभावे ।

मुक्ताङ्गुष्ठकनिष्ठे तु शेषेणाचमनं चरेत् ॥
ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥

कायं प्राजापत्यं। त्रैदशिकं दैवं। यस्मिन् आचमनप्रयोगे यद्ब्राह्मादितीर्थं स्वीकृतं तेनैव स प्रयोगः कार्य्यो न तीर्थान्तरेण ।

दक्षः ।

संहताङ्गुलिभिः पूर्वमास्यमेवमुपस्पृशेत् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ।
नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयन्तु तलेन वै ॥
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ।

याज्ञवल्क्यः ।

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ।
त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।

अत्र विशेषमाह पैठीनसिः ।

सव्ये पाणौ शेषा अपो निनयेदिति ।

शेषा आचमनावशिष्टाः ।

बृहच्छन्दोगस्त्वन्यथोपस्पर्शनमाह ।

तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ।
मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः ॥
अङ्गुष्ठस्यानामिकाया योगेन श्रवणे स्पृशेत् ।

कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः ॥
नाभिञ्च हृदयं तद्वत् स्पृशेत्पाणितलेन तु ।
संस्पृशेच्च तथा शीर्षमिति ॥

शङ्खस्तु ।

ततोऽङ्गुलिचतुष्केण स्पृशेन्मूर्द्धानमादितः ।
तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं पृथक् ॥
मध्यमानामिकाभ्यान्तु स्पृशेन्नासापुटे क्रमात् ।
अङ्गुष्ठेन कनीयस्याः कर्णौ संयोगतः स्पृशेत् ।
तर्ज्जन्यङ्गुष्ठयोगेन नाभिं हृदितलं स्पृशेत् ॥

पैठीनसिः ।

अग्निरङ्गुष्ठस्तस्मात्तेनैव सर्वाणि स्थानानि स्पृशेदिति । अत्र स्वस्वशाखानुसारेण व्यवस्थितो विकल्पः । यत्र शाखाया-मङ्गस्पर्शनमेव नाम्नातम्, अङ्गुष्ठादिविशेषो वा नाम्नातः, तच्छाखीयानां त्वैच्छिको विकल्पः । येषान्तु स्वशाखायां कतिपयाङ्गस्पर्शनमाम्नातं, तेषान्तु स्वशाखोक्तक्रमानुसारी शाखान्तरोक्तक्रमः अनुक्ताङ्गस्पर्शे भवतीति व्यवस्था ।

उदकपरिमाणमाह

याज्ञवल्क्यः ।

हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः ।
शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥

अन्ततस्तालुगाभिः । हृद्गानां परिमाणमाह उशना ।

माषमज्जनमात्रा हृदयङ्गमा भवन्ति ।

आचमनप्रसङ्गात्सपवित्राचमने कचन विशेषः प्रदर्श्यते ।
तत्र मार्कण्डेयः ।

सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्ज्जयेत् ॥

एतद्दक्षिणकराभिप्रायम् । हारीतेन वामे निषेधात् ।

वामहस्ते कुशान् कृत्वा समाचामति यो द्विजः ।
उपस्पृष्टं भवेत्तेन रुधिरेण मलेन चेति ॥

एतत्केवलवामहस्ताभिप्रायम् । हस्तद्वयाश्रयणे गोभिलेन फलस्मरणात् ।

उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेदिति ॥

अत्र विशेषमाह हारीतः ।

सव्यापसव्यौ कुर्वीत सपवित्रौ करौ बुधः ।
ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं भवेदिति ॥

पवित्रलक्षणमाह कात्यायनः ।

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ।

मार्कण्डेयः ।

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥
त्रिभिर्दर्भैः शान्तिकर्म्म पञ्चभिः पौष्टिकं तथा ।
चतुर्भिश्चाभिचाराख्यं कुर्व्वन् कुर्य्यात्पवित्रकमिति ॥

## अथाचमननिमित्तानि।

तत्र मनुः।

उत्तीर्य्योदकमाचामेदवतीर्य्य तथैव च।

हारीतः।

स्त्रीशूद्रोच्छिष्टाभिभाषणे मूत्रपुरीषोत्सर्गे देवता-मभिगन्तुकाम आचामेत्।

## अथ द्विराचमननिमित्तानि।

तत्र याज्ञवल्क्यः।

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।
आचान्तः पुनराचामेद्वासो विपरिधाय च॥

बौधायनः।

भोजने हवने दाने उच्चारे च प्रतिग्रहे।
हविर्भक्षणकाले वा तद्द्विराचमनं स्मृतमिति॥

ब्रह्मपुराणे।

होमे भोजनकाले च सन्ध्ययोरुभयोरपि।
आचान्तः पुनराचामेदन्यत्र च सकृत्सकृत्॥

अङ्गिराः।

चाण्डालादीन् जपे होमे दृष्ट्वाचम्य विशुध्यति।
श्वादीन् स्पृष्ट्वापि चाचामेत्कर्णं वा दक्षिणं स्पृशेत्॥

जानुनोरधस्तात्श्वादिस्पर्शे आचमनम्। अन्यत्र स्नानविधानात्। उदकाभावे असामर्थ्ये वा दक्षिणकर्णस्पर्शः।

अनेनैवाभिप्रायेण बृहस्पतिः ।

पितृमन्त्रोच्चरे रौद्रे आत्मालम्भेऽधमेक्षणे ।
अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे ॥
मार्ज्जारमूषिकस्पर्शे प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु सर्व्वेषु दक्षिणं श्रवणं स्पृशेत् ॥

तथा ।

आर्द्रं तृणं गोमयं वा भूमिं वा संस्पृशेद्द्विज इति ।

शांख्यायनः ।

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥
आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् ।
विप्रस्य दक्षिणे कर्णे ह्येते तिष्ठन्ति सर्वदा ॥

आचारसागरे ।

अपो जग्ध्वौषधं जग्ध्वा कृत्वा ताम्बूलचर्व्वणम् ।
सौगन्धिकानि सर्व्वाणि नाचामेत विचक्षणः ॥

अपो जग्ध्वेति अमृतापिधानमसीत्यादिभिर्मन्त्रैरपो जग्ध्वा तन्निमित्तं नाचामेदित्यर्थः ।

बौधायनः ।

पादप्रक्षालनशेषेण नाचामेद्वारिणा द्विजः ।
तदभावेऽपि* वै किञ्चित्क्षिप्त्वा भूमौ जलं स्पृशेत् ॥

---

* प्रक्षालनाभावे तज्जलं भूमौ क्षिप्त्वा तेन जलेन आचमनं कुर्य्यादित्यर्थः ।

आपस्तम्ब: ।

सन्ध्यार्थे भोजनार्थे वा पित्रर्थे वा तथैव च ।

शूद्राहृतेन नाचामेज्जपेज्याहवनेषु* च ॥

यम: ।

तावन्नोपस्पृशेद्विप्रो यावद्वामेन संस्पृशेत् ।

वामे हि द्वादशादित्या वरुणश्चिदशेश्वर: ॥

उदके चोदकस्थस्तु स्थलस्थस्तु स्थले शुचि: ।

पादौ स्थाप्योभयत्रापि आचान्तोभयत:† शुचि: ॥

जले स्थले चैकैकं पादं कृत्वाचान्त उभयत्र जलकर्म्मणि स्थलकर्म्मणि च शुचो भवतीत्यर्थ: ।

अकृत्वा पादयो: शौचं तिष्ठन्‡ मुक्तशिखोऽपि वा ।

विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत् ॥

तिष्ठन्निति स्थलविषयं विष्णुना तिष्ठतोऽपि जलेऽभ्यनुज्ञानात् ।

जान्वोरूर्द्धं जले तिष्ठन्नाचान्त: शुचितामियात् ।

अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुद्ध्यति ॥

इति अधस्तान्निषेधाज्जानुदघ्ने§ऽप्यविरुद्धम् ।

तथाच स्मर्य्यते ।

जानुमात्रे जले तिष्ठन्निति ।

---

* जपयज्ञहोमेषु ।

† सन्निरत्र आर्ष: ।

‡ दण्डायमान: ।

§ जानुपरिमिते इत्यर्थ: ।



अनाचान्तः शुचिरिति वाक्यशेषः।

तथा।

सोपानत्को न चोष्णीषी पर्य्यङ्कासनयानगः।
दुर्देशे प्रपदंश्चैव नाचामन्* शुद्धिमाप्नुयात्॥
नरगोवरयानाश्वहस्त्यधी† रोहकस्तथा।
आचान्तः कर्म्मशुद्धः स्यात्ताम्बूलौषधजग्धिकृत्॥
भुक्तासनस्थोऽप्याचामेन्नान्यकाले कदाचन।
न पादुकस्थो न त्वरितो न चायज्ञोपवीतवान्॥

शाङ्खायनः।

दानमाचमनं होमं भोजनं देवतार्च्चनम्।
प्रौढ़पादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम्॥
आसनारूढ़पादस्तु जानुनोर्वाथ जङ्घयोः।
कृतावसक्थिको‡ यश्च प्रौढ़पादः स उच्यते॥
स्पृशन्ति विन्दवः पादौ य आचामयतः परान्।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत्॥

परेषामाचमनायोदके दीयमाने ये विन्दवः पादयोः पतन्ति तैर्नाशुद्ध इत्यर्थः।

इत्याचमनविधिः।

---

* प्रपदन् गच्छन् न आचामन् न शुद्धिम् आप्नुयादित्यन्वयः।

† छन्दसि दीर्घः।

‡ पर्य्यङ्कबन्धवस्त्रः।

## अथ प्रातःस्नानम् ।

तत्र मार्कण्डेयपुराणे ।

अस्नातस्य क्रियाः सर्व्वा भवन्ति ह्यफला यतः ।
प्रातः समाचरेत्स्नानं तच्च नित्यमिति स्मृतम् ॥
प्रातःस्नानं मन्त्रवर्जं मध्याह्ने मान्त्रिको विधिः ।
नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम् ॥

योगीश्वरः ।

स्नानमब्दैवतैर्म्मन्त्रैर्मार्ज्जनं प्राणसंयमः ।
सूर्य्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥

योगियाज्ञवल्क्यः ।

प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिसवनं स्नानं सकृत्तु ब्रह्मचारिणः ॥

वानप्रस्थस्य कालद्वये स्नानं ब्रह्मचारिणश्च सकृत्स्नानमयत्नविषयम् । अतएव

याज्ञवल्क्यः ।

दान्त*स्त्रिसवनस्नायी निवृत्तश्च प्रतिग्रहादिति ।

स्मृतिसंग्रहे ।

स्नायात्प्रातश्च मध्याह्ने ब्रह्मचारी तथा गृहीति ।

दक्षः ।

प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ।

---

* दान्तः इन्द्रियदमनशीलः ।

सर्व्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥

दृष्टं मलापनयनादङ्गशुद्धिः। अदृष्टं नित्यत्वेन पापक्षयः।

अलक्ष्मीः कालकर्णी च दुःस्वप्नादुर्विचिन्तितम्* ।

याम्यं हि पातनादुःखं नित्यस्नायी न पश्यति† ॥

कालकर्णी दुःसहदुःखिता ।

नित्यस्नानेन पूयन्ते अपि पापकृतो नराः ॥

कात्यायनः ।

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।

दन्तान् प्रक्षाल्य नद्यादौ गेहे च तदमन्त्रवत् ॥

अमन्त्रवदिति प्रातःस्नाने न सर्व्वमन्त्रनिषेधः। अपि तु मन्त्रबहुत्वनिषेधः। यतः

स एवाह ।

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्म्मणः ।

प्रातर्न तनुयात्स्नानं होमलोपो विगर्हितः इति ॥

दक्षः ।

अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।

स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥

वामनपुराणे ।

निषिच्य तीरङ्कुशपिञ्जलानि

पूर्व्वोत्तराग्राणि मृदं न्यसेच्च ।

---

* दुःस्वप्नमिति क्वचित्पाठः ।

† एतान्न पश्यति इत्यध्याहारेणान्वयः ।

प्रक्षाल्य पादौ च मुखञ्च कण्ठे
यज्ञोपवीतञ्च जलं पिवेत्त्रिः ॥

कण्ठे यज्ञोपवीतमासज्येत्यध्याहारः ।
एवं चैतदुक्तं भवति ।

उपवीतं निवीतं कृत्वा प्रक्षालयेदिति ।

त्रिर्जलं पिवेदाचामेदित्यर्थः ।

कराभ्यां धारयेद्दर्भान् शिखाबन्धं विधाय च ।
प्राणायामांस्तथा कुर्य्यात्कालज्ञानं यथाविधि ॥

यथाविधि कालज्ञानं तिथिनक्षत्रादिज्ञानं कुर्य्यादित्यर्थः ।

मृत्तिकान्तु त्रिधा कृत्वा भागेनैकेन लेपयेत् ।
दक्षिणेनैव हस्तेन अष्टावेताननुक्रमात् ॥

अष्टौ वक्ष्यमाणाः। ललाटमंसद्वयं हृदयं पृष्ठमुदरं कुक्षिद्वयं चेत्यष्टौ विज्ञेयाः ।

ललाटमंसौ हृत्पृष्ठमुदरञ्च सकुक्षिकम् ।
ततो वामक्रमेणैव नाभिवस्त्युरुजङ्घकम् ॥
दक्षिणादिक्रमेणैव चरणौ च त्रिभिस्त्रिभिः ।
मृदा तृतीयभागेन करौ च त्रिः स मार्ज्जयेत् ॥
इति तूष्णीं मृदा स्नानं कृत्वाचम्य जलं विशेत् ।
नाभिमात्रे जले गत्वा कृत्वा केशान्द्विधा द्विजः ॥
निरुद्धकर्णौ नासाञ्च त्रिः कृत्वोन्मज्जनं ततः ।
द्विराचम्याभिषेकञ्च कुर्य्यादष्टाक्षरेण तु ॥
आयं गौरिति सूक्तेन द्विज आवर्त्तयेदपः ।

जुम्बुकायेति मन्त्रेण विदध्यात्त्वघमर्षणम् ॥

जुम्बुकायेति नायं नियमः अपि तु आवहन्त्यादिसूक्तानामुपलक्षणार्थम् ।

जपं द्वादशवारांस्तु महापापापनुत्तये ।

अघमर्षणक्रियया धूतपापः समाहितः ॥

ततो निमज्ज्य वारांस्त्रींस्ततस्तर्पणमारभेत् ।

तर्पणमिति स्नानाङ्गतर्पणम् ।

तथा तैत्तिरीयशाखायाम् ।

ओं भूर्द्देवांस्तर्पयामि भुवो देवांस्तर्पयामि स्वर्द्देवांस्तर्पयामि । भूर्भुवःस्वर्द्देवांस्तर्पयामि । एवं भूर्ऋषींस्तर्पयामि । एवं भूः पितॄंस्तर्पयामीत्यादि ।

मनुः ।

आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यत्विति क्रमात् ।

जलाञ्जलित्रयं दद्यादेतत्संक्षेपतर्पणमिति ॥

एवमेव माध्याह्निकस्नानमपि विशेषस्त्वाह्निके प्रदर्श्यते ।

## अथ प्रातःसन्ध्या ।

तत्र व्यासः ।

प्रातःसन्ध्यां सनक्षत्रां मध्यमां स्नानकर्म्मणि ।

सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि ॥

मध्यमां स्नानकर्म्मणीति माध्याह्निकस्नाने जाते इत्यर्थः ।

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ।

स यद्यत्कुरुते कर्म्म न तस्य फलभाग्भवेत् ॥

संवर्त्तः ।

अथाचम्य कुशैर्युक्त आसने समुपस्थितः ।
करसंपुटकं कृत्वा सन्ध्यां नित्यं समारभेत् ॥
नत्वा तु पुण्डरीकाक्षमुपात्ताघप्रशान्तये ।
ब्रह्मवर्च्चसकामार्थं प्रातःसन्ध्यामुपास्महे ॥
इत्थं कृत्वा तु सङ्कल्पं कुशानादाय पाणिना ।
नद्यां नद्युत्थतोयैस्तु गृहे वामकरे स्थितैः ॥
त्रिभिर्व्याहृतिमन्त्रैस्तु प्रत्येकं मिलितैश्च तैः ।
गायत्र्या च ततः कुर्य्यादभिषेकन्तु तज्जलैः ॥
आर्षच्छन्दोदैवतञ्च विनियोगविधिं स्मरेत् ।
आवाहनञ्च गायत्र्याः प्राणायामं समभ्यसेत् ।
गायत्रीं त्र्यक्षरां बालां साक्षसूत्रकमण्डलुम् ॥

त्र्यक्षरां प्रणवात्मिकाम् ।

रक्तवस्त्रां चतुर्व्वक्त्रां हंसवाहनसंस्थिताम् ।
ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम् ॥
आवाहयाम्यहं देवीं गायत्रीं सूर्य्यमण्डलात् ।
ओङ्कारस्य ब्रह्म ऋषिर्देवोऽग्निस्तस्य कथ्यते ॥
गायत्री च भवेच्छन्दो नियोगः सर्व्वकर्म्मसु ।
त्रिमात्रस्तु प्रयोक्तव्य आरम्भे सर्व्वकर्म्मणाम् ॥
व्याहृतीनाञ्च सर्व्वासामार्षञ्चैव प्रजापतिः ।
गायत्र्युष्णिगनुष्टुब्बृहती त्रिष्टुबेव च ॥

पंक्तिश्च जगती चैव छन्दांस्येतानि सप्त वै ।
अग्निर्वायुस्तथा सूर्यो बृहस्पतिरपांपतिः ॥
इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ।
प्राणस्यायमने चैव विनियोग उदाहृतः ॥
भूर्लोकं पादयोर्न्यस्य भुवर्लोकन्तु जानुनोः ।
स्वर्लोकं गुह्यदेशे तु नाभिदेशे महस्तथा ॥
जनलोकन्तु हृदये कण्ठदेशे तपस्तथा ।
भ्रुवोर्ललाटसन्धौ तु सत्यलोकं प्रतिष्ठितम् ॥
सविता देवता यस्या मुखमग्निस्त्रयात्मकम् ।
विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते ।
जपहोमोपनयने विनियोगो विधीयते ॥

व्यासः ।

ओं भूर्विन्यस्य हृदये भुवः शिरसि विन्यसेत् ।
स्वरितीदं शिखायान्तु गायत्र्याः प्रथमं पदम् ॥
विन्यसेत्कवचेनैव द्वितीयं नेत्रयोर्न्यसेत् ।
तृतीयेनास्त्रविन्यास एष न्यासोऽथ नाशनः ॥
या सन्ध्या सा च गायत्री त्रिधा भूत्वा व्यवस्थिता ।
पूर्वा भवेत्तु गायत्री सावित्री मध्यमा स्मृता ॥
[illegible] भवेत्पश्चिमा सन्ध्या सा च देवी सरस्वती ।
सादित्यां च वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ।
मध्यमां स्नानकर्माणी छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते ॥
सन्ध्याहीनोऽ

भूर्भुवः सुवरित्यापः* अभिमन्त्र्य परिषिञ्चेत् ।
रक्षार्थमिति शेषः ।

## अथ प्राणायामः ।

तत्र योगीश्वरः ।

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा† सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

गायत्रीशब्दनिरुक्तिमाह व्यासः ।

गायन्तं त्रायते यस्माद्गायत्री त्वं ततः स्मृतेति ।

मार्कण्डेयपुराणे ।

प्रथमं साधनं कुर्य्यात्प्राणायामस्य योगवित् ।
प्राणापाननिरोधस्तु प्राणायाम उदाहृतः ॥
लघुमध्योत्तरीयाख्यः प्राणायामस्त्रिधोदितः ।
तस्य प्रमाणं वक्ष्यामि तदलर्क‡ शृणुष्व मे ॥
लघु द्वादशमात्रस्तु द्विगुणः स तु मध्यमः ।
त्रिगुणाभिस्तु मात्राभिरुत्तरः स उदाहृतः ॥

विष्णुपुराणे ।

प्राणाख्यमनिलं वश्यमभ्यासात्कुरुते तु यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव वा ॥

---

* बहुपुस्तके आप इति पाठदर्शनाच्छन्दोऽनुरोधाच्च आप इति रक्षितं परन्तु व्याकरणानुसारेण अप इति समीचीनः पाठः ।

† आपो ज्योतीरसोऽमृतमिति मन्त्रः ।

‡ अलर्क इति अलर्कराजसम्बोधनम् ।

पूरकः पूरणं वायोः कुम्भकः स्थापनं क्वचित् ।
वहिर्निःसारणं तस्य रेचकः परिकीर्त्तितः ॥

सबीजो ध्यानजपसहितः सगुणोपास्तिः । अबीजो निर्गुणोपासनं तच्च परमहंसविषयम् ।

यथाह पराशरः ।

सालम्बा भगवन्मूर्त्तिः स्थूलं रूपं द्विजोत्तम ।
अनालम्बमनन्तस्य योगिनोऽभ्यासतः स्मृतम् ॥
इड़या कर्षयेद्वायुं वाह्यात् षोड़शमात्रया ।
धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया ॥
सुषुम्ना मध्यमं सम्यग्द्वात्रिंशन्मात्रया शनैः ।
नाड्या पिङ्गलया चैनं रेचयेद्योगविग्रहात् ॥

व्यासः ।

अङ्गुष्ठेन पुटं ग्राह्यं नासाया दक्षिणं पुनः ।
कनिष्ठानामिकाभ्यान्तु वामं प्राणस्य संग्रहे ॥
अङ्गुष्ठतर्ज्जनीभ्यान्तु ऋग्वेदी सामगायनः ।
अङ्गुष्ठानामिकाभ्यान्तु ग्राह्यः सर्व्वैरथर्व्वभिः ॥

मनुः ।

प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥
प्राणायामत्रयं कार्य्यं सन्ध्यासु च तिसृष्वपि ।
प्राणस्यायमनं कृत्वा आचामेत्प्रयतोऽपि सन् ।
अन्तरं क्लिद्यते यस्मात्तस्मादाचमनं स्मृतम् ॥

## अथ मार्ज्जनम् ।

योगियाज्ञवल्क्यः ।

आपोहिष्ठेति तिसृभिः ऋग्भिस्तु प्रयतः शुचिः ।
नवप्रणवयुक्ताभिर्जलं शिरसि निःक्षिपेत् ॥

प्रतिपादमादौ प्रणव उच्चार्य्यमाणे ऋक्त्रयेऽपि नव प्रणवाः भवन्तीति नवप्रणवयुक्तत्वं भवति ।

ब्रह्माण्डपुराणे ।

नद्यां वाथ ह्रदे वाथ भाजने मृण्मयेऽथवा ।
औडुम्बरे च सौवर्णे राजते दारवे जलम् ।
कृत्वाथ वामहस्ते वा सन्ध्योपास्तिं समाचरेत्* ॥

एवञ्च वामहस्तोदकसन्ध्यानिषेधवचनानि पात्रान्तरसद्भावे सावकाशानि ।

द्वैपायनः ।

दत्त्वा चाभिमुखं तोयं मूर्द्ध्नि ब्रह्ममुखेन तु ।
आपो हिष्ठेति सूक्तेन दर्भैर्मार्ज्जनमाचरेत् ॥
यस्य क्षयायेति जलं सकुशं प्रक्षिपेत्त्वधः ।

नारायणः ।

ऋगन्ते मार्ज्जनं कुर्य्यात्पादान्ते वा समाहितः ।
आपो हिष्ठेत्यृचं कार्य्यं मार्ज्जनञ्च कुशोदकैः ॥
प्रतिप्रणवयुक्तञ्च क्षिपेन्मूर्द्ध्नि पदे पदे ।

---

* समारभेदिति पाठान्तरम् ।

ऋचस्यान्तेऽथवा कुर्य्यादृषीणां मतमीदृशम् ॥
आपोहिष्ठेति सूक्तस्य सिन्धुद्वीप ऋषिः स्मृतः ।
आपो वै देवता छन्दो गायत्री मार्ज्जनं स्मृतम् ॥

मार्ज्जने तीर्थविशेषमाह हारीतः ।

मार्ज्जनार्चनबलिकर्म्मभोजनानि दैवतीर्थेन कुर्य्यादिति।

एवं मार्ज्जनं कृत्वा सूर्य्यश्चेत्यपः पिबेत् ।

आह शौनकः ।

सायमग्निश्च मेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत् ।
आपः पुनन्तु मध्याह्ने एतैश्चाचमनं चरेत् ॥

तत्र सूर्य्यश्च मा मन्युश्च इत्यस्य मन्त्रस्य प्रकृतिश्छन्दः अग्निर्ऋषिः मन्युमन्युपतिरात्रयो देवताः प्रातःसन्ध्याचमने विनियोगः । केचन नारायणार्षं त्रैष्टुभं छन्दश्च मन्यन्ते । अग्निश्च सूर्य्यश्चेति यजुर्व्वैदिकौ मन्त्रौ ।

बौधायनोऽपि ।

अथातः सन्ध्योपासनविधिं व्याख्यास्यामः । तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रक्षालितपाणिपादः अप आचम्य अग्निश्च मामन्युश्चेति सायमपः पीत्वा सूर्य्यश्च मा मन्युश्चेति प्रातरपः पीत्वा सपवित्रेण पाणिना सुरभिमदव्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवतीति।

सुरभिमती दधिक्राव्णमिति । अस्या वामदेव्य ऋषिरनुष्टुप् छन्दः दधिक्रावा देवता मार्ज्जने विनियोगः ।—अव्लिङ्गाभि-

रापोहिष्ठीयाभिः। हिरण्यवर्णाभिः, हिरण्यवर्णाः शुचयः। यासां राजा यासां देवा शिवेन माचक्षुषा इति चतसृभिः। आसां त्रिष्टुप् छन्दः। अग्निर्ऋषिः आपो देवता मार्ज्जने विनियोगः। केचनात्र ऋषिं कश्यपं मन्यन्ते। पावमानीभिः स्वादिष्टयेत्यादिभिः पावमानीनां बहुत्वादृषिच्छन्दोदेवतानाञ्च भिन्नत्वाद्विस्तरभयान्नोक्ता। तत्स्वरूपं छन्दोगानान्तु सन्ध्याचमने गौतमोक्तौ मन्त्रौ द्रष्टव्यौ। अहश्च मादित्यश्च पुनात्विति प्रातः रात्रिश्च मा वरुणश्च पुनात्विति सायमिति। एतौ प्रजापतिदृष्टौ लिङ्गोक्तदैवतौ च।

सन्ध्याचमनानन्तरं नारायणः।

स्पृष्ट्वा चाभिप्लुतं तोयं मूर्द्ध्नि ब्रह्ममुखेन तु।
आपोहिष्ठेति सूक्तेन दर्भैर्मार्ज्जनमाचरेत्॥

स्पृष्ट्वा आचम्य ब्रह्ममुखं मनुनोक्तम्।

ओङ्कारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखमिति॥

सूक्तऋक्संख्यादिकमाह भृगुः।

आपो हिष्ठानवस्तृचु सिन्धुद्वीप ऋषिः स्मृतः।
अब्दैवत्यासु सप्तर्चो गायत्र्योऽद्वि त्वनुष्टुभाविति॥

मार्ज्जनानन्तरं ब्रह्मा।

जलपूर्णं तथा हस्तं नासिकाग्रे समर्पयेत्।
ऋतञ्चेति पठित्वा तु तज्जलन्तु क्षितौ क्षिपेत्॥

यमः।

गृहीत्वा पाणिना वारि स्वनासाग्रे तामृचं जपेत्।
विन्यस्य नासिकाग्रे तु निरुध्य प्राणमारुतम्॥
य एवं द्रुपदां नित्यं त्रिरङ्गः प्रयतो जपेत्।
न च तिष्ठन्ति पापानि तस्य देहे द्विजन्मनः॥ इति।

ऋतञ्च सत्यञ्चेति सूक्तं त्र्यृचमघमर्षणदृष्टम्। द्रुपदादिव मुमुचान इति द्रुपदाः। अस्याः कोकिलीराजपुत्र ऋषिः आपो देवता अनुष्टुप् छन्दः। ततः सूर्य्यार्घ्यं निवेदयेत्।

व्यासः।

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम्।
आदित्याभिमुखस्तिष्ठंस्त्रिरूर्द्ध्वं सन्ध्ययोः क्षिपेत्।
मध्याह्ने तु सकृदेव क्षेपणीयं द्विजातिभिः॥

अर्घ्यदाने मन्त्रान्तरमाह नारायणः।

कराभ्यामञ्जलिं कृत्वा जलपूर्णं समाहितः।
उदुत्यमिति मन्त्रेण तत्तोयन्तु क्षिपेत्ततः॥

इति शाखानुसारेण व्यवस्था।

उदकक्षेपणे कारणमाह काश्यपः।

त्रिंशत्कोट्यो महावीर्य्या मन्देहा नाम राक्षसाः।
कृष्णातिदारुणा घोराः सूर्य्यमिच्छन्ति खादितुम्॥
ततो देवगणाः सर्व्वे ऋषयश्च तपोधनाः।
उपासते सदा सन्ध्यां प्रक्षिपन्त्युदकाञ्जलिम्॥
दह्यन्ते तेन ते दैत्या वज्रीभूतेन वारिणा।
एतस्मात्कारणाद्विप्राः सन्ध्या नित्यमुपासते॥

ततः प्रदक्षिणमावृत्य जलं स्पृशेत् ।

तथाच भविष्यपुराणम् ।

सायं मन्त्रवदाचम्य प्रोक्ष्य सूर्य्यस्य चाञ्जलिम् ।
दत्वा प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुध्यति ॥

सायमित्युपलक्षणं सूर्य्यार्घ्यदानरूपनिमित्तस्य सर्व्वत्र विद्यमानत्वात् ।

श्रुतिरपि ।

यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानवधुन्वन्तीति* ।

## अथ सूर्य्योपस्थानम् ।

तत्र काश्यपः ।

हस्ताभ्यां स्वस्तिकं† कृत्वा प्रातस्तिष्ठेद्दिवाकरम् ।
मध्याह्ने तु ऋजू बाहू सायं मुकुलितौ करौ ॥

देवलः ।

मित्रस्य चर्षणी तिस्रो वसवस्त्वेति चोदये ।
इमं मेति‡ चतुष्केण सायं कुर्य्यादुपस्थितिम् ॥

व्यासः ।

सन्ध्यात्रयेऽप्येकमेव उपस्थानं प्रचक्ष्यते ।

---

* पाप्मानमवधुन्वन्तीत्येवं भवितुमर्हति परन्तु बहुषु पुस्तकेषु दर्शनादेतत्क्रमात् पाप्मानवधुन्वन्तीति रचितम् ।

† अञ्जलिरूपम् ।

‡ इमं मे वरुण इत्यादिमन्त्रः ।

उद्वयं* उदुत्यं† चित्रं‡ तच्चक्षु§स्तिष्ठेद्दिवाकरम् ॥
एतच्चोपस्थानं प्रातर्जपानन्तरमेव कार्य्यम् ।
तदुक्तं कूर्म्मपुराणे ।
ओङ्कारव्याहृतियुतां गायत्रीं वेदमातरम् ।
कृत्वा जलाञ्जलिं दद्याद्भास्करं प्रति जन्मना¶ ॥
वेदमातरमुच्चार्य्येत्यध्याहारः । जन्मना द्विजन्मना ।
ध्यात्वार्कमण्डलगतां सावित्रीं वै जपेद्बुधः ।
अथोपतिष्ठेदादित्यमुद्यन्तं‖ तं समाहितः ॥ इति ।

## अथ जपः ।

तत्र व्यासः ।
तेजोसीति च मन्त्रेण गायत्रीमावहेद्द्विजः ।
उपस्थाय तुरीयेण नमस्कृत्य जपेच्च ताम् ॥
योगियाज्ञवल्क्यः ।
ओङ्कारपूर्व्वमुच्चार्य्य भूर्भुवः स्वस्तथैव च ।
गायत्रीं प्रणवश्चान्ते जपोह्येष उदाहृतः ॥

---

* उद्वयं तमसः परिज्योतिरित्यादिमन्त्रः ।
† उदुत्यं जातवेदसमित्यादिमन्त्रः ।
‡ चित्रं देवानामित्यादिमन्त्रः ।
§ तच्चक्षुर्देवहितमित्यादिमन्त्रः ।
¶ इति आर्षम् ।
‖ उदयन्तमिति क्वचित्पाठः ।

गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्रीच्छन्दः जपे विनियोगः।

ध्यायेच्च मनसा मन्त्रं जिह्वौष्ठौ न विचालयेत्।
न कम्पयेच्छिरोग्रीवां दन्तान्नैव प्रकाशयेत्॥
मध्यमादिद्वयं पर्व्वं जपकाले तु वर्ज्जयेत्।
एवं मेरुं विजानीयाद्दूषितं ब्रह्मणा स्वयम्॥
विश्वतश्चक्षुरिति मन्त्रेण जपान्ते भास्करं द्विजः।
कुर्य्यात्प्रदक्षिणञ्चैव उपविश्यासने ततः॥
देवागातुविदो मन्त्रात्कुर्य्याज्जपविसर्ज्जनम्।
प्रातःसन्ध्याङ्गभूतेन गायत्र्या जपितेन च।
यथासङ्ख्येन जप्येन ब्रह्मा मे प्रीयतां रविः॥
उत्तरे शिखरे जाता भूम्यां पर्व्वतवासिनी।
ब्राह्मणैः समनुज्ञाता गच्छ देवि यथासुखमिति॥

अकृतसन्ध्यस्य सूर्य्योदये सति प्रायश्चित्तं स्मर्य्यते।

आदित्योऽभ्युदियाद्यस्य सन्ध्योपास्तिमकुर्व्वतः।
स्नात्वा प्राणांस्त्रिरायम्य गायत्र्यष्टशतं जपेत्॥

प्राणायामत्रयं कृत्वेत्यर्थः।

## अथ मध्याह्नसन्ध्यायां सौकर्य्याय विशेषः कथ्यते।

सङ्कल्पावाहनाचमनोपस्थानजपनिवेदनेषु।

तद्यथा। यथोक्तफलप्राप्तये माध्याह्निकीं सन्ध्योपास्तिमहं करिष्ये। इति सङ्कल्पः।

सावित्रीं युवतीं शुक्लां शुक्लवस्त्रां त्रिलोचनाम् ।
त्रिशूलहस्तां वृषभाधिरूढ़ां रुद्राणीं रुद्रदैवताम् ॥
यजुर्व्वेदकृतोत्सङ्गां जटामुकुटमण्डिताम् ।
कैलासविहितावासामायान्तीं सूर्य्यमण्डलात् ।
वरदां त्र्यक्षरां साक्षाद्देवीमावाहयाम्यहम् ।

त्र्यक्षरां प्रणवात्मिकाम् । इत्यावाहनम् ।

आपः पुनन्त्वित्याचमनमन्त्रः ।

अस्य नारायण ऋषिरापो देवता अनुष्टुप् छन्दस्त्वाचमने विनियोगः । एकाञ्जलिं प्रक्षिपेत् । ऊर्द्ध्वबाहुः सूर्य्यमुदीक्षमाणः उपतिष्ठेत् । उपस्थानमन्त्रशेषः स्मृत्यन्तरे प्रदर्शितः ।

गायत्र्या च यथाशक्त्या उपस्थाय दिवाकरम् ।
विभाड़ित्यनुवाक्येन सूक्तेन पुरुषस्य च ॥
शिवसङ्कल्पेन तथा मण्डलब्राह्मणेन च ।
पवित्रैर्विविधैश्चान्यैर्गुह्योपनिषदैस्तथा ।
जपयज्ञो हि कर्त्तव्यः सर्व्ववेदप्रणीतकैः ॥

इति स्वस्वशाखाभिप्रायमुपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेदिति वशिष्ठस्मरणात् ।

मध्याह्नसन्ध्याङ्गत्वेन गायत्र्या जपितेन च ।
यथासंख्येन जप्येन रुद्रो मे प्रीयतामिति ॥

## अथ क्रमप्राप्तसायंसन्ध्याविशेषः ।

सङ्कल्पावाहनाचमनोपस्थानजपनिवेदनेषु ।

उपात्तदुरितक्षयार्थं ब्रह्मप्राप्त्यै सायंसन्ध्योपासनमहं करिष्ये ।

वृद्धां सरस्वतीं कृष्णां पीतवस्त्रां चतुर्भुजाम् ।
शङ्खचक्रगदापद्महस्तां गरुड़वाहनाम् ॥
वदर्य्याश्रमवासान्तामायान्तीं सूर्य्यमण्डलात् ।
सामवेदकृतोत्सङ्गां वनमालाविभूषिताम् ।
वैष्णवीं खेचरीं शान्तां देवीमावाहयाम्यहम् ॥

अग्निश्च मेति नारायण ऋषिः अग्निर्देवता अनुष्टुप् छन्दः आचमने विनियोगः । इमं मे वरुण शृधीति चतसृभिः उपस्थानम् । अवशिष्टोपस्थानं प्रातर्व्वत् ।

सायंसन्ध्याङ्गभूतेन गायत्र्या जपितेन च ।
यथासंख्येन जप्येन विष्णुर्मे प्रीयतामिति ॥
नोदङ्मुखो जपेत्प्राज्ञो गायत्रीं वेदमातरम् ।
अग्निवयमुखी* यस्मात्तस्मादुत्थाय तां जपेत् ॥

उत्थायेति न सायंसन्ध्याविषयम् ।

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।

इति याज्ञवल्क्यस्मरणात् । मध्याह्ने तु योगियाज्ञवल्क्योक्तो विशेषः ।

तिष्ठंश्चेद्वीक्षमाणोऽर्कं जपं कुर्य्यात्समाहितः ।

अन्यथा प्राङ्मुखः कुर्य्यादिति ।

---

* गायत्र्यग्निमुखीति पाठान्तरम् ।

## अथ जपसंख्याविधिः ।

तत्र मनुः ।

ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ।
वानप्रस्थो यतिश्चैव द्विसहस्राधिकं जपेत् ॥

योगियाज्ञवल्क्यः ।

पूर्व्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमर्कदर्शनात् ।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात् ॥
यक्षराक्षसभूतानि सिद्धविद्याधरोरगाः ।
हरन्ति प्रसभं यस्मात्तस्माद्गुप्तं समाचरेत् ॥
न चङ्क्रमन्न च हसन्न पार्श्वमवलोकयन् ।
उपाश्रितो न कुर्य्यादीन नग्नः प्रयतो नरः ॥
नावाश्रितो* न जल्पंश्च न प्रावृतशिरा†स्तथा ।
न पदा पदमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयञ्जपेत् ॥

बृहस्पतिः ।

मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्व्वेदो‡ जपसम्पत्तिहेतवः ॥
न क्लिन्नवासाः स्थलगो जपादीनाचरेद्बुधः ।
जपकाले न भाषेत स्नानहोमादिकेषु च ॥

---

* अवाश्रितः जलमध्यस्थितः शुष्कवासा इति शेषः ।

† आच्छादितशिराः ।

‡ विवेकशून्यः ।

तूष्णीमासीत च जपंश्चाण्डालपतितादिकान् ।
दृष्ट्वा तानप्युपस्पृश्याभाष्य स्नात्वा विशुध्यति ॥
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥
विना शब्दं जपो यस्तु चलज्जिह्वाद्विजच्छदः† ।
उपांशुं तं जपं प्राहुर्मनसा मानसं बुधाः ॥

वशिष्ठः ।

मानसः शान्तिको जप्य उपांशुः पौष्टिकः स्मृतः ।
सशब्दश्चाभिचाराय त्रिविधो जप उच्यते ॥
गृहे तु प्राकृती सन्ध्या गोष्ठे दशगुणा भवेत् ।
नदीषु शतसाहस्रा अनन्ता शिवसन्निधौ ॥

प्राकृती यथावस्थिता नाधिकफलेति यावत् ।

शातातपः ।

अनृतं मद्यगन्धञ्च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्नं सन्ध्या वहिरुपासिता ॥

ब्रह्मपुराणे ।

अङ्गुष्ठेन जपन्मोक्षं तर्ज्जन्यामाभिचारिकम् ।
मध्यमा धनसम्पत्तिः शान्तिः पुष्टिरनामिका ॥

स्कान्दपुराणे ।

सौवर्णं राजतं ताम्रं स्फाटिकं रत्नजं तथा ।

---

* पशुहिंसाद्यात्मकः पशुयागादिः ।

† ओष्ठः ।

अरिष्टं* पुत्रजीवञ्च† ग्रङ्गं पद्मं तथा मणिम् ।
कुशग्रन्थिञ्च रुद्राक्षमुत्तमं चोत्तरोत्तरम् ॥

ब्रह्मपुराणे ।

अक्षुण्णा समरन्ध्रा च परिपूर्णा दृढ़ा नवा ।
निखिला ग्रथिताव्यङ्गा अन्योऽन्यं दृष्टिवर्ज्जिता ॥
सशब्दा चञ्चला या तु त्रुटिता ग्रथिता तु या ।
भिन्नसूत्रेण ग्रथिता पाषण्डस्य पुरातनी ॥

पाषण्डस्य पाषण्डसम्बन्धिनीत्यर्थः ।

माला दुःखप्रदायिन्यो ग्रथिता निन्द्यतन्तुभिः ।
अष्टोत्तरशती कार्य्या चतुःपञ्चाशिकाथवा ।
सप्तविंशतिका कार्य्या ततो नैवाधमाहिता ॥

उमासंवादे ।

उच्छिष्टो वा विकर्म्मस्थः संलिप्तः सर्व्वपातकैः ।
नासौ लिप्यति पापेन रुद्राक्षस्य तु धारणात् ॥
लक्षन्तु स्पर्शने पुण्यं कोटिर्भवति चालनात् ।
दशकोटिसहस्राणि धारणाल्लभ्यते फलम् ॥
लक्षकोटिसहस्रस्य लक्षकोटिशतस्य च ।
जपे तु लभ्यते पुण्यं नात्र कार्य्या विचारणा ॥

योगियाज्ञवल्क्यः ।

अभावे त्वक्षमालायाः कुशग्रन्थ्या च पाणिना ।

---

* निम्बफलम् ।

† कौयापुतीतिख्यातम् ।

जप एव हि कर्त्तव्य एकाग्रमनसा सदा ॥

## पाणिरेखाभिः परिगणनाप्रकारमाह

स एव ।

अनामिकामध्यरेखामादिं कृत्वा क्रमेण तु ।
तर्ज्जन्यादिगतान्ते च अक्षमाला करे स्थिता ॥

अस्यार्थः ।

अनामिकामध्यरेखामादिं कृत्वा तदधःक्रमेण प्रदक्षिणावर्त्तं तर्ज्जन्यादिरेखा अन्ते कर्त्तव्या इयं करस्थिता अक्षमाला भवतीति ।

मध्यमादिद्वयं पर्व्व जपकाले तु वर्ज्जयेत् ।
एतन्मेरुं विजानीयाद्दूषितं ब्रह्मणा स्वयम् ॥
तर्ज्जन्या न स्पृशेत्सूत्रं न कम्पेन्न विधूनयेत् ।
अङ्गुष्ठस्य तु मध्यस्थं परिवर्त्तं समाचरेत् ॥
नार्द्रवासा* जपं कुर्य्याद्धोमं दानं प्रतिग्रहम् ।
सर्व्वं तद्राक्षसं प्रोक्तं वहिर्जानु च यत्कृतम् ॥
अङ्गुष्ठाग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घितम् ।
असंख्यातं तु यज्जप्तं तत्सर्व्वं निष्फलं भवेत् ॥

यमः ।

जातके मृतके वापि सन्ध्याकर्म्म न सन्त्यजेत् ।

---

* स्नानस्थित इत्यर्थः ।

मनसोच्चारयेन्मन्त्रान् प्राणायामं विवर्ज्जयेत् ॥

योगीश्वरः ।

सन्ध्यां स्नानं त्यजन्विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।
तस्मात्सन्ध्याञ्च स्नानञ्च सूतकेऽपि न सन्त्यजेत् ॥
शिवविष्णर्व्वनं दीक्षा यस्य चाग्निपरिग्रहः ।
श्रौतकर्म्माणि कुर्व्वीत स्नातः शुद्धिमवाप्नुयात् ॥
सहस्रकृत्वस्तु वहिर्जपन्नेतत्त्रिकं द्विजः ।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥
योऽधीते चान्वहं चेतां त्रीणि वर्षाणि मानवः ।
स ब्रह्मपद*मभ्येति वायुभूतः खमूर्त्तिमान् ॥
एतदक्षरमेताञ्च जपन् व्याहृतिपूर्व्विकाम् ।
सन्ध्ययोरुभयोर्विप्रो वेदपुण्येन युज्यते ॥
सप्तावर्त्तात्पुनात्येषा दशभिः प्रापयेद्दिवम् ।
विंशावृत्त्या तु सा देवी नयते ईश्वरालयम् ॥
अष्टोत्तरशतं जप्त्वा तारयेज्जन्मसागरात् ।
सर्व्वेषाञ्चैव पापानां सङ्करे समुपस्थिते ॥
दशसाहस्रिकोऽभ्यासी गायत्र्याः शोधनं परम्† ।

---

* स ब्रह्म परमभ्येति इति पाठान्तरम् ।

† अस्य पूर्व्वश्लोकार्द्धेनान्वयः तथाच पापानां सङ्करे समुपस्थिते नानाविधपापे जाते सति गायत्र्याः दशसाहस्रिकः अभ्यासः जपरूपः परं शोधनं तत्तत्पापनाशकः ।

वायुभक्षो दिनं तिष्ठेद्रात्रिं नीत्वा तु सूर्य्यदृक् ॥*
जप्त्वा सहस्रं गायत्र्याः शुचिर्ब्रह्मवधाद्दृते ।
न गायत्र्या समो मन्त्रो न जपो वैदिकात्परः ॥
वासुदेवात्परो देवो नेति व्यासः समब्रवीत् ।

## अथोपाकर्म्म ।

तत्र याज्ञवल्क्यः ।

अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

अधीयन्त इत्यध्याया वेदाः । तेषां संस्कारकं कर्म्मोपाख्यं तत् । श्रावण्यां श्रावणस्य पौर्णमास्यां कार्य्यं चन्द्रमसायुक्तं श्रवणनक्षत्रं यस्यां सा श्रावणी । श्रवणेन वा श्रवणेन युक्तेऽहनि वा हस्तेन युक्तायां पञ्चम्यां वा उपाकर्म्म कार्य्यम् । अन्येन तु हस्तेन युक्तेऽहनि वा पञ्चम्यां वेति व्याचक्ष्यते । अथवा श्रवणशब्दात् सप्तम्यर्थे एनप्रत्ययः । एवं हस्तादपि श्रवणे नक्षत्रे हस्ते नक्षत्रे इत्यर्थः । ओषधिभावः ओषधीनां व्रीहिप्रभृतीनां प्रादुर्भाव-अङ्कुरोदय इति यावत् एतच्च विशेषणं श्रावणस्येति च सर्व्वैः सम्बध्यते । यदा त्वौषधिप्रादुर्भावाभावो ग्रहसंक्रान्त्यादिदोषो†

---

* कल्पान्तरं दर्शयति वायुभक्ष इत्यादि तथाच ब्रह्मवधाद्दृते महतः पातकाद्विना तु चार्थे सूर्य्यदृक् सूर्य्यं वीक्षमाणः वायुभक्षः सन्दिनं रात्रिञ्च नीत्वा सहस्रं गायत्रीं जप्त्वा च सर्व्वेभ्यः पापेभ्यः शुचिः तिष्ठन्मुक्तो भवेदित्यर्थः ।

† मलमासादिदोषः ।

वा स्यात्तदा भाद्रपदपौर्णमास्यादिषु कार्य्यम् ।

तथाच मनुः ।

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान् ॥

अर्द्धः पञ्चमो मासो येषां ते तादृशः । उपाकर्म्मप्रभृति अर्द्ध-सहितांश्चतुरो मासान् । शुक्लकृष्णपक्षे तु स्वाध्यायदिने स्वाध्यायमधीयीतेत्यर्थः । एतच्च ग्रहणाध्ययनं गृहस्थस्यापि भवति ।

यथाह शौनकः ।

समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयीत्येक इति । इतरे ब्रह्मचारिणः* जायोपेयी† गृहस्थः अपिशब्दाद्भाद्रपदश्रवणहस्तपञ्चमीनामुपसंग्रहः ।

तथा बह्वृचगृह्यपरिशिष्टकारिका ।

अव्द्योषधयस्तस्मिन्मासेन तु भवन्ति चेत् ।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते ॥

गोभिलः ।

प्रौष्ठपदीं हस्तेनोपाकरणम् ।

प्रौष्ठपदीं प्राप्य इत्यर्थः ।

शौनकः ।

तद्वार्षिकमित्येतदाचक्षत इति ।

---

* नैष्ठिकरूपाः ।

† जायाया उपेयी उपगतः ।

वर्षाकाले भवं वार्षिकम् ।

बौधायनः ।

श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य च्छन्दांस्यधीयीतेति ।

निगमः ।

श्रावण्यां श्रावणीकर्म्म यथाविधि समाचरेत् ।
उपाकर्म्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे ॥
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणेन चेति ।

अत्र स्वस्वगृह्यानुसारेण व्यवस्थेति साधारणनिर्णयः । तत्रापि ऋक्छाखिनां* श्रवणे अपि । यजुःशाखिनां पौर्णमास्याम् । तत्रापि तैत्तिरीयाणामौदयिके† पर्व्वणि इतरेषान्तु पूर्व्वस्मिन् पर्व्वणि सामगानान्तु हस्ते । अयञ्च निर्णयः श्रवणादिप्राधान्यनिर्द्देशाद्गम्यते । असति ग्रहसंक्रान्त्यादिरूपप्रतिबन्धे श्रावणे मास्येव । तत्र प्रतिबन्धे प्रौष्ठपद्यामुभयत्रापि प्रतिबन्धसद्भावे यदि स्वशाखायां शृङ्गग्राहिकतया‡ न निषेधस्तदा सर्व्वशाखाधिकरणन्यायेन कर्म्मण एकत्वात् बौधायनोक्तत्वेन पारक्य§मविरोधवदिति वचनाच्चाषाढ्यां पौर्णमास्यां यजुःशाखिनां भवति । बह्वृचानां सामगानां चाषाढ़-

---

* ऋग्वेदिनाम् ।

† उदयप्राप्ततिथिखण्डे ।

‡ प्रातिस्विकतया ।

§ परशाखोक्तम् ।

मासश्रवणहस्तनचत्रयोर्न भवति। कस्मिंश्चिदपि ऋच्छाखा-विशेषे* सामशाखाविशेषे वा आषाढ़मासे विध्यदर्श-नात् शिष्टपरम्परायामश्रुतत्वाच्च कालवृद्धावप्युपाकर्म्मोत्कर्षो भवति।

यदाह कात्यायनः।

उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु॥

यत्तु ऋष्यशृङ्गवचनम्।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।

उपाकर्म्मणि चेति तच्छन्दोगविषयम्। यतः कालवृद्धावपि तेषां सिंहार्क एवोपाकर्म्म।

तथाच गार्ग्यः।

सिंहे रवौ च पुष्यर्क्षे पूर्व्वाह्णे विचरेद्बहिः।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं स्वस्वच्छन्दसाम्†॥
शुक्लपक्षे तु हस्तेन उपाकर्म्मापराह्णिकमिति।

सिंहे रवावुपाकर्म्म पुष्यर्क्षे उत्सर्ज्जनमित्यन्वयः।

अत्रेति कर्त्तव्यतामाह कार्ष्णाजिनिः।

उपाकर्म्मणि चोत्सर्गे यथाकालं समेत्य च।
ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः॥

---

* ऋग्वेदिविशेषे।

† स्वस्वकर्म्मणामिति पाठान्तरम्।

वृद्धप्रचेताः ।

भवेदुपाकृतिः पौर्णमास्यां पूर्व्वाह्न एव तु ।
ब्राह्मणान् भोजयेत्तत्र पितॄनुद्दिश्य देवताः ॥

बौधायनः ।

गौतमादीनृषीन् सप्त कृत्वा दर्भमयान्पुनः ।
पूजयित्वा यथाशक्ति पूजयेदृचमुच्चरेत् ॥

गौतमादीनिति स्वस्वशाखोक्तर्षिप्रदर्शनार्थं पूजयेदृचमिति ऋचमृग्वेदं पूजयेत् । तथा उच्चरेत् पठेत् । एतच्च वेदान्तराणामपि प्रदर्शनार्थम् ।

भविष्योत्तरपुराणे ।

अप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्व्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
ततो देवान् पितॄंश्चैव तर्पयेत्परमाम्भसा ।
उपाकर्म्म दिवैवोक्तमृषीणाञ्चैव तर्पणम् ॥
कुर्व्वीत ब्राह्मणः श्राद्धं वेदानुद्दिश्य शक्तितः ।

अप्राप्ते श्रावणस्यान्त इति शुक्लप्रतिपदादिमासाभिप्रायेण* । संप्राप्ते श्रावणस्यान्त इत्यपि पाठः तदा कृष्णप्रतिपदादिमासाभिप्रायः† । दिनोदय इति औदयिकपर्व्वाभिप्रायम् । एतच्च तैत्तिरीयाणामेव ।

तथाच बह्वृचपरिशिष्टकारिका ।

---

* तथाच श्रावणस्यान्ते अप्राप्ते अर्थात् पौर्णमास्यन्तमासो न भवतीत्यर्थः ।

† श्रावणस्यान्ते सम्प्राप्ते अर्थात्पौर्णमास्यन्तमासो भवति ।

पूर्व्वमौदयिकीं कुर्य्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचः श्रावणे कुर्य्युर्ग्रहसंक्रान्तिवर्ज्जिते ॥ इति ।

तैत्तिरीयव्यतिरिक्तैर्यजुःशाखीयैः पूर्व्वविद्धैव पौर्णमासी ग्राह्या ।

श्रावणी दौर्गनवमी दूर्व्वा चैव हुताशनी ।
पूर्व्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्द्दिनमिति स्मरणात् ।

नत्वेतदनुपपन्नम् । औदयिके पर्व्वणि तैत्तिरीयका एव कुर्य्युरिति वक्तुमशक्यत्वात् । तथाहि औदयिकत्वविशेषणविशिष्टे पर्व्वणि यदुपाकर्म्म तदनुवादेन हि तैत्तिरीयकाः कर्त्तारो विधीयन्ते तथाच वाक्यभेदप्रसङ्गः । किञ्च औदयिकत्वस्याप्राप्तत्वादनुवादोऽपि न घटते । नापि तैत्तिरीयकरूपकर्त्तृविधिः न हि कर्म्मणि कर्त्तृविधानमपि तु कर्त्तुर्हि कर्म्म विधीयते । किञ्च बह्वृचगृह्य एवोपाकर्म्मणस्तत्कालस्य पौर्णमास्याश्च विधानादत्र कारिकायामङ्गस्य पौर्णमासीकालस्य औदयिकत्वसम्बन्धो विधेयः । तथाङ्गरूपकर्त्तॄणां तैत्तिरीयकाणामौदयिकत्वेनापरः सम्बन्धो विधेयः सम्बन्धद्वयस्याप्राप्तत्वात् । तथाच दुष्परिहरणीयो वाक्यभेदः प्राप्ते कर्म्मण्यनेकगुणविधानात् । नचारुणैकहायनीन्यायेन पार्श्विकान्वयः* । कर्म्मणः प्राप्तत्वाद्द्रव्यगुणरूपत्वाभावाच्च । तत्र ह्यारुण्यं गुणो द्रव्यरूपगोद्वारा सोमक्रयणाय उपयुज्यते । अत्र तु

* अरुणया एकहायन्या गवा सोमं क्रीणाति पदे जुहोति । इति श्रुतिरस्ति अत्र पार्श्वस्थत्वात्पदे इत्यस्य यथा गोपद इति लक्ष्यते इति न्यायः ।

तैत्तिरीयकरूपकर्त्तरि औदयिकत्वं चेत्युभयं परस्परनिरपेक्षाङ्गम् । न च निरपेक्षयोर्गुणयोर्मिथः सम्बन्धः* गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यादिति सूत्रकारवचनात् । कर्त्तुश्च शेषत्वमुपदिष्टं† गुरुणा ।

अधिकारी हि यज्ञेषु कर्त्तुः शेषस्य‡ चिन्त्यत इति ।

तस्मात्तैत्तिरीयकपदं हविरुभयत्ववदुपलक्षकम् । तत एवानुवादः । तथाचौदयिकत्वमात्रं विधेयमिति । तैत्तिरीयकव्यतिरिक्तानामपि यजुःशाखिनामौदयिक एव पर्व्वण्युपाकर्म्म प्राप्तम् । श्रावणी दौर्गनवमीत्यस्य तु हिरण्यगर्भ्भपविनारोपणविषयः§ । उपाकर्म्माङ्गभूतमाभ्युदयिकं श्रावणीकर्म्म चेति । एवं प्राप्तेऽभिधीयते । न तावद्विशिष्टानुवादे वाक्यभेदः । उद्देश्यविशेषणविवक्षायामेव वाक्यभेदो न तु विशिष्टोद्देशेनेति भवदेवेनोक्तत्वात् । यदुक्तमौदयिकत्वस्याप्राप्तत्वादनुवादो न घटत इति तदयुक्तम् । वाक्यान्तरेणौ-

---

* परस्परावच्छेद्यावच्छेदकत्वापेक्षान्वयः ।

† प्राधान्येनान्वयित्वमुपदिष्टम् ।

‡ नियोज्यतया अन्वयिनः ।

§ हिरण्यगर्भस्य ब्रह्मणः पूजायां पूर्व्वविद्धा श्रावणी ग्राह्या इत्यर्थः तथाच धनदश्च रमा गौरी गणेशः सोमराड्गुरुः । भास्करश्चण्डिकाम्बाश्च वासुकी च तदर्थंशः चक्रपाणिश्चानङ्गश्च शिवो ब्रह्मा तथैव च । प्रतिपत्प्रभृतिष्वेताः पूज्यास्तिथिषु देवताः । यथोक्ताः शुक्लपक्षे तु तिथयः श्रावणस्य चेति ।

दयिकपर्व्वप्राप्तिः ।

तथाच भविष्योत्तरे ।

संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदय इति ।

वाक्यशेषस्तु पूर्व्वमेव दर्शितः ।

तथा कालिकापुराणे ।

चतुर्द्दश्यां समुत्पन्नावसुरौ मधुकैटभौ ।
वेदान् स्वीकुर्व्वतः पद्मयोनिस्तौ जह्रतुः श्रुतीः ॥
हत्वा तावसुरौ देवः पातालतलवासिनौ ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
स प्राप्तवान् श्रुतीर्ब्रह्मा पर्व्वण्यौदयिके पुनः ।
अतो भूतयुते* तस्मिन्नौपाकरणमिष्यते ॥
असुखं वर्ज्जयेत्कालं वेदाहरणशङ्कया । इति ।

तस्मात् ।

पर्वण्यौदयिके कुर्य्युः श्रावणीं तैत्तिरीयकाः ॥

इत्यत्र तैत्तिरीयककर्त्तृत्वमात्रं विधीयत इति न वाक्यभेदः । प्राप्ते कर्म्मणि गुणद्वयविध्यभावात् । न हि कर्म्मणि कर्त्तृविधानमिति चेत् । न अप्राप्तांशे विधिः । अत्र कर्त्तृविशेषस्याप्राप्तत्वादुपपद्यते अपित्वनुपादेयपञ्चकमध्यस्थत्वात् कर्म्म विधीयते कर्त्तुर्द्देशेन विधिः पर्य्यवसानं न तु कर्त्तृविशेषएव

* भूतयुते चतुर्द्दशीयुते तस्मिन् पर्व्वणि औपाकरणं न इष्यते इत्यर्थः ।

अथवा विशिष्टविधिरेव कारिकायाम्। ननु स्मृतौ उपाकर्म्मादीनां विहितत्वेन प्राप्तत्वात्कथं विशिष्टविधिः, उच्यते ग्रन्थकर्तृभेदेन विशिष्टविध्याश्रयणं न च कारिकाकारेणोपाकर्म्मादि विहितम्। अन्यथा सर्वस्मृत्युच्छेदापत्तिः। न च सर्वशाखाधिकरणन्यायेन* कर्म्मणः प्रधानस्यैकत्वाद्विशिष्टविधौ गौरवप्रसक्तेश्च तैत्तिरीयकपदे लक्षणाश्रयणमुचितम्। तथा सति तैत्तिरीयकपदस्य वैयर्थ्यापत्तिः। तथाहि पर्वण्यौदयिकीं श्रावणीं कुर्य्युरित्येतावता सर्वेषां प्राप्तत्वात्तैत्तिरीयकपदं व्यर्थमेव किञ्च विशिष्टविधौ गौरवभयाल्लक्षणास्वीकारे अनवस्था प्रसज्येत।

यदुक्तम्।

नाङ्गानां मिथः सम्बन्ध इति।

तदप्यनुपपन्नं कर्त्तृविशेषस्य कालाकाङ्क्षायामौदयिकत्वरूपकालसम्बन्धोपपत्तेः, न चायं नियमः, द्रव्यगुणयोरेव सम्बन्ध इति। अद्रव्यगुणयोरप्याकाङ्क्षावशात्सम्बन्धोपपत्तेः। पूर्वोक्तदोषाणां बह्वृचपदेऽपि समानत्वात्तदपि विवक्षितमेव। तस्मात्तैत्तिरीयका औदयिके पर्वणि तैत्तिरीयकव्यतिरिक्तयजुःशाखीयानां पूर्वविद्धैव पौर्णमासी बह्वृचानान्तु श्रवण एवेति सिद्धम्। तच्च श्रवणनक्षत्रमुत्तराषाढ़ाविद्धं न ग्राह्यम्।

---

* सर्वशाखाप्रत्ययमेकं कर्म्म इति न्यायेन कर्म्म तु पौराणाद्युक्तम्।

तथाच व्यासः ।

श्रवणेन तु यत्कर्म्म उत्तराषाढ़संयुतम् ।
संवत्सरकृतोऽध्यायस्तत्चणादेव नश्यति ॥
धनिष्ठासंयुतं कुर्य्याच्छ्रावणं कर्म्म यद्भवेत् ।
तत्कर्म्म सफलं विद्यादुपाकर्म्मेति संज्ञितमिति ॥

तैत्तिरीयशाखिनां बह्वृचानां सामगानां चौदयिक एव खोक्तः कालो भवति ।

तथाच परिशिष्टम् ।

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋचसमन्वितम्* ।
श्रावणे कर्म्म कुर्व्वीरन्नृग्यजुःसामपाठकाः ॥

धनिष्ठायुक्तं श्रवणनचत्रं प्रतिपद्युक्तं पर्व्वचित्रायुक्तं हस्तनचत्रं वेधश्च षड्घटिकात्मको ज्ञेयः ।

वेधः षड्घटिको ज्ञेय इति स्मरणात् ।

एतच्चोपाकर्म्म ग्रहणादिरहिते कार्य्यम् ।

तथाच स्मृत्यन्तरे ।

उपाकर्म्म प्रकुर्व्वन्ति क्रमात्सामर्ग्यजुर्विदः ।
ग्रहसंक्रान्त्ययुक्तेषु हस्तश्रवणपर्व्वसु ॥

तथा ।

संक्रान्तौ ग्रहणे चैव सूतके मृतकेऽथवा ।

---

* त्वाष्ट्रऋचसमन्वितमिति छन्दोऽनुरोधादसन्धिः ।

गणस्नानं* न कुर्व्वीत नारदस्य वचो यथा ॥
अथ चेद्दोषसंयुक्ते पर्व्वणि स्यादुपाक्रिया।
दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन्द्विजातयः॥

तथा।

यदि स्याच्छ्रवणं पर्व्व ग्रहसंक्रान्तिदूषितम्।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ॥

शुक्लपञ्चमीति वाजसनेयाभिप्रायम्†।

तथाच स्मृतिमहार्णवे।

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत्।
उपाकृतिस्तु पञ्चम्यां कार्य्या वाजसनेयिभिरिति ॥

तथा।

संक्रान्तिर्ग्रहणं वापि यदि पर्व्वणि जायते।

---

* गणानां वेदच्छन्दोब्रह्मादिदिवौकसादीनां सन्निधाने सति स्नानं तद्गणस्नानं उपाकर्म्मादिनिमित्तस्नानमित्यर्थः।

तथाच च्छन्दोगपरिशिष्टम्।

वेदाश्छन्दांसि सर्व्वाणि ब्रह्माद्याश्च दिवौकसः।
जलार्थिनोऽपि पितरो मरीच्याद्यास्तथर्षयः॥
उपाकर्म्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः।
यियासूननुगच्छन्ति संहृष्टाश्चाशरीरिणः॥
समवायश्च यत्रैषां तत्रान्यो बहवोऽमलाः।
नूनं सर्व्वे क्षयं यान्ति किमुतैको नदीरजः॥

† यजुर्व्वेदाभिप्रायम्।

तत्रापि हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥

हस्तयुक्तायामन्यस्यां तिथौ पञ्चम्यां वेति विकल्पः। न तु पर्व्वणि ग्रहणे चतुर्द्दश्यां श्रवणे नोपाकर्म्म कार्य्यं वेधदोषसम्भवात्।

तथाच स्मर्य्यते।

त्रयोदश्यादितो वर्ज्यं दिनानां नवकं* ध्रुवम्।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्य्ययोः ॥

तथा।

द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥
खण्डे ग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयमिति।

दिनद्वयं पूर्व्वोत्तरम्।

उत्तरम्।

नित्यनैमित्तिके जप्ये होमयज्ञक्रियासु च।
उपाकर्म्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥

इति न दोषः। गुरुशुक्रास्तमयादिष्वपि उपाकर्म्म केचन नेच्छन्ति। तेषामयमभिप्रायः। विद्यारम्भो गुरुशुक्रमौढ्यादिषु† निषिद्धः। उपाकर्म्म च वेदारम्भरूपः। ततश्च प्रथमो-

* अत्र पञ्चम्यां उपाकर्म्मविधानात् वचनान्तरे एकादश्यादिचतुर्थ्यन्तवेधविधानाच्च त्रयोदश्यादिः व्यवहितादिरेकादशी तामारभ्य दिनानां नवकं वर्ज्यमित्यर्थः।

† गुरुशुक्रास्तमयादिषु।

पाकर्म्मणि गुरुशुक्रास्तमयप्राप्तावुपाकर्म्म न कर्त्तव्यम्। अन्यत्र न दोष इति।

## अथोत्सर्ज्जनम्।

तत्र याज्ञवल्क्यः।

पौषमासस्य रोहिण्यामष्टकायामथापि वा।
जलान्ते च्छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः॥

रोहिणीयुक्तायामन्यस्यां तिथौ रोहिणीयुक्तायामष्टकायां कृष्णाष्टम्यां वा। बहिः ग्रामाद्बहिः। जलसन्निधौ। अत्र च्छन्दसामुत्सर्ज्जनं न सर्व्वात्मना*।

अतएव मनुः।

अतःपरन्तु च्छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि रहस्यञ्च कृष्णपक्षेषु संपठेत्॥

तथा।

पुष्येषु च्छन्दसां कुर्य्याद्बहिरुत्सर्ज्जनं द्विजः।
माघशुक्लस्य वा प्राप्ते पूर्व्वाह्णे प्रथमेऽहनि॥

श्रावणे यदोपाकर्म्म तदा पुष्ये उत्सर्ज्जनम्। यदा भाद्रपदे तदा माघे शुक्लप्रतिपदि।

हारीतः।

अर्द्धपञ्चमान्मासानधीत्यार्द्धमुत्सृजति पक्षार्द्धपक्षान् वेति।

---

* सर्व्वांशेन।

अर्द्धषष्ठान् पञ्चमासान् वेत्यर्थः। अयञ्च पक्ष आषाढ़स्य पौर्ण-
मास्यामुपाकर्म्माभिप्रायः।

## अथ वेदव्रतानि।

एतान्यप्युदगयने आपूर्य्यमाणपक्षे प्राजापत्याग्नेयवैश्वदेव-
सौम्याख्यानि कुर्य्यात्। प्राजापत्यादिस्वरूपप्रदर्शनमुपलक्ष-
णार्थम्। अतः स्वस्वशाखाविहितव्रतानि कर्त्तव्यानि।
अत्र कालविशेषमाह गार्ग्यः।

वेदव्रतानामुदगयनादिककाल इति।

आदिशब्दादापूर्य्यमाणपक्षाद्युपसंग्रहः।
यदाह स एव।

पर्व्वण्युदगयनआपूर्य्यमाणपक्षस्य चोदगयन इति।

दक्षः।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च।
ब्रह्मचारी भवेत्तावदूर्द्धं स्नातो भवेद्गृही॥

गौतमोऽपि।

गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म्म-नामकरण-
निष्क्रमणान्नप्राशन-चूड़ोपनयनं चत्वारि वेदव्रतानीति।

ब्रह्मचर्य्यव्रतकालविधिमाह देवलः।

अतः परमष्टचत्वारिंशद्वार्षिकीं वेदव्रतचर्य्यामातिष्ठेद-
शक्तश्चेत् षट्त्रिंशद्वार्षिकीं चतुर्विंशतिद्वादश वा प्रति-
वेदमिति।

मनुः।

षट्त्रिंशदाब्दिकं कार्य्यं गुरौ त्रैवेद्यकं व्रतम्।

तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव च॥ इति।

अस्यार्थः, त्रिवेदा एव त्रैवेद्यम्। वेदत्रयविषयं ब्रह्मचर्य्यं षट्त्रिंशदाब्दिकं कार्य्यं प्रतिवेदं द्वादश वर्षाणि ब्रह्मचर्य्यं चरेदित्यर्थः। अर्द्धिके षड्वर्षाणि पादिके तु त्रीणीति। एवमुपनीतं तत्काण्डोपयुक्तव्रतधारिणं माणवकमध्यापयेत्।

याज्ञवल्क्यः।

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्व्वकम्।

वेदमध्यापयेदेनमिति।

तत्र यदा ऋग्वेदमारभते तदा स्वगृह्योक्तविधिनाग्निं प्रतिष्ठाप्य पृथिव्यै स्वाहा अग्नये स्वाहा इति आज्याहुतीर्हुत्वा ब्रह्मणे च्छन्दोभ्य इत्याद्या नवाहुतीर्हुत्वा शेषं समापयेत्। यदि यजुर्वेदं तदान्तरीक्षाय स्वाहा वायवे स्वाहा। यदा सामवेदं तदा दिवे स्वाहा सूर्य्याय स्वाहेति। यदाथर्व्ववेदं तदा दिग्भ्यः स्वाहा चन्द्रमसे स्वाहेति विशेषः। यद्येकदैव सर्व्ववेदारम्भः तदाज्यभागानन्तरं प्रतिवेदं पूर्व्वोक्तप्रधानाहुतिद्वयं हुत्वा प्रजापतये स्वाहा देवेभ्यः ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतये अनुमतये स्वाहेति सम्पूज्याहुतीर्जुहुयात्। अनन्तरं महाव्याहृतिस्विष्टिकृतं द्वादशाहुतीर्हुत्वा शेषं समाप्य यथाविधि वेदमध्यापयेत्। तत्रापि माणवककुलपरम्परया तं वेदमध्यापयेत्। तस्यैवाध्येतव्यत्वनियमात्।

वशिष्ठः ।

पारम्पर्य्यागतो येषां वेदः सपरिवृंहणः ।
तच्छाखं कर्म्म कुर्व्वीत तच्छाखाध्ययने तथेति ॥

स्वशाखाध्ययनानन्तरं शाखान्तराध्ययनमपि भवति ।

तथाच वशिष्ठः ।

अधीत्य शाखामात्मीयामन्यां शाखां ततः पठेत् । इति

आरम्भश्च शुभदिनादौ कार्य्यः ।

तथा ज्योतिःशास्त्रम् ।

विद्यारम्भः प्रशस्तो भवति मधुरिपौ प्राप्तबोधे* सुधांशौ
शस्ते तीक्ष्णद्युतौ†च त्रिदशपतिगुरावुद्गते चापि शुक्रे‡।
अप्राप्ते सिंहराशौ दशशतकिरणे§ चापि दैत्यारिपूज्ये¶
स्वाध्याये भानुशुक्रत्रिदशगुरुदिने लग्नसंस्थे च जीवे ॥

षष्ठीं प्रतिपदञ्चैव वर्ज्जयित्वा तथाष्टमीम् ।
रिक्तां पञ्चदशीञ्चैव शौरभौमदिनं तथा ॥

विद्यारम्भः सुरगुरुसितज्ञैस्त्वभीष्टार्थदायी
कर्त्तुश्चायुश्चिरमपि करोत्यंशुमान्‖ मध्यमोऽत्र ।

---

* हरिबत्याने ।

† रविशुद्धौ चेत्यर्थः ।

‡ बृहस्पतौ शुक्रे च उदिते सति ।

§ सूर्य्ये ।

¶ बृहस्पतौ च सिंहराशिगते इत्यर्थः ।

‖ अंशुमानत्र चन्द्रः सूर्य्यश्च ग्राह्यः अभिनङ्गलयोर्निषेधात् ।

नीहारांशौ भवति जड़ता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्त्तयन्त्येवमाद्याः ॥
मृगादिपञ्चस्वपि भेषु मूले
हस्तादिके च त्रितयेऽश्विनीषु ।
पूर्व्वात्रयेषु श्रवणे च तत्त्व-
विद्यासमारम्भमुशन्ति सिद्धौ ॥

## अथाध्ययनविध्यादयः ।

याज्ञवल्क्यः ।

गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।

मनुः ।

अध्येष्यमाणः स्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ॥
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ।
ब्रह्मणः* प्रणवं कुर्य्यादादावन्ते च सर्व्वदा ॥
स्रवत्य†नोङ्कृतं पूर्व्वं परस्ताच्च विशीर्य्यति‡ ।

---

* ब्रह्मणोवेदस्य आदौ पाठारम्भे अन्ते पाठसमाप्तौ प्रणवं कुर्य्यादुच्चरेत् ।

† स्रवति अर्थादभ्यस्तो न भवति ।

‡ स्मरणयोग्यो न भवति ।

प्राञ्जलिः पर्य्युपासीत पवित्रै*श्चैव पावितः ॥
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ।

मनुः ।

अध्येष्यमाणस्तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्† ॥
नोदितो‡ गुरुणा नित्यमप्रणोदित एव वा§ ।
कुर्य्यादध्ययने योगम¶ाचार्य्यस्य हितेषु च ॥

दक्षः ।

द्वितीये तु तथा भागे‖ वेदाभ्यासो विधीयते ।
वेदस्वीकरणं** पूर्व्वं विचारोऽभ्यसनं जपः ॥
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।

मनुः ।

नित्यमुद्धृतपाणिः स्यात्स्वाध्यायार्थं समाहितः ।
आस्यताम्††इति चोक्तः‡‡ सन्नासीताभिमुखं गुरोः ॥

---

* कुशादिभिः ।

† विरमेत् ।

‡ प्रेरितः ।

§ चोदितो गुरुणा नित्यमप्रचोदित एव वा इति पाठान्तरम् ।

¶ यत्नमिति पाठान्तरम् ।

‖ यामे ।

** अध्ययनम् ।

†† उपविश्यताम् ।

‡‡ गुरुणेति शेषः ।

हीनान्नवस्त्रवेशः स्यात्सर्व्वदा गुरुसन्निधौ ।

गुर्व्वपेक्षया हीनान्नवस्त्रवेशत्वम् ।

उत्तिष्ठेत्प्रथमं चास्य चरमं* चैव संविशेत्† ।

याज्ञवल्क्यशिक्षा ।

हस्तौ तु संयतौ धार्य्यौ जानुभ्यामुपरि स्थितौ ।
गुरोरनुकृतिं कुर्व्वन् पठन्नान्यमतिर्भवेत् ॥
शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥

पाणिनीयशिक्षायाम् ।

हस्तेन‡ वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥
हस्तहीनन्तु योऽधीते स्वरवर्णविवर्ज्जितम् ।
ऋग्यजुःसामनिर्दग्धो वियोनि§मभिगच्छति ॥

पराशरः ।

ज्ञातव्यः सर्व्वदैवार्थो वेदानां कर्म्मसिद्धये ।
पाठमात्र¶मधीती च पङ्के गौरिव सीदति ॥

---

* गुरोः शयनानन्तरम् ।

† शय्यायामिति शेषः ।

‡ हस्तचालनेन ।

§ विरुद्धयोनिं नीचयोनिमित्यर्थः ।

¶ अर्थज्ञानं विनेत्यर्थः ।

व्यास: ।

वेदस्याध्ययनं सर्व्वं धर्म्मशास्त्रस्य चैव हि ।
अजानतोऽर्थं तदर्थं तुषाणां खण्डनं* यथा ॥

मनु: ।

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय: ॥

यम: ।

य इमां पृथिवीं सर्व्वां सर्व्वरत्नोपशोभिताम् ।
दद्याच्छास्त्रञ्च शिष्येभ्यस्तच्च तच्च द्वयं समम् ॥

मनु: ।

ब्रह्म योऽभ्यननुज्ञात:† अधीयानादवाप्नुयात्‡ ।
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥
गुरोरनुमतिं कृत्वा वेदाध्ययनमारभेत् ।
अध्यापयेत्तत: शिष्यानायशीलान्§ गुणान्वितान् ॥

याज्ञवल्क्य: ।

कृतज्ञाद्रोहिमेधाविशुचिकल्याणसूचका: ।
अध्याप्या धर्म्मत: साधुशक्ताप्तज्ञानवित्तदा: ॥

---

* काण्डनमिति पाठान्तरम् ।

† गुरोरनुमतिं विना ।

‡ स्वप्नयात् ।

§ बहुषु पुस्तकेषु दर्शनात् शिष्यान् मायशीलान् इति पाठो रचित: परन्तु शिष्या-नायशीलान् इति पाठो युक्त: आयशीलान् आयव्ययविज्ञानिति तस्यार्थ: ।

एते अध्याप्या इति ग्रहणादेतद्व्यतिरिक्तानां निषेधः।

तथाच मनुः।

धर्म्मार्थौ यत्र न स्यातां शुश्रूषा चापि तद्विधा।
तत्र विद्या न वक्तव्या उप्तं वीजमिवोषरे॥
विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना।
आपद्यपि हि कष्टायां नत्वेनामिरिणे* वपेत्।
विद्या ब्राह्मणमित्याह सेवधि†स्तेऽस्मि रक्ष माम्।
असूयकाय मां मादास्तथा स्यां वीर्य्यवत्तमा॥

निधिर्ना सेवधिरित्यमरः। असूया गुणाविष्कारेण दोषाविष्करणशीलः।

यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम्।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने॥
न निन्दाताड़ने कुर्य्यात्पुत्रं शिष्यञ्च ताड़येत्।
अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि।
अतोऽन्यथा तु प्रहरन्न्याययुक्तो भवेन्नरः॥

न्याययुक्तो दण्ड्यः।

सर्व्वधर्म्ममयं ब्रह्म प्रदानेभ्यो‡ऽधिकं यतः।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम्॥

---

* मूर्खाय।

† निधिस्वरूपः।

‡ प्रधानदानेभ्यः।

## अथानध्यायाः ।

तत्र उशना ।

अयने विषुवे चैव शयने बोधने तथा ।
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु* ॥

याज्ञवल्क्यः ।

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्म्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते ॥
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च ॥
सन्ध्यागर्ज्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥
पशुमण्डूकनकुलश्वाहिमार्ज्जारमूषिकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥

अत्र विशेषस्तु शिष्टाचारादवगन्तव्यः ।

खरोष्ट्रगर्द्दभोलूकसामबाणार्त्तनिस्वने† ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।

---

* शिष्यर्त्विग्गुरुबन्धुष्विति पाठान्तरम् ।

† खरनिस्वनोष्ट्रनिस्वनगर्द्दभनिस्वनोलूकनिस्वनसामनिस्वनवाणनिस्वनार्त्तनिस्वनेषु इत्यर्थः ।

भुक्तार्द्रपाणिरम्भोऽन्त*रर्द्धरात्रेऽतिमारुते ।
पांशुवर्षे दिशान्दाहे सन्ध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ।
खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे† ॥
सप्तत्रिंशदनध्याया न तांस्तात्कालिकान्विदुः ।

ब्रह्माण्डपुराणे ।

रात्रौ यामद्वयादूर्द्ध्वं यदि पश्येत्त्रयोदशीम् ।
प्रदोषः स तु विज्ञेयः सर्व्वस्वाध्यायवर्ज्जितः ॥
षष्ठी च द्वादशी चैव अर्द्धरात्रोननाड़िका ।
प्रदोषे न त्वधीयीत तृतीया नवनाड़िका ॥
अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्द्दशी ।
अमावास्योभयं हन्ति प्रतिपद्बुद्धिनाशिनी ॥
अष्टकासु समाख्याताः सप्तम्यादिदिनत्रयम् ।
शास्त्रं तत्र नाधीयीत व्रतबन्धं विवर्ज्जयेत् ॥

मनुः ।

वेदोपकरणे‡ चैव स्वाध्याये चैव नित्यके ।
नानुरोधस्त्वनध्याये होममन्त्रेषु चैव हि ॥

---

* जलमध्ये ।

† रणारोहणे इति पाठान्तरम् ।

‡ वेदाङ्गशास्त्रे ।

## अथ गुरुकुले वासचर्य्या ।

तत्र मनुः ।

शरीरं चैव वाचञ्च बुद्धीन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥
प्रतिश्रवणसंभाषे* शयानो न समाचरेत् ।
नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ।

कथं कुर्य्यादित्यत आह ।

आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः ।
प्रत्युद्गम्याथ व्रजतः पश्चाद्धावंस्तु धावतः ॥
पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्तिकम् ।
प्रणम्य तु शयानस्य निर्देशे चैव तिष्ठतः ॥

अभिगच्छन् संमुखं गच्छन्, प्रत्युद्गमनं पश्चाद्गमनम् । दूरस्थस्येत्येति । अत्र तु माङ्श्वेति परकल्पाद्दराभावः । प्रणम्येति निर्देशे तिष्ठत इत्यनेन सम्बध्यते, निर्देशे स्वस्थानान्निम्नदेशे गर्त्तादौ, निर्देशे निकटदेशे इत्यपरे ।

नीचं शय्यासनं चास्य नित्यं स्याद्गुरुसन्निधौ ।
गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत्† ॥
नोदाहरेदस्य नाम परोक्षेणापि केवलम् ।
न चैवास्यानुकुर्व्वीत गतिभाषितचेष्टितम् ॥

---

* गुरोः प्रत्युत्तरप्रदाने ।

† उच्चासनस्थादिको न भवेत् ।

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥
परीवादात्खरो भवति श्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥

अननुज्ञातगुरुधनोपभोक्ता परिभोक्ता ।

दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥
प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंभवे* चैव गुरोर्न किञ्चिदपि कीर्त्तयेत् ॥

गुरुदेशाच्छिष्यदेशं प्रत्यभिमुखो वातः प्रतिवातः तत्र नासीत तद्दोषाग्निनिर्गमसम्भवात् । शिष्यदेशाद्गुरुदेशं प्रत्यनुगतो वातः अनुवातः । तत्रापि नासीत उदीरितशब्दाश्रवणात् । असम्भवे अननुज्ञायाम् ।

गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥
गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥

गुरोराचार्य्यस्य समीपे गुरावुपाध्यायादौ सन्निहिते सति गुरुतुल्यं वृत्तिमाचरेत् । गुरुणाचार्य्येण नानुज्ञातः स्वान् गुरूनुपाध्यायादीन्नाभिवादयेत् ।

---

* असंश्रवे इति कुल्लूकभट्टमेधातिथिसम्मतः पाठः असंश्रवे अश्रवणविषये ।

अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ।
उत्सादनन्तु* गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्य्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥
गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥
गुरुपत्नी तु युवती नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥
यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥
अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥

ब्रह्मचारी द्विविधः उपकुर्व्वाणको नैष्ठिकश्च, तत्रोक्ता आद्यधर्म्माः† ।

## अथ द्वितीयधर्म्माः प्रस्तूयन्ते ।

तत्र याज्ञवल्क्यः ।

नैष्ठिको ब्रह्मचारी च वसेदाचार्य्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥

---

* मर्द्दनम् ।

† उपकुर्व्वाणस्य धर्म्माः ।

उपकुर्व्वाण उक्तविधिना आत्मानं निष्ठां मृत्यान्तकालं गमयतीति नैष्ठिक उच्यते। स आचार्य्यसन्निधौ वसेन्न समावर्त्तयेत्। तदभाव इति सर्व्वत्रानुषज्यते। ततश्च परमभावे गुरुसपिण्डे वसेत्। तदभावे स्वाग्निशुश्रूषा कर्त्तव्या।

तथाच मनुः।

आचार्य्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्॥
एषु त्वविद्यमानेषु स्थानासनविहारवान्।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः॥

अयञ्च वासः अनूचानब्राह्मणगुर्व्वादिषु*।

यथाह मनुः।

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्।
ब्राह्मणे चाननूचाने† काङ्क्षन् गतिमनुत्तमामिति॥

अस्य धर्म्मानाह देवलः।

ब्रह्मसूत्राक्षमालादण्डकाष्ठकुण्डिका‡मौञ्जमेखलाधारणं सकृद्भोजनमसकृदवगाहनं त्रिषवणस्नानं§ उभयकालमग्निहोत्रं सन्ध्योपासनमनुप्तलोमकेशनखत्वं गन्ध-

---

* साङ्गवेदाध्ययनकुशलब्राह्मणगुरुषु।

† साङ्गवेदानध्येतरि ब्राह्मणेऽपि चिरतरकालं न वसेदित्यर्थः।

‡ कमण्डलुः।

§ त्रिकालस्नानम्।

माल्यक्षौमाभ्यञ्जनाञ्जनवेशालङ्कारच्छत्रोपानद्वाहन ल-ङ्घन* प्लवन† धावन चिकित्सा ज्योतिषलक्षणवास्तु-विधान‡ मङ्गलपौष्टिकशान्तिकर्म्म गन्धर्व्वसङ्गसमय-सम्बन्धन§ शिल्प लेखन कारुकर्म्म वेश्म क्षेत्र युक्त¶ धान्य परिच्छद शस्त्र द्यूत व्यवहारप्रभाव‖ लीला परिहास प्रणय कुहक विस्मापन विडम्ब विवादात्मिक परिदेवन पादाहर्त्तनवर्ज्जनमिति।

अग्निपरिचर्य्याप्रकारमाह हारीतः।

यज्ञियाः समिध आहृत्य संमार्ज्जनोपलेपनोल्लेखनोप-गूहन समिन्धन पर्य्यग्निकरण परिक्रमोपस्थानहोम-स्तव नमस्कारादिभिरग्निं परिचरेदिति।

एवं कुर्व्वतः फलमाह याज्ञवल्क्यः।

अनेन विधिना देहं साधयन्विजितेन्द्रियः।
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः॥

---

* उपवासः तथाच अनड्वान् ब्रह्मचारी च आहिताग्निस्तथैव च, अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नता।

† सन्तरणम्।

‡ वास्तुविद्या।

§ नृत्यगीतादिसमयसम्बन्धः।

¶ युक्तशब्देन हिरण्यं धनमुच्यते।

‖ व्यवहारप्रभावः व्यवहारप्रतत्वम्।

अत्रेदं चिन्त्यं किमिष्टं नैष्ठिकं ब्रह्मचर्य्यं कुब्जादिपुरुषविशेषाधिकारकमिति । कुब्जादिविषयमिति तावद्ब्रूमः । वैष्णवे नियमाभिधानात् ।

तथाहि ।

कुब्जवामनजात्यन्धक्लीवपङ्ग्वार्त्तरोगिणाम् ।
ब्रह्मचर्य्या भवेत्तेषां यावज्जीवमनंशतः ॥ इति ।

अनंशतः अंशाभावादित्यर्थः । किञ्च उपनीतमात्रविषयत्वे यावज्जीवमग्निहोत्रं जुहुयादिति गृहस्थधर्म्मप्रतिपादिकायाः श्रुतेः सङ्कोच आपद्येत । एवं प्राप्ते विधीयते उपनीतमात्रविषयमेव । तदन्यथा मनुवचनविरोधात् ।

तथाहि ।

यदि त्वात्यन्तिको वासो रोचेतास्मै गुरोः कुले ।
युक्तः परिचरेदेनमाशरीरविमोक्षणादिति ॥

तत्र यदीत्यनेन पाक्षिकत्वं द्योत्यते । विष्णुवचने च यावज्जीवमित्यनेन पङ्ग्वादीनां नित्यमेतदित्यवगम्यते । एवञ्च पङ्ग्वादिविषये मनुविष्णुवचनयोर्विरोधः । तत्परिहाराय मनुवचनं पङ्ग्वादिव्यतिरिक्तविषयम् । ततश्च पङ्ग्वादिव्यतिरिक्तोपनीतमात्रत्वं पाक्षिकमिति पक्षे नैष्ठिकपक्षे नैत्ययमर्थः सिद्धः । एवञ्च केवलं कुब्जादिविषयत्वे विरोधो दुष्परिहृतः स्यात् । यच्चोक्तं श्रुतिसङ्कोच इति । तत्तु श्रुत्यन्तरविरोधपरिहारार्थमृष्यामहे यमिच्छेत्तमावसेत् । यदहरेव विरज्येत्तदहरेव प्रव्रजेत् । इत्याद्याश्रमविकल्पप्रतिपादनवाक्याविरोधाय याव-

जीवमग्निहोत्रं जुहुयादित्यनेनापि ये रागवशात्कृतोपयमास्तेषामेव रागानिवृत्तौ यावज्जीवं गार्हस्थ्यनिष्ठत्वेनाग्निहोत्रकर्त्तव्यता प्रतिपाद्यते। न तु सर्व्वेषामतो यो रागाभावेन नैष्ठिकब्रह्मचर्य्यं कामयते तस्याग्निहोत्राधिकाराभावादेव न तद्विषये यावज्जीवश्रुतिः प्रवर्त्तते।

तथाच जाबालश्रुतिः।

यदि ग्टहमेव कामयते तदा यावज्जीवमिति।

केचन नैवं मन्यन्ते नैष्ठिकस्य स्मार्त्तत्वेन श्रौताग्निहोत्रादिना बाध इति। तत् स्वाध्यायवैधुर्य्यनिबन्धनमित्युपेक्षणीयम्। तस्यापि श्रुतिमूलत्वात्।

ब्रह्मचार्य्याचार्य्यकुलवासी द्वितीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन्निति श्रुतिः।

ननु ब्रह्मचारिद्वैविध्ये चत्वार आश्रमा इत्यापस्तम्बवचनविरोधः स्यादिति चेत्सत्यम्। सङ्कल्पभेदमात्रेण नित्यकाम्यदर्शपौर्णमासादिवदभेदोपपत्तेः।

तथाच दक्षः।

द्वितीयो नैष्ठिकश्चैव तस्मिन्नेवाश्रमे स्थितः।

## अथ समावर्त्तनम्।

तत्र याज्ञवल्क्यः।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा॥

त्रितय इति, वरोऽभिलषितार्थः । वेदशब्दो वेदाध्ययनतदर्थ-
जिज्ञासानामप्युपलक्षणार्थः ।

तथाच स्मर्य्यते ।

वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥

व्यासः ।

वेदस्याध्ययनं सर्व्वधर्म्मशास्त्रस्य वापि यत् ।
अजानतोऽर्थं तत्सर्व्वं तुषाणां खण्डनं यथा ॥
योऽधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥
अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।
स्वर्गलोकमवाप्नोति धर्म्मानुष्ठानवान्द्विजः ॥
ऋक्पादमप्यधीयानो न्यायतश्च तदर्थवित् ।
सम्यग्व्रतानि संसेव्य समावर्त्तनमर्हति ॥

त्रिविधो हि स्नातकः ।

तथाच हारीतः ।

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति ।

यो वेदमेव समाप्य समावर्त्तते स विद्यास्नातकः । यश्च व्रतान्येव समाप्य स व्रतस्नातकः । यश्चोभयं स विद्याव्रतस्नातकः । एवञ्च व्रतस्नातकस्य विवाहोत्तरकालमध्ययनसमापनं वेदार्थज्ञानञ्चेति मन्तव्यम्। अस्मिन्पक्षे वेदाध्ययनसमाप्तावेव गुरवे दक्षिणान्दद्यात्।

तत्र गौतमः ।

विद्यान्ते गुरुरर्थेन निमन्त्र्य इति ।

अर्थेन हेतुना निमन्त्र्यः प्रष्टव्यः ।

यत्तु मनुनोक्तम् ।

स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्व्वर्थमाहरेत् । इति ।

तद्व्रतस्नातकेतरविषयम् । गुरवे तु वरं दत्त्वा स्नायादित्युक्तम् । न चैतत्स्नानकर्म्मविषयनियतं विरक्तस्य विवाहरागाभावात् ।

तथाच नृसिंहपुराणे ।

गुरवे दक्षिणां दत्त्वा स्वयमिच्छेत्तु मा विशेत्* ।

विरक्तः प्रव्रजेद्विद्वान् सरागस्तु गृहे वसेत्† ॥ इति ।

एतच्च समावर्त्तनमुक्तदिने कार्य्यम् ।

तथाच सुरेश्वरः ।

भौमभानुजयोर्व्वारे नक्षत्रे च व्रतोदिते ।

ताराचन्द्रविशुद्धौ स्यात्समावर्त्तनकक्रिया ॥

## अथ स्नातकव्रतानि ।

तत्र पारस्करः ।

स्नातकस्य नियमान् वक्ष्यामः । कामादितरो नृत्य-गीतवादित्राणि न कुर्य्यान्न गच्छेत् । कामस्तु‡ गीतं

---

* स्वयमिच्छेद्गुरुकुले स्थातुमिच्छेत । मा विशेद्विवाहं न कुर्य्यात ।

† गृहे वसेद्विवाहं कुर्य्यात, न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते इति स्मरणात् ।

‡ कामन्त्विति पाठान्तरम् ।

गायति चैवं गीतेन रमत इत्यपरम् । क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न धावेदिति ।

ब्रह्मचर्य्यात्समावृत्तस्य नियमान् व्रतान् वक्ष्यामः । कामादिच्छया गीतनृत्यवादित्राणि न कुर्य्यात् । न गच्छेद्द्रष्टुमिति शेषः । इतरो ब्रह्मचारी सोऽपि न कुर्य्यान्न गच्छेदित्येव । इच्छया* गायेत् शृणुयात् । यथाश्वमेधे दिवा ब्राह्मणो गायतीति यजमानं श्रावयति चेति गाने श्रवणे चाधिकारः । एवमन्यत्रापि यत्र विशेषविधिरस्ति तत्रैवाधिकारो नान्यत्रेत्यर्थः । क्षेमे नक्तं ग्रामान्तरं न गच्छेत् । क्षेमे आपदभावे सति न च धावेत् क्षेमे सतीत्यनुषज्यते† ।

तथा ।

उदपानावेक्षणवृक्षारोहणफलप्रचयनसन्धिसर्पणविवृत्तस्नानविषमलङ्घनशुक्तवदनसन्ध्यादित्यप्रेक्षणमाभीक्ष्णेन न कुर्य्यात् ।

उदपानं कूपादि । वृक्षाग्रोपरि गमनेन फलप्रचयनं फलग्रहणम् । सन्धिसर्पणं सन्धिभूमिगमनम्‡ । अथवा सन्ध्याया-

* पारस्करसूत्रस्थं कामन्तु गीतं गायति च इत्यपरभागं व्याचष्टे इच्छया इति । गायति इति विध्यर्थे लट् इत्यभिप्रेत्य व्याकरोति गायेत् । चकारस्य सार्थक्यं दर्शयति शृणुयादिति ।

† एकत्रान्वितस्य पदस्य अन्यत्रान्वयार्थमनुसन्धानमनुषङ्गः ।

‡ भूमेः गर्त्तादिप्रदेशे गमनम् ।

अपमार्गे गमनम्। विवृत्ते वृत्तादौ* स्नानम्। विषमं गर्त्तादि। शुक्लमश्लीलम्। तत्त्रिविधं लज्जाकरं दुःखकरममङ्गलसूचकम्। आभीक्ष्ण्यं वारंवारमादित्यमण्डलं न पश्येदित्यर्थः। तथा न ह वै स्नात्वा भिक्षेत वर्षत्यप्रावृतो न गच्छेत्। अयं मे वज्र† इत्यनेन मन्त्रेण गच्छेत्।

छत्री यष्टिर्नरपाणिस्तु चरेत्। रात्रौ तच्छा दिवा‡ तच्छायाशब्दवित्रस्ताः प्रणश्यन्ति हि पन्नगाः। अप्सु स्वमुखं नावेक्षेत गर्भिणीं विजयन्तीति ब्रूयात्। सकुलमिति नकुलम्। भगालमिति कपालम्। इन्द्रधनुर्मणिधनुरिति ब्रूयात्। परस्य गां वत्सं वा पाययन्तीं नाचक्षीत। खानिते अनास्तृते भूमौ प्रस्रवत्यां वा उपसर्पंस्तिष्ठन्न मूत्रपुरीषे कुर्य्यात्। स्वयं जीर्णेन काष्ठेन लोष्टेन प्रमृजीत गुदं विकृतम्। वासो नाच्छादयीत मञ्जिष्ठादिरक्तं नील्यादिरक्तं§ वा। गूढव्रतो वधत्रः स्यात्सर्वेषामिति।

मित्रमिव वधात्पापात्त्रायते इति वधत्रः। इत्यादि व्रतलोपे एकरात्रं तिस्रो रात्रीर्व्वा व्रतं चरेत्।

---

* आच्छादितजलाशयादौ सूर्य्यकररहितादौ।

† अयं मे वज्रपाप्मानमपहन्तु।

‡ बहुषु पुस्तकेषु एकरूप एवं पाठो दृश्यते। परन्तु यष्टिपाणिर्नरश्छत्री चरेत् रात्रौ तथा दिवा इत्येव पाठो युक्तः।

§ मञ्जिष्ठादिना रक्तं नीलीमिश्रितरक्तं वासो वस्त्रं नाच्छादयीत इत्यन्वयः।

संवर्त्तः।

कुर्य्याद्गृह्याणि कर्म्माणि स्वभार्य्यापोषणं परम्।
ऋतुकालाभिगामी स्यात्प्राप्नोति परमाङ्गतिम्॥
शेषान्नमृतुगामित्वं पञ्चयज्ञाः स्वकर्म्म च।
तुल्यैश्च सह सम्बन्धो गृहस्थस्य विधीयते॥

गृहस्थस्यापि स्नातकत्वमस्तीति स्नातकस्य गृहस्थसाधारणकर्म्म-कथनमविरुद्धम्।

बृहस्पतिः।

सख्यं समाधिकैः कुर्य्यादुपेयादीश्वरं सदा।
वैरं निर्हेतुकं वादं न कुर्य्यात्केनचित्सह॥

वशिष्ठः।

आहारनिर्हारविहारयोगाः
सुसंवृता धर्म्मविदा तु कार्य्याः।
वाग्बुद्धिगुप्तानि नयस्तथैव
धनायुषी गुप्ततमे च कार्य्ये॥

निर्हारो मूत्रपुरीषोत्सर्गः विहारः स्त्रीसेवा योगः समाधिः। वाग्गुप्तिरशुभैरालापादिपरिवर्ज्जनेन। बुद्धिगुप्तिरशुभसंकल्पादि-परिवर्ज्जनेन।

मनुः।

भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्।
शुष्कवैरं विवादञ्च न कुर्य्यात्केनचित्सह॥

विष्णुपुराणे।

विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः ।
विवाहश्च विवादश्च तुल्यरूपे प्रशस्यते ॥
नारभेत कलिं* प्राज्ञः शुष्कवैरञ्च† वर्ज्जयेत् ।
अप्यल्पहानिः सोढ़व्या वैरेणार्थागमं त्यजेत् ॥
जीवेति ब्रुवतां ब्रूयाज्जीवेत्युक्तः सहेति च ।

पैठीनसिः ।

मत्तप्रमत्तोन्मत्तैः सह संभाषं न कुर्व्वीत । न परस्त्रियं रहसि संभाषेत ।

सांख्यायनगृह्ये ।

सूतिकोदक्यां न संवदेत् ।

गौतमः ।

न म्लेच्छाशुच्यधार्म्मिकैः सह संभाषेत संभाष्य पुण्यकृतो मनसा ध्यायेत् । ब्राह्मणेन सह संभाषेत ।

यमः ।

तिथिं पक्षस्य न ब्रूयात्‡ नक्षत्राणि न निर्द्दिशेत् ।

गौतमशङ्खलिखिताः ।

न परक्षेत्रे चरन्तीं गां पाययन्तीं वान्यस्मिन् कथयेत् ।

महाभारते ।

सम्पन्नं भोजने ब्रूयात्पानीये तर्पणं तथा ।

---

* कलहम् ।

† निष्प्रयोजनविवादम् ।

‡ शुक्लपक्षस्य कृष्णपक्षस्य वा तिथिं न ब्रूयात् परन्तु प्रतिपदादित्वेन ब्रूयात् ।

सुस्मृतं पायसे ब्रूयाद्यवाग्वां कृशरे तथा ॥

महात्मनाञ्च गुह्यानि न वक्तव्यानि कर्हिचित्।

त्वंकारं नामधेयञ्च ज्येष्ठानां परिवर्ज्जयेत्।

अवराणां* समानानामुभयेषां न दुष्यति ॥

तथाच नारदः।

गुरोर्ज्येष्ठकलत्रस्य भ्रातुर्ज्येष्ठस्य चात्मनः।

आयुष्कामो न गृह्णीयान्नामानि कृपणस्य च ॥

पैठीनसिः।

अनिन्द्या ब्राह्मणा गावः सलिलं काञ्चनं स्त्रियः।

पृथिवी च षडेतानि यो निन्दति स निन्दितः ॥

मार्कण्डेयपुराणे।

वेददेवद्विजातीनां साधुसत्यतपस्विनाम्।

गुरोः पतिव्रतायाश्च तथा यज्ञतपस्विनाम् ॥

परिवादं न कुर्व्वीत परिहासेऽपि पुत्रकाः।

कुर्व्वतामविनीतानां श्रोतव्यं न कथञ्चन ॥

हारीतः।

विवादं वर्ज्जयेद्विप्रे सर्व्वेषाञ्चैव सूचनम्†।

परिभोगं यथोक्तेषु‡ मत्सरं पुत्त्रशिष्ययोः ॥

तथा।

---

* नीचानाम्।

† हिंसनमथवा दोषाविष्करणम्।

‡ अनिषिद्धेष्वपि अत्यन्तभोजनं वर्ज्जयेत्।

तस्मान्नैव परिवदेद्यजन्तं याज्यमीश्वरम् ।
आदत्ते सुकृतं तेषां ये वै परिवदन्ति तम् ॥

मनुः ।

ऋत्विक्पुरोहिताचार्य्यैर्मातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः ॥
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्य्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥
न च वाचं वदेद्दुष्टां न दीनां न च कर्कशाम् ।

## अथानाक्रमणीयानधिष्ठेयानि ।

तत्र मनुः ।

देवतानां गुरो राज्ञः स्नातकाचार्य्ययोस्तथा ।
नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च ॥

बभ्रुः कपिलः ।

यमः ।

स्नान्तु नाक्रामयेच्छायां क्लीवेन* पतितेन च ।
चाण्डालेन द्विषद्भिश्च नित्यरोगान्वितेन च ॥

याज्ञवल्क्यः ।

देवर्त्विक्स्नातकाचार्य्यराज्ञां छायां परस्त्रियः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च ॥

मनुः ।

---

* क्लीवेन इत्यादिगततृतीया षष्ठीस्थाने आर्षप्रयोगः ।

मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषम्।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम्॥
उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च।
श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः॥
वैरिणं नोपसेवेत सहायश्चैव वैरिणः।
अधार्म्मिकं तस्करञ्च परस्यैव च योषितम्॥

उद्वर्त्तनं कृतमलापकर्षणं कुङ्कुमादि। अपस्नानं स्नानत्यक्तजलम्। निष्ठ्यूतमुद्गीर्णताम्बूलादि।

शङ्खलिखितौ।

नोद्धतकुहकैः सहैकत्र तिष्ठेत्।

उद्धतः अविनीतः कुहकः वशीकरणादिनिष्ठः।

विष्णुः।

न चतुष्पथमभितिष्ठेन्न रात्रौ वृक्षमूलं शून्यालयं न वृक्षं न बन्धनागारम्।

हारीतः।

आवपनापमार्ज्जनास्नानतुषभस्मास्थिकपालसञ्चयं नाधितिष्ठेत्।

आवपनं गोप्यादिभाण्डम्, अपमार्ज्जनं मार्ज्जनोपयुक्तकुशादि, कपालः खर्परः।

विष्णुपुराणे।

पूज्यदेवध्वजज्योतिश्छायां नातिक्रमेद्बुधः*।

* प्रतिष्ठितदेवानां ध्वजानां ज्योतिःपदार्थानाञ्च।

देवीपुराणे ।

न चैव गोः प्रसूताया विश्वासः स्त्रीजनस्य च ।

न मुखेन धमेदग्निं* न खड्गं लङ्घयेत्तथा ॥

## अथानवलोकनीयानि ।

तत्र विष्णुः ।

नोद्यन्तमादित्यमीक्षेत नास्तं यान्तं नोपरक्तं† न वास-सातिरोहितम् । न चादर्शजलाद्युपगतं न मध्येऽह्नि‡ ।

याज्ञवल्क्यः ।

नेक्षेतार्कं न नग्नां स्त्रीं न च संयुक्तमैथुनाम् ।

न च मूत्रं पुरीषं वा नाशुचीराहुतारकाः ॥

मार्कण्डेयपुराणे ।

देवतापितृसच्छास्त्रयज्ञसत्यादिनिन्दकैः§ ।

कृत्वा स्पर्शनमालापं शुध्येतार्कविलोकनात् ॥

अवलोक्य तथोदक्यामन्त्यजं¶ पतितं शठम् ।

विधर्मिसूतिकाषण्ढविवस्त्रान्त्यावसायिनः‖ ।

---

* फुत्कारेण अग्निं न ज्वालयेत् ।

† राहुग्रस्तम् ।

‡ मध्याह्नकाले ।

§ सहार्थे तृतीया ।

¶ रजकश्चर्मकारश्च नटो वरुड एव च, कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ।

‖ चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा, मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ।

कृतनिर्यातकांश्चैव परदाररतांस्तथा ।
एतदेव* हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ॥

स्कान्दपुराणे ।

कृतघ्नं मानवं दृष्ट्वा नरकेष्वपि† कुत्सितम् ।
शुध्यर्थं देवि द्रष्टव्याः सोमानलदिवाकराः ॥

सोमादीनां यथासम्भवं विकल्पः ।

विष्णुः ।

न क्रुद्धस्य गुरोर्मुखं न तैलोदकयोः स्वां छायां मलवत्यादर्शे न पत्नीं भोजनसमये न स्त्रियं नग्नां न किञ्चन गूहमानं न बालां न भ्रष्टकुञ्जरनरविषमस्थौ‡ न वृषादियुद्धं नोन्मत्तं न प्रमत्तम्§ ।

मनुः ।

नाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवतीं जृम्भमानाञ्च न चासीनां¶ यथासुखम् ॥
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्ता‖मनावृताम् ।

---

* आदित्यदर्शनरूपम् ।

† नरकसमूहेषु मध्ये ।

‡ शृङ्खलच्युतहस्तिनं विपद्ग्रस्तनरञ्च ।

§ मादकद्रव्यभक्षणेन मत्तमित्यर्थः ।

¶ उपविष्टाम् ।

‖ तैलमर्द्दने आसक्ताम् ।

न पश्येत्प्रसवन्तीञ्च* तेजस्कामो द्विजोत्तमः ॥

## अथाकुलकरणानि ।

क्रमेण च यमव्यासशातातपाः ।

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ।
अयाज्ययाजनेनैव नास्तिक्येन च कर्मणा ।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः ॥
अनृतं पारदार्य्यञ्च तथाभक्ष्यस्य भक्षणम् ।
अगम्यागमनञ्चैव हिंसा स्तेयं तथैव च ॥
अश्रौतधर्माचरणं मन्त्रधर्म्मबहिष्कृतम् ।
एतानि चैव कर्म्माणि वर्ज्जयेन्मानवः सदा ॥

## अथ निवासः ।

अत्र बृहस्पतिः ।

भूरिमान्य†कुशेध्मान्नशष्पाम्बु‡द्विजनैगमे ।

---

* प्रस्रवन्तीमिति पाठान्तरम् ।

† मान्यैर्मानार्हैर्जनः । काल्यमिति पाठान्तरम् ।

‡ श्यपमिति पाठान्तरम् ।

निष्कण्टके धार्म्मिके च वसेत्स्थाने निरामये ॥

नैगमो वाणिजिकः ।

एककूपोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
वर्षेण शूद्रो भवति कृष्णवर्णमुपाश्रितः ॥

व्यासः ।

धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते चिरं तत्र न संवसेत्* ॥

मार्कण्डेयपुराणे ।

जितामित्रो नृपो यत्र बलवान्धर्म्मतत्परः ।
तत्र नित्यं वसेत्प्राज्ञः कुतः कुनृपतौ सुखम् ॥
यस्मिन् कृषीवला राष्ट्रे प्रायशो नातिभोगिनः ।
यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः ॥
प्रीयमाणा नरा यत्र प्रयच्छेद्दुरयाचितम् ।
सुस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान् ॥
दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।
वसेत्तत्र वसेच्चैव धर्म्मशीलेषु साधुषु ॥

देवलः ।

अरण्यं देवतास्थानं तीर्थान्यायतनानि च ।
तस्मात्तेषु वसँल्लोको याति लोकं दिवौकसाम् ॥

---

* न दिवसं वसेदिति पाठान्तरम् ।

अरण्यं नैमिषादि तीर्थं गङ्गादि आयतनमविमुक्तादि* ।

## अथ गमने वर्ज्यानि ।

तत्र मनुः ।

नाविनीतैर्व्रजेद्धुर्य्यैर्न च क्षुद्व्याधिपीडितैः ।
न भिन्नशृङ्गाक्षिखुरैर्न बालधिविरूपितैः† ॥
विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः ।
वर्णरूपोपसम्पन्नैः प्रतोदेनातुदन् भृशम् ॥
नातिकल्यं‡ नातिसायं नातिमध्यन्दिने स्थिते ।
नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह ॥
गवाञ्च यानं पृष्ठेन§ सर्व्वथैव विगर्हितम् ।

विष्णुः ।

नैकोऽध्वानं प्रपद्येत नाधार्म्मिकैः साकम् ।

विष्णुः ।

वर्षातपादिषु च्छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥
नाधो न तिर्य्यगूर्द्ध्वं वा निरीक्षन् पर्य्यटेद्बुधः ।

---

* अविमुक्तादि इति पाठान्तरम् ।

† वक्रलाङ्गूलैः ।

‡ नातिप्रातः ।

§ गवां पृष्ठेन यानं गमनम् ।

युगमात्रं* महीपृष्ठं नरो गच्छेद्विलोकयन् ॥

तथा ।

न दुष्टं यानमारोहेत्कुलच्छायां† न संश्रयेत् ।
नैकः सुप्याटवीं‡ गच्छेन्न तु शून्यगृहे वसेत् ॥
नासहायो व्रजेद्रात्रौ नोत्पथे न चतुष्पथे ।

वशिष्ठः ।

नाग्निब्राह्मणान्तरे व्यपेयान्नाग्न्योर्न ब्राह्मणयोर्गुरु-शिष्ययोरनुज्ञया व्यपेयान्न बाहुभ्यां नदीं तरेन्न नावं सांशयिकीमारोहेत्§ ।

आपस्तम्बः ।

प्रतिमुखमाद्रियमाणं प्रतिष्ठितं भूमौ प्रदक्षिणीकृत्य अभ्युपेयात् ।

ब्रह्मचारिप्रकरणे सूतकप्रकरणे ये साधारणा धर्मा अभिहितास्ते अनिषिद्धा गृहस्थादीनामपि भवन्त्येव । उक्तं वक्ष्यमाणाश्रमोपयोगित्वाद्ब्रह्मचर्य्यरूपं तद्विदृश्य प्रदर्श्यते ।

तत्र हारीतः ।

ब्रह्मचर्य्यं नामाप्रार्थनमस्मरणमसङ्कल्पनमनभिप्रेक्षणम-

---

* चतुर्हस्तमानम् ।

† वदरीवृक्षच्छायाम् ।

‡ बहुषु पुस्तकेषु दर्शनादृक्षितं परन्तु नैकः सुप्यादनं गच्छेदित्येव साधु ।

§ सांशयिकीमिति नौविशेषणं निमज्जति नवेति संशयविषयिकाम् ।

सङ्कीर्त्तनमनभिभाषणमनभिगमनमसन्दर्शनमसमाग-
मश्चासाम् ।

अप्रार्थनं सा मे भूयादित्याशाविरहः । असङ्कल्पनमेवं करिष्यामीत्यभिधानाभावः । अनभिप्रेक्षणमाभिमुख्यानावलोकनम् । असन्दर्शनं कन्यावयवावलोकनाभावः ।

तच्च ब्रह्मचर्य्यं चतुर्विधं भवति । कृष्णं रक्तं शुक्लं विमलमिति । तत्र परदारवर्ज्जनं नित्यम् । स्वदाराभिगमनं कृष्णम् । पर्व्ववर्ज्जं तदेव रक्तम् । ऋतुकालाभिगमनं शुक्लम् । ऊर्द्ध्वरेतस्त्वं विमलम् ।

कृष्णे भौमाञ्जयेल्लोकान्मध्यमं रक्तकाज्जयेत् ।
शुक्लेन तु जयेत्स्वर्गं विमलान्मोक्षमाप्नुयात् ॥ इति ।

इह मदनपारिजाते मदने क्षितिपालदानजलरूढे ।
स्तवकोऽयमाद्य आसीदामोदाकृष्टपण्डितभ्रमरः ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जपति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति पण्डितपारिजात भट्टारमल्लेत्यादि विरुदराजीविराजमानस्य
श्रीमदनपालस्य निबन्धे मदनपारिजाताभिधेये
प्रथमः स्तवकः ।

---

# द्वितीयः स्तवकः ।

अथ ब्रह्मचारिस्तवकानन्तरं क्रमप्राप्तो गृहस्थस्तवक आरभ्यते । तत्रोपयुक्ता सापिण्ड्यमीमांसा प्रथमं प्रक्रम्यते ।

तत्र सापिण्ड्यं केचिदेवं वर्णयन्ति । एकस्यां पिण्डदानक्रियायां दातृत्वेन यजमानस्य देयत्वेन पितृपितामहप्रपितामहानां लेपभोक्तृत्वेन प्रपितामहस्वपितृपितामहप्रपितामहानां यजमानादिभार्य्याणां पत्या सह कर्त्तृत्वे*नैकशरीरारम्भकत्वेन† च । भ्रातृभार्य्याणां परस्परमेकशरीरारम्भकत्वेन यजमानप्रभृतिपितृपरम्पराणां सप्तमपुरुषावधिकसन्ततिजातानां मध्ये केषाञ्चित्पिण्डदेवतात्वेनोद्दिश्यमानान्वयेन केषाञ्चिल्लेपभागित्वेनोद्दिश्यमानान्वयेन चेति ।

दात्रादिसापिण्ड्यविषये मत्स्यपुराणे वचनमप्युदाहरन्ति ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति ॥

अत्र ते प्रष्टव्याः कल्पनागुरुलघुभावयोः को वा ज्यायानिति ।

---

* सपत्नीको धर्म्ममाचरेदिति स्मरणात्पत्न्या अपि धर्म्माचरणक्रियायां कर्तृत्वस्वीकारेण ।

† अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति श्रुत्या पत्या सह पत्न्या विवाहोत्तरमभिन्नशरीरत्वेन ।

यदि कल्पनागौरवं न्यायस्तर्हि सपिण्डशब्दप्रवृत्तौ* पूर्व्वोक्त-निमित्तान्येव स्युः।

अथ कल्पनालाघवं न्यायस्तत्र वयं ब्रूमः। पिण्डो देहः समान एकः पिण्डो देहो यस्य स सपिण्डः। तस्य भावः सापिण्ड्यं तच्च पुत्रादीनामेकशरीरावयवान्वयेन पत्न्यादीनां भ्रातृभार्य्यादीनाञ्चैकशरीरारम्भकत्वेनैकशरीरावयवान्वितैः सहैककार्य्यकर्तृत्वेन च भवति एवञ्च शब्दप्रवृत्तौ† निमित्तद्वय‡-मेवाङ्गीकृतं स्यात्। अथैवं मन्यसे एकपिण्डदानक्रियान्वयि-त्वमेकपिण्डदानक्रियान्वयान्वयित्वञ्चेति निमित्तद्वयमिति न कल्पनागौरवमिति। तर्हि अस्मत्पक्षेऽपि एकमेव निमित्त-मिति ततोऽपि लाघवम्। तच्चैकशरीरावयवान्वयित्वमेव। अवयवान्वयश्च पित्रादिषु अवयवानां समवायकरणत्वेन पत्न्या-दिष्वेकशरीरावयवान् प्रति साक्षात्परम्परावयवाऽधिकरण-त्वेनेति निमित्तैक्याल्लाघवम्।

कल्पनागौरवञ्च गर्हितमाचार्य्यैः कल्पनालाघवं यत्र तत्पक्षं रोचयामहे तदेकतरञ्च निपुणं सम्प्रधार्य्यतामिति। ततश्च निर्मथ्य पङ्कजादिवद्योगरूढोऽयं शब्दः§। शरीरावयवान्वयस्य

* सापिण्ड्यनिर्णये।

† व्युत्पत्तिनिर्व्वाचने।

‡ एककार्य्यकर्तृत्वैकशरीरारम्भकत्वैकावयवान्वितत्वरूपम्।

§ निर्मथ्य विचार्य्य अयं शब्दः सापिण्ड्यशब्दः सम्प्रधार्य्यतामिति पूर्व्वानुषङ्गे-णान्वयः।

श्रुतौ श्रूयते । आत्मा हि यज्ञ आत्मन इति तथा प्रजामनु प्रजायस इति । तथा गर्भोपनिषद्यपि । एतत्षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृत इति ।

आपस्तम्बोऽपि ।

स एवायं विरूढ़ः प्रत्यक्षेणोपलभ्यत इति ।

मत्स्यपुराणवचनस्य त्वयमर्थः । लेपभाजश्चतुर्थाद्याः प्रपितामहपिता चतुर्थस्तदाद्याः प्रतिलोमक्रमेण त्रयो लेपभाजः । पिण्डदानं कृतवतः स्ववंशजस्य हस्तलेपं कुशेषु दत्तं भुञ्जते इति । पित्राद्याः पिण्डभागिनः पिण्डदाने देवताभूताः । पिण्डदः सप्तमस्तेषां तेषां पिण्डदाता सप्तमः । सापिण्ड्यं साप्तपौरुषम् । एतान् सप्तपुरुषान् सापिण्ड्यं व्याप्नोति इत्युक्तं भवति । ननु सापिण्ड्ये पूर्वोक्तं लेपभाक्त्वादिकं निमित्तमिति । तथा सति पूर्वोक्तगौरवदोषापत्तेः । अतोऽस्मदुक्तमेव युक्तम् ।

अथ प्रकृतमनुसरामः ।

तत्र मनुः ।

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममाश्रयेत् ॥
उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम् ।

काश्यपः ।

दाराधीनाः क्रियाः सर्व्वाः ब्राह्मणस्य विशेषतः ।
दारान्सर्व्वप्रयत्नेन विशुद्धानुद्वहेत्ततः ॥

विद्यावान् कुलतो रूपतश्च।

याज्ञवल्क्यः।

अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम्॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।

अविस्खलितब्रह्मचर्य्यो बाह्याभ्यन्तरलक्षणयुक्तां स्त्रियमुद्वहेत्।
बाह्यलक्षणानि मनुराह।

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम्॥ इति।

आन्यभ्यन्तराणि सन्दिग्धानि च तज्ज्ञानोदयाय आश्वलायनोक्तो द्रष्टव्यः।

अथाऽविज्ञेयानि* लक्षणानि।

अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं यज्ञे ऋते सत्यं प्रतिष्ठितम्। यदियं कुमार्य्यभिजाता तदिदमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति। पिण्डानभिसंमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयात्। अन्नवत्यस्याः प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवादिनी अविनाशिनो ह्रदात्सर्व्वसम्पन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनी ईरिणादधन्या श्मशानात्पतिघ्नीति।

---

* दुर्विज्ञेयानीति पाठान्तरम्। अथदुर्ज्ञेयानीति पाठान्तरम्।

अस्यायमर्थः। क्षतमग्नइत्यारभ्य यत्तत्वं तद्व्यतामित्यनेन मन्त्रेण मृत्पिण्डाभिमन्त्रणं कुर्य्यात्। मृदाहरणस्थानमाह। क्षेत्राच्चेदिति। पार्श्वद्वयेऽपि शस्यपरिपूर्णात्क्षेत्रादाहृता या मृत्तत्कृतं पिण्डं यदि गृह्लाति तदा अस्याः प्रजा अन्नवती भविष्यतीति विद्यात्। एवं गोष्ठादित्येवमादि वेदिपुरीषं वेदिमृत्तिका देवनं द्यूतस्थानं विप्रव्राजिनी विविधप्रव्रजनशीला स्वैरिणीति यावदीरिणमूषरमधन्या धनरहितेत्यर्थः। अनन्यपूर्व्विकां दानेनोपभोगेन वा पुरुषान्तरापरिगृहीताम्। असपिण्डां समानमेकं पितुः शरीरं यस्याः सा सपिण्डा न सपिण्डा असपिण्डा तां सपिण्डता चैकशरीरावयवान्वयेनेति निरूपितं प्राक्।

मनुरपि।

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने॥

अस्यार्थः। या मातुरसपिण्डा चकारादसगोत्रा च या च पितुरसगोत्रा चकारादसपिण्डा च सा दारकर्म्मणि मैथुने च प्रशस्ता। प्रशस्ता परिणयनार्हेत्यर्थः। एतदुक्तं भवति। अनुलोमक्रमेण द्विजातीनां सवर्णापाणिग्रहणसमनन्तरं क्षत्रियादिकन्यापरिणयो विहितस्तत्र च सवर्णाविवाहो मुख्यः इतरस्त्वनुकल्पः। सदारस्य विहितं कर्म्मद्वयमेकं यज्ञादिकमपरं निधुवनम्। यज्ञादिके तु सवर्णदारैः सहितस्यैवाधिकारः सवर्णायां तु वयसा वर्णेन वा ज्यैष्ठ्येन तस्यां सत्यामन्यस्या-

अनधिकारः। असत्यां ज्येष्ठायां नित्ययज्ञादिकेष्वेवासवर्णा-सहितस्य गौणाधिकारो न काम्येषु। तथा ज्येष्ठापरित्यागे-नान्याग्रहणनिषेधात्। सुरतन्तु विवाहितास्विति नियमः। एवं स्थिते दारकर्म्मणि मैथुने इत्यत्र गोबलीवर्दन्यायेन दार-कर्म्मशब्दो मैथुनव्यतिरिक्ते यज्ञादौ वर्त्तते। तथाच। दार-कर्म्मणि प्रशस्तेत्युक्ता यज्ञादिकर्म्मणि सवर्णामात्रस्याऽधिकारा-त्तद्विवाह एवासपिण्डा च या मातुरित्यादि ग्राह्यं स्यात्। न त्वसवर्णाविवाहे तन्निवृत्त्यर्थं मैथुनपदग्रहणम्। एवञ्चासवर्णा-परिणयेऽपि पूर्व्वोक्तवाक्यमनुषज्यते। यदि मैथुने प्रशस्तेत्युच्यते तदा तस्मिन् कर्म्मणि पूर्व्वोक्ता ग्राह्या नान्येति स्यात्। ततश्च

अनाश्रमी न तिष्ठेत्तु क्षणमेकं†मपि द्विजः।

इति कृतसमावर्त्तनस्य पञ्चमहायज्ञनित्योपासनादिदारकर्म्म-निष्पत्त्यर्थं पूर्व्वोक्तगुणरहितापि परिणेया स्यात्। तन्माभू-दिति दारकर्म्मग्रहणम्। ननु च

एकत्वं सा गता भर्त्तुः पिण्डगोत्रे च सूतके।

इति मातुर्गोत्रान्तराभावादसपिण्डा च या मातुरित्येतावते-वालं किमिति चकारान्मातुरसगोत्राग्रहणं कृतं मनुना। उच्यते। सत्यमेवं तथापि दत्तपुत्री यस्य माता भवति सा च

* सवर्णाया एव।

† क्षणमात्रमिति पाठान्तरम्।

पुत्रिका कृता दत्तपुत्रीप्रतिग्रहीत्रा इयमेव मम पुत्रस्थानीयेति तदा तस्याः परिणेतुर्दत्तपुत्री प्रतिग्रहीत्रसपिण्डा असपिण्डा भवतीति तत्र परिणयो मा प्रसांक्षीदिति चकारेण मातृसगोत्रा परिणेयेत्युच्यते ।

उक्तञ्च दत्त्रिमाणां जनकगोत्रादिनिवृत्त्या अन्यगोत्रादिप्राप्तिर्मनुना ।

गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः ।

गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ इति

एवं तर्हि असपिण्डा च या मातुरिति न वक्तव्यम् । चकारलभ्यासगोत्राग्रहणेनैवासपिण्डाया अपि प्राप्तत्वादाह । सापत्न्यमातृपितृकुलजासपिण्डा मातृसगोत्रापि भवति मातृसपिण्डा चेति तत्र विवाहप्राप्ताविदमुच्यते मातुरसपिण्डेति । तथा च सापत्न्यमातृसपिण्डेष्वपि मातुलादिव्यवहारं दर्शयति सुमन्तुः ।

पितृपत्न्यः सर्व्वा मातरस्तद्भ्रातरो मातुलास्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि* अन्यथा सङ्करकारिकाः स्युरिति ।

असगोत्रा च या पितुरित्यत्र चकारेण पितुरसपिण्डाया ग्रहणं न कर्त्तव्यम् । असगोत्रपदेनैव लभ्यत्वादुच्यते । यस्य पिता दत्त्रिमपुत्रस्तस्य दत्त्रिमस्य यज्जनककुलं तत्र जाता परिणेतृ-

---

* ताश्चाविवाह्या: अन्यथा सङ्करकारिण्यस्तथाश्व्या५पितुरेतदेवेतीति पाठान्तरम् ।

पितुरसगोत्रा दानेन जनकगोत्रनिवृत्तेरुक्तत्वात्। एवंविधाया मातुरसगोत्राया विवाहप्रसक्तौ चकारेणैवमुच्यते पितुरसपिण्डा ग्राह्येति। यद्येवं नाभविष्यदसगोत्रा च यात्मन इत्येवावक्ष्यत्। तस्मान्मातुरसपिण्डा असगोत्रापि पितुरसपिण्डा असगोत्रा च परिणेयेति सिद्धम्। यवीयसीं वयसा प्रमाणेन च। अरोगिणीमचिकित्सनीयव्याधिरहितां भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये।

अत्र मनुः।

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वै पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्म्मशङ्कयेति॥

यस्याः पिता पुत्रिकाकरणाभिप्रायवान्न वेति न विज्ञायते तां नोपयच्छेतित्यर्थः। एवञ्च यत्र शङ्का नास्ति तामुपयच्छेतित्यर्थः उक्तो भवति। असमानार्षगोत्रजामृषेरिदमार्षं प्रवर इत्यर्थः। गोत्रं वंशपरम्पराप्रसिद्धम्। आर्षञ्च गोत्रञ्च आर्षगोत्रे समाने आर्षगोत्रे यस्य स तादृशस्तस्मादुत्पन्ना समानार्षगोत्रजा अनेवंविधा असमानार्षगोत्रजा। गोत्रं प्रवरश्च पृथक् पृथक् पर्य्युदासे निमित्तम्।

परिणीय सगोत्रान्तु समानप्रवरां तथा।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत्॥

इति पार्थक्येन परिगणनात्त्यागश्चोपभोगस्यैव न तु तस्याः।

समानप्रवरां कन्यामेकगोत्रामथापि वा।
विवाहयति यो मूढ़स्तस्य वक्ष्यामि निष्कृतिम्॥

उत्सृज्य तां ततो भार्य्यां मातृवत्परिपालयेत् ।

इति शातातपस्मरणात् ।

तत्रापस्तम्बः ।

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य* च ।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते ॥ इति ।

समानप्रवरस्वरूपञ्च बौधायन आह ।

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते ।
तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ॥

समानगोत्रत्वं समानप्रवरत्वमित्यर्थः ।

भृग्वङ्गिरोगणेषु विशेषमाह संग्रहकारः ।

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वये ।
भृग्वङ्गिरोगणेष्वेव शेषेष्वेकोऽपि वारयेत् ॥ इति ।

पञ्चार्षेयाणामृषित्रयानुवृत्तौ† न मिथो विवाहस्त्र्यार्षेयाणामृषिद्वयानुवृत्तौ न शेषेष्वेकानुवृत्तौ न विवाह इत्यर्थः ।

बौधायनोऽपि ।

द्व्यार्षेय‡सन्निपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेय§सन्निपातेऽविवाहः पञ्चार्षेयाणामिति ।

---

* समुद्वाह्योपगम्येति पाठान्तरम् ।

† पञ्चप्रवराणां प्रवरत्रयैक्ये न विवाहः, एवं परत्र ।

‡ द्व्यार्षे इति पाठान्तरम् ।

§ त्र्यार्षे इति पाठान्तरम् ।

सन्निपाते साम्य इत्यर्थः ।

गोत्रभेदेऽपि प्रवरैक्यमस्ति तद्यथा संकृतिपूतिमाषनश्चिङ्ग-श्मश्रुशैवगवानां गोत्राणामाङ्गिरसगौरिवीतसांकृत्यत्रिप्रवरै-क्यम्*। तथा यास्कवाधूलमौनामौकानांगोत्रभेदेऽपि भार्गव-वीतहव्यसावेतसेति प्रवरैक्यम्। एतेषां मिथो विवाहो मा भूदित्यसमानार्षग्रहणम्। यत्र तु प्रवरविकल्पो यथा आङ्गिर-साम्बरीषयौवनमान्धात्रम्बरीषयौवनाश्चेति, अत्रास्ति प्रवरभेदः न तु गोत्रभेदः, तन्निरासार्थं समानगोत्रग्रहणम्। एवं प्रवर-गोत्रयोः पृथक् पृथक् पर्य्युदासनिमित्तत्वं ज्ञेयम्।

एवं साक्षात्परम्परया वा अवयवानुवृत्तेर्निर्मर्य्यादत्वात्सर्व्वत्र निषेधप्राप्तावबधिमाह याज्ञवल्क्यः।

पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा।

मातृतः मातृकुले पञ्चमादूर्द्ध्वं पितृतः पितृकुले सप्तमादूर्द्ध्वं सापिण्ड्यं निवर्त्तते इत्यर्थः। पित्रादयः षट् सपिण्डास्तास्तत्रैव स्वपुत्रादयश्च षट् आत्मा च सप्तमः। तथा मात्रादय-श्चत्वारः आत्मा च पञ्चमः।

सन्तानभेदेऽपि यतः सन्तानभेदस्तमादाय गणयेद्यावत् सप्तमो भवति पित्रादिवीजतो नियोगादिना या कुलान्तरे जाता तत्रापि ऊर्द्ध्वं सप्तमाज्जातायां विवाहः।

---

* संकृति, पूतिमाष, नश्चिश्मश्रु, शैवगवानां प्रत्येकमाङ्गिरस, गौरिवीत, सां-कृत्यत्रिनामकप्रवरचतुष्टयम्।

पितृबन्धुभ्यः सप्तमान्मातृबन्धुभ्यश्च पञ्चमादाह वशिष्ठः ।

असमानार्षेयीमस्पृष्टमैथुनामवरवयस्कां सदृशीं भार्य्यां विन्देत ।

पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्य इति बन्धुशब्दोपादानादयमर्थो गम्यते । अन्यथा कुलादित्येव ब्रूयात् ।

यच्च वशिष्ठेनोक्तम् ।

पञ्चमीं सप्तमीञ्चैव मातृतः पितृतस्तथा । इति ।

तत्सवर्णसापत्नमातृकुलविषयम् । ब्राह्मणादीनां क्षत्रियादिदारसमुत्पन्नपितृकुलविषयञ्च*। एकत्रा†वयवानुवृत्तेरभावादन्यत्र‡ सावर्ण्याभावाच्च ।

यत्तु पैठीनसिराह ।

पञ्च मातृतः सप्त पितृतस्त्रीनतीत्य मातृतः पञ्चातीत्य वा पितृत इति ।

अत्र त्रीनतीत्येत्यादिकस्यायं विषयः । यस्य माता दत्तपुत्री तां यः प्रतिग्रहीता पुत्रत्वेन स्वीकरोति तत्कुलम् । यस्य दत्तपुत्रः पिता तस्य दत्त्रिमस्य जनककुलञ्च§ एकत्रा¶वयवानु-

---

* ब्राह्मणादिः यदा स्वपितुः क्षत्रियादिपुत्रवंशे विवाहं करोति तदैव भवति ।

† सपत्नीमातुः पितृवंशे ।

‡ स्वपितृजातमूर्द्धावसिक्तादिवंशे ।

§ दत्तकपुत्ररूपपितुः जनककुले पञ्चमीं परिहृत्य विवाहं कर्त्तुमर्हतीति ।

¶ दत्तकपुत्रीरूपमातुः गृहीतृरूपपितृकुले ।

वृत्तेरभावादन्यत* गोत्रानुवृत्तेरभावाच्च ।

यत्तु शङ्खवचनम् ।

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु ॥ इति ।

अस्यार्थः† । एकस्माद्ब्राह्मणादेर्जाताः पृथक् भिन्नमातृजनाः पृथग्जनाः भिन्नजातीयास्ते एकपिण्डाः सपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु त्रिपुरुषमेव सापिण्ड्यमिति । एतद्भिन्नजातीयसापत्नमातृकुलविषयम् । तत्रापकृष्टजातीयानामुत्तमजातीयविवाहप्राप्तिरेव नास्ति । अनुलोमतः प्राप्तिरस्ति तत्र त्रिषु पुरुषेष्वेव‡ सापिण्ड्यं युक्तम् । उत्कृष्टजातीयावयवसंयोगेतरजातीयावयवविपरिणामात् । एवं पूर्व्वोक्तगुणविशिष्टा परिणेयेत्युक्तम् ।

तत्र येषु विधिनिषेधेषु दृष्टगुणदोषौ§ न स्तः केवलं शास्त्रैकसमधिगम्यौ तौ । यथा असपिण्डा च या मातुरित्यत्र शास्त्रसमधिगम्यो गुणस्तदतिक्रमे च दोषोऽपि । अत्रातिक्रान्तशास्त्रस्य भार्य्यैव न सा भवति¶ । भार्य्याशब्दस्याहव-

---

* दत्तकपुत्ररूपपितुर्जनककुले ।
† अस्यायमर्थ इति पाठान्तरम् ।
‡ त्रिपुरुषमेवेति पाठान्तरम् ।
§ अधिकाङ्गादिगुणदोषौ ।
¶ भार्य्यागम्यगुणस्तदतिक्रमे च दोषोऽपीति पाठान्तरम् । शास्त्रगुरुतरः निषिद्ध-कन्याविवाहे तस्या भार्य्यात्वमेव न भवति ।

नीयादिवत्संस्कारमन्दत्वात्* प्रायश्चित्तीयते च । तथाच पुत्त्रिकायाश्च न परिपूर्णं भार्य्यात्वं प्रदानाभावात्† तथा गोत्रमपि न निवर्त्तते । एवमासुरादिविवाहेष्वपि गोत्रानिवृत्तिः, अभ्रातेव पुंस एति प्रतीचीमिति मन्त्रलिङ्गाच्च न परिपूर्णं पुत्त्रिकाया भार्य्यात्वं व्याख्यातं निरुक्तकृता । अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी सन्तानकर्म्मणि पिण्डदानाय वेति ।

वशिष्ठः ।

अभ्रातृका पुंसः किं पितृनभ्येति प्रतीचीं न गच्छति पुत्त्रत्वमिति । यत्र पुनर्दृष्टगुणदोषदर्शनेन विधिनिषेधाभिधानं यथा हीनक्रियमित्यादिना न तदतिक्रमे भार्य्यात्वाभावः । किन्तु नियमातिक्रमात्प्रायश्चित्तमात्रं भवति । तथा प्रसिद्धश्रोत्रियकुलजा परिणेया ।

तथाच याज्ञवल्क्यः ।

दशपौरुषविख्याताच्छ्रोत्रियाणां महाकुलात् । इति ।

मातृतः पञ्च पितृतः पञ्चेति दश ।

एवं सर्व्वत्र प्राप्तापवादमाह स एव ।

स्फीतादपि‡ न सञ्चारिरोगदोषसमन्वितात् ।

---

* अग्नेर्यथा मन्त्रसंस्कृतत्वेन आहवनीयत्वं तथा मन्त्रसंस्कारेण भार्य्यात्वम् ।

† प्रकृष्टदानाभावात्पुत्त्रिकाया गौणपुत्त्रत्वेन औरसपुत्त्रवद्गोत्रस्वत्वयोरानुभविकत्वादिति भावः ।

‡ धनधान्यादिसम्बद्धादपि ।

सञ्चारिणो रोगाः कुष्ठापस्मारादयः। मातृसापिण्ड्याभावेऽपि मातृसगोत्राया अपि पाक्षिको निषेधो व्यासेन दर्शितः।

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि।

एके नेच्छन्तीत्यनेन पक्षे विवाहप्राप्तिर्दर्शिता।

अमुमेवार्थं हेतुपूर्व्वकं उत्तरार्द्धे स एवाह।

जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः॥

अत्र देशाचाराद्व्यवस्था विज्ञेया।

## अथ वरलक्षणानि।

तत्र याज्ञवल्क्यः।

एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः॥

एतैः कन्यागुणैः अनन्यपूर्व्विकात्वयवीयस्त्वभ्रातृमत्त्वव्यतिरिक्तैः* युक्तः सवर्णः उत्कृष्टवर्णो वा न हीनवर्णः श्रोत्रियः श्रुताध्ययनसम्पन्नः।

कात्यायनः।

उन्मत्तः पतितः कुष्ठी षण्ढश्चैव सगोत्रजः।
चक्षुःश्रोत्रविहीनश्च तथापस्मारदूषितः॥
वरदोषाः स्मृता ह्येते कन्यादोषाः प्रकीर्त्तिताः।

---

* लक्षण्यामनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीमित्यादिवचने कन्याया ये गुणा उक्तास्तत्र अनन्यपूर्व्वकत्वादित्रितयं त्यक्त्वा लक्षण्यत्वकान्तत्वासपिण्डत्वादिगुणैर्युक्त इत्यर्थः।

नारदः ।

परीक्ष्य पुरुषं पुंस्त्वे निजैरेवाङ्गलक्षणैः ।
पुमांश्चेदविकल्पेन* स कन्यां लब्धुमर्हति ॥
सुबद्धजत्रु†जान्वस्थिसुबद्धांसशिरोधरः ।
यस्यापि प्लवते रेतो ह्लादि‡ मूत्रञ्च फेनिलम् ।
पुमान् स्याल्लक्षणैरेभिर्विपरीतस्तु षण्ढकः ॥
अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥

## अथ दारानुकल्पः ।

तत्र मनुः ।

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानां इमाः स्युः क्रमशोऽवराः ॥

अवरा जघन्याः ।

शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृता ।
ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः ॥

अथ शूद्राविषये पक्षान्तराणि स चाह ।

शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥

---

* निःसंशयेन ।

† कण्ठस्य पार्श्वद्वयास्थिविशेषः ।

‡ शब्दयुक्तम् ।

शूद्रां या वोढ़ा पततीति अत्रेरुतथ्यतनयस्य गौतमस्य च मतम्। अत एतयोर्मते शूद्राविवाह एव नास्ति। शौनकमते तु शूद्राविवाहान्न पातित्यं किन्तु सुतोत्पत्त्या, अतः शूद्रामृतुकाले नोपगच्छेदिति। एवञ्च ऋतुगमनप्रापकाणि अगमने दोषप्रापकाणि च वचनान्येतद्‌व्यतिरिक्तविषयाणि। भृगुमते तु न तत्र सुतोत्पत्तिरपि पातित्यहेतुः। अपि तु ब्राह्मण्यादिभार्य्यासु पुत्ररहितस्य केवलशूद्रापत्यत्वं पातित्यहेतुः। ततश्च ब्राह्मण्यादिष्वप्रसूतासु शूद्रामृतौ नोपगच्छेत्। तदपत्यतयेति तान्येव शूद्रायामुत्पन्नान्येव चापत्यानि यस्य स तदपत्यस्तस्य भावस्तदपत्यता। एष एवार्थो वचनान्तरेण स्पष्टीकृतः।

शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैरिति।

अत्र वाक्यशेषः। कुलान्यकुलतां यान्ति इति।

यच्च मनुनैवोक्तम्।

न ब्राह्मणक्षत्रिययोरापद्यपि च तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते॥ इति।

तत्प्रथमत एव शूद्रापरिणयनविषयम्। आपद्यपि हि तिष्ठतोः सवर्णामलभमानयोरित्यर्थः। एतद्वैश्यस्यापि नियतम्।

यतः स एवाह।

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्॥ इति।

हीनजातिं शूद्राम्।

सवर्णालाभे तु क्षत्रियादिविवाहमाह पैठीनसिः।

अभावे कन्यायाः स्नातकव्रतञ्चरेदपि वा क्षत्रियायान्तु पुत्रानुत्पादयीत वैश्यायां वा शूद्रायां वेत्यन्ये इति ।

सर्व्वात्मना* शूद्रापरिणयनिषेधमाह याज्ञवल्क्यः ।

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥

एषु पक्षेषु यच्छाखीयस्मार्त्तो यः पक्ष आदृतस्तच्छाखीयस्यापि स एव पक्ष इत्येवंविधस्थितो विकल्पः† ।

## अथ दातृनिरूपणम् ।

तत्र याज्ञवल्क्यः ।

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः परः ॥

सकुल्यो दायादः, दायादेष्वपि सन्निहित एवाधिकारी । प्रकृतिस्थः पातित्योन्मत्तादिदोषरहितः, अप्रकृतिस्थेन पित्रादिना कृतमप्यकृतमेव ।

यथाह नारदः ।

स्वतन्त्रोऽपि हि यत्कर्म्म कुर्य्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥

पितृत्वादिना स्वतन्त्रोऽपि सन्नप्रकृतिस्थत्वेन हेतुना परतन्त्रो

* सर्व्वप्रकारेण ।

† एषु पक्षेषु शूद्राविवाहतदभावपक्षेषु । स्मार्त्तः स्मृत्युक्तः । विकल्पः शाखाभेदेन व्यवस्थितो विकल्पः ।

भवति। तदीयकृतं वाग्दानादिकं कार्य्यमकृतमेव वेदितव्यं यदि तस्मिन्वरे पतनीयदोषा अचिकित्स्यरोगा वा भवेयुः, अभावे तु* तथैवोपरितनं कर्म्म† प्रकृतिस्थो निर्व्वहेद्दृष्टादृष्टदोषाभावात्। यद्यप्रकृतिस्थदत्ताया विवाहसंस्कारो निर्व्यूढस्तदा प्रधानकर्म्मणो निष्पन्नत्वेनाधिकारित्वमात्रवैकल्यात्तथापि न सर्व्वात्मना प्रत्यावर्त्तनीया कन्या, एवं तर्हि अनधिकारिणां कृतमकृतमेवेत्येतद्विरुध्येत सत्यं तद्विरोधपरिहाराय परिवेत्तृविवाह इव‡ तां प्रत्याहृत्य§ पुनस्तस्मा एवाधिकारी दद्यात्। अत्र पुनर्विवाहोऽपि परिवेत्तृविवाहवद्विज्ञेयः। तथाच नारदोऽपि दातृक्रममाह।

पिता दद्यात्स्वयं कन्यां भ्राता वानुमते पितुः।
मातामहो मातुलश्च सकुल्यो बान्धवास्तथा॥
माता त्वभावे सर्व्वेषां प्रकृतौ यदि वर्त्तते।
तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः॥

सकुल्याः पितृपक्षीयाः, बान्धवा मातृपक्षीयाः, स्वजातीयाः ब्राह्मणादयः। यस्य वर्णस्य या कन्या तज्जातीया अधिकारिण¶

---

* पातित्याचिकित्स्यरोगयोरभावे तु।

† वाग्दानोत्तरक्रियमाणप्रकृतदानादि कर्म्म इत्यर्थः।

‡ परिवेत्तृस्थले यथा आनत्यर्थं पुनर्दानम्।

§ प्रत्याहृत्य तद्दानस्यासम्यक्त्वेन तत्परिपाटीक्रममास्थाय।

¶ कन्यादाने इति शेषः।

इत्यर्थः । अस्मिन्वचने भ्रात्रनन्तरं मातामहमातरौ क्रमेणाधिकारं प्रतिपद्येत, तदनन्तरं पितृबन्धूनामधिकारः प्रदर्शितः । अयञ्च क्रम औरसकन्याविषये पुत्रिकादिविषये च वेदितव्यः । पुत्रिकाप्यौरससमैव ।

औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः ।

इति याज्ञवल्क्यस्मरणात् ।

क्षेत्रजायान्तु क्रमान्तरमाह कात्यायनः ।

स्वयमेवौरसीं दद्यात्पित्रभावे स्वबान्धवाः ।

मातामहस्ततोऽन्यां हि माता वा धर्म्मजां सुताम् ॥

अस्यार्थः । औरसीं पिता स्वयमेव दद्यात्पित्रभावे बान्धवाः पितृबान्धवा दद्युः । ततोऽन्यामौरसीव्यतिरिक्तां धर्म्मजां नियोगेन जातां क्षेत्रजान्तु पित्रभावे मातामहो दद्यात् । मातामहो दद्यादिति मातामहग्रहणं मातुलस्याप्युपलक्षणं अतस्तदभावे मातेति क्रमः । युक्तञ्चैतत्क्षेत्रजायां मातामह्यावयवप्राधान्यात् । एवञ्च मातामहादीनामौरसीपुत्रीदाने पितृबन्धुषु विद्यमानेष्वधिकारो नास्तीत्युक्तम् । तत्र च विषयविशेषे अपवादः श्रूयते ।

दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु ।

मातुलः समये दद्यादौरसीमपि कन्यकाम् ॥

पौगण्डो व्यवहाराद्यसमर्थः । समये रजोदर्शनोचितसमयात्पूर्व्वकाले पूर्व्वोक्तसकलाधिकार्य्यभावे ।

मनुः ।

यदा नैव तु कश्चित्* स्यात्कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं सवर्णं वरयेत्स्वयम् ॥

वरयेदित्यनुवृत्तौ नारदः ।

सवर्णमनुरूपञ्च कुलरूपवयःश्रुतैः† ।
सह धर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥

पित्रादिषु सत्स्वपि कालविशेषे‡ विद्यत एव स्वयंवरः । यदाह बौधायनः ।

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ।
अविद्यमाने सदृशे गुणहीनमपि श्रयेत्§ ॥

यत्तु विष्णुनोक्तं ।

ऋतुत्रयमुपास्यैव¶ कन्या कुर्यात्स्वयंवरम् । इति तद्गुणवद्वरलाभे वेदितव्यम् ।

अत्र विशेषान्तरमाह मनुः ।

अलङ्कारं नाददीत पितृदत्तं स्वयंवरा ।
मातृदत्तं भ्रातृदत्तं स्तेयं स्याद्यदि तं हरेत् ॥

---

* अधिकारीति शेषः ।

† कुलमुत्कृष्टत्वादि, रूपं सौन्दर्य्यादि, वयः ज्येष्ठत्वादि, श्रुतं वेदविद्यादि, एभिरनुरूपं दानार्हम् ।

‡ रजोयोगानन्तरं चतुर्थवर्षे ।

§ विन्देत ।

¶ अव्ययानामनेकार्थत्वादपास्येत्यर्थः ।

वरं प्रत्यपि स एवाह ।

पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेद्दतूणां प्रतिरोधनात् ॥

यमः ।

कन्या द्वादश वर्षाणि या प्रदत्तार्त्तवे गृहे* ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥
एवं चोपगतां पत्नीं नावमन्येत्कदाचन ।
न तु तां बन्धकीं† विद्यान्मनुः स्वायम्भुवोऽब्रवीत् ॥

एवंविधायां बन्धकीत्वाभावो देशकालादिप्रतिबन्धाभावे सति ।
अन्यथा कालातिक्रमे दोषश्रवणात् ।

तथाच बौधायनः ।

दद्याद्गुणवते कन्यां नग्निकां धर्म्मचारिणीम् ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

कुलीनाय‡ रूपादिगुणरहिताय§ ।

नग्निका च दर्शिता वायुपुराणे ।

पश्यत्यलज्जा याङ्गानि कन्या पुरुषसन्निधौ ।
योन्यादीन्नावगूहेत तावद्भवति नग्निका ॥ इति ।

अमरसिंहस्त्वन्यथा प्राह ।

---

* या प्रदत्ता गृहे वसेदिति ग्रन्थान्तरे पाठः ।

† पुरुषचतुष्टयोपभोक्त्रीतुल्याम् ।

‡ गुणवते इत्यस्यार्थमाह कुलीनायेति ।

§ गुणहीनाय इत्यस्यार्थमाह रूपादीत्यादि ।

नग्निकानागतार्त्तवा इति ।

अत्रिकश्यपौ ।

पितुर्गृहे तु या कन्या रजः पश्येदसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

संवर्त्तः ।

रोमकाले तु संप्राप्ते सोमोभुञ्जीत कन्यकाम् ।
रजःकाले तु गन्धर्व्वो वह्निस्तु कुचदर्शने ॥
तस्मात्तामुद्वहेत्कन्यां यावन्नर्त्तुमती भवेत् ।
विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

कश्यपः ।

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ॥

एवं कन्यादाने अधिकारिणो निरूपिताः । साम्प्रतं दत्तायाः कन्यायाः क्वचित्प्रत्याहरणं निरूप्यते ।

तत्र याज्ञवल्क्यः ।

दत्तामपि हरेत्पूर्व्वाच्छ्रेयांश्चेद्वर आव्रजेत् ।

दत्तामपि हरेद्यदि पूर्व्वस्य पातकादिदोषोपसृष्टत्वमितरस्य गुणयुक्तत्वं स्यात् । तच्च सप्तपदात्प्राग्द्रष्टव्यम् ।

यथाह नारदः ।

स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राग्विधीयते ।

वरणाद्ग्रहणं पाणेः सम्बन्धोऽयं त्रिलक्षणः।
तयोरनियतं प्रोक्तं वरणाद्दोषदर्शनात्॥
पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा च विज्ञेया विद्वद्भिः सप्तमे पदे॥ इति।

अस्यार्थः। स्त्रीपुंसयोः सम्भोगादरणं प्राग्भवति। वरणात् पाणिग्रहणं, एवं सम्बन्धस्त्रिलक्षणः। वरणं पाणिग्रहणमुपभोगश्चेति त्रिविधः। गान्धर्व्वादिषु नायं क्रमः। तयोः कन्यावरयोरनियतमनियमः। वृतोऽपि न परिणीयते, वाग्दत्तापि न दीयते इत्येवंरूपः। तत्र हेतुर्व्वरणाद्दोषदर्शनादिति। वरणादूर्द्ध्वं कन्यावरयोरन्योऽन्यं दोषदर्शनात्। अनेन च

विवाहादूर्द्ध्वं नानियम इत्युक्तं भवति।

तत्र नियमे हेतुमाह।

पाणिग्रहणिका मन्त्रा इति।

तैर्मन्त्रैरुत्पादितसंस्कारयोर्न परित्याग इत्यर्थः।

पाणिग्रहणमन्त्रोत्पाद्यसंस्कारावधिमाह।

तेषामिति।

केचनास्मिन्वचने पाठान्तरं व्याख्यान्तरञ्च कुर्व्वते।

तद्यथा।

वरणाद्ग्रहणं पाणेः संस्कारो ह्यग्निलक्षणः।
तयोरनियतं प्रोक्तं वरणाद्दोषदर्शनात्॥

पाणिग्रहणे यः सोऽग्निलक्षणः संस्कारोऽग्निचिह्नितो होमादिनिष्पाद्यः संस्कारः। तयोर्वरणदानपाणिग्रहणयोर्मध्ये वरण-

मेव दोषदर्शनादनियतं, न पाणिग्रहणम्। तस्मादर्व्वाक् पतित्वानुत्पत्तिरिति।

यमोऽपि।

पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे।

एवञ्च सप्तपदादर्व्वाक् परिणेतृमरणेऽपि न विधवात्वमवगम्यते। उक्तञ्च वशिष्ठेन।

अद्भिर्वाचा च दत्तायां म्रियेतोर्द्ध्वं वरो यदि।
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा॥

सा पितुरेव न प्रतिग्रहीतुरित्यर्थः। सा च तद्देवराय प्रदेया तदभावे तज्ज्ञातये तदभावे अन्यस्मै। इदमपि लोकविद्विष्ट-त्वाद्देशाचारानुसारेण भवति।

बलादपहृतायान्तु विशेषमाह स एव वशिष्ठः।

बलाच्चेत्प्रहृता कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा॥

बहुभ्यो वाग्दाने कात्यायनेनोक्तविशेषो द्रष्टव्यः।

अनेकेभ्यो हि दत्तायामनूढायान्तु यत्र वै।
वरागमञ्च सर्व्वेषां लभेतादिवरस्तु ताम्॥

सर्व्वेषां वराणामागमे सतीत्यर्थः। स च पूर्व्ववरो यदि दोष-रहितो गुणवांश्च भवति।

वरयित्वा देशान्तरगमने नारदः।

प्रतिगृह्य च यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य सा चान्यं वरयेद्वरम्॥

प्रतिगृह्य वरयित्वेत्यर्थः ।

प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्य्या सा वर्षमेकन्तु देयान्यस्मै विशेषतः* ॥

अत्र विशेषमाह मनुः ।

कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥

कुलादिरहितेभ्योऽपि कन्या प्रत्याहरणीयेत्याह वशिष्ठः ।

कुलशीलविहीनस्य षण्डादिपतितस्य च ।
अपस्मारिविधर्म्मस्य रोगिणां वेशधारिणाम् ।
दत्तामपि हरेत्कन्यां सगोत्रोढ़ां तथैव च ॥

अत्र पुनर्विवाहादिविशेषस्तु पूर्व्वमेव निरूपितः ।

अदुष्टकन्यापरित्यागे विशेषमाह नारदः ।

प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेन्नरः ।
विनेयः सोऽर्थदण्डेन कन्यां तामेव चोद्वहेत् ॥

कात्यायनः ।

वरदोषमनाख्याय पाणिं गृह्णाति यो नरः ।
याचनं च प्रकुर्व्वीत तद्दानं नाप्नुयात्तु सः ।
कन्यादोषेऽप्येवमेव दाता दण्ड्यो वरस्तथा ॥

---

* विधानत इति पाठान्तरम् ।

नारदः ।

नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योऽन्यं त्यजतस्तयोः ॥

मनुः ।

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ।
व्याधितां विप्रदुष्टां च छद्मना चोपपादिताम् ॥

विप्रदुष्टामन्यगतभावां छद्मना अन्यकन्योपदर्शनेन । एवमुक्तलक्षणाय वरायोक्तलक्षणा कन्या देयाधिकारिणेत्युक्तो विवाहः सम्पन्नः । सोऽपि ज्येष्ठानुक्रमेणेति शास्त्रनियमः ।

अत्र क्वचिदपवादविषये मनुः ।

जड़ान्धबधिरादीनां विवाहोऽस्ति यथोचितम् ।
विवाहासम्भवे तेषां कनिष्ठो विवहेत्तदा ॥
पितृव्यपुत्रे सापत्ने परदारसुतादिषु ।
विवाहाधानयज्ञादौ परिवेदो न दूषणम् ॥

शातातपोऽपि ।

नाग्नयः परिविन्दन्ति न च दानतपांसि* च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका[१] ॥

अन्येऽपि विशेषा आवसथ्याधानप्रकरणे वक्ष्यन्ते ।

वरे

* पूजा न तपांसि चेति पाठान्तरम् ।

१ विकला च कन्यकेति पाठान्तरम् ।

## अथ विवाहभेदः ।

तत्र मनुः ।

यो यस्य धर्म्मो वर्णस्य गुणदोषौ च यस्य यौ ।
तद्वः सर्व्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

ब्राह्मविवाहलक्षणं तत्सन्ततिफलञ्चाह

याज्ञवल्क्यः ।

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥

उभयतः पित्रादीन्दश पुत्रादीन्दश आत्मानं चैकमित्येकविंशतिं पुनाति । यद्वा उभयतो मातृतो दश पितृतो दश आत्मानञ्चेत्येकविंशतिम् ।

यथा ।

यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम्* ।

यज्ञे प्रारब्धे कन्यामलङ्कृत्य यत्रर्त्विजे दीयते स दैवः । वराय देया मिथुनं वृषभं गाञ्च गृहीत्वा यथाशक्त्यालङ्कृता यत्र तस्मै दीयते स आर्षः । गोद्वयग्रहणं प्रदर्शनार्थम् ।

यतः मनुः ।

एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः । इति ।

---

* गोयुगमिति क्वचित्पाठः ।

एतद्गोमिथुनं पित्रादिर्यद्गृह्णाति तदा विक्रय एव ।
तथाच मनुः ।

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
अल्पोऽपि वा महान्वापि विक्रयस्तावदेव सः ॥ इति

कन्यार्थं यदि गृह्णाति तदा न दोष इत्याह
स एव ।

यासान्नाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यं हि केवलम् ॥

यच्छुल्कं कन्यार्थं तत्कुमारीणामर्हणं पूजनमानृशंस्यमपापिष्ठम्।
तच्छुल्कं कन्यायै दद्यादित्यर्थः ।

दैवार्षयोः फलमाह याज्ञवल्क्यः ।

चतुर्दश प्रथमजः, पुनात्युत्तरजश्च षट् ।

प्रथमजो दैवविवाहजः, उत्तरज आर्षविवाहजः । सप्त पूर्व्वान् सप्तावरान् इति चतुर्दश । त्रीन् पूर्व्वांस्त्रीनवरानिति षट् । पुनाति उभयत्र स्वस्य मध्यस्थितत्वादेव पवित्रता ।
तथा ।

इत्युक्त्वा चरतां धर्म्मं सह या दीयतेऽर्थिने ।
सकायः पावयेत्तज्जः षट् षट् वंश्यान् सहात्मना ॥

सह धर्म्मं चरतामिति परिभाषणपूर्व्वकमलङ्कृता कन्या यत्र दीयते सकायः प्राजापत्यस्तस्यां जातः षट् पूर्व्वान् षट् परानात्मानं चेति त्रयोदश पावयेत् । अथवान्योऽर्थः आत्मना सह षट् पूर्व्वानात्मना सह षट् परानिति एकादश पावयेत् ।

तथा।

आसुरो द्रविणादानाद्गान्धर्व्वः समयान्मिथः।

राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात्॥

आत्मार्थं द्रविणमादाय कन्यार्पणं स आसुरः, अस्य मानुष इत्यपि संज्ञा।

तथाच हारीतः।

शौल्केन मानुष इति।

कन्यावरयोरन्योऽन्यरागेण यः समयः त्वं मे भार्य्या त्वं मे पतिरिति स गान्धर्व्वः। समयपूर्व्वकमुपभोगोऽपि गान्धर्व्व एव। युद्धहरणाद्राक्षसः क्षात्त्र इत्यभिधीयते।

यथाह हारीतः।

अलङ्कृतामभिजयः क्षात्त्र इति।

कन्यकाच्छलाच्छलनं छलः, कपटेन स्वापाद्यवस्थासु कन्यकाया-श्छलेनोपहरणं पैशाचो विवाहः। कन्यकां छलादित्यपि पाठः। न चासुरादिविवाहेषु सप्तपदातिक्रमणाभावात्पतित्वभार्य्या-त्वयोरनुत्पत्तिरित्याशङ्कनीयम्। तत्रापि स्वीकारानन्तरमेव संस्कारविधानात्।

तथाच देवलः।

गान्धर्व्वादिविवाहेषु पुनर्वैवाहिको विधिः।

कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः॥

गृह्यपरिशिष्टेऽपि।

गान्धर्व्वासुरपैशाचो विवाहौ राक्षसश्च यः।

पूर्वं परिणयस्तेषां ततो होमो विधीयते ॥

परिणयः स्वीकारादि ।

एवं स्थिते वर्णव्यवस्थया विवाहनियममाह

मनुः ।

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।

विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥

अस्यार्थः । ब्राह्मादीन् षडानुपूर्व्या क्रमेण ब्राह्मणस्य धर्म्यान् धर्मादनपेतान्विद्यात्, ते च षट् ब्राह्मो दैव आर्षः प्राजापत्य आसुरो गान्धर्व्वश्चेति ।

यत्तु काश्यपेनोक्तम् ।

क्रीता द्रव्येन या नारी न पत्नी सा विधीयते ।

न सा दैवे न सा पित्र्ये दासीं तां काश्यपोऽब्रवीत् । इति तद्वक्ष्यमाणशास्त्रविवाहासम्भवे सति द्रष्टव्यम् । क्षत्रस्य अवरान् पश्चादुक्तानासुरगान्धर्व्वराक्षसपैशाचान्धर्म्यान् जानीयात् विट्शूद्रयोस्तु अराक्षसान्राक्षसवर्ज्जितांस्तानेवासुरादिपैशाचान्तान्धर्म्यान्विद्यात् । केचनैवं व्याचक्षते—षट् ब्राह्मादिगान्धर्व्वान्तान्विप्रस्य, क्षत्रस्य प्राजापत्यादिराक्षसान्तांश्चतुरः । विट्शूद्रयोस्तु आसुरराक्षसादीन् प्राजापत्यादींस्तानेव धर्म्यान्विद्यात् । पैशाचपरित्यागे च हेतुमप्युपदिशन्ति ।

हेतुश्च नारदमनुवचने ।

चत्वारो ब्राह्मणस्याद्याः प्रशस्ता गान्धर्व्वराक्षसौ ।

राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥

स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः। इति।

एषामपि मध्ये प्रशस्तानाह मनुः।

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः॥

अयमर्थः। ब्राह्मो दैव आर्षः प्राजापत्यश्चेति चतुरो ब्राह्मणस्य प्रशस्तानाहुः। क्षत्रियस्यैकं राक्षसमेव प्रशस्तं, वैश्यशूद्रयोः आसुरमेव। ब्राह्मणस्य ब्राह्मादिप्राजापत्यान्तो मुख्यः कल्पः, राक्षसोऽनुकल्पः अनन्तरक्षत्रधर्मत्वात्*। क्षत्रस्य राक्षसो मुख्यः चतुरोऽवरानित्यत्र मते† आसुरगान्धर्व्वराक्षसपैशाचा इति चत्वारः‡। एतन्मते§ आसुरगान्धर्व्वपैशाचोऽनुकल्पः¶। यन्मते तु‖ प्राजापत्यादयश्चत्वारः प्राजापत्यासुरगान्धर्व्वराक्षसा इति, तन्मते तु प्राजापत्यादयस्त्रयोऽनुकल्पः। तथा वैश्यशूद्रयोरासुरो मुख्यः कल्पः, गान्धर्व्वपैशाचावनुकल्पः प्राजापत्यगान्धर्व्वौ वा।

---

* राक्षसं क्षत्रियस्यैकमित्यनेन अव्यवधानेन धर्म्मज्ञापनार्थैव क्षत्रियपदस्य निर्द्दिष्टत्वात्।

† षड़ानुपूर्व्व्या विप्रस्य क्षत्रस्य चतुरोऽवरानिति वचनानुसरणे।

‡ प्रशस्ता इति शेषः।

§ एतद्वचनानुसरणेऽपि।

¶ क्षत्रियस्यैकमिति एकपदनिर्द्देशादेते विवाहा अनुकल्पएवेति युक्तम्।

‖ यन्मते अवरानिति अकारप्रश्लेषरहितपाठानुसरणे तु।

एवं स्थिते ब्राह्मणस्यापत्कल्पमाह

मनुरेव ।

पञ्चानान्तु त्रयो धर्म्म्या द्वावधर्म्म्यौ स्मृताविह ।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥

प्राजापत्यासुरगान्धर्व्वराक्षसपैशाचानां मध्ये त्रयः प्राजापत्य-गान्धर्व्वराक्षसाः । अधर्म्म्यौ तावेव दर्शयति पैशाचश्चासुरश्चेति । मुख्यकल्पमध्ये* परिगणितस्यापि प्राजापत्यस्यापत्कल्पमध्यपरि-गणन†मार्षापेक्षया प्राजापत्यस्यापकृष्टताद्योतनार्थं पुनात्युत्त-रजश्च षड्वित्यार्षविवाहजापेक्षया सकायः पावयेत्तज्जः षट् षट् वंश्यान् सहात्मनेति प्राजापत्यविवाहस्याधिक्यश्रवणात्प्राजापत्य-स्याधिक्यं द्योतयति तन्मा भूदिति ।

क्षत्रियस्यापत्कल्पमाह ।

पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्व्वचोदितौ ।
गान्धर्व्वो राक्षसश्चैव धर्म्म्यौ क्षत्रस्य तौ स्मृतौ ॥

पृथक् पृथक् मुख्योऽनुकल्पश्चेति व्यवस्थितविकल्पत्वेनाभिहितः, तत्र पूर्व्वोक्तविवाहौ यदि मिश्रौ भवतः स मिश्रविवाह-उच्यते । मिश्रविवाहमेवोदाहृत्य दर्शयति गान्धर्व्वो राक्ष-सश्चेति । यथा प्रथमं गान्धर्व्वेण परिगृह्य तद्बन्धुषु विरु-द्धेषु युद्धेन हरणमित्यत्र प्रदर्शनार्थं अतश्चानेनैव न्यायेन वर्णा-

---

* चत्वारो ब्राह्मणस्याद्या इति वचनेनेति शेषः ।

† पञ्चानान्तु त्रयो धर्म्म्या इति वचनेनेति शेषः ।

न्तराणामप्यूहनीयम्। वैश्यशूद्रयोरप्यापत्कल्पेऽतिनिन्दितोऽपि पैशाचो ग्राह्यः। तथा वैश्यशूद्रवृत्तेरपि विप्रादेः।

तथाच वत्सः।

सर्व्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य वै।
चौर्य्येणापि विवाहेन सा विवाह्या रहःस्थिता॥ इति।

चौर्य्येण पैशाचेन।

सकलविवाहोपयोगविशेषो यज्ञपार्श्वेनोक्तः।

विवाहे वितते तन्त्रे होमकाल उपस्थिते।
कन्याया ऋतुरागच्छेत्कथं कुर्व्वन्ति याज्ञिकाः॥
स्नापयित्वा तु तां कन्यामर्च्चयित्वा यथाविधि।
युञ्जान* आहुतिं दत्त्वा† ततस्तन्त्रं‡ प्रवर्त्तयेदिति॥

याज्ञवल्क्येनाप्यन्यो विशेषो दर्शितः।

पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम्।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः॥

स्त्री शरादिकं गृह्णाति तत्पाणिस्थितञ्च वरो गृह्णीयादित्यर्थः।

अग्रजन्मन इत्युत्कृष्टोपलक्षणम्।

तथाच मनुः।

वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदन इति।

---

* विप्रः।

† हुत्वा चाज्याहुतीस्तत्रेति ग्रन्थान्तरीयपाठः।

‡ वैवाहिकहोमादिकम्।

विधवानियोगो नात्र विचारसरणिमारोपितो* युगान्तरविषयत्वात् ।

विवाहे वर्षमासादिशुद्धिर्ज्योतिःशास्त्रेऽभिहिता ।

सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्ज्जयेत् ।
सिंहस्थे तु मघासंस्थं गुरुं यत्नेन वर्ज्जयेत् ॥
अन्यत्र सिंहभागे तु विवाहादि विधीयते ।

मनुः ।

नर्म्मदापूर्व्वभागे तु शोणस्योत्तरदक्षिणे ।
गण्डक्याः पश्चिमे पारे मकरस्थो न दोषभाक् ॥

ज्योतिःसारसागरे ।

अतिचारगतो जीवः स्वं राशिं नैति चेद्यदि ।
लुप्तसंवत्सरो ज्ञेयः सर्व्वकर्म्मवहिष्कृतः ॥
माघफाल्गुनवैशाखज्यैष्ठाषाढ़स्सगाह्वयाः† ।
षड़ेते पूजिता मासाश्चातुर्व्वर्ण्यस्य नित्यशः ॥
मार्गे मासि तथा ज्यैष्ठे चौरं परिणयं व्रतम् ।
ज्येष्ठपुत्त्रदुहित्रोस्तु यत्नेन परिवर्ज्जयेत् ॥
श्रेष्ठं पक्षमुशन्ति शुक्लमसितस्याद्यं त्रिभागं‡ तथा
रिक्तां प्रोह्य तिथिं तथर्त्वयनयोः सन्धिञ्च शेषाः शुभाः ॥

---

* विचारपथम् ।

† मार्गशीर्षः ।

‡ कृष्णपञ्चमीपर्य्यन्तम् ।

अमायाञ्चैव भद्रायां* करणे विष्टिसंज्ञिते ।
यः करोति विवाहं स शीघ्रं याति यमालयम् ॥
प्रतिपद्दुःखजननी द्वितीया प्रीतिवर्द्धिनी ।
सौभाग्यदा तृतीया स्याच्चतुर्थी चार्थनाशिनी ॥
पञ्चम्यां सुखवित्तानि षष्ठी विघ्नप्रदा मता ।
विद्याशीलसुखाप्तिः स्यात्सप्तम्यामफलाष्टमी ॥
नवमी शोकभयदा आनन्दो दशमीदिने ।
सुखदैकादशी ज्ञेया द्वादशी सफला स्मृता ।
मानपुष्टी त्रयोदश्यां चतुर्दश्यो† तु दोषदे ॥
फलं बहुविधं ज्ञेयं पञ्चदश्यां‡ विशेषतः ।
न चेह शुक्लप्रतिपदुदयन्ती निषिध्यते ॥
अत्रापि कृष्णपक्षस्य दशमीं ह्यविवाहिकीम् ।
वदन्त्यन्ये तु दशमीमुभयोरविवाहिकीम् ॥
गुरुशुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्त्तुश्चित्तानुवर्त्तिनी ॥
अर्कार्किभौमवाराणां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥
तत्र दिनेत्यभिधानाद्रात्रावभ्यनुज्ञा गम्यते ।
तथाच स्मरन्ति ।

---

* विष्टिभद्रायाम् ।

† शुक्लकृष्णे ।

‡ पौर्णमास्याम् ।

न वारदोषाः प्रभवन्ति रात्राविति ।
यावज्जीवन्तु कन्या सा भर्त्रा सह वियुज्यते ।
दुःखं पश्चाद्दामरोगैरश्विन्यां याति पञ्चताम् ॥
याम्ये* षड्भिर्मासैर्वैधव्यं याति निर्धनत्वञ्च ।
धनकनकभूषणयुता पाणिग्रहणे तु कृत्तिकायाञ्च ॥
पश्चात् षष्ठेऽब्दे याति पञ्चत्वम् ।
प्राजापत्ये† सुभगा पतिव्रता भामिनी प्रिया भर्त्तुः ।
सुचिरनुकूला भर्त्तुः प्रियंवदा सौमदैवते‡ कन्या ॥
आर्द्रापाणिग्रहणे वर्षेणैकेन याति पञ्चत्वम् ।
त्रिभिरब्दैरादित्ये§ कन्या समुपैति पतिमन्यम् ॥
अब्दचतुष्कात्कन्या कुलविद्वेषिणी भवति पुष्ये ।
अश्लेषास्वपि कन्या पाणिग्रहणे समेत्य भर्त्तारम् ॥
सप्तभिरब्दैर्दुष्येत्¶ अथ कुलटात्वं समाप्नोति ।
भवति त्रिवर्गयुक्ता‖ पित्र्ये** पाणिग्रहे हि सम्प्राप्ते ॥
भाग्ये†† सत्यसौभाग्यं दासीत्वं याति निर्भया कन्या ।

---

* भरण्याम् ।
† रोहिण्याम् ।
‡ मृगशिरसि ।
§ पुनर्व्वसौ ।
¶ हन्यादिति पाठान्तरम् ।
‖ धर्म्मार्थकामयुक्ता ।
** मघासु ।
†† पूर्व्वफल्गुन्याम् ।

अब्दैकेऽतिक्रान्ते पतिमरणं प्राप्नुयाच्चैव ॥
व्यपगतशोका सुभगा भोगवती सुप्रजा प्रिया भर्त्तुः ।
अर्य्यम्णि* प्रयुक्ते कन्या वर्षद्वयेनेतीति† ॥
हस्ते पाणिग्रहणं समेत्य कन्या पतिव्रता नित्यम् ।
आत्मप्राणवियोगमवाप्नुयात्कन्यका चाब्दात् ॥
अथवा शीलभ्रंशं त्वाष्ट्रे‡ प्राप्नोति बान्धवकुलात् ।
स्वाती धर्म्मसमेता पतिदयिता बन्धुवल्लभा साध्वी ॥
ऐन्द्राग्न्याख्ये§ कन्या बुद्धिभ्रष्टा प्रयाति पतिमन्यम् ।
अब्दचतुष्केऽतीते, मैत्रे¶ कन्याप्नुयाज्जनं सौख्यम् ॥
भर्त्तुरवज्ञां कृत्वा दुःखान्यनुभूय शक्रभे‖ कन्या ।
दशमेऽब्दे वैधव्यं प्रयाति यद्यष्टमे न मृता ॥
मूले सधना साध्वी पत्युरतिप्रियतमा प्रहृष्टा च ।
अशुचिरनाचारा दासरतान्यथा** समेति भर्त्तारम् ॥
अब्दद्वयेन कन्या ज्ञेया सा पूर्व्वाषाढ़ासु ।
विदधाति वैश्वदेवे†† भर्त्तुर्वित्तञ्च गुरुजनानुरता ॥

---

* उत्तरफल्गुन्याम् ।

† अतीते इति पाठान्तरम् ।

‡ चित्रायाम् ।

§ विशाखायाम् ।

¶ अनुराधायाम् ।

‖ ज्येष्ठायाम् ।

** अन्यप्रकारम् ।

†† उत्तराषाढ़ानक्षत्रे ।

पाणिग्रहणमुपयाति श्रवणे नैकत्र सा रमते ।
विभ्रष्टस्मृतिशौचा मृत्युमुखं याति वसुदैवे* ॥
ईर्षारोगिणि हता यमसदनं याति वारुणे† पश्चात् ।
आजैकपादे‡ कन्या दुःशीला दुर्भगा दरिद्रा च ॥
अहिर्बुध्न्ये§ कन्या मणिकनकविभूषणं प्रभूतमाप्नोति ।
प्राप्नोति शीलं शौचं पौष्णे¶ शय्यासनोपकरणानि ॥
वैधृतिके परिणीता कन्या विकलेन्द्रिया, व्यतीपाते ।
विद्यास्मरणं नित्यं सुभगा षट्स्वपि चरेषु‖ करणेषु ॥
ध्रुवकरणैः शकुनाद्यैः पाणिग्रहणाद्ध्रुवं मृत्युः ।
दुष्टपूर्व्वमपहाय दिनार्द्धभागं
विष्टिप्रदुष्टमपि नष्टविधुं** तिथिञ्च ।
शेषाः शुभा अशुभास्तथान्ये
पूर्व्वोक्तमत्र सकलं हि विचिन्तनीयम् ॥
शनैश्चरदिने प्राप्ते यदि रिक्ता तिथिर्भवेत् ।
तस्मिन्विवाहिता कन्या पतिसन्तानवर्द्धिनी ॥

---

* धनिष्ठायाम् ।

† शतभिषायाम् ।

‡ पूर्व्वभाद्रपदनक्षत्रे ।

§ उत्तरभाद्रपदनक्षत्रे ।

¶ रेवत्याम् ।

‖ चरेषु । ववेषु पाठे ववप्रभृतिषु ।

** चन्द्ररहितामावास्याम् ।

मेषे कुमारेष्व*नुरक्तचित्ता
विहीनवित्ता गवि, गोव्रता च ।
कुलद्वयानन्दकरी तृतीये
कुलीरलग्ने कुलटा नृशंसा ॥
हरौ† प्रसूता सुकृताश्रिता पितुः
पितुः प्रिया च श्वशुरस्य षष्ठे‡ ।
रूपाभिमानार्थवती तुलाधरे
तथालिनि क्रन्दति नित्यमस्थिरा ॥
धनुषि कुलटा तत्पूर्व्वार्द्धे सत्यपरे§ जगुः ।
मृगघटझषेष्व¶न्यासक्ता जरामुपगच्छति ॥
पञ्च पाणिग्रहे दोषा वर्ज्जनीयाः प्रयत्नतः ।
दारिद्र्यं मरणं व्याधिः पुंश्चल्यमनपत्यता ॥ इति ।

तथा गुरुशुक्रास्तादिष्वपि विवाहादिनिषेधो ज्योतिःसार-सागरे ।

बाले शुक्रे वृद्धे शुक्रे जीवे नष्टे वृद्धे जीवे ।
बाले जीवे जीवे सिंहे जीवादित्ये सिंहादित्ये ॥
तथा मलिम्लुचे मासि सुराचार्य्येऽतिचारगे ।

---

* वरेषु ।

† सिंहलग्ने ।

‡ कन्यालग्ने ।

§ समस्तधनुर्लग्ने दोषः, अपरमते धनुःपूर्व्वार्द्धमात्रे ।

¶ मकरकुम्भमीनलग्नेषु ।

वापीकूपतडागादि* क्रियाः प्रागुदितास्त्यजेत् ॥

अस्तादिलक्षणं ब्रह्मसिद्धान्ते ।

रविणा सन्निरन्येषां ग्रहाणामस्त उच्यते ।
अर्व्वाग्वृद्धिमवस्था स्यात्सौम्याहार्दकर्मग्रवे ॥ इति ।

बालवृद्धयोरवधिर्दीर्मोद्दरीये ।

प्राग्बालो दिवसत्रयं दशदिनं पश्चात्सितो वृद्धताम्
पश्चे वासरपञ्चकं च लभते पश्चे गुरुः सर्व्वतः ।
तत्पश्चाद्गुरुशुक्रयोर्विमलयोः कुर्य्याद्विवाहं सिते
कृष्णे वासरपञ्चकञ्च शिववत्र स्याद्दशाहः परः ॥ इति ।

वार्हस्पत्ये तु ।

प्राक् पश्चादुदितः शुक्रः पञ्च सप्तदिनं शिशुः ।
विपरीतन्तु वृद्धत्वं तद्वदेव गुरोरपीति ॥

अत्र देशभेदेन आपदा च व्यवस्थामाह गार्ग्यः ।

शुक्रो गुरुः प्रागपरार्ककालो।†
विन्ध्ये दशावन्तिषु सप्तरात्रम् ।
वङ्गेषु हूनेषु‡ च षट् च पञ्च
शेषे च देशे त्रिदिनं वदन्ति ॥ इति ।

---

* विवाहादीति पाठान्तरम् ।

† शुक्रोगुरुश्च चेत् प्राक् पूर्व्वस्यां दिशि अपरस्मिन् पश्चिमस्यां दिशि अर्ककालः अर्केण सूर्य्येण युक्तः सन् बाल्यत्वादि प्राप्तस्तदा तन्निमित्तकालः अकालः ।

‡ हूनेषु म्लेच्छदेशविशेषेषु यथा – श्वपाकश्च तुरष्कश्च हूनोयवन इत्यपि ।

अस्मिन्वचने येऽधिककालास्ते देशभेदेन व्यवस्थिता इति न विरोधः ।

मिहिरोऽपि ।

बहवो दर्शिताः काला ये बाल्ये वार्द्धकेऽपि वा ।
ग्राह्यास्तत्राधिकाः शेषा देशभेदात्तथापदेति ॥

इति विवाहविधिः ।

## अथावसथ्याधानम् ।

आवसथ्यस्य गृह्यस्य अग्नेराधानमावसथ्याधानम् । तद्विवाहकाले चतुर्थीकर्म्मानन्तरं कुर्य्यात् । प्रयोगमध्ये प्रयोगान्तरकरणाधिकाराभावाद्वैवाहिकोऽग्निरेव औपासनाग्निरित्याश्वलायनादीनां पक्षः, दायाद्यकाले आवसथ्याधानम् इत्येकेषां मतम् । दायाद्यकालो नाम भ्रातॄणां पितृधनस्य विभागकालः । अविभक्ते पितृधने सर्व्वेषां भ्रातॄणां स्वत्वस्य साधारणत्वेन विनियोगानर्हत्वात्* धनविनियोगसाध्य† मावसथ्यादिकर्म्मानुष्ठानमतो भ्रातृमतो विभक्तस्यैवाधानेऽधिकार इति तेषामभिप्रायः, अन्येषान्तु मते समुदितधनस्यापि स्वत्वमस्तीतरानुज्ञया विवाहकालो भवतीत्यभिप्रायः ।

तथा पारस्करः ।

---

* साधारणधने एकस्य दानाद्यनधिकारात् ।

† धनव्ययसाध्यम् ।

परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥

अग्रजश्च सोदर एव, अन्यमातृजो न ।

तथाह वशिष्ठः ।

पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगो न दोषः परिवेदने ॥

परनारीसुता दत्तकादयः ।

अन्यमपि विशेषं छन्दोगपरिशिष्टे कात्यायन आह ।

देशान्तरस्थक्लीवैकवृषणांश्चासहोदरान् ।
वेश्यानिष्ठान्त्य*पतितशूद्रतुल्यातिरोगिणः ॥
जड़मूकान्धबधिरकुब्जवामनखञ्जकान्† ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुटिलोन्मत्तरोगांश्च‡ परिविन्दन्न दुष्यति ॥

एतेषामाधानाद्यधिकाराभावादेव न दोष इत्यर्थः । देशान्तरस्थिते सोदरे वशिष्ठेन विशेषः कथितः ।

अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति ।

अनिर्विष्टमकृतविवाहाग्निहोत्रम् । कालविकल्पस्त्वेवं ज्ञेयः ।

---

* वेश्याभिषक्तेति देशान्तरीयपाठः ।

† कुण्ठकानिति पाठान्तरम् ।

‡ कुलटोन्मत्तचोरांश्चेति पाठान्तरम् ।



तत्र पुनः पुनः श्रूयमाणे सुप्रदेशे स्थिते द्वादश वर्षाणि, किञ्चित् श्रूयमाणे नातिसुप्रदेशस्थिते दश, नदीपर्व्वतचौराद्याकुलदूरतरदेशस्थिते अश्रूयमाणे चाष्टौ वर्षाणीति। यत्र ज्येष्ठोऽधिकार्य्यपि आधानं न करोति, तत्र तदनुज्ञया कनीयसा कर्त्तव्यम्।

यथाह सुमन्तुः।

ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव चाग्रयेत्*।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा॥

वृद्धवशिष्ठोऽपि।

अग्रजस्तु यदानग्निः प्रकुर्य्यादनुजः† कथम्।
अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि॥

हारीतोऽपि।

अधिकारिभ्रातुरनुज्ञापूर्व्वकमाधानमनुजानीते न विवाहम्।

सोदराणान्तु सर्व्वेषां परिवेत्ता कथं भवेत्।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया॥

पितृविषयेऽपि सुमन्तुः।

पिता यस्य तु नाधीतं कथं पुत्रः स कारयेत्।
अग्निहोत्रेऽधिकारोऽस्ति शङ्खस्य वचनं यथा॥

नाधीतमग्निरहित इत्यर्थः। अत्राप्यनुज्ञापूर्व्वकमित्यवगन्तव्यं

---

* कारयेदिति पाठान्तरम्।

† अधिकार्य्यनुज इति पाठान्तरम्।

समानन्यायत्वात्*।

आधानार्थमग्निः कुतो ग्राह्य इत्याकाङ्क्षायां स्मृत्यन्तरे दर्शितम्।

आधानं विधिवद्वैश्यकुलाद्राष्ट्रादथापि वा।
महानसादरण्युत्थाद्दारदायादकालयोः†॥

वैश्यस्य पशुसमृद्धस्य गृहात्, महानसाद्बहुपाकवतो ब्राह्मणस्य महानसात्।

तथाच कात्यायनः।

वैश्याद्बहुपशोरम्बरीषा‡द्बहुयाजिनो ब्राह्मणस्येति।

अरणिलक्षणं स्मृत्यन्तरेऽभिहितम्।

अश्वत्थो यः शमीगर्भः प्रशस्तोर्व्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा चोदीची चोर्द्धगाऽपि वा।
अरणिस्तन्मयी ज्ञेया तन्मय्येवोत्तरारणिः।
सारवद्दारवं चत्रमोविली च प्रशस्यते॥

सारवद्बलवत्, खदिरादिदृढ़काष्ठनिर्म्मितमित्यर्थः। चत्रं यस्मिन् काष्ठे रज्जुं वेष्टयित्वा प्रमथ्यते तत्। ओविली चत्रस्योपरि विलयुक्तं,§ तन्नियन्त्रणार्थं यद्गृहीयते तत्।

संसक्तमूलो यः शम्याः शमीगर्भः स उच्यते।
अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः॥

---

* ज्येष्ठस्थल इव पितृस्थलेऽपि न्यायस्य तौल्यात्।

† विवाहकाले विभागकाले च।

‡ भर्ज्जनस्थानात्।

§ छिद्रयुक्तम्।

आवसथ्याधानं दारकाले*वा दायकाले†एकेषामिति। व्यासोऽपि।

अग्निर्वैवाहिको येन न गृहीतः प्रमादतः‡।
पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः॥
यो गृहीत्वा विवाहाग्निं गृहस्थः प्रतिमन्यते§।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥

एतच्च ज्येष्ठाधिकारिणो द्रष्टव्यम्। कनीयांस्तु ज्येष्ठे कृताग्निपरिग्रहे विद्यमाने स्वयमध्ययनादिनिष्ठो¶ऽग्निपरिग्रहमकुर्व्वन्नपि न प्रत्यवैति‖।

तथाच गर्गः।

पितृपाकोपजीवी वा भ्रातृपाकोपजीवकः।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना॥

अध्ययननिष्ठ इति प्रथमाध्ययनपरम्। अत्र च ज्येष्ठे विद्यमाने न कनीयसामधिकारः।

तथाच मनुशातातपौ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।

---

* विवाहकाले।

† पितृधनविभागकाले।

‡ प्रमादिनेति पाठान्तरम्।

§ परित्यजति।

¶ अध्ययनादिकार्य्ये व्यापृतः।

‖ प्रत्यवायी न भवति।

परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥

अग्रजश्च सोदर एव, अन्यमातृजो न ।

तथाह वशिष्ठः ।

पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

परनारीसुता दत्तकादयः ।

अन्यमपि विशेषं छन्दोगपरिशिष्टे कात्यायन आह ।

देशान्तरस्थक्लीवैकवृषणांश्चासहोदरान् ।
वेश्यानिष्ठान्त्य*पतितशूद्रतुल्यातिरोगिणः ॥
जड़मूकान्धवधिरकुब्जवामनखञ्जकान्† ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुटिलोन्मत्तरोगांश्च‡ परिविन्दन्न दुष्यति ॥

एतेषामाधानाद्यधिकाराभावादेव न दोष इत्यर्थः । देशान्तरस्थिते सोदरे वशिष्ठेन विशेषः कथितः ।

अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति ।

अनिर्विष्टमकृतविवाहाग्निहोत्रम् । कालविकल्पस्त्वेवं ज्ञेयः ।

---

* वेश्याभिषक्तेति देशान्तरीयपाठः ।

† कुण्ठकानिति पाठान्तरम् ।

‡ कुलटोन्मत्तचौरांश्चेति पाठान्तरम् ।



तत्र पुनः पुनः श्रूयमाणे सुप्रदेशे स्थिते द्वादश वर्षाणि, किञ्चित् श्रूयमाणे नातिसुप्रदेशस्थिते दश, नदीपर्व्वतचौराद्याकुलदूरतरदेशस्थिते अश्रूयमाणे वाष्टौ वर्षाणीति। यत्र ज्येष्ठोऽधिकार्य्यपि आधानं न करोति, तत्र तदनुज्ञया कनीयसा कर्त्तव्यम्।
यथाह सुमन्तुः।

ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत्*।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा॥

वृद्धवशिष्ठोऽपि।

अग्रजस्तु यदानग्निः प्रकुर्य्यादनुजः† कथम्।
अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि॥

हारीतोऽपि।

अधिकारिभ्रातुरनुज्ञापूर्व्वकमाधानमनुजानीते न विवाहम्।

सोदराणान्तु सर्व्वेषां परिवेत्ता कथं भवेत्।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया॥

पितृविषयेऽपि सुमन्तुः।

पिता यस्य तु नाधीतं कथं पुनः स कारयेत्।
अग्निहोत्रेऽधिकारोऽस्ति शङ्खस्य वचनं यथा॥

नाधीतमग्निरहित इत्यर्थः। अत्राप्यनुज्ञापूर्व्वकमित्यवगन्तव्यं

---

* कारयेदिति पाठान्तरम्।

† अधिकार्य्यनुज इति पाठान्तरम्।

समानन्यायत्वात्*।

आधानार्थमग्निः कुतो ग्राह्य इत्याकाङ्क्षायां स्मृत्यन्तरे दर्शितम्।

आधानं विधिवद्वैश्यकुलाद्भ्राष्ट्रात्तथापि वा।
महानसादरण्युत्थाद्दारदायादकालयोः† ॥

वैश्यस्य पशुसम्बद्धस्य गृहात्, महानसाद्बहुपाकवतो ब्राह्मणस्य महानसात्।

तथाच कात्यायनः।

वैश्याद्बहुपशोरम्बरीषात्‡ बहुयाजिनो ब्राह्मणस्येति।

अरणिलक्षणं स्मृत्यन्तरेऽभिहितम्।

अश्वत्थो यः शमीगर्भः प्रशस्तोर्व्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा चोदीची चोर्द्धगाऽपि वा।
अरणिस्तन्मयी ज्ञेया तन्मय्येवोत्तरारणिः।
सारवद्दारवं चत्रमोविली च प्रशस्यते ॥

सारवद्दलवत्, खदिरादिदृढ़काष्ठनिर्म्मितमित्यर्थः। चत्रं यस्मिन् काष्ठे रज्जुं वेष्टयित्वा प्रमथ्यते तत्। ओविली चत्रस्योपरि विलयुक्तं,§ तन्नियन्त्रणार्थं यद्दीयते तत्।

संसक्तमूलो यः शम्याः शमीगर्भः स उच्यते।
अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः ॥

---

* ज्येष्ठस्थल इव पितृस्थलेऽपि न्यायस्य तौल्यात्।

† विवाहकाले विभागकाले च।

‡ भर्ज्जनस्थानात्।

§ छिद्रयुक्तम्।

चतुर्विंशाङ्गुला दीर्घा विस्तारेण षडङ्गुला।
चतुरङ्गुलमुत्सेधा अरणिर्याज्ञिकैः स्मृता* ॥
मूलादष्टाङ्गुलं त्यक्त्वा प्रयाम द्वादशाङ्गुलम्।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥†

प्रमन्थचक्रस्याधोभागे ऽरणिकाष्ठनिर्मितमग्निप्रमथनार्थं यद्दीयते स उच्यते। अधोभागे प्रमन्थकाष्ठसंबद्धचक्रस्योपरि ओविलीं निधाय चक्रं नेत्रेण वेष्टयित्वा प्रमथनं कुर्य्यात्।

गोवालैः शणमिश्रैस्तु‡ त्रिवृत्तममलात्मकम्।
व्यामप्रमाणं§ नेत्रं¶ स्यात्तेन मन्थ्यो हुताशनः ॥
चतसृष्वपि प्रमन्थार्थं गाढं कृत्वा विचक्षणः।

इत्यत्र नक्षत्रनियमश्च ज्योतिःशास्त्रे।

उत्तरात्रितय‖ पौष्ण**रोहिणीपौरुहूत††बहुला‡‡

---

* छन्दोगपरिशिष्टे तु चतुर्विंशतिरङ्गुलदैर्घ्यं यद्यपि पार्श्विकम्। चत्वार उच्छ्रायमानमरण्याः परिकीर्तितमेवं पाठो दृश्यते।

† अष्टाङ्गुलः प्रमन्थः स्यात्तत्वं स्याद्द्वादशाङ्गुलमिति छन्दोगपरिशिष्टपुस्तके विशेषपाठो दृश्यते।

‡ शणसंमिश्रैरिति पाठान्तरम्।

§ बाहुद्वयपरिमितम्।

¶ मन्थनदण्डबद्धरज्जुः।

‖ उत्तरफल्गुन्युत्तराषाढोत्तरभाद्रपदः।

** रेवती।

†† ज्येष्ठा।

‡‡ कृत्तिका।

द्विदैवते:* पुष्यसौम†सहितैर्द्विजन्मनः स्याद्गृताग्नि-परिग्रहो हितः।

इत्यावसथ्याधानम्।

## अथोपासनस्य चोपासनम्।

कुत आरभ्येत्याकाङ्क्षायामाह

पारस्करः।

उदयप्रभृतीनि।

अथ स एव कालनियममाह।

अस्तमितानुदितयोरिति।

अस्तमितञ्च अनुदितञ्च अस्तमितानुदिते तयोः।

अस्तमितलक्षणं छन्दोगपरिशिष्टे।

यावत्सम्यक् न भाव्यन्ते‡ नभस्यृक्षाणि सर्व्वतः।
न च लौहित्यमापैति तावत्सायञ्च हूयते॥

अनुदितस्य तु द्वैविध्यं, अनुदितः समयाध्युषितश्च।

तथाच मनुः।

उदितानुदिते चैव समयाध्युषिते तथा।
सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिरिति॥

अनुदितसमयाध्युषितलक्षणमाह

---

* विशाखः।

† मृगशिराः।

‡ न व्यक्तीभवन्ति।

कात्यायनः ।

रात्रेः षोड़शमे भागे ग्रहनक्षत्रभूषिते* ।
कालन्त्वनुदितं ज्ञात्वा होमं कुर्य्याद्विचक्षणः ॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविर्यावन्न दृश्येत समयाध्युषितं चरेत्† ॥
रेखामात्रश्च दृश्येत रश्मिभिश्च समन्वितः ।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥

तत्र वाजसनेयिनां नियमेनानुदितहोमः सूर्य्ये हवा अग्निहोत्रमित्यारभ्य तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रमह इति। उदितहोमनिन्दापूर्व्वकमनुदितहोमसमर्थनात्, तथा तत्समानतन्त्राणां छन्दोगादीनामपि, आश्वलायनादीनामुदितहोमः। तथा तैत्तिरीयके ब्राह्मणे अनुदितहोमे निन्दा श्रूयते ।

प्रातः प्रातरनृतं ते वन्दिपुरोदयः। जुह्वति ये चाग्निहोत्रं दिवाकीर्त्त्यमदिवा कीर्त्तयन्तः सूर्य्यज्योतिर्न तदा ज्योतिरेषामिति ।

होमद्रव्याणि च स्मृत्यन्तरे प्रदर्शितानि ।

दध्नोत्तण्डुलैरक्षतैर्वा तदभावे श्यामाक, नीवार, वेणु, यव, कन्द, मूल, फलादीनि इति। तण्डुलशब्दो व्रीहियवोपलक्षणार्थः ।

* भूषिते इति पाठान्तरम् ।

† समयाध्युषितश्च स इति पराशरमाधवे पाठः ।

अतएव श्रुतौ ।

व्रीहिभिर्यजेत यवैर्व्वा यजेत वा ।

वेणुयवा वेणुवीजानि ।

आहुतिपरिमाणञ्च स्मृत्यर्थसारे ।

व्रीहीणाञ्च यवानाञ्च शतमाहुतिरिष्यते ।

व्रीहिवदेव तण्डुला अपि ।

यद्वा धान्यं* चतुःषष्टिराहुतेः परिकीर्त्तितम् ।

तिलानान्तु तदर्द्धं स्यात्तदर्द्धं स्याद्घृतस्य च ॥

यावति प्रदेशे उक्तसंख्यकास्तिलास्तिष्ठन्ति, तदर्द्धदेशव्यापिघृतमाहुतौ भवतीत्यर्थः । एवं सायं प्रातर्नित्यहोमो निवर्त्तनीयः ।

होमे कर्त्तारो दर्शिताः स्मृत्यर्थसारे ।

यजमानः प्रधानं स्यात्पत्नी पुत्त्रश्च कन्यका ।

ऋत्विक्शिष्यो† गुरुर्भ्राता भागिनेयः सुतापतिः‡ ॥

एतैरेव हुतं यत्तु तद्धुतं स्वयमेव तु ।

पत्नी कन्या च जुहुयाद्विना पर्य्युक्षणक्रियाम् ॥

असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना ॥

द्वयोरप्यसमक्षं चेद्भवेद्धुतमनर्थकम् ।

सन्निधौ यजमानः स्यादुद्देशत्यागकारकः ॥

---

* प्रस्थधान्यमिति माधवीये पाठः ।

† पुत्र इति देशान्तरीयः पाठः ।

‡ अत्र विट्पतिरिति देशान्तरीयः पाठः ।

असन्निधौ तु पत्नी स्यादध्वर्य्युस्तदनुज्ञया ।
उन्मादे प्रसवे चार्त्तौ कुर्व्वीतानुज्ञया विना ॥
नोपवासी प्रवासे स्यात्पत्नी धारयते ध्रुवम्* ।
सर्व्वदा यजमानो वा व्रजेत्तद्दिङ्मुखः शुचिः ॥

अग्निधमने च विशेषो दर्शितः कात्यायनेन ।

जुहूषंश्च हुते चैव पाणिसूर्पास्फदारुभिः ।
न कुर्य्यादग्निधमनं न कुर्य्याद्वाजनादिना† ॥
मुखेनैव धमेदग्निं मुखादेष ह्यजायत‡ ।

तथा ।

नाग्निं मुखेनेति वचो लौकिके योजयन्ति तत् ।

यदा मुखेन धमनं तदा न नलिकादिव्यवधानेन साक्षादिति ज्ञेयम् ।

बौधायनः ।

आसायं कर्म्मणः प्रातराप्रातः सायकर्म्मणः ।
आहुतिर्नातिपद्येत पार्व्वणं पार्व्वणान्तरात् ॥

मैत्रायणीयपरिशिष्टेऽपि ।

ऋषयो हस्तप्राप्ता युक्ता आसंस्ते अग्निर्होत्रेणातप्यन्ते

---

* व्रतमिति पाठान्तरम् ।

† मुद्रितच्छन्दोगपरिशिष्टपुस्तके पाठान्तरं दृश्यते यथा —
होतव्ये च हुते चैव पाणिसूर्पस्फदारुभिः ।
न कुर्य्यादग्निधमनं कुर्य्याद्वा व्यजनादिना ॥

‡ तत्रैव पाठान्तरं यथा — मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत ।

समस्तहोमानपश्यंस्तथा द्विरात्रायषड्रात्रायार्द्धमासाय-मासायाग्निहोत्रमनुजुहुवुः। तस्माद्यायावरः* आमयाव्यार्त्तो† वार्द्धमासाग्निहोत्रं जुहुयात्। पक्षादौ पर्व्वणोऽन्ते सायञ्च प्रातरेव चतुर्द्दश चतुर्गृहीतानि सकृदुन्नयनमेका समित्सकृद्धोमः। सकृत्पाणिमार्ज्जनमिति। पक्षादौ यजनीयेऽहनि प्रतिपदि पर्व्वणोऽन्ते पक्षान्तेऽमावस्यादावौपवसथ्ये अग्न्याधानदिने‡ अत्र च पक्षान्ते सायंकाले चतुर्द्दश पञ्चदश वा आगामिदिनपरिगणनेन§ स्वशाखोक्तप्रकारेण चतुरात्तादीनि¶ हवींष्युपादाय सकृच्च सम्मार्ज्जनादिकं विधाय सकृदेव होमः कर्त्तव्यः। देशकालकर्त्तृदेवताहविषामेकत्वात्तन्त्रम्। एवं पक्षादौ यजनीयेऽहनि प्रातःप्रातश्च गौणकालाश्रयणं पक्षहोमश्च दैवात्कर्म्मणः उत्कर्षे प्रवासादिनिमित्ते च वेदितव्यम्। न सर्व्वदा एवं द्वित्र्यादिदिनार्थमपि निमित्तसद्भावे तन्त्रेण होमः।

पक्षहोमे विशेष‖माह।

---

* पुनः पुनर्गमनशीलः।

† आमयावी रोगी आर्त्तोऽन्यप्रकारेण कातरः।

‡ अन्वाधानदिने इति क्वचित्पाठः।

§ आगामिदिनगणनेन ह्रासवशात्कदाचिच्चतुर्दशदिनं कदाचित्ता पञ्चदशदिनम्।

¶ चतुर्गृहीतादीनि इति क्वचित्पाठः।

‖ पक्षहोमिनन्तत्पक्षमध्ये आपन्निवृत्तौ तदाप्रभृति पुनर्होमः कर्त्तव्य इत्याह।

मरीचिः ।

पञ्चहोमानथो दत्त्वा गत्वा कस्मान्निवर्त्तते* ।
होमं पुनः प्रकुर्व्वीत भवेच्च न च दोषभाक् ॥

पञ्चहोमानित्युपलक्षणमतोऽन्यत्राप्येवमेव, अत्र च सायंहोमे यद्द्रव्यं स्वीकृतं हविष्केण तदेव प्रातर्होमेऽपि नान्यत् । यतः सायमुपक्रमः प्रातरपवर्गोऽयमेक एव प्रयोगः । एकस्मिंश्च प्रयोगे प्रक्रान्तद्रव्यपरित्यागेन द्रव्यान्तरस्वीकरणं न युज्यते इति व्रीहियववाक्यमीमांसायाममीमांसि मीमांसकैः । अथ दैवात्सायंहोमगृहीतद्रव्यं प्रातर्होमे न प्राप्येत तदा तद्द्रव्यप्रतिनिधिभूतं द्रव्यान्तरं गृह्णीयात्र तूक्तव्रीह्यादिमध्ये अन्यतमं ग्राह्यम् । अप्रतिनिधिद्रव्यान्तरे प्रकृतिद्रव्यावयवाभावात्प्रतिनिधौ प्रकृतिद्रव्यावयवसम्भवाच्च । एतदपि प्रतिनिधिपदे निर्णीतम् ।

स्मृत्यर्थसारे ।

हव्यार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् ।
आजं वा तदभावे तु साक्षात्तैलं ग्रहीष्यते ॥
तैलाभावे ग्रहीतव्यं तैलं यत्तिलसम्भवम् ।
तदलाभे तु सस्नेहः कौसुम्भः सर्षपोद्भवः ॥
वृक्षस्नेहोऽथवा ग्राह्यः पूर्व्वालाभे परः परः ।

---

* पञ्चहोमानथो कृत्वा गत्वा तस्मान्निवर्त्तितः ।
होमं पुनः प्रकुर्व्वीत न चासौ दोषभाग्भवेत् ॥
इति पराशरमाधवीये पाठः ।

तदलाभे यवव्रीहिश्यामाकान्यतमोद्भवम् ॥
पिष्टमालोड्य यत्नेन* घृतार्थे योजयेत्सुधीः।
घृततैलेषु पुन्नागनिम्बैरण्डोद्भवं त्यजेत् ॥
येषां केषाञ्चिदन्येषां हविषामप्यसम्भवे।
सर्व्वत्राज्यमुपादेयं भरद्वाजमुनेर्मतात् ॥

अथ प्रसङ्गात्सकलनित्यनैमित्तिककर्म्मोपयोगितया मुख्यकालातिक्रमे गौणकालो निरूप्यते। ननु को मुख्यः को वा गौणः उच्यते। यो विहितः स मुख्यः, यथा हविश्राद्धादौ प्रातरादिः, यश्च विहितसमीपवर्त्ती उपरितनस्तेष्वेव कर्म्मस्वङ्गत्वं नीयमानः सङ्गवादिकालः स गौणः।

तदाहुः त्रिकाण्डमण्डनमिश्राः।

यस्यागामियागीयमुख्यकालादधस्तनः।
स्वकालादुत्तरो गौणः कालः पूर्व्वस्य कर्म्मणः ॥
यद्वागामिक्रियामुख्यः कालस्याप्यन्तरालवत्।
गौणकालत्वमिच्छन्ति केचित्प्राक्तनकर्म्मणि ॥ इति।

अस्यायमर्थः। पूर्व्वोत्तरयोः कर्म्मणोर्मध्ये पूर्व्वस्य कर्म्मणः स्वकालादुत्तरो यः कालः उत्तरकर्म्मकालावधिकः स पूर्व्वकर्म्मणो गौणकालः, अथवा आगामिक्रियाया उत्तरक्रियाया मुख्यकालस्तस्यापि प्राक्तनकर्म्मणि पूर्व्वकर्म्मणि केचिद्गौणकालत्वमिच्छन्ति। तत्र दृष्टान्तः अन्तरालवदिति। यथा

---

* तोयेन इति क्वचित्पाठः।

पूर्व्वोत्तरकर्म्मणोर्मध्यकालः पूर्व्वकर्म्मणि गौणः, तद्वदुत्तरकर्म्म-मुख्यकालोऽपि पूर्व्वकर्म्मणि गौण इत्यर्थः*। न तूत्तरकर्म्ममुख्य-कालः पूर्व्वकर्म्मानुष्ठाने† हि न स्वीकर्त्तुमुचितः तथाहि पूर्व्वं कर्म्म तावत्स्वकालात्प्रच्युतं विनष्टप्रायं, तदुत्तरकर्म्मकाले क्रियमाणं तस्मादुत्तरकर्म्मापसारयति‡। ततश्च स्वकाला-द्विच्युतं तदपि प्रनष्टरूपं भवति। तदपि उत्तरकर्म्मकाले§ यदि क्रियते तर्हि विनष्टसमाधानगतं प्रसज्येतेति¶ चेद्वाढमेवम्। उत्तरकर्म्मकाले पूर्व्वोत्तरयोः कर्म्मणोरवकाशे‖ सतीदमुच्यते। न पुनरसतीति** न दोषः। एवं स्थिते विचार्य्यते किमयं

---

* पूर्व्वकर्म्मणि स्वकालानुष्ठितपूर्व्वकर्म्मविषये एव उत्तरकर्म्ममुख्यकालस्य शास्त्रे गौणत्वमुक्तं न तु स्वकालातीतस्य कर्म्मणोऽनुष्ठानार्थं तदेवोपपादयति नतूत्तरेत्यादिना।

† पूर्व्वकर्म्मानुष्ठानार्थमुत्तरकर्म्ममुख्यकालः न तु गौण इत्यर्थः इत्यनुषङ्गेनान्वयः हि यतः स्वीकर्त्तुमुचितो न भवति।

‡ पूर्व्वकर्म्मानुष्ठानेनैव उत्तरकर्म्मणो मुख्यकालातिपातादेव तस्मात् स्वमुख्यकालात् उत्तरकर्म्म अपसारयति दूरीकरोति।

§ तदपि उत्तरकर्म्मकाले तदुत्तरक्रियमाणकर्म्मणोमुख्यकाले।

¶ यदि उत्तरोत्तरकाले पूर्व्वपूर्व्वकर्म्मणः करणं भवेत्, तदा कालातीतञ्च यत्कर्म्म अकृतं तद्विनिर्द्दिशेदिति शास्त्रेण विनष्टस्य असिद्धस्य बहुशः कर्म्मणः समाधानं सिद्धिः प्रसज्येत प्रसक्तं भवेदित्यर्थः।

‖ शास्त्रान्तरेण कालान्तरकर्त्तव्यत्वेन विधाने।

** असति शास्त्रान्तराभावे सति इत्यर्थः तथाच यस्य शास्त्रान्तरे कालान्तरमुक्तं तस्य दैवान्मुख्यकाले अकरणे गौणकाले करणं यस्य नास्ति शास्त्रान्तरं तस्य मुख्यकालाकरणे वाध एव न गौणकालकल्पनमिति समुदितार्थः।

गौणः कालः सर्व्वेषां नित्यनैमित्तिककाम्यकर्म्मणां मुख्यकाला-सम्भवे अङ्गमुत नेति तत्र ब्रूमः। काम्यवर्ज्यं नित्यनैमित्तिकानि सर्व्वाण्यपि मुख्यकालातिक्रमे गौणकाले कर्त्तव्यानीति। आवश्यकेषु नित्यनैमित्तिकेषु यथा शक्त्यात्तथा कुर्य्यादित्य-भिधानाद्विहिताङ्गाभावे तत्सदृशप्रतिनिधिग्रहणस्य न्याय्य-त्वान्मुख्यकालातिक्रमे गौणकालो ग्राह्यः।

तथाच मण्डनमिश्रः।

मुख्यकाले यदावश्यं कर्म्म कर्त्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशो भवेत्॥ इति।

ईदृशः मुख्यकालसदृशः।

अत्रापि विशेषस्तेनैवोक्तः।

गौणेष्वेतेषु कालेषु कर्म्म चोदितमाचरन्।
प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेदिति॥

निष्कृतिं प्रायश्चित्तम्।

तथा।

प्रायश्चित्तमकृत्वा वा गौणकालं समाचरेत्।

देशकालशक्त्यपेक्षया प्रायश्चित्तकरणमकरणं वेति व्यवस्था।

तथा स्मृत्यन्तरमपि।

यथा कथञ्चित्कर्त्तव्यं* नित्यकर्म्म विजानता।
न प्राप्तस्य विलोपोऽस्ति पैतृकस्य विशेषतः॥

---

* गौणकालेऽपि कर्त्तव्यम्।

तथा ।

दिवोदितानि कर्म्माणि प्रमादादकृतानि वै ।
यामिन्याः प्रहरं यावत्तावत्सर्व्वाणि कारयेत् ॥

श्राद्धे तु विशेषः ।

सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः । इति । सन्ध्यायां रात्रौ च श्राद्धं न कर्त्तव्यमित्यर्थः । एतदुक्तं भवति यदा शक्नुयात्तदा कुर्य्यात् । इत्युपबन्धात्* काम्येषु न गौणस्वीकारः नित्यनैमित्तिके तु यथा शक्नुयादित्युपबन्धाद्गौणपरिग्रह इति ।

तथाच पैठीनसिः ।

प्रधानसचिवान्यङ्गानि भवन्ति न भवन्ति वेति ।

काम्ये प्रधानसचिवत्वमितरत्रासचिवत्वम् । सचिवत्वं सहत्वम् । प्रधानमिवाङ्गान्यपि मुख्यान्येव न गौणानीत्यर्थः । यदि एवं तर्हि दर्शपौर्णमासपार्व्वणश्राद्धादीनाममावास्यादिविहितकालातिक्रमे तदनन्तरगौणकालकर्त्तव्यता प्रसज्येतेति चेत् । अस्तु नाम का नो हानिर्गौणकालस्वीकारवादिनां, एवं प्राप्ते सिद्धान्तोऽभिधीयते । काले हि कर्म्म विधीयते, न कर्म्मणि कालः,यत्स्वेच्छाविनियोगार्हं† तदुपादेयम् । यदुपादेयं तद्विधेयम् । कालस्तु स्वेच्छया कर्त्तुं न शक्यः‡ । अतएवानुपा-

* उपक्रमात् ।

† प्राप्तियोग्यम् ।

‡ द्रव्यवत्कार्त्तधीनत्वाभावादिति भावः ।

दैवपञ्चकमध्ये मीमांसकैः कालः परिगणितोऽतः कालोद्देशेन कर्म्म विधातव्यम्। तथाच कालो निमित्तं निमित्तभूतकालाभावेऽधिकाराभावात्कालान्तरे कृतमकृतमेवेति। गौणकालग्रहणं नोचितम्। विहितकालाभावे चाधिकाराभावः स ह्यफलाधिकरणे* प्रापणाच्च निमित्तस्येत्यस्मिन् सूत्रे प्रतिपादितः।

लोकाद्भिरपि गौणस्यापरिग्राह्यत्वमाह।

गणिताज्जायते कालः काले तिष्ठन्ति देवताः।
वरन्त्वेकाहुतिः काले नाकाले लक्षकोटयः॥

यत्तु मण्डनमिश्रैरभिहितम्।

गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशो भवेत्। इति।

तद्विवोदितानि कर्म्माणीत्यादिना यत्र गौणकालाभ्यनुज्ञानं वाचनिकं तद्विषयम्।

अतएव मण्डनमिश्राः।

मुख्यकाले हि मुख्यञ्चेत्साधनं नैव लभ्यते।
तत्कालद्रव्ययोः कस्य मुख्यत्वं गौणतापि वा॥
मुख्यकालमुपाश्रित्य गौण†मप्यस्तु साधनम्।
न मुख्यद्रव्यलाभेन‡ गौणकालप्रतीक्षणम्॥ इति।

---

* सहि अधिकाराभावोहि अफलाधिकरणं यस्मिन् कर्म्मणि कृते फलं नास्ति तत् अफलं अफलमधिकृत्य यत्र विचार्य्यते तदफलाधिकरणं तस्मिन्।

† प्रतिनिहितद्रव्यम्।

‡ लाभार्थम्।

यत्तु ।

यथाकथञ्चित्कर्त्तव्यं नित्यं कर्म्म विजानता । इति ।

तस्यायमभिप्रायः । स्वकालं प्राप्तस्य कर्म्मणो मुख्यद्रव्याभावेन विलोपो न कर्त्तव्यः । अपि तु मुख्यकाल एव मुख्यद्रव्याभावेऽपि प्रतिनिधिद्रव्येण कर्म्म निवर्त्तनीयमिति । अतो वचनमन्तरेण संवत्सरर्त्तुमासतिथ्यादिकालविशेषविहितानि कर्म्माणि स्वकालातिक्रमे कालान्तरे कर्त्तुं न युज्यन्ते अपि तु तदतिक्रमे प्रायश्चित्तमेव कुर्य्यात्, यच्च गौणकालानुष्ठानं दृश्यते तच्छिष्टगर्हापरिहरणाय स्वमनःपरितोषाय वेति । एवं सर्व्वमनवद्यम् ।

इति गौणमुख्यकालनिर्णयः ।

## अथ समाचारप्राप्तद्विरागमने शुभाशुभकालादिः ।

तत्र सुरेश्वरः ।

वैशाखे सुभगा प्रभूतधनिनी मार्गे च पुत्रान्विता
फाल्गुन्ये प्रियवल्लभा प्रियतमा नित्यं प्रिया पुत्रिणी ।
वन्ध्या निर्धनदुर्भगा विरहिणी सोद्वेगता नित्यशो
नूनं द्वेवसमापि दुःखमतुलं लेभेऽन्यमासे गता ॥
मार्गफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।
गुर्व्वादित्यविशुद्धौ स्यान्नित्यं पत्नीद्विरागमः ॥

बादरायणः ।

श्रीहारांशुधनोत्तरादितिगुरुत्वाष्ट्रानुराधाश्विनी

शक्रे भास्करवायुविष्णुवरुणब्राह्मे* प्रशस्ते तिथौ ।
कुम्भाजालिगते रवौ शुभकरे शशोदये† भार्गवे
जीवारास्फुजितां‡ दिने नववधूसद्मप्रवेशः शुभः ॥
भर्त्तुः शोभनगोचरे हिमकरे नास्तं गते भार्गवे
सूर्य्ये कीटघटाजगे शुभदिने पक्षे तु कृष्णेतरे ।
हित्वा दिक्प्रतिलोमगौ बुधसितौ लालाटगं§ दिक्पतिं
चानीता गुणशालिनी नववधूर्नित्योत्सवैर्नन्दति ॥
पूर्व्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणोत्तरे ।
पश्चादभ्युदिते चैव यायात्पूर्व्वोत्तरे दिशौ ॥

स्वभवनपुनःप्रवेशे देशानां विप्लवे तथोद्वाहे नववध्वा गृहागमने प्रतिशुक्रविचारणा नास्ति ।

इति द्विरागमनम् ।

---

* मृगशिरो धनिष्ठोत्तरात्रय पुनर्व्वसु पुष्या चित्रानुराधाश्विनी स्वाति श्रवणा शतभिषा रोहिणी नक्षत्रेषु ।

† बृहस्पति मङ्गल शुक्राणाम् ।

‡ जीवज्ञास्फुजितां दिने इत्येव पाठान्तरं साधु तथाच श्रीपतिसंहितायां वारेष्विज्ञसितेन्दुवित्सु शुभदे तारे प्रशस्ते विधौ कन्या मन्मथ मीन तौलि मृगभे स्यादङ्गनाद्यागमः ।

§ सम्मुखगम् ।

## अथाधिवेदनम् ।

तत्र मनुः ।

मद्यपासत्यवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिताप्यधिवेत्तव्या हिंस्रार्थघ्नी च सर्व्वदा ॥

मद्यपेति यज्जातीयाया यन्निषिद्धं मद्यं तत्पानकर्त्र्यभिधीयते । असत्यवृत्ता असाध्वाचारा प्रतिकूला भर्त्तुरनिष्टकारिणी हिंस्रा पुत्रदासादिताडनशीला अर्थघ्नी उपेक्षादिना अर्थविनाशकारिणी । अधिवेदनं भार्य्यान्तरपरिग्रहः ।

याज्ञवल्क्यः ।

सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥

धूर्त्ता वञ्चनप्रधाना स्त्रीप्रसूः स्त्रीमात्रजननी ।

अधिवेदनप्रतीक्षणे काला मनुनोक्ताः ।

वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

अधिवेत्तव्येति शेषः ।

देवलः ।

आकाङ्क्षेताष्टवर्षाणि भर्त्तातिप्रसवां स्त्रियम् ।
दश वन्ध्याञ्च निन्द्याञ्च द्वादश स्त्रीप्रसूयतीम् ॥
ततो विन्देत विधिना पुत्रार्थं धर्म्मतः स्त्रियम् ।
पुत्रलाभात्परं लोके नास्ति हि प्रसवा हि ते ॥

अतिप्रसवा प्रसवः पुष्पं रजः तद्योग्यकालमतिक्रान्ता । निन्द्या

ख्विन्नादियुक्ता। प्रसवाः फलानि ते पुत्राः।

एकामूढ्वा तु कामार्थमन्यां वोढुं य इच्छति।
समर्थस्तोषयित्वार्थैः पूर्व्वोढ़ामपरां वहेत्॥

अष्टदशकालप्रतीक्षा* विकल्पा वयःशक्त्यपेक्षया व्यवस्थिता बोद्धव्याः। समर्थस्तोषयित्वार्थैरित्यत्रार्थैरित्युपलक्षणम्। अत उपायान्तरेणापि सा परितोषणीया, येषु तु अधिवेदननिमित्तेषु न कालविशेषः श्रूयते तेषु यावता कालेन तद्दोषनिश्चयो भवति तावत्कालं प्रतीक्षेत।

याज्ञवल्क्यः।

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम्॥

आधिवेदनिकमधिवेदनप्रयोजनमलङ्करणादि यस्यै पूर्व्वं विवाहादिसमये स्त्रीधनमलङ्कारादि न दत्तं तस्यै समं दातव्यम्। पश्चादुह्यमानाया यावद्दीयते तावदित्यर्थः। दत्ते तु पूर्व्वमेवालङ्कारादिके दत्ते अर्द्धं, अत्रार्द्धशब्दोऽंशमात्रपरो न तु समांशपरः पूर्व्वस्यै दत्तमलङ्कारादिकं नवोढ़ालङ्काराग्न्यूनं चेद्यावता तत्साम्यं भवति तावद्दातव्यमित्यर्थः।

मनुः।

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्।

---

* वन्ध्याविषये मनुना अष्टाब्दप्रतीक्षणमुक्तं देवलेन दशाब्दप्रतीक्षणमुक्तं तद्विरोधपरिहाराय एतदुक्तं भवति।

सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ।

याज्ञवल्क्यः ।

अधिविन्ना तु भर्त्तव्या महदेनोऽन्यथा भवेत् ।
यत्रानुकूल्यं दम्पत्योस्त्रिवर्ग*स्तत्र वर्द्धते ॥

मनुः ।

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितः प्रतिलोमजः ।

अत्र विशेषमाह याज्ञवल्क्यः ।

हृताधिकारां मलिनीं पिण्डमात्रोप†जीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥

इत्यधिवेदनम् ।

## अथ स्त्रीधर्म्मः ।

तत्रादौ तासामवश्यरक्षणीयत्वं प्रदर्श्यते ।

तत्र मनुः ।

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥

---

* धर्म्मार्थकामाः ।

† ग्रासमात्रेण उपजीव्यते ।

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
अपत्यं धर्म्मकार्य्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनास्तथा स्वर्गः पितॄणामात्मनस्त्विह ॥
तस्माद्यत्नेन रक्षेत भर्त्तव्या मनुरब्रवीत् ॥
अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ॥
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रा रक्षन्ति वार्द्धक्ये न स्वातन्त्र्यं क्वचित्स्त्रियः ॥
सूक्ष्मेभ्योऽपि प्रमादेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥

भारते ।

पानं दुर्ज्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहे वासश्च स्त्रीणां वै दूषणानि षट् ॥
नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः* ।
सुरूपं वा कुरूपं वा पुमानित्येव भुञ्जते ॥
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ॥
शय्यासनमलङ्कारं कामं क्रोधमनार्ज्जवम् ।
द्रोहभावं कुकार्य्यञ्च स्त्रीभ्यो मनुरकल्पयत् ॥

---

* वयोनियमः अपेक्षणीयः इत्यर्थः ।

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा* ॥

## अथ रक्षोपायाः ।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्म्मेऽन्नपक्त्यां† च पारिणाह्यस्य‡ रक्षणे ॥

## अथ स्त्रीकर्त्तव्यधर्म्माः ।

तत्र मनुः ।

बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्य्यं गृहेष्वपि ॥
पित्रा भर्त्रा सुतेनापि नेच्छेद्विरहमात्मनः ।
एतेषां विरहेण स्त्री गर्हिता स्यात्कुलद्वये ॥
सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥

---

* नदी ।

† अन्नपाके ।

‡ आदर्शप्रभृति द्रव्यस्य ।

याज्ञवल्क्यः।

संयतोपस्करा* दक्षा हृष्टा व्ययपराङ्मुखी।
कुर्य्यात्श्वशुरयोः पादवन्दनं भर्त्तृतत्परा॥
स्त्रीभिर्भर्त्तृवचः कार्य्यमेष धर्म्मः परः स्त्रियः।
आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः॥

मनुः।

विशीलः कामवृत्तो वा गुणैर्वा परिवर्ज्जितः।
उपचर्य्यः† स्त्रिया साध्व्या सततं देववत्पतिः॥
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्।
पतिः संसेव्यते येन‡ तेन स्वर्गे महीयते॥
पत्यौ जीवति या स्त्री स्यादुपोष्य व्रतचारिणी।
आयुष्यं हरते भर्त्तुर्नरकं चाधिगच्छति॥
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य च।
पतिलोकमभीप्सन्ती नाचरेत्किञ्चिदप्रियम्॥
मृते जीवति पत्यौ च या नान्यमुपगच्छति।
सेह कीर्त्तिमवाप्नोति मोदते चोमया सह॥

स्कान्दे।

प्रसुप्तन्तु सुखासीनं रममाणं यदृच्छया।
आतुरेष्वपि कार्य्येषु§ पतिं नोत्थापयेत्¶ क्वचित्॥
स्त्रीधर्म्मिणी त्रिरात्रन्तु स्वमुखं नैव दर्शयेत्।

---

* पाकोपकरणद्रव्यसंग्रहे। † सेव्यः। ‡ हेत्वर्थे तृतीया। § पीड़ाजनकेषु कार्य्येषु सत्स्वपि। ¶ आक्रोशं न कुर्य्यात्।

स्वं वाक्यं श्रावयेन्नापि यावत्स्नाता* न शुध्यति ।
सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्यचित् ।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा ।
कूर्पासकञ्च† ताम्बूलं मङ्गल्याभरणं शुभम् ॥
केशसंस्कारकबरीकरकर्णविभूषणम् ।
भर्तुरायुष्यमिच्छन्ती दूषयेन्न‡ कचित्सती ॥
न रजक्या न कामुक्या§ तथा श्रमणयापि¶ च ।
न च दुर्भगया वापि सखित्वं कुरुते तु सा ॥
भर्तृविद्वेषिणीं नारीं न सम्भाषेत कर्हिचित् ॥
नैकाकिनी कचिद्भूयान्नानग्ना स्नाति वै कचित् ।
नोदूखले न मूषले न वर्द्धन्यां‖ दृषद्यपि** ।
न यन्त्रे न देहल्यां†† न स्त्री चोपविशेत्कचित् ।
उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधतत्परा ।
सा शुनी जायते ग्रामे शृगाली विजने वने ॥
अपराधो न वक्तव्यः कलहं दूरतस्त्यजेत् ।
गुरूणां सन्निधौ क्वापि नो ब्रूयाच्च न वा हसेत् ॥
ताडिता ताडितुं चेच्छेत्सा व्याघ्री वृषदंशिका‡‡ ।
कटाक्षैर्वीक्षते या तु भर्तारं कुपिता हठात् ।

* ऋतुस्नाता । † कञ्चुलिकां काँचुलि इति यस्य प्रसिद्धिः । ‡ त्यजेत् । § काक-क्येति पाठान्तरम् । ¶ भिक्षुकया । ‖ वाडुनीति प्रसिद्धिः । ** प्रस्तरे । †† द्वाराधोभागे । ‡‡ विडाली ।

केकराची* तु सा नूनं भवेद्वै नात्र संशयः ॥
भर्त्तारं या समुत्सृज्य मिष्टमश्नाति केवलम् ।
ग्रामे वा शूकरी वा स्याद्गर्दभी वा स्वविड्भुजा ॥

याज्ञवल्क्यः ।

पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥

शङ्खः ।

नानुक्ता गृहान्निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेत् न परपुरुषं भाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेत् । आगुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्य्यान्न हसेदनपावृतं न भर्त्तारं तद्बन्धून्वा द्विष्यान्न गणिका†धूर्त्ताभिचारिणी‡प्रव्रजिताप्रेक्षणिका§मायामूलकुहककारुकारिका¶दुःशीलादिभिः सहैकत्र तिष्ठेत्संसर्गे चारित्रं दुष्यतीति ।

अयञ्च सकलस्त्रीधर्म्मो विवाहादूर्द्धं वेदितव्यः ।

## अथ पतिव्रताविशेषधर्म्माः ।

तत्र मनुः ।

कन्यां विवाहसमये वाचयेयुरिति द्विजाः ।

---

* वक्राची । † वेश्या । ‡ हिंसाकारिणी । § नृत्यगीतदर्शनकारिका । ¶ मायामूलकुहककारूणां प्रत्येकं कारिकेत्यनेनान्वयस्तेन मूलकारिका धनवृद्धिकारिका ।

भर्त्तुः सहचरी भूयाज्जीवतोऽजीवतोऽपि वा ॥
भर्त्ता देवो गुरुर्भर्त्ता धर्म्मतीर्थव्रतानि च ।
तस्मात्सर्व्वं परित्यज्य पतिमेकं समर्च्चयेत् ॥
भुङ्क्ते भुक्ते पतौ या तु ह्यासीना चापि वासिते ।
विनिद्रिते विनिद्राति प्रथमं परिबुध्यते ॥
अनलङ्कृतमात्मानं पत्युर्नो दर्शयेत्क्वचित् ।
कार्य्यार्थे प्रोषिते पत्यौ सर्व्वमङ्गलवर्ज्जिता ॥
न च तन्नाम गृह्णीयात्तस्यायुष्यं विवर्द्धयेत् ।
पुरुषान्तरनामापि न गृह्णीयात्कदाचन ॥
आक्रुष्टापि न चाक्रोशेत्ताड़ितापि प्रसीदति ।
इदं कुरु कृतं स्वामिन्मन्यतामिति च क्वचित् ॥
आहूता गृहकार्य्याणि त्यक्त्वा गच्छति सत्वरम् ।
पूजोपकरणं सर्व्वमनुक्त्वा साधयेत्स्वयम् ॥
नियमोदकबर्हींषि पत्रपुष्पादिकञ्च यत् ।
सा च ते भर्त्तुरुच्छिष्टं मिष्टमन्नफलादिकम् ॥
महाप्रसादमित्युक्त्वा पतिदत्तं प्रतीच्छति ।

हारीतः ।

मातृकं पैतृकञ्चैव यत्र चैव प्रदीयते ।
कुलत्रयं पुनात्येषा भर्त्तारं यानुगच्छति ॥

अयञ्च सर्व्वासां स्त्रीणां पतिव्रतानामगर्भिणीनामबालापत्याना-माचाण्डालं साधारणो धर्म्मः । अपतिव्रतादीनामधिकारात् । ननु च अपतिव्रतादीनामप्यधिकारोऽनुगमने श्रूयते ।

तथाच महाभारते ।

अवमन्य च या पूर्व्वं पतिं दुष्टेन चेतसा ।
वर्त्तते या च सततं भर्त्तॄणां प्रतिकूलतः ॥
भर्त्रा*नुमरणं काले याः कुर्व्वन्ति यथाविधि ।
कामात्क्रोधाद्भयान्मोहात्सर्व्वाः पूताः भवन्त्युत ॥
आदिप्रभृति† या साध्वी पत्युः प्रियपरायणा ।
ऊर्द्ध्वं गच्छति सा तत्र भर्त्रानुमरणं गता ॥ इति ।

नैतत्सारं‡ उतशब्दश्रवणात्सर्व्वाः पूता भवन्त्युतेति पत्यवमानकर्त्र्यादीनामपि पापक्षयोऽस्ति किमुतादिप्रभृति या साध्वी तस्याः पापक्षयः परलोकश्च विद्यत इति । साध्व्या उत्तमलोकप्राप्तिविधायकवाक्यशेषत्वेन तच्छ्रावकत्वेनापि चरितार्थत्वात् । साधारणार्थत्वञ्च भर्त्तारं यानुगच्छतीत्यविशेषोपादानादेव गम्यते । यानि च ब्राह्मण्यनुगमननिषेधपराणि पैठीनस्यङ्गिरःप्रभृतीनां वाक्यानि ।

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ॥
या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ॥

इत्येवमादीनि तानि पृथक्चितिविषयाणि ।

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ॥
अन्यासाञ्चैव नारीणां स्त्रीधर्म्मोऽयं परः स्मृतः ।

---

* भर्त्रेति गम्यमानसहार्थे तृतीया । † प्रथमावधि । ‡ श्रेष्ठकल्पः ।

इत्युशनसो विशेषस्मरणात्। इत्यन्वारोहस्य स्वर्गादिफलयुक्तत्वेन काम्यत्वात्।

अतएव विकल्पमाह विष्णुः।

मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणञ्चेति।

देशान्तरमृते पत्नी ब्राह्मण्यास्तद्दस्थिभिः सहानुगमनं भवत्येव। इतरासान्तु अस्थ्यभावेऽपि पतिपादुकादिकचिह्नं किमपि गृहीत्वा चिह्नाभावेऽपि भवति। पृथक्चित्यनुज्ञानान्नु च पतिव्रताया इदमनुगमनं नित्यमेव।

तथाच हारीतः।

आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्नी सा स्त्री ज्ञेया पतिव्रता* ॥

अतो मृते या म्रियेत पतिव्रतेत्यनेन नित्यत्वं द्योत्यते। अतः अनित्यत्ववर्णनमयुक्तमिति चेन्नैवम्।

मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता।
स्वर्गं गच्छेदपुत्रापि यथा ते ब्रह्मचारिणः॥ इति।

मनुना पतिव्रताया अननुगमनस्याभिहितत्वात्। अत्र साध्वीत्यनेन पतिव्रताभिधीयते। अन्यथा ब्रह्मचर्य्ये व्यवस्थितेत्यनेन पौनरुक्त्यप्रसक्तेः†। तथा महाभारते भगवान्व्यासः।

---

* साध्वी ज्ञेया पतिव्रतेति देशान्तरीयः पाठः। † पौनरुक्तिप्रसक्तेरित्यव पाठः साधुः। तथाच यदि पतिव्रतात्वं मरणनियतं तदतिरिक्तस्थले साध्वीत्वं तदा ब्रह्मचर्य्ये व्यवस्थिता इत्यनेनैव साध्वीत्वप्राप्तौ साध्वी इत्यस्य पुनरुक्तं स्यात् अतोऽपुनरुक्ताय साध्वीत्यनेन पतिव्रतात्वमेव मनुना विधीयते इत्यवश्यं वाच्यम्।

पतिव्रतायाः सत्या अग्निप्रवेशं दर्शयति न चाग्निप्रवेशेन पतिव्रतात्वम्।

पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम्।
तत्र चित्राङ्गदधरं भर्त्तारं सानुपश्यति॥ इति।

न च तस्मादुहनपुरुषायुषः स्वकामी प्रेयादिति श्रुतिविरोधः विषयभेदात्। श्रुतिर्हि सामान्येन शास्त्राविहितं स्वेच्छामरणं निषेधति। स्मृतिस्तु भर्त्तरि मृते ज्वलनप्रवेशविशेषेण मरणविशेषं विधत्ते। अतो विषयभेदान्न विरोधः। यथा न* हिंस्यात् सर्व्वभूतानि सामान्यशास्त्रमग्निषोमीयं पशुमालभेतेति विशेषशास्त्रविषयमुत्सृज्य प्रवर्त्तते तद्वदत्रापि इति न कश्चिद्विरोधः। ननु

ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः।
पुनात्यविधवा† नारी तमादाय म्रियेत या॥

इत्येवमादि हारीतादिवाक्यानि ब्रह्महत्यादिदोषनिवृत्तिमनुगमनेनाभिदधति। एतदनुपपन्नं शास्त्रफलं‡ प्रयोक्तृविलक्षणत्वादिति न्यायेनापूर्व्वफलयोः कर्त्तृसमवेतत्वात्। पतिगतदुरितापूर्व्वस्य पत्नीगतानुगमनेनानिवृत्तिः। निवृत्त्यभ्युपगमे तु कार्य्यकारणयोः सामानाधिकरण्यं शास्त्रसिद्धं

---

* मा हिंस्यात्सर्व्वा भूतानीति पाठान्तरम्। † पुनाति विधवा नारीत्येव पाठः साधुः। ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि यो नरः। तं वै पुनाति सा नारी इत्यङ्गिरसभाषितमिति देशान्तरीयपाठः। ‡ शास्त्रफलं शास्त्रोक्तकर्म्मजन्यफलम्। प्रयोक्तृविलक्षणत्वात् अनुष्ठातृनियतत्वात्।

व्याहन्येतेति चेत् बाढ़म्। ब्रह्मघ्नो वेत्यादीनि वाक्यानि अनुगमनविधिशेषत्वेनार्थवादादनुगमनस्य प्राशस्त्यं वर्णयन्ति। अतो न स्वार्थे प्रमाणानि युक्तमेवार्थवादत्वम्। ब्रह्महननादिदोषदुष्टस्य पतितत्वेनासौ संस्कारमेव तावन्नार्हति दूरेऽनुगमनमतः प्राशस्त्यपराणीति न कदाचिदनुपपत्तिः। एवं वा द्विविधं कर्म्म प्रारब्धमप्रारब्धञ्चेति। तत्र प्रारब्धकर्म्मणां भोगादेव क्षयात्प्रारब्धमपि अनुगमनरूपप्रतिबन्धकेन प्रतिबद्धम्। विद्यमानमप्यविद्यमानमिव सदुदास्ते। तथाचानुगमनस्वर्गादिकमनुभूय पश्चात्प्रारब्धशेषमुपभुङ्क्ते। अप्रारब्धकर्म्म द्विविधं फलदानोन्मुखमनुन्मुखञ्च यदुन्मुखं प्रारब्धं* कर्म्म तदनुगमनेनापनुद्यते प्रायश्चित्तेनेव, अन्यथा पतिपत्न्योः स्वर्गसाधनत्वेनोपदिश्यमानानुगमनेन साध्व्याः स्वर्गानुपपत्तेः। पुनात्यविधवा† नारी तमादाय म्रियेत वेत्यत्र च पुनात्येतदप्यनुपपद्यते। यत्तु‡ दानायोन्मुखमप्रारब्धं कर्म्म तस्यनिवृत्तिरनुगमने भवतीत्येतदेव मनसि कृत्वा व्यासोऽप्याह।

यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः।
सम्प्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः।
तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्म्मभिः॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्।

---

* यदुन्मुखं प्रारब्धमिति लिपिकरप्रमाद एव अप्रारब्धमित्येव साधुः अप्रारब्धं द्विविधमित्युक्त्वा विहितत्वात्। † पुनाति विधवा इत्येव साधु। ‡ यत्त्व इत्येव साधु यदुन्मुखमित्यस्य उक्तत्वात् पुनरुक्तापत्तेः।

तद्भर्त्तारमादाय दिवं याति च सा बलात्॥ इति। फलदानोन्मुखप्रारब्धं* कर्म्मानुगमनसाध्यस्वर्गोपभोगानन्तरं उपभुज्यते इति न विरोधः†। ननु फलदानोन्मुखप्रारब्धं प्रायश्चित्तस्थानीयेनानुगमनेन यथा विनश्यति तथा फलदानानुन्मुखमपि‡ तेन वापगच्छतु विशेषाभावादिति चेन्न। पुनातीत्युक्त्या पापनिवृत्तिः कल्प्यते§ कल्पना चानुपपत्तिवशात्, सा चानुपपत्तिः यावति कल्पिते शाम्यति तावत्कल्पनीयं¶, तथापि‖ फलोन्मुखप्रारब्धकर्म्मनिवृत्त्यापि पुनातीत्यस्य चरितार्थत्वान्न सकलपापनिवृत्तिः** परिकल्पनीया तु†† उक्तकर्म्मणनिष्ठेनानुमानेन‡‡ निवृत्त्यापि पुनातीत्यस्यान्यगतदुरितनिवृत्ति§§रयुक्तेति¶¶ तदपेशलम्‖‖। पतिपत्न्योः सहकर्त्तृत्वे-

---

* भोगमात्रनाश्यप्रारब्धं नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति स्मरणात्।
† सहमरणजन्यस्वर्गभोगानन्तरं प्रारब्धकर्म्मजन्यफलभोगारम्भेण नाभुक्तं क्षीयत इत्यनेन न विरोधः। ‡ पुनाति विधवा नारी तमादाय म्रियेत या इत्यनेनेति शेषः। § फलदानोन्मुखप्रारब्धकर्म्मजन्यपापफलनिवृत्तिः कल्प्यत इत्यर्थः। अन्यथा फलदानोन्मुखप्रारब्धकर्म्मणा सहमरणाद्यनन्तरमपि निन्दितफले नरकादौ जाते सहमरणादिजन्यपतिपूतत्वादिबाधापत्तेः। ¶ यत्पापफलप्रतिबन्ध्या सहमरणादिजन्यपूतत्वादिबाधकत्पापफलानुत्पत्तिः कल्पनीया इत्यर्थः। ‖ तथाच इत्यर्थः, पुस्तकान्तरेऽपि एवंविध एव पाठो दृश्यते। ** सहमरणादिजन्यफलाविरोधिफलदानानुन्मुखप्रारब्धकर्म्मजन्यकालान्तरभाविपापफलनिवृत्तिर्न परिकल्पनीया इत्यन्वयः। †† तु किन्तु, उक्तकर्म्मणि सहमरणादिकर्म्मणि इत्यर्थः। ‡‡ अनुमानेनेति सहमरणादिना पूर्व्वसञ्चितफलदानोन्मुखप्रारब्धकर्म्मजन्यपापफलनिवृत्तिः कल्पनीया सहमरणादिजन्यपतिपूतत्वादिरूपफलबाधादित्येवंरूपमनुमानम्। §§ पत्नीगतदुरितफलनिवृत्तिरित्यर्थः। ¶¶ नारी पुनातीत्यनेन नार्य्याः कर्त्तृत्वश्रुतेः पतिगतदुरितफलनिवृत्तेर्युक्तत्वान्न पत्नीगतदुरितफलनिवृत्तिः। ‖‖ असुन्दरम्।

ना*ग्निहोत्रादिसाध्यस्वर्गादिवदुपपत्तेः† । इदञ्च दुरितं जन्मान्तरकृतमेव निवर्त्त्यम् । एतज्जन्मकृतदुरितयुक्तस्य पतितत्वेन तेन‡ सहानुगमनानधिकारात् । वैधव्यपालनेऽपि स्वर्गादिफलविशेषः स्मृत्यन्तरे स्मर्य्यते ।

पत्यौ मृतेऽपि या योषिद्वैधव्यं पालयेत्क्वचित् ।
सा पुनः प्राप्य भर्त्तारं स्वर्गालोकान् समश्नुते ॥
विधवा कवरीबन्धा§ भर्तृबन्धाय जायते ।
शिरसो वपनं तस्मात्कार्य्यं विधवया सदा ॥
एकाहारः सदा कार्य्यो न द्वितीयः कदाचन ।
त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा ॥
मासोपवासं वा कुर्य्याच्चान्द्रायणमथापि वा ।
कृच्छ्रं पराकं वा कुर्य्यात्तप्तकृच्छ्रमथापि वा ॥
यवान्नेन फलाहारैः शाकाहारैः पयोव्रतैः ।
प्राणयात्रां प्रकुर्व्वीत यावत्प्राणः स्वयं व्रजेत् ॥
पर्य्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ।
तस्माद्भूशयनङ्कार्य्यं पतिसौख्यं समीहिता ॥
नैवाङ्गोद्वर्त्तनं कार्य्यं स्त्रिया विधवया क्वचित् ।
गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः ॥
तर्पणं प्रत्यहङ्कार्य्यं भर्त्तुः कुशतिलोदकैः ।

तर्पणं पुत्त्रपौत्त्राभावविषयम् ।

---

* सपत्नीको धर्म्ममाचरेदिति स्मरणात् । † पुरुषानुष्ठिताग्निहोत्रकर्म्मजन्यादृष्टेन पत्न्या अपि स्वर्गोपपत्तिः तद्वत् । ‡ पतितेन पत्या । § कवरीबन्ध इति पाठान्तरम् ।

विष्णोस्तु पूजनङ्कार्य्यं पतिबुद्ध्या न चान्यथा ।
पतिमेव सदा ध्यायेद्विष्णुरूपधरं परम् ॥
यद्यदिष्टतमं लोके यद्यत्पत्युः समीहितम् ।
तत्तद्गुणवते देयं पतिप्रीणनकाम्यया ॥
वैशाखे कार्त्तिके माघे विशेषनियमञ्चरेत् ।
स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः ॥
एवंविधैश्च विधिवद्विधिस्थैर्नियमैर्व्रतैः ।
वैशाखान्कार्त्तिकान्माघानेवमेवातिवाहयेत् ॥
नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ।
कञ्चूकञ्च* परीदध्याद्वासो न विकृतं† वसेत् ॥
अदृष्ट्वा च‡ तासु न किञ्चित्§ न कुर्य्याद्भर्त्तृतत्परा ।
एवंधर्म्मसमायुक्ता विधवापि पतिव्रता ।
पतिलोकानवाप्नोति न भवेत्क्वापि दुःखिता ॥ इति ।
इति मदनपारिजाते मदनक्षितिपालनदानजलरूढ़े ।
स्तवको द्वितीय आसीदामोदाकृष्टपण्डितभ्रमरः ॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परा॥ शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमिया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः‖ ॥

इति पण्डितपारिजातकटीरमल्लेत्यादिविरुदराजीविराजमानस्य
श्रीमदनपालस्य निबन्धे पारिजाताभिधेये द्वितीयः स्तवकः ।

---

* काँचुलीति प्रसिद्धिः । † रञ्जितम् । ‡ अदृष्ट्वापि । § अप्रियमिति शेषः ।
॥ परमिति पाठान्तरम् । ‖ टीकार्थस्तु—येषां प्रधानपुरुषाणां शास्त्रे शास्त्रश्रवणे मतिः

# तृतीयः स्तवकः ।

अथ गृहस्थस्तवकानन्तरं गृहस्थोपयोगित्वादाह्निकमारभ्यते ।

तत्र विष्णुः ।

गृहमेधिनि यत्प्रोक्तं स्वर्गसाधनमुत्तमम् ।
ब्राह्मे मुहूर्त्ते चोत्थाय तत्सर्व्वं सम्यगाचरेत् ॥

मनुरपि ।

ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥

विष्णुपुराणे* ।

मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम् ॥

मैत्रञ्च मित्रदैवत्यं मूत्रपुरीषोत्सर्गः । प्रसाधनं केशानाम्, अञ्जनं

---

बुद्धिः प्रकृत्या स्वभावेन रमणीया, व्यवहृतिः स्वभावः परा श्रेष्ठा श्लाघ्यं शीलं शीलता च प्रशंसनीयं ते प्रधानपुरुषाः जगति जगन्मध्ये ऋजवः सारल्ययुक्ताः कतिपये कियन्तः। व्यासारण्यप्रवरमुनिशिष्यस्येति उपाधिविशिष्टगुरोः शिष्यस्य ग्रन्थरचयितुरियं भणितिः उक्तिः तेषां प्रधानपुरुषाणां मुकुरतलभूते निर्मले चित्ते मनसि चिरं स्थितिं इयात् स्थानमाप्नुयात् ।

---

* एतद्वचनं मनोरिति कृत्वा ग्रन्थकारैर्लिखितं मनुसंहितायाश्चतुर्थाध्याये वचनं लभ्यते च ।

सौवीराद्यञ्जनम्। ब्राह्ममुहूर्त्तलक्षणं ब्रह्मचारिप्रकरणेऽभिहितम्।

विष्णुः।

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम्।
मरणव्याधिशोकानां किमद्य निपतिष्यति* ॥

इति सञ्चिन्त्येष्टदेवतां स्मरेत्।

शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम्।
कीर्त्तनात्तस्य पापानि नाशमायान्ति शेषतः ॥

स्कन्दपुराणे।

अविमुक्तचरणयुगलं दक्षिणमूर्त्तेश्च कुक्कुटचतुष्कम्।
स्मरणमपि वाराणस्याः निहन्ति दुःस्वप्नमपशकुनम्† ॥

कात्यायनः।

रोचनां चन्दनं गन्धं मृदङ्गं दर्पणं मणिम्।
गुरुमग्निं रविम्पश्येन्नमस्येत्प्रातरेव हि ॥
श्रोत्रियं सुभगामग्निं गां मृगं‡ धार्म्मिकं महीम्§।
प्रातरुत्थाय यः पश्येत्स आपद्भ्यः प्रमुच्यते ॥

---

* मरणव्याधिशोकानां महद्भयं किमद्य उपस्थितं निपतिष्यति भविष्यति इति उत्थाय उत्थाय प्रबुध्य प्रबुध्य बोद्धव्यं चिन्तनीयम्। † अविमुक्तचरणयुगलमविमुक्तेश्वरचरणयुगलं, दक्षिणमूर्त्तेः शिवमूर्त्तिविशेषस्य स्मरणं कुक्कुटचतुष्कं कुक्कुटनामद्विजचतुष्कं वाराणस्याः स्मरणमपि अपशकुनं अनिष्टसूचकं दुःस्वप्नं निहन्ति। तथाच— वाराणस्युत्तरे तीरे कुक्कुटो नाम वै द्विजः। तस्य स्मरणमात्रेण दुःस्वप्नस्य विनश्यति इति काशीखण्डम्। ‡ नृपमिति पाठान्तरम्। § नदीमिति पाठान्तरम्।

मूत्रपुरीषोत्सर्गादिविधिस्तु ब्रह्मचारिप्रकरणेऽभिहितः ।

## अथ दन्तधावनम् ।

विष्णुः ।

कण्टकीक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम् ।
कनिष्ठिकाग्रवत्स्थूलं कूर्चाग्र*मग्रपर्व्वकम्† ॥

दन्तकाष्ठाग्रं भक्षयित्वा प्रशिथिलावयवं कर्त्तव्यमित्यर्थः । यद्यर्थिकृतकूर्चकमित्यपि पाठः । यदि दन्तकाष्ठं पर्व्वयुक्तम्भवति तदा पर्व्वद्वयमध्यभागं छित्वा तत्र कूर्चकम् प्रशिथिलावयवं कर्त्तव्यमिति तात्पर्य्यम् । दन्तधावनं चाग्रेण कर्त्तव्यम् । तथाच कूर्म्मपुराणे ।

मध्याङ्गुलसमस्थौल्यं द्वादशाङ्गुलसम्मितम् ।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण तु धावयेत् ॥

मनुः ।

तिक्तं कटुकषायं वा सुगन्धं कण्टकान्वितम् ।
क्षीरवृक्षात्तथा गुल्माद्भक्षयेद्दन्तधावनम् ॥

कात्यायनः ।

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥

मन्त्रमाह विष्णुः ।

---

* दलिताग्रम् । † पर्व्वाग्रम् । विष्णुसंहितायान्तु—कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् । प्रातर्भूत्वा च यतवाक् भक्षयेद्दन्तधावनमित्येवं पाठो दृश्यते ।

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि वनस्पते॥ इति।

गर्गः।

दशाङ्गुलन्तु विप्राणां क्षत्रियाणां नवाङ्गुलम्।
अष्टाङ्गुलन्तु वैश्यानामितरेषां षड़ङ्गुलम्॥
चतुरङ्गुलमानन्तु नारीणां नात्र संशयः।

विष्णुः।

द्वादशाङ्गुलकं विप्रे काष्ठमाहुर्मनीषिणः।
क्षत्रविट्शूद्रजातीनां नवषट्चतुरङ्गुलम्॥

एवं विकल्पः परिमाणे, तथान्योऽपि विशेषस्तेनोक्तः।

कनिष्ठिकाग्रवत्स्थूलं पर्व्वार्द्धकृतकूर्च्चकम्।
दन्तधावनमुद्दिष्टमित्युक्ता
सुसूक्ष्मं हीनदन्तस्य समदन्तस्य मध्यमम्।
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम्॥

गर्गः।

प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च।
दक्षिणेन तथा कष्टं पश्चिमेन पराजयः॥
उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च।

मार्कण्डेयः।

उदङ्मुखः प्राङ्मुखो वा कषायं तिक्तकण्टकम्। इति।

उदङ्मुखः प्रागुदङ्मुख* इत्यर्थः। अन्यथा गर्गवचनविरोधात्।

* ईशानकोणाभिमुख इति यावत्।

अनेनैवाभिप्रायेणैव कात्यायनः।

पूर्व्वोत्तरे तु दिग्भागे सर्व्वान् कामानवाप्नुयात्। इति।

महाभारते दन्तधावनप्रकरणे।

प्रक्षाल्य हस्तौ पादौ च प्राङ्मुखः सुसमाहितः।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः॥

मनुः।

प्रक्षाल्येदं शुचौ देशे दन्तधावनमुत्सृजेत्।
पतितेऽभिमुखे सम्यक् भोज्यमाप्नोत्यसंशयः॥

यमः।

आम्रपलाशबिल्वानामपामार्गशिरीषयोः।
भक्षयेत्प्रातरुत्थाय वाग्यतो दन्तधावनम्॥

पौलस्त्यः।

आम्रातक*पलाशाम्रबिल्वापामार्गक्षीरिणाम्।
भक्षयेद्दन्तधवनं दन्तमांसान्यबाधयन्॥ इति।

मार्कण्डेयोऽपि।

प्रातर्भूत्वा च यतवाक् भक्षयेद्दन्तधावनम्।
प्रक्षाल्य भक्षयेत्पूर्व्वं प्रक्षाल्यैवञ्च सन्त्यजेत्॥

नारदः।

खादिरश्च करञ्जश्च करवीरकदम्बयोः।
सर्व्वकण्टकिनः पुण्याः क्षीरिणो ये च शाखिनः॥

---

* आमड़ा इति प्रसिद्धिः।

जम्बूनिम्बकचूताश्च कदम्बो लोध्रचम्पकाः ।
बदरीतिन्दुका* श्चैके† प्रशस्ता दन्तधावने ॥
कोविदारः करञ्जश्च कुटजः स्नुग्नमालती ।
शालोऽर्कश्च प्रियङ्गुश्च तमालः शाक एव च ॥

शाकः शाकवृक्षः, शाकवन इति लोके प्रसिद्धः ।

आम्रातकोऽरिमेदश्च प्रशस्ता वापि ये द्रुमाः ।
वर्ज्यास्तु शाल्मलीपीलुभव्यकिंशुकतिन्दुकाः ॥
अरिष्टोक्षः‡ पारिभद्रो गुग्गुलुस्तिन्तिड़ी तथा ।
आसने शयने याने पादुके दन्तधावने ॥
पलाशाश्वत्थको वृक्षौ सर्व्वकर्म्मसु कुत्सितौ ।
अभावे दन्तकाष्ठानां निषिद्धायां तिथौ तथा ॥
अपां द्वादशगण्डूषैः पत्रैर्वा दन्तधावनम् ।
चतुर्द्दश्यष्टमीदर्शपूर्णिमासंक्रमेषु च ॥
नन्दासु च नवम्याञ्च दन्तकाष्ठं विवर्ज्जयेत् ।
श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्त्तृका ॥

विष्णुः ।

प्रतिपद्दर्शषष्ठी च चतुर्द्दश्यष्टमीषु च ।
नवम्यां भानुवारे च दन्तकाष्ठञ्च वर्ज्जयेत् ॥

मरीचिः ।

नाद्यादजीर्णवमथुकाशश्वासज्वरार्द्दितः ।

---

* गाव यस्य प्रसिद्धिः । † एते इति पाठान्तरम् । ‡ अरिष्टो निम्बवृक्षः, अक्षः विभीतकवृक्षः वयड़ा इति प्रसिद्धः ।

त्वगास्यपादहृन्नेत्रशिरःकर्णामयी* तथा ॥

वृद्धयाज्ञवल्क्यः ।

इष्टकालोष्टपाषाणैर्नखैरङ्गुलिभिस्तथा ।
मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम् ॥

वराहपुराणे ।

अज्ञातपूर्व्वाणि च दन्तकाष्ठा-
न्याद्यान्न पत्रैश्च समन्वितानि ।
न युग्मवर्णानि† न पाटितानि
न चोर्द्ध्वशुष्काणि विना त्वचा वा ॥

व्यासः ।

यो मोहात्स्नानवेलायां भक्षयेद्दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥

एतच्च मध्याह्नस्नानविषयम् ।

तथाच यमः ।

मध्याह्नस्नानवेलायां भक्षयेद्दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥

इति दन्तधावनम् ।

---

* त्वगा त्वगातुरः आस्यामयी मुखरोगी पादामयी हृदयामयी नेत्रामयी शिरआमयी कर्णामयी । † वर्णद्वयविशिष्टानि ।

## अथ केशप्रसाधनादिमाङ्गल्यविधिः ।

तत्र विष्णुपुराणे ।

स्नातकश्च ततः पश्येद्दीर्घायुश्चिरजीविनम् ।
प्रातःस्नानं ततः कुर्य्यात्संक्षेपेण यथोदितम्* ॥
सन्ध्याञ्चापि ततः कुर्य्यात् । इति प्रातःसन्ध्यानन्तरम् ।

याज्ञवल्क्यः ।

हुत्वाग्नीन् सूर्य्यदैवत्याञ्जपेन्मन्त्रान् समाहितः ।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥

प्रातःसन्ध्यावन्दनानन्तरमग्नीनावहनीयादीनौपासनाग्निं वा विधिवत् हुत्वा सूर्य्यदैवत्यानुदुत्यं जातवेदसमित्यादिकान् जपेत् । प्रातःसन्ध्यादिकं ब्रह्मचारिस्तवके प्रपञ्चितम् ।

नरसिंहपुराणे ।

दिवसस्याद्यभागे तु सर्व्वमेतत्समाचरेत् ।

दिवसस्याद्यभागे पूर्व्वाह्णस्याद्यभागे ।

दक्षः ।

द्वितीये च तथा भागे वेदाभ्यासो विधीयते ।
वेदस्वीकरणम्पूर्व्वं विचारोऽध्ययनं† जपः ॥
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।
समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥

उपादानस्येति विशेषः, द्वितीयभागे पूर्व्वाह्णस्य द्वितीयभागे ।

---

* यथोचितमिति पाठान्तरम् । † अभ्यसनमिति पाठान्तरम् ।

## अथ पोष्यवर्गचिन्तादि ।

तत्र दक्षः ।

तृतीये च तथा भागे पोष्यवर्गस्य पोषणम् * ।

तृतीयो भागः पूर्व्वाह्णस्यैव ।

पोष्यवर्गस्तु ।

माता गुरुः पिता भार्य्या प्रजा दीनः समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः † पोष्यवर्ग उदाहृतः ॥

याज्ञवल्क्यः ।

उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये ।

ईश्वरमभिषेकादिगुणयुक्तम् । अन्यं वा श्रीमन्तमकुत्सितम् । अलब्धस्य प्रापणं योगः । लब्धस्य रक्षणं क्षेमः । अटाङ्गहृदये गन्तव्यं राजकुलं द्रष्टव्या राजपूजिता लोकाः । यद्यपि न भवन्त्यर्थास्तदप्यर्थास्तदप्यनर्था निवर्त्तन्ते ।

विष्णुपुराणे ।

ततः स्ववर्णधर्म्मेण वृत्त्यर्थञ्च धनार्ज्जनम् ।
कुर्व्वीत श्राद्धकर्म्मापि यजेत पृथिवीपते ॥
सोमसंस्था हविःसंस्थाः पाकसंस्थाश्च संज्ञिताः ।
धने यतोमनुष्याणां यतेत च धनार्ज्जनम् ॥
धनमूलाः क्रियाः सर्व्वा यतस्तस्यार्ज्जने मतः ।

---

* पोष्यवर्गार्थसाधनमिति पाठान्तरम् । पोषणं भरणार्थधनोपायचिन्तनं तथाच मनुः भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनं । नरकं पीडने चास्य तस्माद्यत्नेन तं भरेदिति ।

† अतिथिश्चैव इति पाठान्तरम् ।

रक्षणं वर्द्धनं मानभोगस्तत्र विधिक्रमात् ॥

महाभारते ।

धर्म्मेणार्थः परीहार्य्यो धर्म्मलब्धं त्रिधा नकम् ।
कर्त्तव्यं धर्म्मपरमं मानवेन प्रयत्नतः ॥
एकेनांशेन कामस्तु एवमंशं विवर्द्धयेत् ।

मार्कण्डेयः ।

पादेन तस्य पारक्यं कुर्य्यात्सञ्चयमात्मवान् ।
अर्द्धेन चात्मभरणन्नित्यनैमित्तिकान्वितम् ।
पादञ्चार्थोऽयमर्थस्य* मूलभूतं विवर्द्धयेत् ॥
तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च ।
कृष्णं तस्य† तु विज्ञेयो विभागः सप्तधा पुनः ॥
श्रुतशौर्य्यतपःकन्याशिष्ययाज्यान्वयागतम् ।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः‡ ॥
कुसीदकृषिवाणिज्यशुल्क§शिल्पानुवृत्तिभिः¶ ।
कृतोपकारादयनं शबलं समुदाहृतम् ॥
पार्श्विक‖द्यूतचौरार्त्ति**प्रतिरूपक††साहसैः‡‡ ।
व्याजेनोपार्ज्जितं यच्च तत्कृष्णं समुदाहृतम् ॥
यथाविधेन द्रव्येण यत्किञ्चित्कुरुते नरः ।

---

* बहुषु पुस्तकेष्वेवं पाठो दृश्यते परन्तु निरर्थ एव अतः पादस्यार्द्धमर्थस्य इति स्मार्त्तादिधृतः पाठः साधीयान्। † शुक्लस्य सप्तधा विभागोऽनन्तरोक्त इत्यर्थः। ‡ उदय- उपायोऽपि अस्य सप्तप्रकारागतधनस्य तद्विधः सप्तविधः। § मूल्यम्। ¶ सेवाभिः। ‖ द्यूतम्। ** परपीड़नम्। †† परिवर्त्तः। ‡‡ मारणैः।

तथा विधनवाप्नोति स फलं प्रेत्य चेह च ॥
श्रुतेनाध्ययनेन शौर्य्येण याजनादिना। तपसा जपहोमेन देवतार्चनादिना। कन्यागतं कन्यया सहागतं श्वशुरादेर्लब्धं शिष्यागतं गुरुदक्षिणादि। व्याजेन द्यूतव्याजेन तैलादिकन्दत्त्वा यदुपार्ज्जितम्।

भारद्वाजः।

तत्पुनर्द्वादशविधं प्रतिवर्णाश्रयान्वितम्।
साधारणं स्यात्त्रिविधं विदुस्तच्च क्रमागतम् ॥
प्रतिदानन्तथैवात्र प्राप्तञ्च सह भार्य्यया।
अविशेषेण वर्णानां सर्व्वेषान्त्रिविधं धनम् ॥
वैशेषिकन्धनं विद्याद्ब्राह्मणस्य त्रिलक्षणम्।
प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा ॥
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकन्धनम्।
युद्धोपलब्धं काराच्च दण्डाच्च व्यवहारतः ॥

कारः करः।

वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम्।
कृषिगोरक्षवाणिज्यैः शूद्रस्यापि त्वनुग्रहात् ॥

इतरवर्णानुग्रहदानेन शूद्रस्यापि कृषिगोरक्षवाणिज्यैः वैशेषिकं धनं भवतीत्यर्थः।

सर्व्वेषामेव वर्णानामेष वर्णधनागमः।
विपर्य्ययाद*धर्मं स्यान्न चेदापद्गरीयसी ॥

* वैपरीत्यात्।

## अथ प्रसङ्गाद्वर्णवृत्तिरभिधीयते ।

तत्र मनुः ।

अद्रोहेण च भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥

याज्ञवल्क्यः ।

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्ययने तथा ॥

अत्र चकाराद्विप्रो लभ्यते। ब्राह्मणस्यैव प्रतिग्रहयाजनाध्ययनानि भवन्ति। नान्यस्य, अतएव विप्र इति विषयसप्तमी। अन्यत्र भावस्य विषयः। ब्राह्मणस्यैव प्रतिग्रहादिकं त्रयं वृत्तिरित्यर्थः।

यत्तु गौतमेनोक्तम् ।

आपत्कल्पो ब्राह्मणस्य ब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषा वा समाप्तेः समाप्ते तु ब्राह्मणो गुरुरिति*। तत्तु क्षत्रियवैश्ययोर्ब्राह्मणप्रेरितयोर†ध्यापनमात्रकर्त्तृत्वाभ्यनुज्ञानम्। न तु वृत्तित्वेनाभिधानम्। अनुगमनं शुश्रूषा अनुगमनमेव शुश्रूषा इत्यर्थः।

मनुः ।

षसान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥

---

* गुरुवन्माननीयः। † ब्राह्मणो यदा ब्राह्मणाध्यापकाभावे अध्ययनार्थं क्षत्रियादिसमीपं गत्वा प्रार्थयते तदैव ब्राह्मणप्रेरितो भवति।

देवलः ।

द्विविधो गृहस्थो यायावरः शालीनश्च तयोर्यायावरो याजनाध्ययनप्रतिग्रहविक्रयस्य च वर्ज्जनात् । शालीनस्तु श्रेष्ठचतुष्पादधनधान्ययुक्तशालायां लोकानुवर्त्ती स चतुर्विधः ।

यथाह मनुः ।

कुशूलधान्यको* वा स्यात्कुम्भीधान्यक† एव वा ॥
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा ॥
चतुर्णामपि सर्व्वेषां द्विजानां गृहमेधिनाम् ।
यायावरः परो ज्ञेयो धर्म्मतो लोकजित्तमः ॥
षट्कर्म्मको भवेत्तेषां त्रिभिरन्यः प्रवर्त्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥

एकः कुशूलधान्यः षट्कर्म्मा‡ उञ्छशिलायाचितयाचितकृषिवाणिज्यैः । अन्यः कुम्भीधान्यः त्रिभिरुञ्छशिलायाचितैः । अपरस्त्र्यहैहिको द्वाभ्यामुञ्छशिलाभ्यां चतुर्थस्त्वश्वस्तनिको ब्रह्मसत्रेण ब्रह्मलोकप्राप्तिहेतुत्वेन सत्रयागतुल्यफलेनोञ्छेन जीवति ।

मनुः ।

ऋतामृताभ्यां जीवेत न श्ववृत्त्या कदाचन ।
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ॥

---

* त्रिवर्षजीविकानिर्व्वाहोपयोगिधान्यविशिष्टः । † वर्षमात्रजीविकानिर्व्वाहोपयोगिधान्यविशिष्टः । ‡ षट्कर्म्मेति षट् कर्म्माणि गणयति उञ्छशिल इत्यादि ।

मृतन्तु याचितम्भैक्ष्यं प्रमृतङ्कर्षणं स्मृतम्।
सत्यानृतन्तु वाणिज्यं तेन चैवोपजीव्यते॥
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्ज्जयेत्।

## अथापदि प्रतिग्रहवृत्तिः।

याज्ञवल्क्यः।

राजान्तेवासिशिष्येभ्यः सीदन्निच्छेद्धनं क्षुधा।
दम्भिहैतुकपाषण्डवकवृत्तींश्च वर्ज्जयेत्॥

राजा न्यायपरः शिष्यो यथोक्तलक्षणः। याज्यः याजनार्हस्त्रैवर्णिकः।

शङ्खः।

एतैरेव गुणैर्युक्तं धर्म्मार्ज्जितधनं तथा।
याजयेत सदा विप्रो ग्राह्यस्तस्मात्प्रतिग्रहः॥

एतैरिति जन्मकर्म्मादिभिः शुद्धः।

मनुः।

राजतो धनमन्विच्छेत्संसीदन् स्नातकः क्षुधा।
याज्यान्तेवासिनो वापि नत्वन्यत इति स्थितिः॥

नत्वन्यत इति एषां सद्भावे।

व्यासः।

द्विजातिभ्यो धनं लिप्सेच्छ्रेष्ठेभ्यो द्विजसत्तमः।
अपि वा द्विजमात्रेभ्यो न शूद्रात्तु कथञ्चन॥

द्विजमात्रेभ्य इति, निर्गुणधर्म्मरहितेभ्योऽपि।

नारदः।

ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ।
नैतयोरन्तरं किञ्चित् प्रजाधर्म्माभिरक्षणात्॥
धर्म्मस्य कृतकृत्यस्य धर्म्मार्थं शासतोऽशुचीन्।

अशुचीन् कृतापराधान्।

मेध्यमेव धनस्याहुस्तीक्ष्णस्यापि महीपतेः।
शुचीनामशुचीनान्तु सन्निपातो यथाम्भसाम्॥
समुद्रे समतां याति तद्वद्राज्ञां धनागमः।
यथाग्नौ संस्थितं दीप्तं शुद्धिमायाति काञ्चनम्॥
एवं धनागमाः सर्व्वे शुद्धिमायान्ति राजनि।
अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः॥
शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम्।
विदुर्य एवन्दैवत्वं राज्ञोऽस्तमिततेजसः॥
तस्य ते प्रतिगृह्णन्तो न लिप्यन्ते कथञ्चन।

दैवत्वमष्टलोकपालरूपेण।

मनुः।

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः।
सूनाचक्रध्वजवतां वेशेनैव च जीवताम्*॥

---

* राजन्यशब्दः क्षत्रियवचनः अक्षत्रियप्रसूतस्य राज्ञो धनं न प्रतिगृह्णीयादिति कुल्लूकभट्टः। सूनावतां चक्रवतां ध्वजवतां सूना प्राणिवधस्थानं, पशुमारणपूर्व्वकमांसविक्रयोपजीवी। चक्रोपजीवी तैलिकः कलु यस्य प्रसिद्धिः। ध्वजवान् मद्योपजीवी शौण्डिकः। वेशः पण्यस्त्रिया भृतिः, तया जीवति यः स वेशवान्।

न राज्ञ इति लोभाग्रजापीड़कस्य, अराजन्यप्रसूतित इति ।

सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः ॥
स पर्य्यायेण यातीमान्नरकानेकविंशतिम् ।

यमश्च ।

अराजन्यप्रसूतस्य राज्ञः स्वच्छन्दवर्त्तिनः ।
घोरप्रतिग्रहस्यापि लब्धास्वादो विषोपमः ॥
तथैव राजमहिषीराजामात्यपुरोहिताः ।
पापेनार्थेन संयुक्ताः सर्व्वे ते राजधर्म्मिणः ॥

याज्ञवल्क्यः ।

प्रतिग्रहे सूनिचक्रिध्वजिवैश्यनराधिपाः ।
दुष्टा दशगुणाः पूर्व्वात्पूर्व्वादेते यथोत्तरम्* ॥

हारीतः ।

दश सूना सहस्राणि अक्षा राजा करोति च ।
तान्येव कुरुते रात्रौ घोरस्तस्य प्रतिग्रहः ॥
अर्द्धेन तु ततोऽमात्या सेनानी दण्डनायकौ ।
ततोऽर्द्धार्द्धतदर्द्धार्द्धमाश्रितोपाश्रितेषु च ॥

यदि यदा कथञ्चिदेतेभ्यो गृह्णाति ।

तत्र बृहस्पतिः ।

---

* सूनिनः मांसविक्रयजीविनः दशगुणं पापं चक्रिणः तैलिकात्प्रतिग्रहे एवं तस्माद्दशगुणं ध्वजिनः शौण्डिकात्तस्माद्दशगुणं वेशवतः तस्माद्दशगुणं क्षत्रियभिन्नराजतः ।

असतोऽपि स्वमादाय साधुभ्यः सम्प्रयच्छति ।
धनस्वामिनमात्मानं सन्तारयति दुस्तरात् ॥

## अथ प्रतिग्रहविषये आपदनापत्साधारणं किञ्चिदुच्यते ।

तत्र मनुः ।

एधोदकं मूलफलमन्नमभ्युद्यतञ्च यत् ।
सर्व्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥

एध इन्धनमत एव यद्दक्षिणाव्यतिरिक्तमभ्युद्यतमिति सम्बध्यते । अभ्युद्यतमप्रार्थितदत्तम् । सर्व्वतः शूद्रादपि अयञ्चोपदेशः प्रतिग्रहप्रवृत्तस्यैव न तु निवृत्तस्य अभयदक्षिणान्तु म्लेच्छादिभ्योऽपि ।

शय्यासनं कुशान् गन्धान् पुष्पम्पयं मणीन्दधि ।
धाना मत्स्यान् पयो मांसं शाकञ्चैव न निर्नुदेत् ॥

मणीन् विषादिनिवारकान्* धाना लाजा, न निर्नुदेत्प्रत्याख्यायेत† ।

तिलो धेनुर्गजो वाजी प्रेतान्न‡मजिनं मणिम्§ ।
सुरभी सूयमाना¶ च घोराः सप्त प्रतिग्रहाः ॥

प्रतिग्राहकः किं गुणविशिष्टोऽधिकारी को वानेत्याकाङ्क्षायां निषेधमुखे नानधिकारिणामर्थादधिकारिणश्चाह ।

---

* प्रस्तरविशेष इति शेषः ।       † न निषेधं करोति ।       ‡ प्रेतमुद्दिश्य दत्तमन्नम् ।
§ विषादिनिवारकप्रस्तरभिन्नप्रस्तरविशेषम् ।  ¶ अर्द्धप्रसूता धेनुरित्यर्थः ।  अधिकदोषार्थं पुनर्ग्रहणम् ।

याज्ञवल्क्यः।

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च॥

मनुः।

हिरण्यम्भूमिमश्वं वा अन्नं वासस्तिलान् घृतम्।
अविद्वान् प्रतिगृह्णीयाद्भस्मीभवति दारुवत्॥

याज्ञवल्क्यः।

ग्रहादीनां नरेन्द्राणामुच्छ्राया: पतितानि च।
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः* ॥
महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः।
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् प्रियः॥

स्थूललक्षो बहुदेयार्थदर्शी, बहुप्रद इति यावत्।

अदीर्घसूत्रः स्मृतिमान् अक्षुद्रोऽपरुषस्तथा।
धार्म्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्॥

अदीर्घसूत्रः, अनारब्धकर्म्मणामारम्भे आरब्धानाञ्च परिसमापने यो न विलम्बते† सः। रहस्यवित् गोपनीयार्थगोपननिपुणः।

स्वरन्ध्रगोप्तान्वीक्षिक्यान्दण्डनीत्यां तथैव च।
विनीतस्त्वर्थवार्त्तायां त्रय्याञ्चैव नराधिपः॥

---

* ग्रहादीनामनुग्रहेणाध्याहारेणान्वयः। जगतः जगति नरेन्द्राणां नृपाणामुच्छ्राया उन्नतयः पतितानि पतनानि भावाभावौ च यस्मात्तस्माद्ग्रहाः पूज्यतमा इत्यन्वयः। एवं तद्वचनं याज्ञवल्क्यसंहितायां न लभ्यते। † न विलम्बङ्करोति।

आन्वीक्षिकी तर्कविद्या आत्मविद्या च ।

तथाच मनुः ।

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च तद्विदः* ।
आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च लोकतः ॥

दण्डनीतिरर्थशास्त्रं वार्त्ता कृषिवाणिज्यपशुपालनादिरूपा । त्रयी ऋग्यजुःसामरूपा ।

स मन्त्रिणस्तु कुर्व्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन् ।
तैः सार्द्धञ्चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥

मौलान् राज्ये वंशपरम्परायातान् । विप्रेण पुरोहितेन ।

पुरोहितन्तु कुर्व्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्याञ्च कुशलमथर्वाङ्गिरसे तथा ॥

उदितोदितं शास्त्रोदितैर्विद्यादिभिरुदितं समृद्धम् ।

श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादेव ऋत्विजः ।
यज्ञांश्चैव प्रकुर्व्वीत विधिवद्भूरिदक्षिणान् ॥
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ।
अक्षयोऽयं विधीराज्ञां यद्विप्रेषूपपादितम् ॥

भोगान् सुखधनानि ।

अस्कन्नमव्यथञ्चैव प्रायश्चित्तैरदूषितम्† ।
अग्नेः सकाशाद्विप्राग्नौ‡ हुतं श्रेष्ठमिहोच्यते ॥

---

* शाश्वतीमिति मूले पाठः । † पूतम् । ‡ अग्नेः सकाशात् अर्थात् साक्षादग्नौ हुतमथवा विप्ररूपाग्नौ हुतं दत्तमित्यर्थः ।

अस्नानं चररहितम्, अव्यथं पशुहिंसारहितम् ।

अलब्धमीहेत्* धर्म्मेण लब्धं धर्म्मेण पालयेत् ।
पालयन्वर्द्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ॥
दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत् ।
आगामितत्तन्† नृपतिपरिज्ञानाय पार्थिवः ॥

निबध्यत इति निबन्धः पर्णभरकादि। स्वदत्तं परदत्तं वा भूम्यादि नापहरेत् ।

स्वदत्तां परदत्ताञ्च यो हरेत वसुन्धराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥

इति ब्रह्मपुराणस्मरणात् ।

पटे वा ताम्रपट्टे वा समुद्रोपरि चिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः ॥
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।
स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम् ।

आत्मानञ्च चशब्दात् प्रतिग्रहीतारमपि। प्रतिगृह्यत इति प्रतिग्रहो निषेधः, तस्य परिमाणम्। दीयते इति दानं क्षेत्रादि तस्य छेदः छिद्यत इति छेदो नद्यादिः ।

नातः परतरो धर्म्मो नृपाणां यद्रणार्जितम् ।
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥
य आहवेषु वध्यन्ते भूम्यर्थमपरांमुखः ।

---

* आर्षप्रयोगः। † भद्रनृपतिरिति पाठान्तरम् ।

अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥
पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्त्तिनाम् ।
राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥
तवाहं वादिनं क्लीवं निर्हेतिं परसङ्गतम् ।
न हन्याद्विनिवृत्तञ्च युद्धप्रेक्षणकादिकम् ॥
कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ।
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ॥

प्रतिदिनम्प्रातःकाले पुरस्य आत्मनश्च रक्षां विधाय स्वयमेवाय-व्ययौ पश्येत्। ततो व्यवहारान् दृष्ट्वा मध्याह्नकाले स्नात्वा यथारुचि भुञ्जीत ।

हिरण्यं व्यापृतानीतं भाण्डागारेषु निःक्षिपेत् ।
पश्येच्चारांस्ततो दूतान् प्रेषयन्मन्त्रिसङ्गतम् ॥

व्यापृता हिरण्याद्यानयने नियुक्ताः ।

ततः स्वैरविहारी स्यान्मन्त्रिभिर्वासमागतः ।
बलानान्दर्शनङ्कृत्वा सेनान्या सह चिन्तयेत् ॥

ततोऽपराह्णे स्वैरविहारी, अन्तःपुरे ।

तथाच मनुः ।

भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य च यथाकामं* पुनः कार्य्याणि चिन्तयेत् ॥इति।
सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ।

* यथाकालमिति मूले पाठः ।

गीतनृत्यैश्च भुञ्जीत स्वाध्यायञ्च ततः पठेत्* ॥

स्वाध्यायमिति स्मरणार्थं पठेत्।

संविशेत्तूर्य्यघोषेण प्रतिबुध्येत्तथैव च।
शास्त्राणि चिन्तयेद्बुद्धा सर्व्वकर्त्तव्यता तथा ॥

संविशेत् सुप्यात्।

ब्राह्मणेषु क्षमा स्निग्धे†ष्वजिह्मः क्रोधनोऽरिषु।
स्याद्राजा भृत्यवर्गेषु प्रजासु च तथा पिता ॥
पुण्यात् षड्भागमादत्ते न्यायेन परिपालयेत्।
सर्व्वदा नाधिकं यस्मात्प्रजानां परिपालनम् ॥
अन्यायेन नृपो राष्ट्रात्स्वकोषं योऽभिवर्द्धयेत्।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥
प्रजापीड़नसन्तापात्समुद्भूतो हुताशनः।
राज्ञः श्रियङ्कुलं प्राणान्नादग्ध्वा विनिवर्त्तते ॥

आह विष्णुः।

निधिञ्च ब्राह्मणो लब्ध्वा सर्व्वमादद्यात्क्षत्रियश्चतुर्थमंशं राज्ञे दद्याच्चतुर्थमंशं ब्राह्मणेभ्योऽर्द्धमादद्याद्वैश्यश्चतुर्थमंशं राज्ञे दद्याद्ब्राह्मणेभ्योंऽशमादद्यात्। स्वनिहितानाश्चेत्‡ ब्राह्मणवर्ज्जं द्वादशमंशं दद्युः।

आह वशिष्ठः।

अज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिकन्तु षष्ठ-

---

* रहस्याख्यायिनाञ्चैव प्रणिधीनाञ्च चेष्टितमिति मूले पाठः। † स्निग्धेषु। ‡ स्वनिहितानिति निहितधनानि इत्यर्थः।

मंशं प्रदाय ब्राह्मणायेदधिगच्छेत् षट्कर्म्मसु वर्त्तमानो न राजा हरेत्।

आह मनुः।

प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं* निधापयेत्।
अर्व्वागब्दात्† हरेत्स्वामी परेण नृपतिर्हरेत्॥

परेण नृपतेर्भोगानुज्ञामात्रमिदमिति व्याचक्षते। स्वाम्यागमने तदर्पणमेव।

ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि।
संवाद्य रूपसंख्यादीन् स्वामी तद्द्रव्यमर्हति॥
आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः।
दशमं द्वादशं वापि सतां धर्म्ममनुस्मरन्॥
ममायमिति यो ब्रूयान्निधिं सत्येन मानवः।
तस्याददीत षड्भागं राजा द्वादशमेव वा॥
विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्व्वोपनिहितं निधिम्।
अशेषमप्याददीत सर्व्वस्याधिपतिर्हि सः॥
यन्तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ।
तस्माद्द्विजेभ्यो दत्त्वार्द्धमर्द्धं कोशे प्रवेशयेत्॥

आह नारदः।

परेण निहितं लब्ध्वा राजैवोपहरेन्निधिम्।
राजगामी निधिः सर्व्वः सर्व्वेषां ब्राह्मणादृते॥

---

* त्र्यब्दमिति मूले पाठः। † त्र्यब्दादिति मूले पाठः।

ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत्।
तेन दत्तन्तु भुञ्जीत स्तेनः स्यादनिवेदयन्॥

## अथ वैश्यवृत्तिः।

मनुः।

वैश्यस्तु कृतसंस्कारः कृतदारपरिग्रहः।
वार्त्तायां* नित्ययुक्तः स्यात्पशूनाञ्चैव रक्षणे॥
मणिमुक्ताप्रवालानां लोहानान्तान्तवस्य† च।

लोहानां धातूनाम्।

गन्धानाञ्च‡ रसानाञ्च§ विद्यादर्घबलाबलम्¶।
वीजोप्तिविधि‖युक्तः स्यात् क्षेत्रवीजगुणस्य** च॥
मानयोगांश्च†† जानीयात्तुलायोगांश्च सर्व्वशः।
सारासारञ्च भाण्डानां देशानाञ्च गुणागुणम्॥

भाण्डानां विक्रेयद्रव्याणाम्।

लाभालाभञ्च पण्यानां पशूनां वृद्धिरर्ज्जनम्‡‡।
भृत्यानाञ्च भृतिं§§ विद्याद्भाषाश्च विविधा नृणाम्।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च।

---

* कृषिवाणिज्यादौ। † तन्तुसम्बन्धिवस्त्रस्य। ‡ कर्पूरादीनाम्। § लवणादीनाम्। ¶ उत्कृष्टत्वमपकृष्टत्वम्। ‖ वीजवपनविधिः। ** क्षेत्रगुणस्य वीजगुणस्य च विधिरिति शेषः। †† द्रव्यादीनां परिमाणयोगः। ‡‡ परिवर्द्धनमिति मूले पाठः। वृद्धिवर्ज्जनमिति पाठान्तरम्। §§ कस्मिन् भृत्ये किं वेतनं दातव्यमेतज्जानीयात्। धृतिमिति पाठान्तरम्।

धर्म्मेण हि द्रव्यवृद्धी आतिष्ठेद्यत्नमुत्तमम् ।
विद्याच्च सर्व्वभूतानां भक्ष्यमेव* प्रयत्नतः† ॥

कालिकापुराणे ।

कृषिर्गोरक्षवाणिज्यमेतद्वैश्यस्य सम्मितम् ।
तथाप्यनडुद्युग्माभ्यां‡ कृषिं नैव समाचरेत् ॥
द्विगवाभ्यां द्विपट्काभ्यां प्रहरार्द्धप्रमाणतः ।
द्वौ द्वौ योज्यान्तरे चैकं कारयेद्धर्म्मतो द्विजः§ ॥
पिण्याकं¶ तृणतोयन्तु तेषां यत्नात्स दापयेत् ।
धूमकण्डूयनञ्चैव कृत्वैवं कारयेत्ततः ॥
वैणवीमपि‖ भूमिन्तु अधोमूत्रगमाय च ।
कुर्व्वन्नेवं न सीदेत कृषिं वैश्यो महामुने ॥
राज्ञां षड्भागमुत्सृज्य पञ्चमङ्कर्षकस्य च ।
शिल्पिनः प्रकृतीश्चैव दीनान्धांस्तर्पयेत्ततः ।
शेषमात्मनि युञ्जीत खलु वैश्येष्वयं विधिः ॥

हारीतः ।

---

* केषाम्भूतानां किं भक्ष्यमाहारीयद्रव्यमितज्जानीयात् । † दद्याच्च सर्व्वभूतानामन्नमेव प्रयत्नत इति मूले पाठः । ‡ युग्मनानाभ्याम् । § द्विपट्काभ्यामष्टसंख्यकाभ्यां द्विगवाभ्यां द्वौ गावौ कृत्वा एकैकयुगे योजिताभ्यां प्रहरार्द्धप्रमाणतः प्रहरार्द्धपर्य्यन्तं कर्म्म कारयेत् । द्वौ द्वाविति अर्द्धप्रहरादूर्द्ध्वं द्वौ द्वौ कृत्वा ततः पुनः योज्य इत्यार्षं योजयित्वा अन्तरे अर्द्धप्रहरमध्येऽपि एकं कारयेत्कार्षणमिति शेषः अर्थात् अर्द्धप्रहरमध्येऽपि पूर्व्वापरपरिवर्त्तितभावेन एकं कर्म्म कारयेदित्यर्थः । ¶ खलीति यस्य प्रसिद्धिः । ‖ वेणुनिर्म्मित-नालम् ।

अष्टागवं धर्म्महलं षड्गवं जीविकार्थिनाम्* ।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥
बालानां† दमनञ्चैव वाहनञ्च न शस्यते ।
वृद्धानान्दुर्ब्बलानाञ्च प्रजापतिवचो यथा ॥
पुंस्त्वोपघातनं नासौ वाहानाङ्कारयेत्ततः ।
वृद्धं युग्मे‡ न युञ्जीत जीर्णं व्याधितमेव च ॥

## अथ कुसीदम् ।

तत्र याज्ञवल्क्यः ।

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥

अन्यथेति असबन्धके ।

मनुः ।

नातिसांवत्सरीं वृद्धिं नाभीष्टान्तु§ पुनर्हरेत् ।
चक्रवृद्धिः कालिका च कारिका कायिका च याः¶ ॥

याज्ञवल्क्यः ।

वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासन्तु कालिका ।
इच्छाकृता कारिका स्यात्कायिका कायकर्म्मणि ॥

---

* जीवितार्थिनामिति पाठान्तरम् । † गोवत्सानाम् । ‡ हले । § न चादिष्टामिति मूले पाठः । ‖ शास्त्रोल्लङ्घनपूर्व्वकाभिलषिताम् । ¶ मम्मैकस्मिन्मासि मासद्वये मासत्रये वा गते तस्य वृद्धिं विगणय्य एकदा दातव्येत्येवंविधिनियमपूर्व्वकवृद्धिग्रहणमुत्तमर्णः संवत्सरपर्य्यन्तं कुर्य्यात् । नातिक्रान्ते संवत्सरे नियमस्य वृद्धिं गृह्णीयादिति कुल्लूकभट्टः ।

बृहस्पतिः ।

बहवो वर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः ।
सर्व्वेषामपि चैतेषां कुसीदमपि तं विदुः ॥
अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः ।
वृष्ट्यादिके भवेद्धानिः सा कुसीदेन घातयेत् ॥

## अथ शूद्रवृत्तिः ।

तत्र मनुः ।

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव तु शूद्रस्य धर्म्मो निःश्रेयसः परः ॥

बृहस्पतिः ।

शौचं ब्राह्मणशुश्रूषा सत्यमक्रोध एव च ।
शूद्रकर्म्म तथा मन्त्रो नमस्कारोऽस्य चोदितः ॥

पराशरः ।

शूद्रस्य द्विजशुश्रूषा प्रथमं धर्म्मलक्षणम् ।
यदन्यत्कुरुते कर्म्म तद्भवेत्तस्य निष्फलम् ॥

द्विजशुश्रूषा त्रिवर्णशुश्रूषा । तस्य निष्फलमिति । द्विजसेवाया विरोधि यदन्यत्कुरुते तन्निरर्थकमित्यर्थः ।

गौतमः ।

चतुर्व्वर्ण एकजातिस्तस्याः सत्यमक्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेके श्राद्धकर्म्म भृत्यभरणं स्वदारवृत्तिः परिचर्य्या चेतरेषामेभ्यो वृत्तिं लिप्सेत् ।

इतरेषां द्विजातीनाम् ।

याज्ञवल्क्यः ।

भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियारतः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥

नमस्येतावानेव मन्त्रः ।

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥

इति मन्त्रः । न चानग्नेः शूद्रस्य कथमग्निसाध्यकर्म्माधिकारः । विवाहादाविति चेत् । शूद्रस्य विवाहहोमाभावात् । न ह्यमन्त्रकोऽस्ति होमो न च शूद्रो मन्त्रवान् न च नमस्कारमन्त्रेणैव मन्त्रवत्तेति वाच्यं तस्य पञ्चयज्ञेष्वेव हेतुत्वात् । तस्मादग्निसाध्यकर्म्मसु वक्तव्योऽस्याधिकारहेतुः उच्यते । अनग्नेरपि शूद्रस्य लौकिकेऽग्नौ वैश्वदेवादीनि कर्म्माणि कार्य्याणि तं प्रति साक्षाद्विधानात् । निषादस्थपतीष्टिवत् । किञ्च द्विजातीनामपि न विवाहोऽग्नौ नियतम् । वैश्वदेवकर्म्म किमुत शूद्रस्य एवञ्च शूद्रस्य यत्र यत्र होमस्तत्र तत्र लौकिकाग्नावेव मन्त्रान्तराविधानेन नमस्कारमन्त्र एवेति सिद्धम् ।

## अथापद्वृत्तिः ।

तत्र मनुः ।

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्म्मणा ।
जीवेत्क्षत्त्रियधर्म्मेण स ह्यस्य प्रत्यनन्तरम् ॥

उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥
वैश्यवृत्त्यापि जीवन्तो विक्रेयमाह स एव।
सर्व्वान्रसान् व्यपोहेत कृतान्नञ्च* तिलैः सह।

व्यपोहेत वर्ज्जयेन्न विक्रीणीतेत्यर्थः। व्यपोहेतेति सर्व्वत्रानुषज्यते।

अश्मनो लवणञ्चैव पशवो ये च मानुषाः।
सर्व्वञ्च तान्तवं रक्तं शाणक्षौमाविकानि च॥
अपि चेत्स्युररक्तानि फलमूले तथौषधीः।
अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्व्वशः॥
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्।
आरण्यांश्च पशून् सर्व्वान्दंष्ट्रिणश्च वयांसि च।
मद्यं नीलं बलाकाञ्च द्विशफैकशफांस्तथा†॥

अत्र रसग्रहणेनैव लवणस्यापि ग्रहणे सिद्धे पुनर्ग्रहणं दोषाधिक्यप्रतिपादनार्थम्। एतेनान्यदपि पुनरुक्तं व्याख्यातम्‡। क्षौद्रं मधु काक्षसिक्थकं§ माक्षिकस्य मधुशब्देनैवोपादानात्।

सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्॥
इतरेषान्तु पण्यानां विक्रयादिह कामतः।

---

* लड्डुकादि। † द्विशफं गवादिकम्, एकशफमश्वादिकम्। मद्यं नीलिञ्च लाक्षाञ्च सर्व्वांश्चैकशफांस्तथा इति मूले पाठः। ‡ अधिकदोषार्थत्वेनेति शेषः। § याम् यस्य प्रसिद्धः।

ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥
रसारसैर्निमातव्या न त्वेव लवणं रसैः ।
कृतान्नं वाकृतान्नेन तिला धान्येन तत्समाः ॥

निमातव्याः परिवर्त्तनीयाः । जीवेदेतेन य आपत् ।

वैश्योऽजीवन् स्वधर्म्मेण शूद्रवृत्त्यापि वर्त्तयेत् ।
अशक्नुवंस्तु शुश्रूषां शूद्राः कर्त्तुं द्विजन्मनाम् ॥
पुत्रदारात्ययप्राप्तौ जीवेत्कारुककर्म्मभिः ।
यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ॥
तानि कारुककर्म्माणि शिल्पानि विविधानि च ।

कुर्व्वीतेति शेषः । आपद्यप्यन्यवृत्तिभ्योऽपि स्ववृत्तिरेव ब्राह्मणस्य ज्यायसीत्याह

मनुरेव ।

वरं स्वधर्म्मो विगुणः परधर्म्मात्स्वनुष्ठितात् ।
परधर्म्मेण जीवन् हि सद्यः पतति जातितः ॥
वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः ।
अवृत्तिकर्षितः सीदन्निमं धर्म्मं समाचरेत् ।
सर्व्वतः प्रतिगृह्णीयात् ब्राह्मणस्त्वनयं* गतः ॥
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनाम्बुसमा† हि ते ॥

तथा ।

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।

---

* आपद्गतः । † अग्निजलतुल्याः ।

आकाशमिव पङ्केन न स पापेन लिप्यते ॥

तथार्थवादोऽपि ।

क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ।
चण्डालहस्तादादाय धर्म्माधर्म्मविचक्षणः ॥

श्वजाघनी श्वपृष्ठभागः ।

आपद्यत्यन्तागत्या आवश्यककर्म्मणः सम्पत्त्यर्थं चौर्य्यमपि क्व चानुजानाति ।

वानस्पत्यं मूलफलं दार्व्वग्न्यर्थं तथैव च ।
तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥

वानस्पत्यं पत्रपुष्पादि ।

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥
तथैव सप्तमे भक्ते भक्तानि षड़नश्नता ।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः* ॥

ब्राह्मण†व्यतिरिक्तः अश्रोत्रियो‡ हीनकर्म्मेत्यभिधीयते ।

---

* षड़श्नता षड्दिनपर्य्यन्तं भोजनमकुर्व्वता जनेन सप्तमे सप्तमदिने भक्ते भोजने कर्त्तव्ये हीनकर्म्मणः सकाशात् भक्तानि भोजनद्रव्याणि अश्वस्तनप्रमाणेन अश्वस्तनवदल्पपरिमाणेन हर्त्तव्यं चौर्य्यं कर्त्तव्यं हर्त्तव्यमिति आख्याततरत्वात् कर्म्मसत्त्वे भावप्रत्ययेन साधु। † ब्राह्मणः इति पाठान्तरम्। ‡ ब्राह्मणव्यतिरिक्तः क्षत्रियादिः अश्रोत्रियसाहचर्य्यात् सम्यक् स्वस्वधर्म्मानुष्ठानरहित इति ज्ञापितम्। अश्रोत्रियः प्रणवव्याहृतिपूर्व्वकगायत्री-रहितः ब्राह्मणश्च इत्युच्यते। तथाच ओंकारपूर्व्विकास्तिस्रः सावित्रीर्यश्च विन्दति। चरित-ब्रवचर्य्यश्च स वै श्रोत्रिय उच्यते ॥

उत्कृष्टं वापकृष्टञ्च तयोः कर्म्म न विद्यते ।
मध्यमे कर्म्मणी हित्वा सर्व्वसाधारणे हि ते* ॥

तयोर्ब्राह्मणशूद्रयोरुत्कृष्टं ब्राह्मणकर्म्म अपकृष्टं शूद्रकर्म्म न विद्यते। मध्यमे कर्म्मणी क्षत्त्रवैश्यकर्म्मणी सर्व्वसाधारणे इत्यर्थः। एवमापदं निस्तीर्य्य प्रायश्चित्तं कृत्वा स्वर्गमार्गनिरतो भवेत्।

तथाच याज्ञवल्क्यः।

निस्तीर्य्य तामथात्मानं पावयित्वा पथि न्यसेत्। इति।

तामापदं पावयित्वा प्रायश्चित्तैः पथि स्ववर्णधर्म्मे।

स्ववर्णधर्म्मनिरतानां फलमाह

पैठीनसिः।

ब्राह्मणस्य प्राजापत्यमैन्द्रम्पदं क्षत्त्रियस्य मारुतं वैश्यस्य गान्धर्व्वं शूद्रस्य स्वस्वस्थानं व्रजन्ति स्वे स्वे कर्म्मण्यभिरताश्च ये† ।

इति वर्णवृत्तिकथनम् ।

अथ प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरामः ।

तत्र मध्याह्नविधिः। तत्रादौ तावत्प्ररोचनार्थं‡ स्नानप्रशंसा।

---

* मध्यमे कर्म्मणी क्षत्त्रियवैश्यकर्म्मणी हित्वा त्यक्त्वा तयोर्ब्राह्मणशूद्रयोः उत्कृष्टं अपकृष्टञ्च कर्म्म न विद्यते अर्थात् ब्राह्मणस्य अपकृष्टं शूद्रकर्म्म शूद्रस्य पुनः उत्कृष्टं ब्राह्मणकर्म्म न विद्यते हि यतः ते क्षत्त्रियवैश्यकर्म्मणी सर्व्वसाधारणे चतुर्वर्णानां करणीये। † ये ब्राह्मणादयः स्वे स्वे कर्म्मणि अभिरताः स्वस्वकर्म्मानुष्ठानं कुर्व्वन्ति ते स्वस्वलोकं व्रजन्ति। कस्य को वा लोकः ब्राह्मणस्य ब्रह्मलोकः क्षत्त्रियस्य इन्द्रलोकः वैश्यस्य मरुल्लोकः शूद्रस्य गन्धर्व्वलोक इत्यर्थः। ‡ रुच्युत्पादनार्थम् ।

योगियाज्ञवल्क्यः ।

अगम्यागमनात्स्तेयात्पापिभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात्* पापान्मुच्यते स्नानमाचरन् ॥
मनःप्रसादजननं रूपसौभाग्यवर्द्धनम् ।
शौचन्दुःस्वप्नहं स्नानं शोकदं ह्लादनं† तथा ॥

स्नानभेदानाह

शङ्खः ।

स्नानन्तु द्विविधम्प्रोक्तं गौणमुख्यप्रभेदतः ।
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधम्भवेत् ॥
नित्यं नैमित्तिकङ्काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढास्नानम्प्रकीर्त्तितम्‡ ॥

एतेषां लक्षणान्यपि स एवाह ।

अस्नातस्तु पुमान्नार्हो जप्यादिहवनादिषु ।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥

प्रातरित्युपलक्षणम् । अतो माध्यन्दिनस्यापि नित्यत्वमेव ।
तथाच स्नानप्रकरणे

गोभिलः ।

नित्यं सततनिर्वर्त्त्यमिति ।

वैयाघ्रपादोऽपि ।

प्रातःस्नायी भवेन्नित्यं‡ मध्ये§ स्नानं सदा¶ भवेत् । इति ।
चाण्डालशवसूत्यादि स्पृष्ट्वाऽस्नातां रजस्वलाम् ।

* निर्जनेऽनुष्ठितात् । † आह्लादजनकम् । ‡ षट्प्रकारस्नानम् । § मध्याह्ने । ¶ नित्यम् ।

स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥
पुष्यस्नानादिकं* यत्तु दैवज्ञविधिनोदितम्† ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तु‡ प्रयोजयेत् ॥
जप्तुकामः पवित्राणि अर्च्चिष्यन्देवतान् पितॄन् ।
स्नानं समाचरेद्यत्तु क्रियाङ्गं तत्प्रकीर्त्तितम् ॥

पवित्राणि सूक्तानि§ ।

मलापकर्षणं नाम स्नानमभ्यङ्गपूर्व्वकम्¶ ।
मलापकर्षणार्थात्तु प्रवृत्तिस्तस्य नान्यथा ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानन्तत्र मता क्रिया ॥ इति ।

स्नानमेव तत्र क्रिया कर्त्तव्यतया विहितेत्यर्थः ।

दक्षः ।

चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत् ।
तिलपुष्पकुशादीनि स्नानं वाऽकृत्रिमे जले ॥

---

* आदिना दर्भोदकादिस्नानपरिग्रहः तथाच विष्णुधर्म्मोत्तरे। तथा दर्भोदकैः स्नानं सर्व्वपापप्रनाशनम्। गोमूत्रेण च यत्स्नानं सर्व्वाघविनिसूदनम्। तथा पुष्पोदकस्नानं भवेदारोग्यकारकम्। केवलैर्वा तिलैः स्नानमथवा गौरसर्षपैः। स्नानं प्रियङ्गुना प्रोक्तं तथा सौभाग्यवर्द्धनम्। आयुष्यञ्च यशस्यञ्च धर्म्मंग्र मेधाविवर्द्धनम्। स्नानं पवित्रं माङ्गल्यं तथा काञ्चनवारिणा। पुष्यस्नानादिकमिति पाठे तु आदिना जन्मनक्षत्रादिपरिग्रहः। तथाच पुष्ये वा जन्मनक्षत्रे व्यतीपाते च वैधृतौ। अमावास्यां नदीस्नानं दहत्या जन्मदुष्कृतम्। पुष्ये पुष्यानक्षत्रे कृतस्नानादिकम्। तथापरमपि पुष्ये स्नात्वा तु गङ्गायां त्रिकोटिकुलमुद्धरेदिति। † दैवं जानाति दैवज्ञो मुनिस्तेन उदितम्। ‡ नाकामस्तत्प्रयोजयेदिति पाठान्तरम्। § वेदोक्तमन्त्ररूपाणि। ¶ तैलमर्द्दनपूर्व्वकम्।

चतुर्थभागो हि पूर्वाह्णस्यैव ।

रक्ता गौरा तथा श्वेता त्रिविधा मृत्तिका स्मृता ।
शुचिदेशात्तु संग्राह्या शर्कराश्मादि*वर्ज्जिता ॥

विशेषलक्षणं मृत्तिकायाः शौचप्रकरणे बोद्धव्यम् । तिलाः कृष्णाः पुष्पाणि यथोक्तानि । कुशा वक्ष्यमाणलक्षणाः ।

कुशग्रहणे कालविशेषमाह

कात्यायनः ।

मासि नभस्यमावास्या तस्यां दर्भोच्चयः स्मृतः ।
अयातयामा†स्ते दर्भा नियोक्तव्याः पुनः पुनः ॥

एतच्च प्रतिदिनाशक्तौ बोद्धव्यम् ।

कुशोपादानविधिः ।

शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ओंकारेण तु मन्त्रेण सकृदेव कुशं स्पृशेत् ॥

सकृदेव प्रथमत एव ।

दर्भोत्पाटनविधिमन्त्रः ।

विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज‡ ।
नुद सर्व्वाणि पापानि मम स्वस्तिकरो भव ॥
कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः ।
कुशाग्रे शङ्करो देवस्त्रयो देवाः कुशे स्मृताः ॥
अच्छिन्नाग्रान् समपर्णान् समूलान् कोमलान् शुभान् ।

---

* खर्परशिलाखण्डादि । † अपरित्यक्तकार्य्यार्हता । ‡ परमेष्ठिवत् स्वभावज इति प्रशंसार्थमुक्तम् ।

पितृदेवजपार्थञ्च समादद्यात्कुशान्द्विजः ॥
सप्तपर्णाः शुभा दर्भास्तिलतैत्रसमुद्भवाः ।
ते प्रशस्ता नियोक्तव्या दैवे पित्रे च कर्म्मणि ॥
जातिमात्रो भवेद्दर्भः साग्रमूलः कुशः स्मृतः ।
सप्तपत्रस्तु कुतपश्छिन्नाग्रस्तृणमुच्यते ॥
अच्छिन्नाग्रा अशुष्काग्रा ह्रस्वाश्चैव प्रमाणतः ।
कुतपा इति विज्ञेयास्तैस्तु श्राद्धं समाचरेत् ॥

छन्दोगपरिशिष्टे ।

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥
कौशेयं बिभृयान्नित्यं पवित्रं दक्षिणे करे ।
भुञ्जानस्तु विशेषेण गर्हितान्नस्य शोधनम् ॥
द्वौ कुशौ दक्षिणे हस्ते सव्ये त्रीण्यासने सकृत् ।
उपवीते शिखायान्तु पादमूले सकृत् सकृत् ॥

सकृत् एक इत्यर्थः ।

कौशिकः ।

पवित्रस्य च नाशौचं आचान्ते तु कदाचन ।
पितॄणां तर्पणे त्याज्यमुच्चारे पूजने तथा ॥

शङ्खः ।

उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेत्* ॥

* लभेदिति पाठान्तरम् ।

ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं भवेत् ।
आचामेद्यस्तु मोहाच्च यथा भोक्ता तथा तु सः ॥

यथा भोक्तेति दृष्टान्तः । अतो भोजनकाले ग्रन्थिनिषेधः ।

ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिं विधीयते ।
भोजने वर्त्तुलः प्रोक्तः एवं धर्म्मो न हीयते ॥
वामहस्ते कुशान् कृत्वा दक्षिणेनोदकं पिबेत् ।
रुधिरं तद्भवेत्तोयं पीत्वा चान्द्रायणं चरेत् ॥
कुशाभावे तथा काशान्दूर्व्वाव्रीहियवानपि ।
तदभावे तु नीवारान्श्यामाकान्वा नियोजयेत् ॥

हारीतः ।

जपे दाने तथा होमे स्वाध्यायेऽपि च तर्पणे* ।
अशून्यन्तु करङ्कुर्व्यात्सुवर्णरजतैः कुशैः ॥

आपस्तम्बः ।

ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे ।
धृता मूत्रपुरीषे तु तेषान्त्यागो विधीयते ॥
चितौ† दर्भाश्च ये मार्गे‡ स्वाध्याये§ पितृतर्पणे ।
स्तरणासनपिण्डेषु न ग्राह्याः सप्त वै कुशाः ॥
अपूता गर्भिता दर्भा ये चाग्रे छिन्दिता नखैः ।
कथिताश्चाग्निदग्धांश्च कुशान्यत्नेन वर्ज्जयेत् ॥

---

* पितृतर्पण इति पाठान्तरम् । † चितास्थानोद्भवाः । ‡ पथि समुद्भवाः । § यान् दर्भान् हस्ते कृत्वा स्वाध्यायः पितृतर्पणञ्च कृतं ते वर्ज्जनीया इत्यर्थः । ¶ मर्द्दितान् ।

नीवीमध्ये स्थिता दर्भा ब्रह्मसूत्रेण ये धृताः ।
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः ॥

अत्र विशेषमाह कात्यायनः ।

हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञिकाः ।
समूलाः पितृदैवत्याः कल्माषा* वैश्वदेविकाः ॥

पितृदैवत्याः पित्र्यार्थाः ।

गोवालपवित्रं प्रकृत्य कौशिकः ।

गवां बालपवित्रेण धार्य्यमाणेन नित्यशः ।
न स्पृशन्तीह पापानि श्रीश्च गात्रेषु तिष्ठति ॥
गवां बालपवित्रेण वक्त्रोपास्तिं करोति यः ।
पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः ॥
गवां बालपवित्रेण सन्ध्योपास्तिङ्करोति यः ।
स वै द्वादश वर्षाणि कृतसन्ध्यो भवेदिति ॥

हारीतः ।

समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् पतत्यधः ॥
कुशपुष्पाणि समिध श्रौषधन्तु विशेषतः ।
निषेधेऽपि च गृह्णीयादमावास्यामपि द्विजः ॥

यत्तु वचनम् ।

अमावास्यां न हिंस्यात्तु कुशांश्च समिधस्तथा ।

---

* कृष्णवर्णाः ।

सर्व्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत् ॥ इति ।
तत्तु यस्मिन्काले वनस्पत्यादिषु सोमो वसति तन्मुहूर्त्तनिषेध-
परं सर्व्वत्रावस्थित इति हेतूपादानात् ।

सर्व्वत्र वनस्पतिकुशादिषु अवस्थानकालविशेषश्च सौपर्णेना-
भिहितः ।

त्रिमुहूर्त्तं वसेद्दर्भे त्रिमुहूर्त्तं जले वसेत् ।
त्रिमुहूर्त्तं वसेद्गोषु त्रिमुहूर्त्तं वनस्पतौ ॥
वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ इति ।
वनस्पतिरिति कुशादीनामपि प्रदर्शनार्थम् ।

इति कुशविधिः ।

## अथ वाशिष्ठे स्नानविधिः ।

अथ स्नानविधिं कृत्स्नं प्रवक्ष्याम्यनुपूर्व्वशः ।
येन स्नानाद्दिवं यान्ति श्रद्दधाना द्विजोत्तमाः ॥
नदीषु देवखातेषु तडागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु* च ॥
पारक्येषु† निपानेषु‡ न स्नायाद्धि कदाचन ।

---

* गर्त्तः द्वात्रिंशत्सहस्रहस्तन्यूनजलाशयः । तथाच धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिता इति । प्रस्रवणं पर्व्वतीयजलनिर्गम-स्थानम् । † परस्वामिकेषु । ‡ जलाशयेषु ।

निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥
अलाभे देवखातानां सरसां सरितान्तथा ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥

याज्ञवल्क्यः ।

पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु ।

योगियाज्ञवल्क्यः ।

अरुग्दिवा चरेत्स्नानं मध्याह्नात्प्राग्विशेषतः ।
प्रयतो मृदमादाय दूर्व्वामार्द्रवगोमयम् ॥

अरुग् नातुरः । विशेषत इति वचनादपराह्णेऽप्यनुज्ञानमस्तीति गम्यते ।

स्थापयित्वा* तथाचम्य ततः स्नानं समाचरेत् ।
प्रक्षाल्य हस्तौ पादौ च शिखाबन्धं समाचरेत् ॥

शिखाबन्धनप्रकारमाह व्यासः ।

स्मृत्वोङ्कारञ्च गायत्रीं निबध्नीयाच्छिखां ततः† ।
पुनराचम्य हृदयम्बाहू स्कन्धौ च संस्पृशेत् ॥ इति ।
मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेरथोपरि ।
अथ चतसृभिः कायं षड्भिः पादौ तथैव च ॥
प्रक्षाल्य सर्व्वकायञ्च द्विराचम्य यथाविधि ।
ततः सम्मार्ज्जनङ्कुर्य्यान्मृदापूर्व्वन्तु मन्त्रवित् ॥

अङ्गान्युक्तविधिना मृदाङ्गं मार्ज्जयेदित्यर्थः ।

---

* कुशमृत्तिकादीनीति शेषः । † यथाविधीति पाठान्तरम् ।

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥
मृत्तिके त्वाञ्च गृह्णामि प्रजया च धनेन च ।
मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ॥
मृत्तिके दह तत्सर्व्वं यन्मया दुष्कृतङ्कृतम् ।
मृत्तिके देहि मे पुष्टिं त्वयि सर्व्वं प्रतिष्ठितम् ॥
ततश्च गोमयेनैवमग्रमग्रमिति ब्रुवन् ।
अग्रमग्रं चरन्तीनां रसं यन्निर्गतं वने* ॥
तासामृषभपत्नीनां पवित्रङ्कायशोधनम् ।
तन्मे रोगांश्च शोकांश्च नुद गोमय सर्व्वदा ॥

ततो दूर्व्वया ।

काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि ।
एवा नो दूर्व्वे प्रतनु सहस्रेण शतेन च ॥
या शतेन प्रतनोसि सहस्रेण विरोहसि ।
तस्य मे देवि दूर्विके विधेम हविषा वयम् ॥
कृत्वैवं मार्ज्जनं मन्त्रैरश्वक्रान्तादिभिस्ततः ।
ईहेत देवीरमृतं पारावतस्य रात्रिषु ॥

देव्याः परः पारावतः रात्रिष्वित्यादि मन्त्रैर्देवीरापोऽमृत-मीहेत† । एभिरभिमन्त्रितात्प्रसृष्टं भवतीत्यर्थः ।

ये ते शतमिति द्वाभ्यां तीर्थान्यावाहयेत्ततः ।

---

* ओषधीनां वने वन इति पाठान्तरम् । † भावयेदित्यर्थः ।

कुरुक्षेत्रादीन्यावाहयेत्।

कुरुक्षेत्रं गयाङ्गङ्गां प्रभासम्पुष्कराणि च।
तथा महाव्याहृतिभिर्गायत्र्या वाभिमन्त्रयेत्॥
आपो हिष्ठादयः* पश्चाद्द्रुपदादिवं† इत्यपि।
तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः।
ततोऽर्कमीक्ष्य चोङ्कारं निमज्ज्याप्सु जले बुधः॥
प्राणायामांश्च कुर्व्वीत गायत्रीञ्चाघमर्षणम्।
यथोक्तैः क्षोभितस्तैस्तु सञ्जेत्त्रिदण्डवत्ततः॥

यथोक्तैः प्राणायामादिभिः क्षोभितः क्षुब्धः पूर्व्वावस्थामतिक्रान्तो विगतपाप इति यावत्। अन्येऽपि स्नानविधयो बहवः सन्ति ते ग्रन्थगौरवभयान्न प्रदर्शिताः। एतच्च स्नानं सर्व्वसाधारणम्। विशेषः स्वस्वशाखाभ्यो विज्ञेयः।

अत्र चापवादः।

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च।
पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणम्॥ इति।

पिण्डदानन्तु काम्यं न नित्यम्।

योगियाज्ञवल्क्यः।

मृदा स्नानं न कुर्व्वीत रात्रिसन्ध्याग्रहेषु च।

---

* ओं आपो हिष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन महेरणाय चक्षसे। ओं योवः शिवतमो रसस्तस्य भाजयतेह न उषतीरिव मातरः। ओं तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ आपोजनयथाच नः। † ओं द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः।

विधिन्न: स्नानकालेषु तथा भौमार्कवारयो: ॥

तिलतर्पणस्य प्रतिप्रसवस्तर्पणप्रकरणे वक्ष्यते ।

संक्षेपस्नानविधिमाह योगियाज्ञवल्क्य: ।

एष विस्तरत: प्रोक्त: स्नानस्य विधिरुत्तम: ।
असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥
स्नानमन्त्रजले चैव मार्ज्जनाचमने तथा ।
जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनम् ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यश: ।
स्नानाचरणमित्येतदुपदिष्टं स्वयम्भुवा ॥

जाबालि: ।

प्रवाहाभिमुखो मज्जेद्यत्राप: प्रवहन्ति वै* ।
स्थावरेषु च सर्व्वेषु आदित्याभिमुखस्तथा ॥

विष्णुपुराणे ।

कूपेषु घृततोयेन† स्नानं कुर्व्वीत वा भुवि‡ ।
स्नायीतोद्धृततोयेन यदि वा भुव्यसम्भवे§ ॥

मनु: ।

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभि: सहाजस्रं नाविज्ञाते जलाशये ॥

व्यास: ।

[illegible]नुत्सृष्टेषु न स्नायात्तथैवासंस्कृतेषु च ।

* प्रवाहरहितेषु [illegible] । † कूपादुद्धृतजलेन । ‡ भुवि संस्थित इत्यर्थ: । § भुवि अवगाह्य स्नानासम्भवे इत्[illegible]र्थ: ।

असंस्कृतमप्रतिष्ठितम् । अनुत्सृष्टमदत्तं* परकीयमिति यावत् ।

जाबालिः ।

न पारक्ये सदा स्नायान्न भुक्त्वा न महानिशि ।
नार्द्रमेकञ्च वसनं परिदध्यात्† कथञ्चन ॥

देवलः ।

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्य्यान्निशि काम्यव्रतेषु च ॥

भरद्वाजः ।

विद्यमानेन सूर्य्येण सङ्गृहीतन्तु यज्जलम् ।
तत्सुवर्णोदकं कृत्वा स्नायात्स्थाप्यात्मनोऽन्तिके ॥

पराशरः ।

अपो रात्रौ न गृह्णीयात्प्रविष्टा वरुणालयम् ।
आवश्यकेऽथ मन्त्रेण धाम्नो धाम्न इति स्वयम् ॥

धाम्नो धाम्न इति मन्त्रेण स्वयमेव गृह्णीयादित्यर्थः ।

योगियाज्ञवल्क्यः ।

दर्शे स्नानं न कुर्व्वीत मातापित्रोश्च जीवतोः ।
त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः ॥
शूद्रविट्क्षत्त्रियाः स्नानं नाचरेयुः कथञ्चन ।

---

* सर्व्वभूतोद्देशे यन्न दत्तं—तथाच यन्न सर्व्वाय चोत्सृष्टं यच्चाभोज्यनिपानजं, तद्वर्ज्यं सलिलं तात सदैव पितृकर्म्मणीति वचनात् । † आर्द्रं वसनं परिधाय न स्नायीत एकं वसनं परिधाय न स्नायादित्यर्थः ।

एतन्नित्यनैमित्तिकादिस्नानव्यतिरिक्तविषयम्।

अतएव भरद्वाजः।

> भोगार्थं क्रियते यत्तु स्नानं याद्दच्छिकञ्च यत्।
> दृगम्यात्तु प्रकर्त्तव्यं न तु याद्दच्छिकं* क्वचित्† ॥

याद्दच्छिकलक्षणं गर्गेणोक्तम्।

> क्रियतां वा न कुर्य्याद्वा शास्त्रयन्त्रणया‡ विना।
> मलव्यपोहनफलं§ स्नानं याद्दच्छिकन्तु तत् ॥

पैठीनसिः।

> पुत्त्रजन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा।
> नित्यस्नाने च कर्त्तव्ये तिथिदोषो न विद्यते ॥ इति।

मार्कण्डेयपुराणे।

> मातरं पितरं जायाम्भ्रातरं सुहृदङ्गुरुम्।
> यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः ॥
> नादशेकेन¶ वस्त्रेण स्नायात्कौपीनकादृते।
> नान्यदीयेन नार्द्रेण न सूच्या ग्रथितेन च ॥
> स्नानङ्कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते यदि।
> प्राणायामत्रयं कुर्य्यात्पुनः स्नानेन शुध्यति ॥

---

* रागप्राप्तम्। † बहुषु पुस्तकेषु दर्शनात् रक्षितं परन्तु हेमाद्रिप्रभृतिधृतपाठः एव साधीयान्। यथा, भोगाय क्रियते यत्तु स्नानं याद्दच्छिकं भवेत्। तन्निषिद्धं दृगम्यादौ काम्यनैमित्तिकेषु न तु। ‡ शास्त्रविहितेन। § गात्रमलमात्रनाशकम्। ¶ अदर्शन दशारहितेन एकवस्त्रेण च।

मनुः ।

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत् ॥

यत्तु षट्त्रिंशन्मते ।

आपः स्वभावतो मेध्याः किम्पुनर्वह्निसंयुताः ।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा ॥ इति ।

तदातुरविषयम् अनातुरस्यापि नद्याद्यसम्भवे उष्णोदकस्नानमविरुद्धमित्याह ।

यमः ।

नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः ॥

अत्र मलापकर्षणं स्नानं तीर्थे कर्त्तव्यमिति न विधीयते । अपि तु प्रायश उष्णोदकसाध्यत्वादुष्णोदकप्रकरणे परिगणितम् ।

उष्णोदकस्नाने कर्त्तव्ये व्यासः ।

शीतास्वप्सु निशि चोष्णमन्त्रसम्भारसम्भृतम् ।
गृहेऽपि शस्यते स्नानं तद्धीनमफलम्भवेत्* ॥

सम्भारा मृदादयः ।

अग्राह्यास्त्वागता ह्यापो नद्याः प्रथमवेगजाः† ।
प्रक्षोभिताश्च केनापि तथा तीर्थाद्विनिर्गताः ॥

---

* बहुषु पुस्तकेषु दर्शनादेतद्रक्षितं परन्तु पराशरभाष्ये माधवाचार्य्यधृतपाठः साधीयान् । यथा शीतास्वापो निषिव्योष्णामन्त्रसम्भारसंस्कृताः । गेहेऽपि शस्यते स्नानं तद्धीनमफलं स्मृतमिति ॥ † प्रथमवेगिका इति पाठान्तरम् ।

तथा ।

प्रत्यावृत्तोदके* स्नानं वर्ज्ज्यं नद्यां द्विजातिभिः ।
तस्यां रजकतीर्थेषु दशहस्तान्† वर्ज्जयेत् ॥
प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनम् ।
गङ्गायान्न प्रदुष्यन्ति सा हि धर्म्मद्रवी स्वयम् ॥

देवलः ।

नभोनभस्ययोर्मध्ये‡ सर्व्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः ॥

कात्यायनः ।

नभोनभस्ययोर्मध्ये सर्व्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्व्वीत देवर्षिपितृतर्पणम् ॥

श्रावणभाद्रपदयोर्मध्ये सर्व्वासु नदीषु स्नाननिषेधे प्रसक्ते कश्चिद्विशेषोऽभिहितो भविष्यपुराणे ।

आदौ कर्कटके देवि महानद्यो रजस्वलाः ।
त्रिदिनन्तु चतुर्थेऽह्नि शुद्धा स्याज्जाह्नवी यथा ॥ इति ।

नद्यश्च ब्रह्मपुराणे प्रदर्शिताः ।

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका§ ।

---

* स्रोतोवैपरीत्यमुखे । † यत्र तीरे रजको वस्त्रं धौतं करोति तद्रजकतीर्थं तत्तीरस्थं तीर्थमारभ्य दशहस्तपर्य्यन्तं वर्ज्जयेदित्यर्थः । अतएव तत्र स्थाने निन्दामाह कर्म्मलोचनः । स्नानं रजकतीर्थेषु भोजनं गणिकालये । शयनं पूर्व्वपादे च ब्रह्महत्या दिने दिने ॥ ‡ मध्यद्वयं श्रावणादिरिति देशान्तरीयपाठः । § वेणिका इति पाठान्तरम् ।

तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः ॥
भागीरथी नर्म्मदा च यमुना च सरस्वती ।
विशोका च विहस्ता च विन्ध्यस्योत्तरतः स्थिताः ।
द्वादशैता महानद्यो देवर्षिक्षेत्रसम्भवाः ॥ इति ।

एवं गङ्गादिष्वपि प्रसक्तावपवादमाह देवलः ।

गङ्गा च यमुना चैव प्लक्षजाता सरस्वती ।

कुरुक्षेत्रे या सरस्वती सा प्लक्षजाता ।

रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः ॥
शोणसिन्धुहिरण्याख्यकोकलोहितघर्घराः ।
शतद्रुश्च नदाः सप्त पावनाः ब्रह्मणः सुताः ॥

निगमः ।

गङ्गाधर्म्मद्रवाः पुण्या यमुना च सरस्वती ।
अन्तर्गतरजोयोगाः सर्व्वावस्थासु चामलाः ॥

गङ्गारजस्वलेत्यादि गङ्गायमुनासरस्वतीनां रजोदोषप्रापकाणि यानि तान्यपि अन्तर्गतरजोविषयाणि । अतो न दोषः ।

ततः ।

कर्क्कटादौ रजोदुष्टा गोमती वासरत्रयम् ।
चन्द्रभागा सती सिन्धुः सरयूर्नर्म्मदा तथा ॥

यासु नदीषु रजोदोषोऽस्ति तास्वपि तत्तीरवासिनां न दोषः ।

तथा निगमः ।

न तु तत्तीरवासिनामिति ।

अत्र विशेषमाह व्याघ्रपादः ।

अभावे कूपवापीनामनपायिपयोभृताम्* ।
रजोदुष्टेऽपि पयसि ग्रामभागो न दुष्यति ॥ इति ।

वशिष्ठः ।

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥

याज्ञवल्क्यः ।

न स्नायादुत्सवेऽतीते मङ्गलं विनिवर्त्त्य च ।
अनुव्रज्य सुहृद्बन्धूनर्च्चयित्वेष्टदेवताम् ॥

प्रसङ्गात्प्रत्यग्रदुष्टं प्रति कश्चन विशेषः कथ्यते । तत्र स्मृतिसङ्ग्रहे ।

काले नवोदकं शुद्धं प्रत्यग्रमशुचि त्र्यहम् ।
अकाले तु दशाहन्तु पीत्वा नाद्यादहर्निशम् ॥ इति ।

काले वर्षाकाले । अकाले तद्विपरीते ।

अत्रापि विशेषो भविष्योत्तरे ।

महदम्बु समं† वात्र यदि तिष्ठेत्पुरातनम् ।
नवाम्बुमिश्रितं तेन न दुष्टमिति सूरयः ॥

इति उक्तं नित्यस्नानम् ।

---

* उपायान्तरेण जलप्राप्तिरहितानाम् । † समं सहितम् ।

# अथ नैमित्तिकानि स्नानानि ।

याज्ञवल्क्यः ।

उदक्याऽशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥

उदक्या रजस्वला । अशुचयः शवपतितचाण्डालसूतिकाशावाशौचिनः । एतैः स्पृष्टः स्नायात् । तैरुदक्यादिस्पृष्टैरुपस्पृष्टमाचमेत् । आचम्य चाब्लिङ्गानि आपो हिष्ठेत्येवमादीनि त्रीणि सूक्तानि वाक्यानि जपेत् । त्रिष्वेव बहुवचनस्य कपिञ्जलाधिकरणन्यायेन चरितार्थत्वात् सूक्तवाक्ययोर्देशकालानुसारेण व्यवस्था । ततो गायत्रीं मनसा सकृज्जपेत् ।

पराशरः ।

दुःस्वप्ने मैथुने वान्ते विरक्ते* क्षुरकर्म्मणि ।
चितियूपश्मशानास्थ्नां स्पर्शने स्नानमाचरेत् ॥

मैथुन इति ऋतुकाले, अऋतुकाले बृहस्पतिना शौचमात्रविधानात् ।

अनृतौ† तु यदा गच्छेच्छौचं मूत्रपुरीषवदिति ।

अनृतावपि कालविशेषे स्नानमेव च ।

तथाच स्मृतिः ।

अष्टम्याञ्च चतुर्दश्यां दिवा पर्व्वणि मैथुनम् ।

---

* विगतरक्ते रक्तस्रावे इति यावत् । † ऋतुभिन्नकाले ।

कृत्वा सचेलं स्नात्वा तु वारुणीभिश्च* मार्ज्जयेत् ॥ इति। अष्टमीचतुर्द्दशीपर्व्वसु रात्रावपि अन्यत्र दिवा। अत्र गोबलीवर्द्दन्यायेन अष्टमीचतुर्द्दशीव्यतिरिक्तामावास्यादिषु पर्व्वशब्दो वर्त्तते।

अजीर्णादिषु स्नानमात्रमेव न च सचेलस्नानम्।
यथाह यमः।

अजीर्णेऽभ्युदिते वान्ते तथाप्यस्तमिते रवौ।
दुःस्वप्ने दुर्ज्जनस्पर्शे स्नानमात्रं विधीयते ॥ इति।

अजीर्णे स्नानं तदुपशमे सति। अभ्युदित इति निद्रायां निद्रायां क्रियमाणायां रवावभ्युदिते तथा चास्तमिते च एतत्सर्व्वमकामतः स्पर्शे वेदितव्यम्।

शवस्पर्शं चितिं यूपं† रजस्वलाम्।
स्पृष्ट्वा त्वकामतो विप्रः स्नानङ्कृत्वा विशुध्यति ॥ इति।

बृहस्पतिना अकामत इत्युपादानात् कामतस्तु च्यवनोक्तं द्रष्टव्यम्।

श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजिकं सोमविक्रयिणं यूपं चितिं चितिकाष्ठं मद्यभाण्डं सस्नेहं मानुषास्थिस्पर्शं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचेलमम्भो वगाह्योत्तीर्य्याग्निमुपस्पृश्य गायत्र्यष्टशतं जपेत्। घृतं प्राश्य पुनः स्नात्वा त्रिराचमेदिति।

* इमं मे वरुण इत्यादिमन्त्रैः अथवा मोषु वरुण इत्यादि ऋग्वेदोक्तमन्त्रैः। † बहुषु पुस्तकेषु दर्शनादेवं रचितं परन्तु पतितञ्च रजस्वलामित्येव साधु।

काश्यपः ।

उदयास्तमयो क्रन्दित्वाऽभिस्यन्दने कर्णक्रोशने* चित्यारोहणे यूपसंस्पर्शने† सचेलं स्नात्वा पुनर्मेति जपेत् । महाव्याहृतिभिः सप्ताहुतीर्जुहुयादिति ।

तथा ।

स्पृष्ट्वा देवलकञ्चैव सवासा जलमाविशेत् ।
देवार्च्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
असौ देवलको नाम हव्यकव्येषु गर्हितः ॥

ब्रह्माण्डपुराणे ।

शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान्‡ ।
विकर्म्मस्थान्द्विजान् शूद्रान् सवासा जलमाविशेत् ॥

अधिकारे अविद्यमाने ये शैवाः पाशुपता वा भवन्ति । संस्पर्शने स्नानमित्यवगन्तव्यम् । अन्यथा तद्दीक्षाविधायकपुराणनिचयविरोधात् । अथवा श्रोत्रियादीनां साक्षिवदननिषेधो यथा वाचनिकः श्रोत्रियादिषु दोषाभावेऽपि तथा वाचनिकस्पर्शनिषेधः । विकर्म्मस्थानित्येतद्द्विजानित्यनेनैव सम्बध्यते । शूद्रानित्यनेन अस्वर्ग्या ह्याहुतिः साप्याच्छूद्रसंस्पर्शदूषिता इति शूद्रमात्रस्पर्शेनास्वर्ग्यत्वप्रतिपादनसामर्थ्यात् ।

व्याघ्रपादः ।

चाण्डालम्पतितञ्चैव दूरतः परिवर्ज्जयेत् ।

---

* कर्णस्पन्दने । † यूपः वृषोत्सर्गादौ निर्म्मितवृषमौलियूपादिः । ‡ लोकायतिकाश्च नास्तिकाश्च ते तान् । लोकायतिकाश्चार्व्वाकमतावलम्बिनः ।

गोवालव्यजनादर्व्वाक्* सवासा जलमाविशेत् ॥

एतच्चातिसङ्कीर्णस्थानविषयम् ।

असङ्कीर्णे तु हस्तत्युक्तम् ।

युगञ्च द्वियुगञ्चैव त्रियुगञ्च चतुर्युगम् ।

चाण्डालसूतिकोदक्यापतितानामधःक्रमात् ॥ इति ।

अधःक्रमात्प्रतिलोमक्रमात् । चतुर्युगं† चाण्डाले त्रियुगं सूतिकायामित्येवम् ।

पैठीनसिः ।

अनुदकमूत्रकरणे सचेलस्नानं व्याहृतिहोमश्च ।

एतच्च शौचमकृत्वा चिरकालावस्थितौ वेदितव्यम् ।

भासवायसमार्ज्जारखरोष्ट्रश्वानशूकरान् ।

अमेध्यानि च संस्पृशन् सचेलो जलमाविशेत् ॥

मार्ज्जारस्य स्पर्शने स्नानमुद्दिष्टं समये कर्मकाले ।

मार्ज्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः ।

इति यमस्मरणात् । संस्पर्शे नाभेरूर्द्धं स्नानम् ।

नाभेरूर्द्धं करौ मुक्त्वा शुना यद्युपहन्यते ।

तत्र स्नानमधस्ताच्चेत्प्रक्षाल्याचम्य शुध्यति ॥

इति अङ्गिरःस्मरणात् ।

अस्पृश्यपक्षिस्पर्शे जातूकर्ण्यः ।

---

* एतेन चाण्डालादयो यदा सङ्कीर्णस्थाने गोवालचामरेण व्यजनं कुर्व्वन्ति तदा दूरतः स्पर्शे न दोष इति ज्ञापितम् । † युगं चतुर्हस्तमानं चतुर्युगं षोडशहस्तम् ।

ऊर्द्ध्वं नाभेः करौ मुक्का यदङ्गं संस्पृशेत्खगः* ।
स्नानं तत्र प्रकुर्व्वीत शेषं प्रक्षाल्य शुध्यति ॥

अमेध्यस्पर्शे तु शौचप्रकरणे विशेषो दर्शितः पूर्व्वमेव ।

शङ्खः ।

रथ्याकर्द्दमवर्षासु प्रविश्य ग्रामसङ्करम् ।
जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणास्ततः ॥

ग्रामसलिलप्रवाहदेशो ग्रामसङ्करः तं सकर्द्दमं प्रविश्य ।

मनुः ।

नारं स्पृष्टास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।
आचम्यैव तु निस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविम् ॥

एतच्च द्विजातिविषयम् । अन्यत्र तु मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचम् । अस्निग्धे त्वहोरात्रमिति वशिष्ठोक्तम् । मानुषेऽमानुषे त्वस्थ्नि विष्णूक्तम् ।

भक्ष्यवर्ज्ज्यं पञ्चनखं† शवं तदस्थि च सस्नेहं स्पृष्ट्वा स्नानपूर्व्वं वस्त्रं स्वयं प्रक्षालितं बिभृयादिति ।

अन्येष्वेवंविधाः स्नानार्हाः स्मृत्यन्तरेऽवगन्तव्याः ग्रन्थगौरवभयान्नेह लिखिताः । उदक्यादिभिः स्पृष्टानां मनुष्याणां स्नानम् । अचेतनानां पीठादीनां प्रक्षालनम् । तत्रोदक्यादिं स्पृष्ट्वा चेतनस्पर्शवतामाचमनम् ।

उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।

---

* कुक्कुटादिः न तु सामान्यतः पक्षी । † कुक्कुरादि ।

इति याज्ञवल्क्यस्मरणात्। उदक्यादिस्पृष्टचेतनस्पर्शे तु द्वितीयस्यापि स्नानमेव।

तथाच मनुः।

दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति॥

स्नानार्हचेतनस्पर्शे द्वितीयस्य क्वचित्स्नानापवादमाह संग्रहकारः।

शवधूमं स्पृगन्वान्त्यं विरक्तं चुरकर्म्मणि।
मैथुनाचरितारञ्च स्पृष्ट्वा स्नानं न विद्यते॥ इति।

एतदुपलक्षणम्। अतो यस्य स्नानमात्रमेव प्राप्तं न सचेलं तत्स्पर्शे द्वितीयस्याप्येवमेव सिद्धम्।

तृतीये त्वाचमनं यथाह संवर्त्तः।

तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते।
ऊर्द्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा॥ इति।

एतच्चाकामकारिविषयम्। कामकृते तु तृतीयस्यापि स्नानमेव।

पतितचाण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शे सचेलमुदकोपस्पर्शनात्।

इति गौतमस्मरणात्।

चतुर्थस्याचमनं यथा देवलः।

उपस्पृष्टाशुचिस्पृष्टं तृतीयं वापि मानवः।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति॥

यत्तु कूर्म्मपुराणे।

तत्स्पृष्टस्पृष्टिनं स्पृष्टा शुद्धिपूर्व्वं द्विजोत्तमाः ।
आचमेत्तस्य शुद्ध्यर्थं प्राह देवः पितामहः ॥ इति ।

एतद्दुर्व्बलत्वेन स्नानाशक्ततृतीयविषयम् । अन्यथा गौतमादिवचनविरोधादथवा च तत्स्पृष्टपीठादिस्पर्शविषयम् । एवं सर्व्वत्र विषयविवेकोऽवगन्तव्यः ।

स्वयमशुचिना उदक्यादिस्पर्शे कृते देवलः ।

अशुद्धान् स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् ।
विशुद्ध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः ॥

कृच्छ्रः श्वपाकादिविषयः । उपवासः श्वादिविषयः ।

आतुरस्नानं प्रति पराशरोक्तो विशेषः ।

आतुरे स्नानसुत्पन्ने दशकृत्वो ह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत्स आतुरः ॥
स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानङ्कृत्वा व्रतञ्चरेत् ॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गं कथञ्चन ।
न वस्त्रपीड़नं कुर्य्यान्नान्यद्वासश्च धारयेत् ॥

उशना ।

ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथन्तस्या भवेच्छुद्धिः शौचं स्यात्केन कर्म्मणा ॥
चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचेला वगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दश द्वादशकृत्वो वा आचामेच्च पुनः पुनः ।

अन्ये च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति ।

सूतिकामरणे रजस्वलामरणे पूर्व्ववत्स्नानं कारयित्वा पञ्चगव्येन स्नापयेत् ।

तथाच संग्रहकारः ।

सूतिकायां मृतायान्तु कथं कुर्व्वन्ति याज्ञिकाः ।
कुम्भे सतिलमादाय पञ्चगव्यं तथैव च ॥
पुण्याभिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ।
तेनैव स्नापयित्वा तु दाहं कुर्य्याद्यथाविधि ॥
पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरावृतां कृत्वा* दाहयेद्विधिपूर्व्वकम् ॥ इति ।

वृद्धशातातपस्तु ।

रजस्वलायाः प्रेतायाः संस्कारादीनि नाचरेत् ।
ऊर्द्धं त्रिरात्रात्स्नातायाः शवधर्म्मेण† दाहयेत् ॥

इति त्रिरात्रानन्तरं दाहादिसंस्कारमाह । अत्र देशकालानुसाराद्व्यवस्था‡ विज्ञेया ।

शातातपः ।

ग्रामे तूभयसंस्पृष्टि§यात्रायां कलहादिषु ।

---

* वस्त्रान्तरेण आच्छादितां कृत्वेत्यर्थः । † गयादीनि च तीर्थानीत्याद्युक्तविधिना स्नाताया इत्यर्थः । ‡ यस्मिन्देशे रजस्वलामरणे त्रिरात्रात्परं दाहो व्यवह्रियते तद्देशविषयिणीयं व्यवस्था । § परस्परस्पर्शे ।

ग्रामसन्दूषणे* चैव स्पृष्टिदोषो न विद्यते ॥

ग्रामे राजमार्गादौ।

षट्त्रिंशन्मते।

देवयात्राविवाहेषु यज्ञेषु प्रकृतेषु† च।
उत्सवेषु च सर्व्वेषु स्पृष्टास्पृष्टि न विद्यते ॥

बृहस्पतिः।

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति ॥

एतच्च यत्राहमनेन स्पृष्ट इति प्रत्यभिज्ञानं नास्ति तद्विषयम्। तस्मात्रापवादेऽपि वचनान्तरितार्थत्वात्‡।

शातातपः।

रात्रौ स्नानं न कुर्व्वीत स्नानन्दानञ्च§ रात्रिषु।
नैमित्तिकञ्च कुर्व्वीत स्नानन्दानञ्च रात्रिषु ॥

एतन्मध्यमयामद्वयाभिप्रायम्।

तथाच पराशरः।

महानिशा तु विज्ञेया मध्यमप्रहरद्वयम्।
प्रदोषपश्चिमौ¶ यामौ दिनवत्स्नानमाचरेत् ॥

एतदप्यापद्विषयं यतः स एव।

* दाहादिनेति शेषः। † आरब्धेषु। ‡ वचनान्तरस्य चरितार्थत्वादित्येव पाठः साधुः। § बहुषु पुस्तकेषु दर्शनादेतद्रक्षितम्। तथा दानञ्च रात्रिषु इत्येव पाठः साधुः। ¶ प्रदोषः अस्तमयादूर्द्धं प्रथमप्रहररूपः पश्चिमः शेषप्रहरः उदयात्प्राक् प्रहररूपः प्रदोषश्च पश्चिमश्च तौ।

दिवाकरकरैः पूतं दिवास्नानम्प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥

राहुदर्शनादिति पुत्रजन्मादिप्रदर्शनार्थम् ।

तथाच पराशरः ।

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥ इति ।

इति नैमित्तिकस्नानानि ।

## अथ काम्यस्नानानि ।

तत्र पुलस्त्यः ।

पुष्ये तु जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमावास्यां* नदीस्नानं पुनात्यासप्तमङ्कुलम् ॥
चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ ।
न प्रेतत्वमवाप्नोति गङ्गायान्तु विशेषतः ॥

भविष्यपुराणे ।

शिवलिङ्गसमीपे तु यत्तोयं पुरतः स्थितम् ।
शिवगङ्गेति तज्ज्ञेयं तत्र स्नात्वा शिवं व्रजेत् ॥

यमः ।

कार्त्तिक्यां पुष्करे स्नातः सर्व्वपापैः प्रमुच्यते ।
माघ्यां स्नातः प्रयागे तु मुच्यते सर्व्वकिल्बिषैः ॥

---

* अमायाञ्चेति पाठान्तरम् ।

ज्यैष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते ।
दशजन्माघहा गङ्गा तेन पापहरा स्मृता* ॥
यमुनायां तथा स्नात्वा माघकृष्णचतुर्द्दशीम् ।
वैशाखशुक्लपक्षे तु तृतीयायां तथैव च ।
गङ्गातोये नराः स्नात्वा मुच्यन्ते सर्व्वकिल्बिषैः ॥
कार्त्तिके नवमी शुक्ला पितॄणामुत्सवाय च† ।
तस्यां स्नानं हुतन्दानमनन्तफलदम्भवेत् ॥

विष्णुः ।

सूर्य्यग्रहेण तुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥
पुनर्व्वसौ बुधोपेता चैत्रे मासि सिताष्टमी ।

तथा ।

स्रोतःसु विधिवत्स्नात्वा वाजपेयफलं लभेत् ॥
कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन्हविष्यभुक् स्नातः सर्व्वपापैः प्रमुच्यते ॥
तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् ।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥

यमः ।

य इच्छेद्विपुलान् भोगांश्चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं मासौ द्वौ माघफाल्गुनौ ॥

---

* तस्माद्दशहरा स्मृतेति देशान्तरीयः पाठः । † सेति पाठान्तरम् ।

मत्स्यपुराणे ।

आषाढ्यादिचतुर्मासं प्रातःस्नायी भवेन्नरः ।
विप्रेभ्यो भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत् ।
स वैष्णवपदं याति विष्णुव्रतमिदं स्मृतम् ॥

मार्कण्डेयः ।

गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते दिवाकरे ॥

वृद्धवशिष्ठः ।

रविसंक्रमणे पुण्ये न स्नायाद्यदि मानवः ।
सप्तजन्मान्तरं रोगी दुःखभागी सदा भवेत् ॥

मार्कण्डेयः ।

तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ।
स्त्रीकामः* सर्व्वदा स्नानं कुर्व्वीतामलकैर्नरः ।
सप्तमीं नवमीञ्चैव सर्व्वकाले च वर्ज्जयेत् ॥
कुर्य्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।
नित्यं याद्दच्छिकञ्चैव यथारुचि समाचरेत् ॥

मार्कण्डेयपुराणे ।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितम् ॥

अङ्गतर्पणं भूदेवांस्तर्पयामि इत्यादिकं याजुर्वैदिकम् ।

इति काम्यस्नानानि ।

* श्रीकाम इति पाठान्तरम् ।

नारदीयपुराणे ।

सम्प्राप्ते माघमासे तु तपस्विजनवल्लभे ।
क्रोशन्ति* सर्व्वतीर्थानि समुद्गच्छन्ति भास्करे† ।
पुनीमः सर्व्वपापानि त्रिविधानि‡ न संशयः ॥
तड़ागेषु तु वा स्नायात्कोपि भाण्डाश्रिते तथा ।
माघमासे वरारोहे प्रशस्तं निम्नगाजलम् ॥

भाण्डाश्रितेषु विशेषः ।

सरित्तोयं महावेगं नवकुम्भस्थितं तथा ।
वायुना ताड़िता रात्रौ गङ्गास्नानसमं स्मृतम् ॥

अधिकवेगयुक्तायाः सरितः आनीतं तोयमित्यर्थः ।

स्नातो वह्निं न सेवेत अस्नातो वा कथञ्चन ।
सेवेतापि तु होमार्थं न शीतार्थं कथञ्चन ॥

विष्णुः ।

दर्शं वा पूर्णमासं वा प्रारभ्य स्नानमाचरेत् ।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे ।
अत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्व्वकम् ॥
माघमासमिमं पुण्यं स्नास्यहं§ देव माधव ।
तीर्थस्यास्य जले नित्यमिति सङ्कल्प्य चेतसि ॥
ततः स्नात्वा शुभे तीर्थे दत्त्वा शिरसि वै मृदम् ।

---

* क्रोशन्ति आह्वानं कुर्व्वन्ति जनानिति शेषः क्रुश रोदनाह्वानयोरिति धात्वनुसारात् । † भास्करे भास्करक्षेत्रे प्रयागे । ‡ कायिकवाचिकमानसिकानि । § स्नास्येऽहमिति पाठान्तरम् ।

वेदोक्तविधिना राजन् सूर्य्यस्यार्घ्यं निवेदयेत् ॥
पितॄणां तर्पयित्वा तु अन्ततीर्थे ततो जलात् ।
काष्ठापानान्नं संस्कृत्य* पूजयेत्पुरुषोत्तमम् ।
शङ्खचक्रधरन्देवं नामभिः परिपूजयेत् ॥
वह्निं† हुत्वा विधानेन ततस्त्वेकाशनो‡ भवेत् ।
भूशय्यां ब्रह्मचर्य्येण शक्तः स्नानं समाचरेत् ॥
अशक्तस्याधनाढ्यस्य स्वेच्छा सर्व्वत्र कथ्यते ।
अवश्यमेव कर्त्तव्यं माघस्नानमिति श्रुतिः ॥
तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी§ ।
तिलदस्तिलभोक्ता च षट्तिली नावसीदति ॥
तैलमामलकाश्चैव तीर्थे देयास्तु¶ नित्यशः ।
तथा प्रज्वालयेदग्निं सेवनार्थं द्विजन्मनाम् ॥
एवं स्नात्वावसाने तु भोज्यं देयमवारितम् ।
भोजयेद्द्विजदाम्पत्यं भूषयेद्वस्त्रभूषणैः ॥
कम्बलाजिनरत्नानि वासांसि विविधानि च ।
चोलकानि‖ च देयानि प्रच्छादनपटांस्तथा ॥
उपानहौ तथा गुप्तमोचकौ पापमोचकौ ।
अनेन विधिना दद्यान्माधवः प्रीयतामिति ॥

अत्र समापनमन्त्रः ।

---

* काष्ठा उत्कृष्टं प्रानं पानीयद्रव्यं अन्नञ्च संस्कृत्य प्रस्तुत्य । † वह्नाविति पाठान्तरम् । ‡ एकभक्तव्रतं कुर्य्यात् । § तिलवापीति देशान्तरीयः पाठः । ¶ तैलं देयमामलका-देया ब्राह्मणायेति शेषः । ‖ घाघरा यस्य प्रसिद्धिः ।

सवित्रे प्रसवित्रे तु परं धाम जले मम ।
तत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥
दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं कुरुष्वेदं माघस्नानं तवाज्ञया ॥
अहन्यहनि दातव्यास्तिला वा शर्करान्विताः* ।
माघावसाने शुभगे षड्रसं भोजनं तथा ।
सूर्य्यो मे प्रीयतान्देवो विष्णुमूर्त्तिर्निरञ्जनः ॥
दम्पत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते ।
त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः ॥
भागत्रयं तिलानान्तु चतुर्थः शर्करांशकः ।
स नाभ्यङ्गी† वरारोहे सर्व्वमासं नयेद्व्रती ॥

इति माघस्नानम् ।

क्रियाङ्गस्नानलक्षणं प्रागभिहितं तत्तु तत्रैव व्याख्यातम् ।

## अथ मलापकर्षणं स्नानम् ।

तत्र गार्ग्यः ।

पञ्चमी चैव नवमी तृतीया च त्रयोदशी ।
एकादशी द्वितीया च पक्षयोरुभयोरपि ॥
अभ्यङ्गस्पर्शपानाद्यैः‡ यत्र तैलं निषेवते ।

---

* शर्करयान्विता इति पाठान्तरम् । † अनभ्यङ्गीति पाठान्तरम् । ‡ मूर्द्ध्नि दत्तं यदा तैलमित्याद्युक्तमभ्यङ्गं स्पर्शं तैलस्पर्शः पानं तैलपानमित्यादिभिः ।

चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम् ॥

तथा ।

पञ्चदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे ।
द्वादश्यां सप्तमीषष्ठ्योस्तैलस्पर्शमपि त्यजेत् ॥

गार्ग्यः ।

त्रयोदश्यां तृतीयायां प्रतिपद्दशमीद्वये ।
तैलाभ्यङ्गं न कुर्व्वीत स्पृशेद्वा नवमीं विना ॥
मोहात्प्रतिपदं षष्ठीं कुहुं रिक्तातिथिं तथा ।
तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः परिहीयते ॥

व्यासः ।

आदित्यादिषु वारेषु तापः कान्तिर्मृतिर्धनम् ।
दारिद्र्यं सुभगत्वञ्च कामप्राप्तिरतः क्रमात् ॥

गार्ग्यः ।

मांसाशने पञ्चदशी तैलाभ्यङ्गे चतुर्द्दशी ।
अष्टमी ग्राम्यधर्म्मे च ज्वलन्तमपि पातयेत् ॥
षष्ठ्यष्टमी त्वमावास्या उभे पक्षे चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे क्षुरे भगे ॥

अत्र प्रतिप्रसवमाह प्रचेताः ।

सार्षपं तैलगन्धञ्च* यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

---

* गन्धद्रव्ययुक्ततैलम् ।

तैलाभ्यङ्गनिषेधे तु तिलतैलं निषिध्यते।
अभ्यङ्गस्य निषेधे तु सार्षपादेरपीष्यते ॥
स्नेहाभ्यङ्गो भवत्येव सस्नेहः सार्षपादिकः।
न भोजनाय तैलस्य निषेधोऽभ्यङ्ग एव सः ॥
तैलशब्दस्तिलस्नेहे सुरूढ़ो नैव यौगिकः।
अतस्तिलविकारेऽपि पिण्याकतिलमोदके।
शष्कुलीकृशराद्येश्च निषेधो नैव जायते* ॥

मनुः।

शिरःस्नातस्तु तैलेन नाङ्गं किञ्चिदुपस्पृशेत्।

अस्यार्थः। तैलेन शिरःस्नातः सन् स्वाङ्गमन्यदपि तैलेन न संस्पृशेन्न प्रक्षालयेदिति। एतच्च तस्मिन्दिन एव।

न रात्रौ विद्यते स्नानं वृद्धिसर्व्वोत्सवेषु च।
स्नेहमात्रसमायुक्तं मध्याह्नात्प्राग्विशिष्यते ॥

निषिद्धतिथिशुभवारयोगे तैलस्नानं कार्य्यम्। तिथ्यपेक्षया वारस्य प्राबल्यात्तदुक्तं ब्रह्मसिद्धान्ते।

तिथिरेकगुणा प्रोक्ता नक्षत्रञ्च चतुर्गुणम्।
करणं षड्गुणञ्चैव वारस्त्वष्टगुणः स्मृतः ॥ इति।
तिलैः स्नानं सदा पुण्यं कुर्य्यादामलकैः प्रिये।

---

* तिलस्नेहे द्रवीभूततिलनिर्यासे, सुरूढो योगरूढ़ीत्यर्थः न तु यौगिकः न योगबलेन तिलसम्बन्धिपिण्याकादिसमस्तवाचकः। अतस्तिलतैलमात्रनिषेधादित्यर्थः। शष्कुली भाजी तिलतैलेनेति शेषः कृशरः तिलमिश्रितखेचरान्नं तिलघटितत्वेऽपि तैलनिषेधे एतन्न निषिद्ध्यते इति तात्पर्य्यम्।

सप्तमी नवमी दर्शरविसंक्रमणाद्दृते ॥

व्यासः ।

तथा दर्शे च सप्तम्यां संक्रान्तौ च रवेर्दिने ।
चन्द्रसूर्य्योपरागे च स्नानमामलकैस्त्यजेत् ॥
सर्व्वकालं तिलैः स्नायादिति व्यासोऽब्रवीन्मुनिः ।
गिरःस्नानं तटे कृत्वा मज्जेदप्सु यथाविधि ॥

## अथ क्रियाङ्गस्नानम् ।

तत्र शङ्खः ।

क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्व्वकम् ।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि ॥
जले निमग्नस्तून्मज्ज्य उपस्पृश्य यथाविधि ।
तीर्थस्यावाहनङ्कुर्य्यात्तत्प्रवक्ष्याम्यतः परम् ॥
प्रपद्ये वरुणन्देवमम्भसां पतिमूर्ज्जितम् ।
याचितन्देहि मे तीर्थं सर्व्वपापापनुत्तये ॥
सान्निध्यमस्मिंस्तोये तु स्थीयतां मदनुग्रहात् ।
रुद्रान्प्रपद्ये वरदान् सर्व्वानप्सुषद*स्त्वहम् ॥
सर्व्वानप्सुषदश्चैव प्रपद्ये प्रणतः स्थितः ।
देवमप्सुषदं वह्निं प्रपद्ये त्वनिसूदनम् ॥
आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा ।

---

* अप्सु सीदन्ति प्रविशन्ति इत्यप्सुषदः ।

रुद्राश्चाग्निश्च सर्पाश्च वरुणस्त्वाप एव च ।
शमयन्त्वशुभम्पापं रक्षन्तु च सदा शुभम् ॥
इत्येवमुक्त्वा कर्त्तव्यं ततः सम्मार्ज्जनङ्कुशैः ।
आपो हिष्ठेति तिसृभिर्यथावदनुपूर्व्वशः ॥
हिरण्यवर्णा* इति च ऋग्भिश्चतसृभिस्तथा ।
शन्नो देवीरिति† तथा शन्न आपः‡स्तथैव च ।
इदमापः प्रवहत§त्येवं सर्व्वमुदीरयन् ॥
एवं सम्मार्ज्जनङ्कृत्वा छन्द आर्षञ्च दैवतम् ।
अघमर्षणसूक्तस्य¶ संस्मरेत्प्रयतः सदा ॥
ततोऽम्भसि निमग्नस्तु त्रिःपठेदघमर्षणम् ।
प्रपद्यान्मूर्द्धनि तथा महाव्याहृतिभिर्जलम् ॥

इति क्रियाङ्गस्नानम् ।

---

* हिरण्यवर्णाश्शुचयः यासां राजा यासां देवः शिवेन माचक्षुषा इति । † शन्नोदेवी रभीष्टये आपोभवन्तु पीतये शंयोरभिस्रवन्तु नः इति । ‡ शन्नः आपोधन्वन्याः शमनः सन्तु नूप्याः शन्नः समुद्रिया आपः शमनः सन्तु कूप्या इति । § इदमापः प्रवहत यत्किञ्च दुरितं मयि यदाह अभिदुद्रोहयद्वाशेप उतानृतमिति । ¶ अघमर्षण ऋषिः भाववृत्तो देवता अनुष्टुप्छन्दोऽश्वमेधावभृथे विनियोगः ऋतञ्च सत्यञ्चाभीद्धात्तपसो ऽध्यजायत ततो रात्रिरजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरोऽजायत अहोरात्राणि विदधद्विश्वस्य मिषतोवशी सूर्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयद्दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः इति ।

## अथ गौणस्नानविधिः ।

तत्र जाबालिः ।

असामर्थ्याच्छरीरस्य देशकालाद्यपेक्षया ।
मन्त्रस्नानादिकाः सप्त केचिदिच्छन्ति सूरयः ॥

योगियाज्ञवल्क्यः ।

मान्त्रम्भौमं तथाग्नेयं वायव्यन्दिव्यमेव च ।
वारुणं मानसञ्चेव सप्त स्नानान्यनुक्रमात् ॥
आपो हिष्ठादिभिर्मान्त्रं मृदालम्भेन पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यङ्गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणञ्चावगाह्यञ्च मानसं विष्णुचिन्तनम् ।
कालदेशाद्*सामर्थ्यात्सर्व्वन्तुल्यफलं स्मृतम् ॥

कूर्म्मपुराणे ।

सुस्थस्य वारुणं† स्नानं ब्राह्मं‡ व्याध्ये§ जलक्षये¶ ।
दिव्यं श्रद्धावतामुक्तं वायव्यमुपपापिनाम् ॥

जाबालिः ।

अशिरस्कम्भवेत्स्नानं स्नानाशक्तौ तु कर्म्मिणाम् ।
आर्द्रेण वाससा वापि मार्ज्जनं दैहिकं विदुः ॥

---

* कालेन सह देशः कालदेशः तस्मात्कालदेशात्, कालाद्यर्थकालप्रयुक्तात् श्लेष्मलदेशप्रयुक्ताच्चेत्यर्थः । कालदोषादिति देशान्तरीयः पाठः । † मन्त्ररहितावगाहनमात्रम् । ‡ ब्रह्म वेदः मन्त्ररूपः तेन क्रियमाणं ब्राह्मं मान्त्रिकस्नानमिति यावत् । § स्नानसंवर्द्धनव्याधौ । ¶ स्नानयोग्यजलाभावे ।

नाभेरधः प्रविश्याप्सु कटिं प्रक्षाल्य मृज्जलैः।
आर्द्रेण कर्पटेनाङ्गं* कपिलं शोधनं स्मृतम्॥
विद्वत्सरस्वतीस्नानं प्राप्तं सारस्वतं मतम्।

विद्वद्वाक्येन पवित्रतापादनं सारस्वतस्नानमित्यर्थः। गात्राणां वृत्तं प्रासङ्गिकं सम्प्रति प्रकृतं प्रक्रम्यते। एवं स्नात्वा वस्त्रादिभिरङ्गं न प्रमृज्यात्।

तथाच शातातपः।

अप्रमृज्यान्न च स्नातो गात्राण्यम्बरपाणिभिः†।
न वा विधूनयेत्केशान्वाससी न विधूनयेत्॥
तिस्रः कोट्योऽर्द्धकोटी च यावद्रोमाणि मानवे।
स्रवन्ति सर्व्वतीर्थानि तस्मान्न परिमार्ज्जयेत्॥

देवलः।

देवाः पिबन्ति शिरसो मुखस्य पितरस्तथा।
रक्षसोऽपि च गन्धर्व्वा अधस्तात्सर्व्वजन्तवः॥

अतः।

अङ्गानि शस्त्री वस्त्रेण पाणिना न प्रमार्ज्जयेत्।

प्रमार्ज्जयेदिति गोदोहमात्रं तिष्ठेत्। एतच्च‡ शिष्टाचारादवगम्यते। ततो वाससी परिधायोरू प्रक्षालयेत्।

तथाच योगियाज्ञवल्क्यः।

---

* आर्द्रजीर्णवस्त्रेण। † अम्बरेण परिधानवस्त्रेण पाणिना च अङ्गानि न प्रमृज्यादित्यर्थः। अतएव स्नानसाव्या न पाणिना इत्यन्यत्रोक्तम्। ‡ गोदोहनकालश्चेत्यर्थः।

स्नात्वैवं वाससी धूते अक्लिन्ने परिधाय च ।
प्रक्षाल्योरू मृदा वाद्भिर्हस्तौ प्रक्षालयेत्तथा ॥

## अथ वस्त्रविधिः ।

तत्र भृगुः ।

ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवद्दिष्यते ॥

उल्बणं निविडं रक्तम् । रक्तं धातुरक्तम् ।

शातातपः ।

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
आहतं तद्विजानीयात्सर्व्वकर्म्मसु पावनम् ॥

ईषद्धौतं जलमात्रप्रक्षालितं यन्त्रादुत्तीर्य्य यदप्रक्षालितं तदप्याहतम् ।

यथाह शातातपः ।

आहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा ।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्व्वदा ॥

माङ्गलिक्यं विवाहादि ।

प्रागग्रमुदगग्रं वा धौतं वस्त्रं प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनःप्रक्षालनाच्छुचिः ॥
अन्यदेव भवेद्वासः शयनीये नराधिप ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ।
अन्यच्च लोकयात्रायामन्यदीश्वरदर्शने ॥

बौधायनः ।

उत्तरं वासः कर्त्तव्यं पञ्चस्वेतेषु कर्म्मसु ।
स्वाध्यायोत्सर्गदानेषु भुक्ताचमनयोः स्मृतम् ॥

उत्सर्गो मूत्रादेः । स्वाध्यायग्रहणं विहितसकलकर्म्मोपलक्षणार्थम् ।

योगियाज्ञवल्क्यः ।

अभावे धौतवस्त्रस्य पाट्टक्षौमाजिनानि च ।
कुतपं* यज्ञसूत्रं वा द्विवासा येन वा भवेत् ॥
यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्म्मणि ।
तृतीयमुपवीतं स्याद्वस्त्रालाभे† तदिष्यते ॥

जातूकर्ण्यः ।

वस्त्रोत्तरीयाभावे द्व्यङ्गुलं त्र्यङ्गुलं वा चतुरङ्गुलं वा सूत्रैर्वस्त्राकृतिपरिमण्डलमुत्तरीयं कुर्य्याद्वन्यं‡ चीवरं§ वा¶ । उत्तरीयाभावे तु धौतवस्त्रस्योर्द्ध्वभागेनोत्तरीयं कुर्य्यात् ।

तथाच पारस्करः ।

एकञ्चेद्वासो भवति तस्यैवोत्तरवर्गेण प्रच्छादयतीति । उत्तरवर्गेण उत्तरार्द्धेनेत्यर्थः ।

योगियोगीश्वरः ।

---

* सप्तपञ्चकुशम् । † वस्त्राभाव इति पाठान्तरम् । ‡ वनसम्बन्धि वल्कलादि । § खण्डवस्त्रम् । ¶ वस्त्रस्य चीवरं वेति पाठान्तरम् ।

नार्द्रवासा नार्द्धवासा नैकवासा स्थले जपेत् ।
कषायकृष्णवस्त्रञ्च मलिनं कीटदूषितम् ।
छिन्नाग्रञ्चोपवस्त्रं* च सूच्या ग्रथितमेव वा ॥

वर्ज्जयेदित्यर्थः । एतच्च सति विभवे ।

विष्णुपुराणे ।

क्षौमदेवार्च्चनाद्यासु क्रियासु स्नानभोजने ।
नैकवस्त्रः प्रवर्त्तेत द्विजो वाचनिके जपे ॥

जातूकर्ण्यः ।

परिधानाद्बहिःकच्छा निबद्धा ह्यासुरी मता ।
धर्म्मकर्म्मणि विद्वद्भिर्वर्ज्जनीया प्रयत्नतः ॥
परिधाय नवं वस्त्रमुत्तरीयञ्च मन्त्रतः ।
आचमेच्च द्विजो वस्त्रे धौते विपरिधाय च ॥

तत्रापूर्व्वग्रहण एव† मन्त्रः ।

पारस्करेण परिधास्ये यशोधास्येदीर्घायुत्वाय जरदष्टि-रस्मि । शतञ्च जीवामि शरदः पुरूचीरायस्पोषमभि-वर्द्धयिष्ये‡ । इति ।

उत्तरीयेऽपि ।

---

* वस्त्रसदृशम् । † पूर्व्वाभावे अभिनवग्रहण एवेत्यर्थः । ‡ पुरुचीरायस्पो-षमभिवर्द्धयिष्ये इत्येव पाठः बहुषु पुस्तकेषु दृश्यते परन्तु हलायुधेन ब्राह्मणसर्व्वस्वे अत्र अन्यप्रकारपाठो दर्शितो व्याख्यातश्च यथा सुवर्चा रायस्पोषमभिसंव्ययिष्ये इति रायस्पोषाय धनवृद्ध्यर्थं अभिसंव्ययिष्ये अभि सर्व्वतोभावेन सम्वरणं करिष्यामि व्येञ् सम्वरणे इत्यस्य रूपम् ।

यशसा मा द्यावापृथिवी यशसामिन्द्रापृथिवी यशसा-
मिन्द्राबृहस्पती। यशसां भगश्च भावि द्रव्यादमशी-
र्भामा प्रतिपद्यतामिति*।

तथा वासच्छत्रोपानहश्चापूर्व्वाणि† चेन्मन्वत इति।

नववस्त्रपरिधाने वारदोषो ज्योतिःशास्त्रे प्रदर्शितः।

तत्र सुरेश्वरः राजमार्त्तण्डे च।

मार्त्तण्डे च धनं व्रणः शशधरे क्लेशः सदा भूमिजे
वस्त्रं लाभकरस्बुधे सुरगुरौ विद्यागमः सम्मदः।
नानायोगरतिप्रमोदवनिताशय्यादिलाभो भृगौ
दैन्यं शाश्वतरोगवान् किल नरो धृत्वाम्बरं सौरिणा‡॥

श्रीपतिः।

रोहिणीषु करपञ्चके शुभे तूत्तरेऽपि च पुनर्व्वसुद्वये।
रेवतीषु वसुदैवते च भे नववस्त्रपरिधानमिष्यते॥

---

* बहुषु पुस्तकेषु यथा दृष्टं तथा रचितं परन्तु हलायुधकृते ब्राह्मणसर्व्वस्वे वैलक्षण्य-पाठो दृश्यते साधुर्मन्यते च यथा। यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो भगश्च माऽविदद्यशो मा प्रतिपद्यतामस्यार्थः। द्यावापृथिवी द्यावापृथिव्यौ मा मां छादयेता-मिति क्रियापदमत्राध्याहृतं बोद्धव्यम्। केन यशसा। किञ्च इन्द्राबृहस्पती यशसा मां छादयेताम्। किञ्च यशो मा मां अविदत् प्राप्नोतु। न केवलं यशो भगश्च मामविदत् प्राप्नोतु। किञ्च मा मां प्रतिपद्यतामभिगच्छतु। पुनः पुनरभिधानमादरार्थम्। मदीय-वस्त्राच्छादनेनाकाशादयो मां यशसा आच्छादयन्तु। उत्तरोत्तरं यशश्च सौभाग्यञ्च मम भवत्वित्याशंसा वाक्यार्थः। † पूर्व्वागृहीतानि चेत् अभिनवगृहीतानि चेदित्यर्थः। ‡ विशि-ष्टेण तृतीया शनिवारविशिष्ट इत्यर्थः।

## अथ क्रमप्राप्ततिलकविधिः ।

ब्रह्माण्डपुराणे भगवानुवाच ।

अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् ।
अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी ॥
एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् ।
वर्त्तिदीपाकृतिं वापि शङ्खाकारमतःपरम्* ॥
दशाङ्गुलप्रमाणन्तु उत्तरोत्तरमुच्यते ।
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतःपरम् ॥
सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ।
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं† भवेत् ॥
ललाटे केशवं विद्यान्नारायणमथोदरे ।
माधवं हृदि विन्यस्य गोविन्दं कण्ठकूपके ॥
विष्णुञ्च दक्षिणे कुक्षौ तद्भुजे मधुसूदनम् ।
त्रिविक्रमं कण्ठदेशे वामकुक्षौ तु माधवम् ॥
श्रीधरञ्च तथा न्यस्य वामबाहौ नरः सदा ।
पद्मनाभं पृष्ठदेशे ककुद्दामोदरं स्मरेत् ।
वासुदेवं स्मरेन्मूर्द्ध्नि तिलकं कारयेत्क्रमात् ॥

व्यासः ।

जाह्नवीतीरसम्भूतां मृदं मूर्द्ध्नि‡ बिभर्त्ति यः ।

* वेणुपत्राकृतिन्तथा इति पाठान्तरम् । † विविधमिति पाठान्तरम् । ‡ मूर्द्ध्नां इति देशान्तरीयः पाठः ।

बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥

सत्यतपाः ।

गोमतीतीरसम्भूतां गोपीदेहसमुद्भवाम् ।
मृदं मूर्द्ध्नि धरेद्यस्तु सर्व्वपापैः प्रमुच्यते ॥

ब्रह्माण्डपुराणे ।

श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरम्भवेत् ।
श्रीकरम्पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ॥

ब्रह्माण्डपुराणे ।

योगो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्व्वमूर्द्ध्वपुण्ड्रं विना कृतम् ॥
ऊर्द्ध्वपुण्ड्रं तथा कुर्य्यात्त्रिपुण्ड्रं भस्मना सदा ।
तिलकं वै द्विजः कुर्य्याच्चन्दनेन यदृच्छया ॥
ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात्क्षत्त्रियस्तु त्रिपुण्ड्रकम् ।
अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रजातिषु ॥
अथ माध्याह्निकां सन्ध्यां पूर्व्वोद्दिष्टां समाचरेत् ।
उपस्थानञ्च तत्रोक्तं जपश्च त्रिविधस्तथा* ॥

## अथ ब्रह्मयज्ञः ।

तत्र श्रुतिः ।

उदित्यमादित्यं उपस्थायोपविश्य हस्तावनिज्य त्रिरा-

---

* मानसिकोपांशुवाचनिकरूपः ।

चमेत्। द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदये आलभेत।

अथमाचमनप्रकारः।

ब्रह्मयज्ञानुष्ठानप्रकारः शौनकेनोक्तः।

प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानान्तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञायतेऽपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति। द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथा वा युक्तमात्मानं मन्येत यथा युक्तोऽधीयीत स्वाध्यायमोङ्कारपूर्व्वा व्याहृतीः सावित्रीमन्वाहपच्छोऽर्द्धर्चशः। सर्व्वामिति तृतीयकम्। यावन्मन्येत तावदधीत्यैतया परिदधाति नमो ब्रह्मणे इति।
अक्लिन्नवासा अनार्द्रवासाः महदुपस्तीर्य प्राक्कूलैर्दर्भैर्भुवं निविडं यथा भवति तथाच्छाद्य वास उपस्थं कृत्वा वामपादाङ्गुष्ठे दक्षिणपादाङ्गुष्ठं निधाय पादपार्ष्णिसम्मीलने कृते मध्य उपस्थाकृतिरिव भवति तदुपस्थमित्युच्यते। इतरेतरपादव्यत्या संस्थापनेनोपवेशनमुपस्थकरणमिति मञ्जर्य्याम्। अथवा यथोपदेशं कुर्य्यात्ते तथा वा युक्तात्मानं यथा समाहितमात्मानं मन्यते। ओङ्कारपूर्व्वा भूरादिव्याहृतित्रयं क्रमेण गायत्री पादादौ क्रमेण ततस्तथैव च। भूरादिव्याहृतिद्वयमर्द्धादौ क्रमेण ततस्तथैव च। तृतीयव्याहृति-

पूर्व्विकां सर्व्वां गायत्रीं पठेद्यावन्मन्येत तावद्गायत्रीजपानन्तरं ऋग्यजुःसामादिषु यावत्पठितुं मन्यते तावदधीत्य नमो ब्रह्मणे नमोऽग्नय इत्येतया परिदधाति परिधानं त्रिःपठनम्।

योगियाज्ञवल्क्यः।

आदावारभ्य वेदन्तु स्वाल्पोपर्य्युपरिक्रमात्।
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः॥
ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत्।
जप्त्वा च प्रणवं वापि ततस्तर्पणमाचरेत्॥

मनुः।

अपां समीपे नियतो नैत्यिकीं विधिमास्थितः।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः॥

अरण्यं गत्वेति यथा छर्द्दिर्न्न दृश्यते तथारण्यं गत्वेत्यर्थः।

तथाच श्रुतिः।

ब्रह्मयज्ञेन वक्ष्यमाणः प्राच्यां दिशि ग्रामादहिर्गच्छेद्-च्छर्द्दिदर्श उदीच्यां प्रागुदीच्यां वोदित आदित्य इति।

उदित आदित्य इत्युदयोत्तरकालः। स कालोऽपि गृह्यते न प्रातःकाल एव।

अतएव बृहस्पतिः।

स चार्व्वाक्तर्पणात्कार्य्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसाने वा नान्यत्रेति निमित्ततः॥ इति।

स ब्रह्मयज्ञ इत्यर्थः। वैश्वदेवावसान इति मनुष्ययज्ञानन्तरं

मनुष्ययज्ञस्य सनकाद्युद्देशेन हन्तकारो यो दीयते स। एवं श्रुतिरपि मनुष्ययज्ञानन्तरं ब्रह्मयज्ञं दर्शयति। नातिथिपूजा। देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति।

कूर्म्मपुराणे।

यदि स्यात्तर्पणादर्व्वाग् ब्रह्मयज्ञः कृतो न हि।
मनुष्ययज्ञङ्कृत्वैव ततः स्वाध्यायमारभेत्॥

यदि देवादिनिमित्तेनोक्तकाले ब्रह्मयज्ञो न कृतस्तदा कालान्तरेऽपि भवति। यदा ग्राममध्ये तदा मनसा पठेत्।

तथाच श्रुतिः।

ग्रामे न स्वाध्यायमधीयीत दिवा नक्तं वेति।

मनुः।

नैत्यिके* नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम्।
ब्रह्माहुतिहुतं† पुण्यमनध्यायवषट्कृतम्॥

तथा।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके।
नानुरोधस्त्वनध्याये होममन्त्रेषु चैव हि॥

वेदोपकरणं वेदाङ्गम्‡।

अत्र विशेषो गौतमेनोक्तः।

अथ यदि वातो वायादनयेऽ§वा विद्युत्पतेद्वा अवस्फु-

---

* नित्यवेदाध्ययने। † ब्रह्मणा वेदोक्तमन्त्रेणाहुत्या हुतम्। ‡ शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसाञ्चितिः, ज्योतिषामयनञ्चैव वेदाङ्गानि वदन्ति षट्। § विपत्तिं गच्छेदित्यर्थः।

ज्जैहा वा एकां* ऋचामेकं वा यजु†रेकमेकं सामा‡भिव्याहरेत् । भूर्भुवः स्वः सत्यं तपः श्रद्धायां जुहोमीति ।

अत्र वातो वायादित्याद्यनध्यायोपलक्षणम् ।

अतोऽनध्यायेऽप्येकर्चादिकमेव पठेन्नाधिकमिति गम्यते । तथा

आदावेवोङ्कृतं§ पूर्व्वं¶ परस्ताच्च‖ विरम्यते ।
कुशानुत्तरतः क्षिप्त्वा यथाचमनमाचरेत् ॥
इति विद्या तपो योनिर्वियोनि**र्विष्णुरीरितः ।
वाग्यज्ञेनार्च्चितो देवः प्रीयतां मे जनार्द्दनः ॥

इति ब्रह्मयज्ञविधिः ।

## अथ तर्पणम् ।

तत्र बृहस्पतिः ।

ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत् ।
जप्त्वाथ प्रणवं वापि ततस्तर्पणमाचरेत् ॥

शातातपः ।

---

* अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं रत्नधातममिति ऋग्वेदमन्त्रः । † इषे त्वोर्ज्जे त्वा वायवः स्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे इति यजुर्वेदमन्त्रः । ‡ अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि इति सामवेदमन्त्रः । § ओंकारपूर्व्वकमादौ पठनीयम् । ¶ पूर्व्वं पूर्व्ववत् । ‖ ओंकारपूर्व्वकं विरम्यते इत्यर्थः । ** वियोनिः विराम इत्यर्थः । अयोनिरिति पाठान्तरम् ।

तर्पणन्तु शुचिः कुर्य्यात्प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च पितृभ्यश्च ऋषिभ्यश्च यथाक्रमम् ॥

अत्राञ्जलिनियममाह ।

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम् ॥

विष्णुपुराणे ।

त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत् ।
ऋषीणान्तु यथान्यायं सकृच्चापि प्रजापतेः ॥

यथान्यायमित्यनेन देवानामिव त्रिरित्यर्थोऽवगम्यते । चशब्दो वाशब्दार्थेऽपिशब्दादञ्जलिद्वयं गृह्यते । अत्राञ्जलिसंख्यायां स्वस्वगृह्यानुसारेण व्यवस्था । येषां स्वशाखायां न कोऽपि विशेष आम्नातस्तेषां विकल्पः ।

योगियाज्ञवल्क्यः ।

अन्वारब्धेन सव्येन नाम्ना गोत्रेण वाप्यथ ।

कूर्म्मपुराणे ।

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
देवर्षीं स्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन् ॥

अत्रापि पूर्व्ववदेव व्यवस्था ।

एवञ्च ।

एकहस्तेन तोयेन न कुर्य्यात्पितृतर्पणम् ।
पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः ॥
उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति ।

स मूढ़ो नरकं याति कालसूत्रमवाक्शिराः* ॥

इति योगियाज्ञवल्क्यव्याघ्रादिवचनानि तानि तत्तच्छाखाप्रयुक्तानि† निषेधकानि न तु सर्व्वसाधारण्येन। अतो न काप्यनुपपत्तिः।

तत्र अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। देवर्षींस्तर्पयेदिति कूर्म्मपुराणवचने देवर्षीनिति विशेषोपादानादितराण्येकहस्ततर्पणवचनानि सामान्यानि विशेषविषयकूर्म्मपुराणवचनविषयानि देवर्षितर्पणे तु प्रविशन्ति इति चेन्नैवम् अन्वारब्धेन सव्येन नामगोत्रेण वाप्यथेति योगियाज्ञवल्क्येन नामगोत्रसहितसव्यहस्तान्वारब्धदक्षिणहस्ततर्पणविधानात्। गोत्रोच्चारणं पितॄणामेव न देवानां नाप्यृषीणामिति। एकहस्ततर्पणं देवर्षिपितृतर्पणसाधारणम् अत्र पूर्व्वोक्तैव व्यवस्था‡ ज्यायसी। विवाहादावेकहस्तेनैव। तथाच

कार्ष्णाजिनिः।

विवाहे श्राद्धकाले च पाणिनैकेन दीयते§। इति।

हारीतः।

वसित्वा¶ वसनं शुष्कं स्थले विस्तीर्णबर्हिषि।
विधिवत्तर्पणङ्कुर्य्यान्न तु पात्रे‖ कदाचन ॥

---

* अधःशिराः। † यस्य स्वशाखायामेकहस्तो विहितः तस्य शाखिनो द्विहस्तनिषेधकं वचनम्। एवं यस्य स्वशाखायां द्विहस्तौ विहितौ तस्य शाखिन एकहस्तनिषेधकमित्यर्थः। ‡ शाखिभेदेन व्यवस्था इत्यर्थः। § विवाहे वरपाद्यादिकं श्राद्धे कुशासनादिकमिति शेषः। ¶ परिधाय। ‖ जलं निक्षिपेदिति शेषः।

एतच्चानुद्धृतोदकस्थलतर्पणविषयम् ।

उद्धृतोदके तु स एव ।

पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्त्ते न स्थले न तु बर्हिषि* ॥

पात्रञ्चात्र पितामहेनोक्तम् ।

हेमरूप्यमयं पात्रं ताम्रकांस्यसमुद्भवम् ।
पितॄणां तर्पणे पात्रं मृण्मयन्तु परित्यजेत् ॥ इति ।

अत्र योगियाज्ञवल्क्यः ।

यद्युद्धृतेन सिञ्चेत्तु तिलान् संमिश्रयेज्जले ।
अन्यथा वामहस्तेन ततस्तर्पणमाचरेत् ॥

अन्यथा अनुद्धृते । अतोऽन्यथाचरेत्सव्ये तिलान्कृत्वा विचक्षण इत्यपि पाठः । अतोऽन्यथा तु सव्येन इत्यपि पाठः । येषां शाखिनां वामहस्तान्वारब्धेन दक्षिणहस्तेन तर्पणं तेषां वामहस्तेन तिलग्रहणमित्यनुसन्धेयम् ।

अत्रापि विशेषस्तेनोक्तः ।

आवाह्य पूर्व्ववन्मन्त्रैरास्तीर्य्य च कुशान् शुभान् ।
प्रागग्रेषु सुरान् सर्व्वान्दक्षिणाग्रेषु वै पितॄन् ॥

देववद्देवर्षीणामपि ।

कूर्म्मपुराणे ।

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः† ।
पितॄन्भक्त्या तिलैः कृष्णैः स्वशाखोक्तविधानतः ॥

---

* कुशोपरि । † यावोदकैः ।

गोभिलः ।

शुक्लैस्तु तर्पयेद्देवान्मनुष्यान् शबलैः*स्तिलैः ।
पितॄंस्तु तर्पयेत्कृष्णैस्तर्पयेत्सर्व्वदा द्विजः† ॥

तिलग्रहणे तु विशेषमाह मरीचिः ।

मुक्तहस्तेन दातव्यं न मुद्रां तत्र दर्शयेत् ।
वामहस्ते तिला ग्राह्या मुक्तहस्तस्तु दक्षिणः ॥

प्रदेशिन्यङ्गुष्ठाग्रसंयोगो मुद्रा । अतएव तर्ज्जन्याङ्गुष्ठेन वा तिला ग्राह्याः । तच्चोभयं दक्षिणहस्तस्यैव । अतएव मुक्तहस्तेन दातव्यमित्युक्त्वा मुक्तहस्तस्तु दक्षिण इति पुनरभिहितं मरीचिना । एतच्च येषामञ्जलिना तर्पणं तद्विषयम् । विषयान्तरे‡ तु पूर्व्वमभिहितम्§ ।

तिलस्थापनस्थानन्तु स्मृत्यर्थसारे ।

वामहस्ते तिलान् क्षिप्त्वा जलमध्ये तु तर्पयेत् ।
स्थले शाद्यन्तने¶ पात्रे रोममूले न कुत्रचित् ॥

जलतर्पणे रोमरहितप्रदेशे वामपाणौ तिलान् संस्थाप्य मुद्रारहितदक्षिणतर्ज्जन्यङ्गुष्ठयोरन्यतरेण तिलान् गृहीत्वा वामहस्ततले स्थापयित्वा तर्पयेदित्यर्थः । वामबाहुसलिलसंस्थापनव्यतिरिक्तमन्यजलतर्पणेऽपि समानम् । एवमुक्तप्रकारेण

* नानावर्णयुक्तैः । † क्वचिदिति पाठान्तरम् । ‡ वामहस्तान्वारब्धदक्षिणहस्ततर्पणे । § येषां शाखिनां वामहस्तान्वारब्धदक्षिणहस्तेन तर्पणं तेषां वामहस्तेन तिलग्रहणमित्यभिहितमित्यर्थः । ¶ नवतृणयुक्ते ।

स्थले स्थित्वा स्थले पात्रे वा तर्पणङ्कुर्य्यात्। न तु जल इति सिद्धम्।

तथाच यदुक्तं कार्ष्णाजिनिना।

देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलिम्।

असंस्कृतप्रमीतानां जलस्थितस्येति वचनानां विरोधः परिहरणीयः।

विष्णुस्तु स्थलस्थितस्यापि जलतर्पणं क्वचिदनुजानीते।

यत्राशुचिस्थलं वा स्यादुदके देवताः पितॄन्।

तर्पयेत्तु यथाकाममप्सु सर्व्वम्प्रतिष्ठितम्॥ इति।

हारीतः।

आर्द्रवासा जले कुर्य्यात्तर्पणाचमनं जपम्।

अत्र च अमुकस्तृप्यतु तृप्यतामिति वा। अमुकं तर्पयामीति वा प्रयोगो भवति।

तथाच योगियाज्ञवल्क्यः।

तृप्यत्विति समुच्चार्य्य तृप्यतामित्यथापि वा।

विधिज्ञः प्रक्षिपेत्तोयं देवादीनामशेषतः॥

बौधायनः।

अथ दक्षिणतः प्राचीनावीती पितॄन् स्वधा नमस्तर्पयामि पितामहानित्यादि।

तथाच स्मृत्यर्थसारेऽपि।

ब्रह्मादयो ये देवास्तान्देवांस्तर्पयामि भूर्देवांस्तर्पयामि भुवर्देवांस्तर्पयामि स्वर्देवांस्तर्पयामि। भूर्भुवःस्वर्देवां-

स्तर्पयामि । एवममीन् भूः पितॄनित्यादि ।

यमः ।

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥

गोशृङ्गस्यानियतप्रमाणत्वात्* विवक्षितं प्रमाणमाह दक्षः ।

प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् ।
उदङ्मनुष्यांस्तर्पयेत्† पितॄन् दक्षिणतस्तथा ॥
अग्रैस्तु तर्पयेद्देवान्मनुष्यान् कुशमध्यतः ।
पितॄंस्तु कुशमूलाग्रैर्विधिः कौशो यथाक्रमम् ॥

मरीचिः ।

विना रूप्यसुवर्णेन विना ताम्रतिलैस्तथा ।
विना मन्त्रैश्च दर्भैश्च पितॄणां नोपतिष्ठते ॥

नात्र रजतादिसमुच्चयो विवक्षितः ।

अतएव सत्यव्रतः ।

खड्गमौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणम् ।
मणिकाञ्चनदर्भैर्वा न शुष्केन कदाचन ॥ इति ।

शुष्केन केवलेन खड्गादिरहितेनेति यावत् । अत्र वाशब्दोपादानान्न समुच्चय इत्यर्थः ।

---

* गवां क्षुद्रवृहद्भेदादिति शेषः । † उदङ्मनुष्यानिति सामगभिन्नविषयकं सामगानां पश्चिममुखेन मनुष्यतर्पणविधानात् । तथाच सामवेदीयषड्विंशद्ब्राह्मणं मनुष्याणामेषा दिग्या प्रतीचीति ।

तथाच मरीचियोगियाज्ञवल्क्यावपि ।

तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।

तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥ इति ।

अथ खङ्गादिभिरशून्यो हस्तः कार्य्यो न तु खङ्गादिपात्रस्वीकरणम्* । तथा सति एकैकमञ्जलिर्देवा इत्याद्यञ्जलिविधायकवाक्यबाधापत्तेः† । एवं तर्हि खङ्गादिपात्रप्रशंसापराणां वाक्यानां विध्येकवाक्यताया अभावादप्रामाण्यं स्यादिति चेन्नैवं अर्घ्यदाने खङ्गपात्रविधायकवाक्यैकवाक्यत्वेन प्रशंसावाक्यानां सार्थकत्वान्नाप्रामाण्यम् ।

यच्च मनुनाभिहितम् ।

राजतैर्भाजनैरेषामथवा रजतान्वितैः ।

वार्य्यपि श्रद्धया दत्तमक्षयायोपकल्पते ॥ इति ।

एतदपि श्राद्धप्रकरणपरिपठितत्वादर्घ्यदानविषयमेव । अतश्च तर्पणे खङ्गादिमुद्रिकाभियुक्तो हस्तः कार्य्यः ।

तथाच याज्ञवल्क्यः ।

अनामिकाधृतं हेम तर्ज्जन्यां रूप्यमेव च ।

कनिष्ठिकाधृतखङ्गं तेन पूतो भवेन्नरः ॥ इति ।

यच्च ब्रह्मेन तर्पणप्रकरण एवाभिहितम् ।

सौवर्णेन पात्रेण राजतेनौडुम्बरेण खङ्गपात्रेणान्यपात्रेण वोदकं पितृतीर्थं स्पृशन्दद्यादिति ।

---

* खङ्गादिपात्रेण तर्पणकरणमित्यर्थः । † तौ युतावञ्जलिः पुमानित्यमरोक्तेः करद्वयसम्पुटेन तर्पणं प्रतीयते ।

तदपि तर्पणप्रकरणादुत्कृष्टार्घ्यप्रकरणे योऽयमञ्जलिवाक्यात्तदपेक्षया प्रकरणस्य दुर्ब्बलत्वात्। अथवा वाक्यप्रकरणशिष्टाचाराणामविरोधाय यस्मिन् पात्रे धृते अञ्जलिः शिथिलो न भवेत्तादृक्पात्रे शिष्टेनाञ्जलिना पितृतीर्थस्थमुदकं तर्पणेऽपि दद्यात्।

लिखितः ।

प्राङ्मुखो यज्ञोपवीती प्रागग्रैः कुशैर्द्दैवतातर्पणं देवतीर्थेन कुर्य्यात् ।

देवाश्च योगियाज्ञवल्क्येनोक्ताः ।

ब्रह्माणं तर्पयेत्पूर्व्वं विष्णुं रुद्रम्प्रजापतिम् ।
देवांश्छन्दांसि वेदांश्च ऋषींश्चैव सनातनान् ॥
आचार्य्यांश्चैव गन्धर्व्वानाचार्य्यतनयांस्तथा ।
संवत्सरं सावयवन्देवीश्चाप्सरसस्तथा ॥

आचार्य्यान् व्यासादीन् सावयवमवयवा मासादयः ।

यदा* देवानुगान्नागान् सागरान् पर्व्वतानपि ।
सरितोऽथ मनुष्यांश्च यक्षान्रक्षांसि चैव हि ॥
पिशाचांश्च सुपर्णांश्च भूतानथ पशूंस्तथा ।
वनस्पतीनोषधीश्च भूतग्रामचतुर्व्विधम्† ॥

विष्णुसमुच्चये ।

ततः कृत्वा निवीतन्तु यज्ञसूत्रमतन्द्रितः ।
प्राजापत्येन‡ तीर्थेन मनुष्यांस्तर्पयेत्पृथक् ॥

---

* तथेति पाठान्तरम् । † पिशाची गुह्यकः सिद्धो भूतोऽमी देवयोनय इत्यमरोक्तेः भूतग्रामचतुर्व्विधमित्यनेन एतच्चतुर्व्विधं परिगृह्यते । ‡ कनिष्ठाङ्गुलिमूलदेशरूपेण ।

कार्ष्णाजिनिः ।

सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्त्तिताः ॥

ततः स्वस्वशाखानुसारेण मण्डलऋषीन्* प्राजापत्यादिकान् ऋषींश्च तर्पयित्वा पितृतर्पणमारभेत् ।

तत्र योगियाज्ञवल्क्यः ।

अपसव्यं ततः कृत्वा भूत्वा च पितृदिङ्मुखः† ।
पितॄन्दिव्यानदिव्यांश्च पितृतीर्थेन‡ तर्पयेत् ॥

दिव्या वस्वादयः । अदिव्याश्च पित्रादयः ।

ते च दिव्यास्तेनैव दर्शिताः ।

ध्रुवोऽध्रुवश्च सोम्यश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ॥
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणो यमः ।

---

* ऋषिमण्डलान् मरीच्यादिसप्तर्षीनित्यर्थः । तथाच देवीपुराणे ग्रहगतिर्नामाध्यायः यथा सर्व्वेषाञ्च ग्रहाणाञ्च अधस्ताच्चरते रविः । रवेरूर्द्ध्वं स्थितः सोमः सोमान्नक्षत्रमण्डलम् । नक्षत्रेभ्यो बुधस्तूर्द्ध्वं बुधादूर्द्ध्वन्तु भार्गवः । तस्मादङ्गारकश्चोर्द्ध्वं तस्य चोर्द्ध्वं बृहस्पतिः । तस्मात् शनैश्चरश्चोर्द्ध्वं तस्योर्द्ध्वमृषिमण्डलमित्यादि । † दक्षिणदिङ्मुखः । ‡ तर्ज्जन्यङ्गुष्ठयोर्मध्यदेशरूपेण ।

अर्चिर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च।
एते वै द्वादशादित्या देवानां प्रवरा मताः॥

अत्र वस्वादितर्पणं पृथक् स्वपित्रादितर्पणञ्च पृथगुपात्तमिति वसुरूपं पितरं तर्पयामीत्येवं तर्पणम्।

स्मृत्यर्थसारे।

वसुरूपादित्यरूपान् श्राद्धार्थे तर्पयेत्पितॄन्।
नामगोत्रे समुच्चार्य्य तिलैस्तीर्थेषु संयताः॥ इति।

अथवा श्राद्धशब्दो गौण्या वृत्त्या तर्पणेऽपि वर्त्तत इति। वस्वादिनामसहितानामेव पित्रादीनां तर्पणमस्तु। यतः शिष्टाचार एवमेव प्रायशो दृश्यते।

उदकग्रहणे विशेषमाह योगियाज्ञवल्क्यः।

दक्षिणे पितृतीर्थेन जले सिञ्चेद्यथाविधि।
दक्षिणेनैव गृह्णीयात्पितृतीर्थेन संयतः॥

तथा।

सवर्णेभ्यो जलं देयं नासवर्णेभ्य एव च।
गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्व्वशः॥ इति।

अनुपूर्व्वशः पित्रादिक्रमेण। अत्र यद्यपि असवर्णेभ्य इत्यत्र विशेषोपादानङ्कृतं तथाप्युत्तमवर्णेन हीनवर्णं प्रति न कार्य्यं हीनवर्णेनोत्तमवर्णोद्देशेन कृते न दोषः। यतस्तद्वर्णतापत्ति-र्दोषत्वेनाभिहिता स्मृतिषु। हीनस्योत्कृष्टत्वं* न दुष्टम्। उत्कृ-

* उत्कृष्टवर्णत्वेन तर्पणम्।

यरा ... त्वञ्च दृष्टमेव। सवर्णशब्दो मूर्द्धाभिषिक्तादिजातीनामु-
...म्। यद्यप्यसवर्णसापत्नमातृभ्रात्रादयोऽप्यसवर्णाः
...तर्पणङ्कार्य्यं सुमन्तुना तेषां मात्रादिसमत्वप्रतिपाद-
ग्रहः ...तृपत्न्यः सर्व्वा मातरस्तद्भ्रातरो मातुलास्तद्दुहितरश्च
...ऽपत्यानि भागिनेयानि इति। यत्र समत्वोपादानं
...ेक्षया किञ्चिन्न्यूनता भवतीति। नात्र तत्प्राधान्य-
...न्निहितसवर्णतर्पणानन्तरमेव तत्तर्पणमिति विवेकः।
...वचनेऽपि सवर्णानामेव* मात्रा साम्यं भवतु मा
...वर्णानामिति चेन्न तथा सति पितृपत्न्यः सर्व्वा
... न ब्रूयादुपात्तश्च† सर्व्वशब्दो न पितृपत्न्येव‡।
तत्र ...ब्दासङ्कोचाय पूर्व्वोक्त एव युक्तः पक्षः। एतेन
...पि तथा।

...ष्वात्ताः सोमपाश्च तथा वर्हिषदोऽपि च।
वृद्धमनु ...स्याज्जीवत्पितृक एतान्विद्यात्तदा पितॄन्॥
... वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत्।
... ेव प्रमीतांश्च प्रमीतपितृको द्विजः॥ इति।

... वत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्।
... णस्य क्वचिदपवादो मरीचिनोक्तः।
... ं रविवारे च गृहे जन्मदिने तथा॥
इति तर्प...
प्रयोगः।

---

...ानामित्यर्थः। † विहितश्चेत्यर्थः। ‡ पितृपत्नीमात्राणामित्यर्थः।

भृत्यपुत्त्रकलत्रार्थी न कुर्य्यात्तिलतर्पणम् ॥

तथा ।

पक्षयोरुभयो राजन् सप्तम्यां निशि सन्ध्ययोः ।
विद्यापुत्त्रकलत्रार्थी तिलान् पञ्चसु* वर्ज्जयेत् ॥
भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणम् ॥

स्मृत्यर्थसारे ।

विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्द्धं तदर्द्धञ्च† नैत्यके तिलतर्पणम् ॥
तिथितीर्थविशेषेषु कार्य्यं प्रेतेऽथ सर्व्वदा ।
पिण्डान् सपिण्डा नो दद्युः प्रेतपिण्डं विनात्र तु ॥

अत्र विवाहादौ ।

पितृयज्ञे च यज्ञे च गयायां दद्युरेव ते ।
गयासाम्यं मृताहस्य केचिदाहुः पुराणगाः ॥

तथा ।

तीर्थे तिथिविशेषे च गयायां‡ प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम् ॥
अकृत्वा तर्पणं यस्तु वस्त्रं निष्पीडयेन्नरः ।
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥

---

* सप्तमीद्वयं निशा सन्ध्याद्वयमिति पञ्च । † विवाहे सति एकवर्षं तिलतर्पणं न कार्य्यम् उपनयने षण्मासं चूडायां त्रिमासमिति एकेषां मतम् । ‡ गङ्गायामिति देशान्तरीयः पाठः ।

पराशरः ।

द्वादश्यां पञ्चदश्याञ्च संक्रान्तौ श्राद्धवासरे ।
वस्त्रं निष्पीड़येन्नैव न च क्षारेण योजयेत् ॥

शङ्खः ।

एवं यः सर्व्वभूतानि तर्पयेदन्वहन्द्विजः ।
स गच्छेत्परमं स्थानं तेजोरूपमनामयम् ॥

इति तर्पणम् ।

## अथ यमतर्पणम् ।

तत्र स्कन्दपुराणे ।

कृष्णपक्षचतुर्द्दश्यामङ्गारकदिनं यदा ।
तदा स्नात्वा शुभे तोये तर्पयेद्यमनामभिः ॥

वृद्धमनुः ।

याङ्काञ्चित्सरितम्प्राप्य कृष्णपक्षे चतुर्द्दशीम् ।
यमुनाञ्च विशेषेण नियतो नियतेन्द्रियः ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥

इति तर्पयेदिति शेषः । यमाय नमः यमं तर्पयामीति प्रयोगः ।

गद्यव्यासोऽपि ।

कृष्णत्रयोदश्यां चतुर्द्दश्यां वा ।

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।

वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥ इति ।

एभिः सप्तभिर्नमस्कारमन्त्रैः सप्तोदकाञ्जलीन्दद्यात्सर्व्वपापैः प्रमुच्यते । इति ।

ब्रह्ममनुः ।

एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन् कुर्य्याज्जलाञ्जलीन् ।

तथा ।

दीपोत्सवचतुर्द्दश्यां कार्य्यन्तु यमतर्पणम् ।

अपरोऽपि विशेषः स्कन्दपुराणे ।

दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः ।

देवतीर्थेन देवत्वात्तिलैः प्रेताधिपो यतः ॥

इति यमतर्पणम् ।

## अथ देवतार्च्चनम् ।

एवं तर्पणानन्तरं सूर्य्यार्घ्यं निवेद्य जलदेवं नमस्कृत्याचम्याभ्युक्ष्य गृहङ्गत्वा विष्ण्वादिपूजां कुर्य्यात् ।

योगियाज्ञवल्क्यः ।

ततः सूर्य्यमुपस्थाय सम्यगाचम्य च स्वयम् ।

अभ्युक्षणं समादाय संयतात्मा गृहं व्रजेत् ॥

तथाच नृसिंहपुराणे ।

ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पजलान्वितम् ।
उत्थाप्य मूर्द्धपर्य्यन्तं हंसः शुचिषत्*दुच्चरेत् ॥
जलदेवं नमस्कृत्य ततो गच्छेद्गृहम्बुधः ।
पौरुषेण तु सूक्तेन ततो विष्णुं समर्च्चयेत् ॥ इति ।

हारीतः ।

कुर्व्वीत देवतापूजां जपयज्ञादनन्तरम् ।

जपयज्ञो ब्रह्मयज्ञः ।

मरीचिः ।

विधाय देवतापूजां प्रातर्होमादनन्तरम् ।
पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनमिति ॥

अत्र पूर्व्वाह्णो देवतार्च्चने मुख्यः कालः ।
एवकारस्मरणान्माध्याह्निकानन्तरं कालोऽपि मुख्यसदृशः ।

तथा कूर्म्मपुराणे ।

पौरुषेण तु सूक्तेन ततो विष्णुं समर्च्चयेत् ।
वैश्वदेवं ततः कुर्य्याद्बलिकर्म्म तथैव च ॥ इति ।

तथा ।

कुर्व्वीत देवतापूजां जपयज्ञादनन्तरम् ।

करोति तदा पूर्व्वाह्ण एव । अथ तर्पणात्पूर्व्वकाले करोति

---

* हंसः शुचिषद्वसुरन्तरीक्ष सद्धोता वेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ।

तदा तर्पणानन्तरमेव । जलदेवतानमस्कारानन्तरं गृहं गत्वा विष्णुपूजायाः नृसिंहपुराणे विधानात् ।
पूज्यदेवता निगमे दर्शिताः ।

ब्रह्माणं विष्णुमीशानं सूर्य्यमग्निं गणाधिपम् ।
दुर्गां सरस्वतीं लक्ष्मीं गौरीं वा नित्यमर्च्चयेत् ॥

पद्मपुराणे ।

आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यमन्ते च कुलदेवताम् ॥

योगियाज्ञवल्क्यः ।

देवानां सवनं कुर्य्याद्ब्रह्मादीनाममत्सरः ॥
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्द्दनात् ॥
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्च्चितं स्याज्जगदिदं तेन सर्व्वं चराचरम् ॥
अप्स्वग्नौ हृदये सूर्य्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्च्चनं मुनिभिः स्मृतम् ॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुभं तस्य देवता ।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ॥
पञ्चमीं वामजानौ तु षष्ठीं वा दक्षिणे न्यसेत् ।
सप्तमीं वामभागे तु अष्टमीं दक्षिणे न्यसेत् ॥

नवमीं नाभिमध्ये तु दशमीं हृदये तथा ।
एकादशीं कण्ठदेशे वामबाहौ ततः परम् ॥
त्रयोदशीं दक्षिणे तु आस्यदेशे चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीञ्चैव षोड़शीं मूर्द्ध्नि विन्यसेत् ॥
एवं न्यासविधिं कृत्वा पश्चाद्योगो विधीयते ।
आद्यया वाहयेद्देवं कृत्वा तु पुरुषोत्तमम् ॥
द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया ।
अर्घ्यश्चतुर्थ्या दातव्यः पञ्चम्याचमनीयकम् ॥
षष्ठ्या स्नानं* प्रदातव्यं सप्तम्या वस्त्रमेव च ।
यज्ञोपवीतमष्टम्या नवम्या त्वनुलेपनम् ॥
पुष्पं दशम्या दातव्यं एकादश्या तु धूपकम् ।
द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम्† ॥
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम् ।
अर्च्चयित्वा तु देवेशं षोड़श्या‡ तु विसर्ज्जयेत् ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्§ ॥ इति ।

एवमितरेषामपि ब्रह्मादीनां पूजनं कार्य्यं तत्तत्प्रकारैर्वैदिकैर्मन्त्रैः । तदशक्तौ¶ तन्नामधेयमन्त्रैर्नमोऽन्तैः‖ पूजयेत् । अथवा वेदाविरुद्धस्वदीक्षानुसारेण** वा देवतार्च्चनम् ।

इति देवतार्च्चनम् ।

---

* स्नानार्थं जलम् । † निवेदनं निवेदनीयद्रव्यं नैवेद्यमिति यावत् । ‡ षोड़श्या इत्यन्तया ऋचा इति शेषः । § स्नानीयं जलं दत्त्वा आचमनीयं जलं दद्यात् एवं वस्त्रादि दत्त्वापि । ¶ वैदिकमन्त्राज्ञाने । ‖ ओं ब्रह्मणे नम इत्यादिमन्त्रैरित्यर्थः । ** तन्त्रोक्तमन्त्रानुसारेण ।

# अथ पूजोपयुक्तपुष्पाणि ।

तत्र नृसिंहपुराणे ।

पुष्पैररण्यसम्भूतैः पत्रैर्वा वारिसम्भवैः ।
अपर्य्युषितनिश्छिद्रैः प्रोक्षितै*र्जन्तुवर्ज्जितैः ।
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेद्धरिम् ॥

हरिरित्युपलक्षणम् ।

शमीपुष्पं विल्वपुष्पं चम्पकं तगरन्तथा ।
करवीरं तथा श्वेतं पालाशं कुशपुष्पकम् ॥
वनमालाप्यशोकञ्च सेवन्ती कुब्जमालती ।
त्रिसन्ध्यञ्च तथा श्वेतं कुन्दञ्च शतपत्रकम् ।
मल्लिका चैव जाती च सर्व्वपुष्पाद्विशिष्यते ॥
जातीपुष्पसहस्रेण यच्छेन्माल्यं सुशोभनम् ।
विष्णवे विधिवद्भक्त्या तस्य पुष्पफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेद्विष्णुपुरे श्रीमान्विष्णुतुल्यपराक्रमः ॥

पत्राण्यपि ।

अपामार्गं भृङ्गराजं शमीपत्रञ्च खादिरम् ।
दूर्व्वां च कुशपत्रञ्च दमनं मरुवकन्तथा ॥
ततः श्रेष्ठं विल्वपत्रं ततस्तु तुलसी वरा ।

---

* प्रस्फुटितैः ।

एतेषाञ्च यथालाभं पत्रैर्वाप्यर्चयेद्धरिम् ।
सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
येषां न सन्ति पुष्पाणि प्रशस्तान्यर्च्चने हरेः ।
पल्लवान्यपि तेषां स्युः शस्तान्यर्च्चाविधौ हरेः ॥
वीरुधाना*मभावे तु बर्हिषा वार्च्चयेद्धरिम् ।
सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
अपराधसहस्राणि अपराधशतानि च ।
पद्मेनैकेन देवेशमभ्यर्च्य कमलापतिम् ।
वर्षायुतसहस्रस्य पापस्य कुरुते क्षयम् ॥
अगस्त्यवृक्षसम्भूतैः कुसुमैरसितैः सितैः ।
येऽर्च्चयन्ति च देवेशं तैः प्राप्तम्परमं पदम् ॥
सुवर्णकेतकीपत्रं यो ददाति जनार्द्दने ।
कोटिजन्मार्ज्जितं पापं दहते गरुड़ध्वजः ॥
सकृत्कादम्बपुष्पेण हेलया हरिरर्च्चितः ।
सप्तजन्मानि देवर्षे तस्य लक्ष्मीर्न दूरगा ॥
कुम्भीपुष्पन्तु देवर्षे यः प्रयच्छति केशवे ।
सुवर्णपलमात्रन्तु पुष्पे पुष्पे भवेन्मुने ॥

गरुड़पुराणे ।

धात्रीफलेन यत्पुण्यं जयन्त्याः समुपोषणे ।
खगेन्द्र स लभेन्मर्त्यस्तुलसीपूजनेन तत् ॥

---

* लतापुष्पाणाम् ।

यथाकथञ्चिदाहृत्य कुसुमैः पूजयेद्धरिम् ।
नाकपृष्ठमवाप्नोति नात्र कार्य्या विचारणा ॥

स्कन्दपुराणे ।

विष्णुमूर्द्ध्नि स्थितं पुष्पं शिरसा यो वहेन्नरः ।
अपर्य्युषितपापः* स्याद्यावद्युगचतुष्टयम् ॥
पुष्पाभावेऽथ पत्राणि देयानि च सुरार्च्चने ।
पत्राभावे पयो देयं तेन पुण्यश्रुतिः ध्रुवम् ।

वर्ज्ज्यानि च विष्णुधर्म्मे अभिहितानि ।

उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत् ।
अन्यायतनजातानि कीटकानि† तथैव च ॥
रक्तान्यकालजातानि चैत्यवृक्षोद्भवानि च ।
श्मशानजातपुष्पाणां दानं देवे विवर्ज्जयेत् ॥
क्रकराख्यस्य पुष्पाणि तथान्धकरकस्य च ।
कृष्णञ्च कूटजं चार्कं नैव देयं जनार्द्दने ॥

क्रकरः करीरः‡ ।

शाल्मलञ्च शिरीषञ्च बृहतीं गिरिमल्लिकाम् ।
सर्ज्जकञ्चैव कुष्माण्डं काञ्चनारिञ्च वर्ज्जयेत् ॥

अथ शिवे वर्ज्ज्यानि प्रासाददीपिकायाम् ।

जवाबन्धूकसिन्दूरं तथा तैसन्ध्यकीयुते ।
दमती केतकी यूथी मालती कुटजानि च ॥

---

* अक्षयपापः स्यादित्यर्थः । † कीटविद्धानि । ‡ कण्टकाढ्यः ।

घुसृणञ्च* खमारञ्च प्रमादेनापि नार्पयेत् ।
वर्व्वरी सर्ज्जपत्री च तथा च कुसुदद्वयम् ॥
अतिपक्वान्यपक्वानि पतितानि विवर्जयेत् ।
आरण्यान्यप्यगन्धीनि सकीटं चोग्रगन्धि यत् ॥
अशुद्धपात्रपात्रस्थं वासोभिः कुत्सितात्मभिः ।
आनीतं नार्पयेच्छम्भौ प्रमादादपि दीपकृत् ॥

देवीपुराणे ।

शिवे विवर्ज्जयेत्कुन्दमुन्मत्तञ्च हरेः सदा ।
देवीनाञ्चार्कमन्दारौ आदित्ये तगरं तथा ॥

विष्णुरहस्ये ।

न शुष्कैः पूजयेद्विष्णुं कुसुमैर्न महीगतैः† ।
न विशीर्णदलैर्म्लिष्टैर्न वा चासुरिकाश्रितैः ॥

आसुरिकाश्रितैः बलाद्विकाश्रितैः ।

तथा ।

जलं पर्य्युषितन्त्याज्यं पत्राणि कुसुमानि च ।
तुलस्यगस्त्यबिल्वानि‡ गाङ्गं वारि न दुष्यति§ ॥
स्नानं कृत्वा तु यः कश्चित्पुष्पं वै चिनुते द्विजः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत् ॥

एतच्च मध्यन्दिनस्नानोत्तरपरं वेदितव्यम् ।

---

* कुङ्कुमम् । † सर्व्वं भूमिगतं दुष्टं शेफालीं बकुलं विनेति शिष्टपरिगृहीतवचनात् एतद्व्यातिरिक्तं दुष्टम् । ‡ अगस्त्यपुष्पं वकपुष्पम् । § न पर्य्युषितं भवति ।

# अथ नित्यश्राद्ध-पञ्चमहायज्ञानां स्वरूपाणि।

तत्र यमः।

पञ्चसूना गृहस्थस्य वर्त्तन्ते बहवः सदा।
कण्डनी पेषणी चुल्ली जलकुम्भ उपस्करः॥
एता निवाहयेद्विप्रो वध्यते वै मुहुर्मुहुः।
एतासां पावनार्थाय पञ्चयज्ञाः प्रकीर्त्तिताः॥

सूना हिंसास्थानं कण्डन्युदूखलादि पेषणी दृषदादि चुल्ली पाकस्थानं जलकुम्भ उदाधानमुपस्करः शूर्पादि। वध्यते पापेन युज्यते इत्यर्थः। न च कण्डन्यादिनिमित्तश्रवणान्नैमित्तिकत्वं पञ्चमहायज्ञानां पञ्चयज्ञविधानन्तु गृही नित्यं न हापयेदिति शङ्खेन नित्यत्वाभिधानात्।

ते च यज्ञाः के इत्याकाङ्क्षायां यमः।

ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च।
भूतयज्ञो नृयज्ञस्तु पञ्चयज्ञाः प्रकीर्त्तिताः॥

एतच्च लक्षणमाह मनुः।

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥

अध्यापनमध्ययनं तर्पणं पितृश्राद्धमिति यावत्।

यतः स एवाह।

स्वाध्यायेनार्च्चयेदृषीन् होमैर्देवान्यथाविधि।
पितॄन् श्राद्धेन नॄनन्नैः*भूतानि बलिकर्म्मणा॥ इति।

* तर्पयेद् इति पाठान्तरम्।

पितृयज्ञे विकल्पमाह कात्यायनः ।

श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वेति ।

नित्यश्राद्धं वा पितृयज्ञः । अथवा वैश्वदेवमध्ये पितृभ्यः स्वधास्त्विति यो बलिर्दीयते स पितृयज्ञ इत्यर्थः । बह्वृचां गृह्ये देवपितृभूतमनुष्यब्रह्मयज्ञाः पञ्च महायज्ञा आद्यास्त्वार एव वैश्वदेविकं बलिकर्म्म चेत्याहुः । अथवा पृथगिति ।

बौधायनोऽपि ।

अग्नये स्वाहा इत्यादि षडाहुतीः एष वैश्वदेवः सन्तिष्ठते । धर्माय स्वाहेत्यादि नमो रुद्राय नमः पशुपतये इत्यादिभिर्बलिहरणं बलवान् हरत्येतत् सन्तिष्ठते । देवेभ्यः स्वाहेत्यग्नौ जुहोत्येष देवयज्ञः सन्तिष्ठते । पितॄनुद्दिश्य एकं ब्राह्मणं भोजयेदपि वा दक्षिणेनाग्निं दक्षिणान्दर्भान् संस्तीर्य्य तेषु पिण्डं ददाति पितृभ्यः स्वधास्त्वित्यपि वा आपस्तत्पितृयज्ञः सन्तिष्ठते । उत्तरेणाग्निं शुचौ देशे प्रागग्रान्दर्भान् संस्तीर्य्य गन्धपुष्पधूपदीपैरलङ्कृत्य बलिमुपहरति भूतेभ्यो नम इति भूतेभ्यः तद्भूतयज्ञः सन्तिष्ठते । मनुष्ययज्ञार्थमतिथिं भोजयेदपि वा हन्तकारं* ब्राह्मणेभ्यो ददाति मनुष्येभ्यो हन्तेति । हन्तकारः पर्य्याप्तान्नदानसमर्थस्य ।

कार्ष्णाजिनिः ।

---

* मनुष्येभ्यो यद्दीयते तद्धन्तकारेण दीयते हन्तकारस्त्यागार्थकः ।

भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा ।

पुष्कलमग्रिममिति पर्य्यायः ।

भिक्षादिलक्षणञ्च मनुनाभिहितम् ।

ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते ॥ इति ।

आपस्तम्बपरिशिष्टेऽपि ।

वैश्वदेवबलिहरणानन्तरमग्रं दत्त्वा देवयज्ञार्थमुद्धृतान्ना-द्देवताभ्यः स्वाहेत्येकाहुतिमन्तौ जुहुयुः पितृयज्ञार्थमपि वैश्वदेवबलिहरणशिष्टादन्नात्प्राचीनावीतिना दक्षिणतोऽग्नेः पितृतीर्थेन पितृभ्यः स्वधास्त्विति बलिं हरेयुर्भूतयज्ञार्थं वैश्वदेवशिष्टान्ना*द्देवोत्तरतोऽग्नेर्देवतीर्थेन बलिं दद्युरिति ।

एवंविधान्यन्यान्यपि विरुद्धवचनानि ग्रन्थगौरवभयान्न लिखितानि । अत्र च† सर्व्वत्र स्वशाखाभ्यः‡ व्यवस्था ।

इति पञ्चयज्ञस्वरूपनिर्णयः ।

## अथ नित्यश्राद्धम् ।

मनुना दद्यादहरहः श्राद्धमिति नित्यश्राद्धं विधाय वैश्वदेवस्य सिद्धस्य गृह्याग्नौ विधिपूर्व्वकमित्यादिना पश्चाद्वैश्व-

---

* वैश्वदेवावशिष्टादन्नादित्यर्थः । † विरुद्धवचनेषु चेत्यर्थः । ‡ स्वस्वशाखानुसारेणेत्यर्थः ।

विधानात्। प्रथमं नित्यश्राद्धं पश्चाद्वैश्वदेव इति केचित्।
ापि पक्षे येषान्तु नित्यश्राद्धमेव पञ्चयज्ञान्तःपाति तेषां
ाखानुसारेण क्रमः केचन वैश्वदेवादनन्तरं कुर्वन्ति।
पाठक्रममननादत्र श्राद्धविषये
र्कण्डेयपुराणे।

कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव च॥ इति।

विशेषमाह प्रचेताः।

नामन्त्रणं न होमश्च नावाहनविसर्ज्जने।
न पिण्डदानं न सुरान्नित्ये कुर्य्याद्विजोत्तमः॥
उपवेश्यासनं दत्त्वा सम्पूज्य कुसुमादिभिः।
निर्दिश्य भोजयित्वा तु किञ्चिद्दत्त्वा विसर्जयेत्॥

तेषां ... ात्र वैश्वदेवान् किञ्चिद्दत्त्वा इति दक्षिणार्थम्।
ये ... ः।
इति ... नावाहनं स्वधाकारः पिण्डाग्नौकरणादिकम्।
एतच्च ... ब्रह्मचर्य्यादि नियमो वैश्वदेवास्तथैव च॥
तथ ... ।

तत्तु षट्पुरुषं ज्ञेयं दक्षिणापिण्डवर्ज्जितम्।

राणे।

यद्येकं भोजयेद्विप्रन्त्रीनुद्दिश्य पितॄंस्तथा। इति।

... मातामहादीनामपि प्रदर्शनार्थम्।
पुष्टिकामो ... ात्यायनोऽनुकल्पमाह।

एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये* ।
अदैवं नास्ति वेदेभ्यो† भोक्तुं भोज्यमथापि वा ॥
अभ्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि ।
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् ॥

एतदुद्धृतान्नं ब्राह्मणायैव दद्यात्तदभावे गोभ्यः ।
तथाच कूर्म्मपुराणे ।

उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ॥

तथा ।

सर्व्वेषामप्यलाभे तु दत्तं गोभ्यो निवेदयेत् । इति ।

यदा गवामप्यभावस्तदा विष्णूक्तम् ।

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।

अन्नाद्येनोदकेन श्राद्धोत्सृष्टेनोदकेन ।

पयोमूलफलैर्व्वापि पितॄणां प्रीतिमावहन् ॥ इति ।

पयः क्षीरम् । एतच्च नित्यश्राद्धं श्राद्धान्तरे नियतम्‡ ।
तथाच मार्कण्डेयः ।

नित्यक्रियां पितॄणान्तु केचिदिच्छन्ति मानवाः ।
न पितॄणां तथैवान्ये शेषं पूर्व्ववदाचरेत् ॥ इति ।

नित्यक्रिया नित्यश्राद्धं शेषं वैश्वदेवादिकम् ।
अत्रैवं व्यवस्था यत्रामावास्यानान्दीमुखश्राद्धादिनित्यश्राद्धदेवता

* नित्यश्राद्धसिद्धये इत्यर्थः । † वैश्वदेवेभ्यः । ‡ श्राद्धान्तरे कृतेऽपि अवश्यं कर्त्तव्यम् ।

दृष्टा भवन्ति न तत्र नित्यश्राद्धं यत्र च सांवत्सरिकादिषु नेष्टा नित्यश्राद्धदेवतास्तत्र कर्त्तव्यमिति ।

तथाच चमत्कारखण्डे ।

नित्यश्राद्धं न कुर्व्वीत प्रसङ्गाद्यत्र सिध्यति ।
श्राद्धान्तरात्तदान्यत्र नित्यत्वात्तन्न हापयेत्* ॥

इति नित्यश्राद्धविधिः ।

## अथ वैश्वदेवविधिः ।

तत्र प्रथमोपक्रमे आपस्तम्बः ।

तेषां मन्त्राणामुपयोगे द्वादशाहमुभयोरधःशय्या ब्रह्मचर्य्यं क्षारलवणवर्ज्जनं चोत्तमस्यैकरात्रमुपवास इति ।

तेषां वैश्वदेवबल्यर्थमन्त्राणामुपयोगः प्रथमोपक्रमः । उत्तमस्य ये भूताः प्रचरन्तीत्यस्य मन्त्रस्य† उपयोग एकरात्रमुपवास इति प्रतिवचनमिति । ततो वैश्वदेवादिकं कर्म्म कुर्य्यात् । एतच्च सायं प्रातः ।

तथाच कात्यायनः ।

सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च ।
अनश्नतापि सततमन्यथा किल्बिषी भवेत् ॥

---

* न त्यजेत् । † ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो वितुदस्य प्रेष्याः तेभ्यो बलिं पुष्टिकामो ददामि मयि पुष्टिं पुष्टिपतिर्ददातु इति मन्त्रः ।

एतेन पुरुषार्थमुक्तं भवति वैश्यदेवस्य।

अतएव परिशिष्टे प्रवासस्थितस्याप्यवश्यकर्त्तव्यता दर्शिता।

प्रवसेदाहिताग्निश्चेत्कदाचित्कालपर्य्ययात्*।
यस्मिन्नग्नौ भवेत्पाको वैश्वदेवस्तु तत्र वै॥

मनुरपि पुरुषार्थत्वमिवाह।

वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत्।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत्॥

वैश्वदेवानन्तरमतिथिपूजायां कृतायां द्वितीयोऽतिथिर्यदागच्छति अन्नञ्च पक्वं नास्ति तदा पुनः पाकं कृत्वा तस्मै दद्यान्न बलिं हरेत्। वैश्वदेवं न कुर्य्यादित्यर्थः। यद्यन्नसंस्कारार्थत्वं वैश्वदेवस्य तदा पुनःकरणे निषेधो युज्यते इति तात्पर्य्यम्। केचनान्नसंस्कारत्वं पुरुषार्थञ्चेत्युभयार्थमिच्छन्ति। अस्मिन् पक्षे उभयात्मकस्य आश्रयीतिसंज्ञा नान्यपूर्व्वविषयाणि द्रव्यसंस्कारकारीणि च कर्म्माणिस्विष्टिकृदुत्तमप्रयाजादीनि नान्यान्यपि संज्ञकानीति व्यवहरन्ति मीमांसकाः एतच्च लौकिके विवाहाग्न्यादिषु कुर्व्वीत।

तथाच याज्ञवल्क्यः।

स्मार्त्तं कर्म्म विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही।
दायकालाहृते† वापि श्रौतं वैतानिकाग्निषु॥

---

* कालदोषेण संस्कृताग्न्यलाभात्। † विभागकालाहृते इति मिताक्षरा। आहृते आरब्धे।

शातातपः ।

लौकिके वैदिके वापि हुतोत्सृष्टे जले चितौ* ।

इत्याहृत्य उत्सृज्य जुहुयात् लौकिकाग्नेः पात्रान्तरकरणमाहरणं स्मार्त्ताग्नेस्तु अग्न्युद्बोधनमाहरणमुन्मज्जनं भस्मापकरणम् ।

विवाहिकेऽग्नौ कुर्व्वीत गृह्यकर्म्म यथाविधि ।

पञ्चयज्ञविधानन्तु पङ्क्तिं चान्वाहिकीं† गृही ॥

अत्र विशेषश्चतुर्विंशतिमते ।

प्रतिहोमन्तु निर्व्वर्त्य समुद्धृत्य हुताशनम् ।

शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ।

समुद्धृत एव शेषः तं महानसे कृत्वेत्यर्थः ।

यस्मिन्नग्नौ पाकस्तत्रैव होमः ।

तथाच कूर्म्मपुराणे ।

यदि स्याल्लौकिके पाकस्ततोऽन्नं तत्र हूयते ।

शालाग्नौ तत्र चेदन्नं विधिरेष सनातनः ॥ इति ।

एतदनुसारेणान्यान्यपि वचनानि व्यवस्थापनीयानि ।

स होमः कथमित्याङ्कायाम्

शौनकः ।

सायम्प्रातः सिद्धस्य हविष्यस्य जुहुयादग्निहोत्रं देवताभ्यः

---

* अपरार्द्धमन्यत्र दृश्यते यथा वैश्वदेवं प्रकुर्व्वीत सूनादोषापशान्तये । † प्रतिदिनकरणीयाम् ।

सोमाय वनस्पतये अग्नीषोमाभ्यामिन्द्राग्निभ्यान्द्यावा-
पृथिवी धन्वन्तरये इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे
स्वाहेति ।

हवष्यं हविषे योग्यम् । अग्निहोत्रदेवताः सूर्य्याग्निप्रजापतयः ।

आपस्तम्बः ।

उपासने पाचने* वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन
जुहुयादुभयतः परिषेचनं यथा पुरस्तादिति ।

आद्यैः अग्नये स्वाहेत्यादिभिः स्विष्टिकृदन्तैः उभयतः परिषेचनं
कर्म्मादावन्ते च ।

कात्यायनः ।

वैश्वदेवादन्नात्पर्य्युक्ष्य स्वाहाकारैर्जुहुयाद्ब्रह्मणे प्रजापतये
गृह्याभ्यः कश्यपायानुमतय इति ।

गौतमः ।

अग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः । प्रजापतिः स्विष्टिकृत्
इति होमः इति ।

अत्र व्यवस्थामाह श्लोकैः कात्यायनः ।

उद्धृतं हविरासिच्य हविष्येण घृतादिना ।
स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत् ॥

इति हविष्येण घृतादिना उद्धृतं हविरासिच्य तेन हविषा
जुहुयादित्यर्थः । घृताभावे दध्यभ्यक्तं† हविर्जुहुयात् ।

---

* पाके । † दधिमिश्रितम् ।

तथाच व्यासः ।

जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्ज्जितम् ।
दध्यक्तं पयसाभ्यक्तं तदभावेऽम्भसापि वा ॥ इति ।

हविष्याभावे चतुर्विंशतिमते विशेषो दर्शितः ।

अलाभे येन केनापि फलशाकोदकादिभिः ।
पयोदधिघृतैः कुर्य्याद्वैश्वदेवं स्रुवेण तु ।
हस्तेनान्नादिभिः कुर्य्यादद्भिरञ्जलिना जले ॥ इति ।

अत्रापरो विशेषः
परिशिष्टे ।

शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
संकल्पयेद्यदाहारं तेनाग्नौ जुहुयादपि ॥

पयःप्रभृतिरसद्रव्याणान्तु विशेषोऽभिहितः
परिशिष्टे ।

उत्तानेन तु हस्तेन अङ्गुष्ठाग्रेण पीड़ितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥ इति ।

हविष्येष्वपि मुख्यहव्यमाह
कात्यायनः ।

हविष्ये तु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्व्वालाभेऽपि वर्ज्जयेत् ॥

गौराः गौरसर्षपाः ।

आपस्तम्बः ।

न क्षारलवणैर्होमो विद्यते तथा परान्नसंसृष्टहोम-

उदीचीन*मुष्णं भस्मापोह्यास्मिन् जुहुयाद्धुतमहुतञ्चाग्नौ भवती। क्षारलवणपरान्नसंसृष्टेन हविषेणाग्नौ होमो न कार्य्यः। अपितूष्णं भस्माग्न्यायतनादुत्तरतोऽपोह्यास्मिन् होतव्यम्।

उष्णं भस्मेति अङ्गारमिश्रितं भस्मेत्यर्थः।

अतएव बौधायनः।

अङ्गारान् भस्ममिश्रांस्तु उद्धृत्योत्तरतोऽनलात्।
जुहुयाद्वैश्वदेवं तु यदि क्षारादिमिश्रितम्† ॥ इति।

तथा।

परोक्षमन्नमसंस्कृत‡मग्नावधिश्रित्याद्भिः प्रोक्षेत्तदेव पवित्रमित्याचक्षत इति। अधिश्रयणं पुनरग्नेरुपरिस्थापनमात्रमन्नसहितस्य वैश्वदेवपात्रस्य अधिश्रित्य संस्कृतं कृत्वा प्रोक्षेदित्यन्वयः। तच्च सायं प्रातः कर्त्तव्यमित्युक्तं तत्र प्रातरुपक्रमः सायमपवर्गः। यदा सायं मन्त्रकर्म्मकर्त्तॄणामभावस्तदा पत्नी सायममन्त्रकं बलिं हरेत्।

तथाच मनुः।

सायमन्नस्य सिद्धस्य पत्न्यमन्त्रबलिं हरेत्।
वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते ॥ इति।

---

* उत्तरदिग्विभागभवम्। † वहुषु पुस्तकेषु दर्शनादेव रक्षितः परन्तु यद्यक्षारादिमिश्रितमित्येव पाठः साधुः। ‡ संस्कृतमिति क्वचित्पाठः।

अत्र वैश्वदेवं हि नामैतदित्येतत्पर्य्यन्तमेकं वाक्यं सायम्प्रात-र्विधीयते इत्येतदपरं वैश्वदेवस्य कालद्वयेऽपि कर्त्तव्यता-विधायकम्। अतः सायमेव पत्न्या बलिहरणरूपवैश्वदेव-कर्माधिकारः। केचन बलिग्रहणं वैश्वदेवस्याप्युपलक्षणार्थ-मिति वर्णयन्ति।

एवं कृतवैश्वदेवस्य बहिर्बलिमाह

मनुः।

शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्।
वायसानां कृमीणाञ्च शनकैर्निर्वपेद्भुवि॥

अत्र मन्त्रः।

ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो विदुर-दस्य प्रेष्ठाः* तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्ददातु।

अत्र दिवेति दिने नक्तमिति रात्रौ दिवाचारिभ्य इति दिवा नक्तंचारिभ्य इति नक्तमित्याश्वलायनस्मरणात्। एतच्च वैश्वदेवाख्यं कर्म दिवा विस्मृत्या रात्रावपि हिनं तु कर्त्तव्यम्।

धर्म्मविन्नाचरेत्स्नानमाह्निकन्तु पुनः पुनः।
तर्पणं ब्रह्मयज्ञञ्च वैश्वदेवं चरेदिति॥

विष्णुपुराणेऽभिधानाद्वैश्वदेवबलिहृती सायं प्रातः पञ्चयज्ञास्तु दिवैव।

---

* प्रेष्या इति पाठान्तरम्।

पञ्चान्तादीनि कर्म्माणि वैश्वदेवात्पूर्व्वमेव कर्त्तव्यानि । पिण्ड-पितृयज्ञस्यापि स्थालीपाकसाध्यत्वे तस्यापि पूर्व्वं न कर्त्तव्यतायां प्रमाणाभावादपवादः अन्यत्रेति पिण्डपितृयज्ञादन्यत्रेत्यर्थः ।

दर्शश्राद्धस्य पिण्डपितृयज्ञानन्तर्य्यमाह

मनुः ।

पिण्डयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्य्यकं श्राद्धङ्कुर्य्यान्मासानुमासिकम् ॥

एवञ्च यानि श्राद्धात्पूर्व्वं वैश्वदेवकर्त्तव्यतापादकानि वचनानि तानि सर्व्वाणि लौकाग्निमनुवचनानुसारेण श्रौताग्निमद्विषयानि व्यवस्थापनीयानि । साग्निकस्याप्येकादशाहश्राद्ध-पश्चादेव ।

सम्प्राप्ते पार्व्वणे श्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥ इति ।

परिशिष्टे विशेषविधानात् ।

तथा सालङ्कायनोऽपि ।

श्राद्धे प्रागेव कुर्व्वीत वैश्वदेवन्तु साग्निकः ।
एकादश्यादिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥ इति ।

एवं वैदिकाग्नेः श्राद्धात्प्रागेव नियमादौपासनाग्नेरनग्नेश्च यानि प्र षिधाश्च* यानि श्राद्धमध्ये विकिरान्ते ब्राह्मणत्रिस-

---

* र आदर्शपुस्तकेषु एकरूपपाठदर्शनादेवं रक्षितः परन्तु यान्यप्रतिषिद्धानीत्येव इति ।

# अथ वैश्वदेवपाकनिर्णयः ।

तत्र नित्यश्राद्धस्य वैश्वदेवस्य चैक एव पाकः नित्यश्राद्धे नित्यं विशेषाभावात् न च श्राद्धेष्वेकपाकशङ्कैव नास्ति । अशौचमध्ये वैश्वदेवनिषेधादेकादशाहादिकश्राद्धे तु पृथक् पाकः श्राद्धशिष्टान्नस्य ब्राह्मणेभ्यो देयत्वात् ।

तथाच देवलः ।

एकोद्दिष्टे तु शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत् । इति ।

दर्शश्राद्धं प्रकृतिः अतस्तन्निर्णयेनैव तद्विकृतीनामपि निर्णयः इति प्रकृतौ विचार्य्यते किं श्राद्धार्थं वैश्वदेवार्थमेक एव पाकः उत पृथगिति तत्र पृथगिति ब्रूमः ।

तथाच लौकाक्षिः ।

पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च । इति ।

इयमुक्तिः पाकस्य पृथक्त्वे एकत्वे चैकरूपेति विशेषापरिज्ञानाभिप्राया । विवृणोति स एवोत्तरार्द्धेन ।

वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकमिति ।

इतरदितरार्थं न भवतीति पृथक् पाकः कर्त्तव्य इत्यर्थः न दार्शमित्यत्र दार्शशब्देन तद्विकृतयो नित्यनैमित्तिककाम्यश्राद्धानि लक्ष्यन्ते वैश्वदेविकमित्यत्र वैश्वदेविकशब्देन भूतयज्ञादयः । अयन्तु पृथक् पाको वैश्वदेवस्य श्राद्धात्पूर्व्वं मध्ये वा वैश्वदेवानुष्ठानेतरत्रानुष्ठाने ।

तथाच पैठीनसिः ।

पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः।

आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति॥ इति।

नन्वेतद्वचनमुत्तरकालेऽपि निषेधकं तदापि पितृपाकत्वात्। नैवमुत्तरकालं पितृसम्बन्धस्य निवृत्तत्वात्। यदुद्देशेन परिकल्पितं यद्धविस्तस्य तदुद्देशेन त्यागेन कृतेन तदुपभोगसमनन्तरमेव तत्सम्बन्धनिवृत्तेर्न्याय्यत्वात्। एवमेव शिष्टाचारो दृश्यते।

अनेनाभिप्रायेण पैठीनसिरेवाह।

श्राद्धं निर्वर्त्त्य विधिवद्वैश्वदेवादिकं ततः।

कुर्य्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा॥

अत्र प्रथमस्तच्छब्दो हेतुपरः द्वितीयस्तु श्राद्धावशिष्टान्नपरः एवञ्चायमर्थः सम्पद्यते।

पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः।

आसुरं तद्भवेच्छ्राद्धमिति॥

यतः श्राद्धात्पूर्व्वं मध्ये वा निषेधः। ततस्तस्माद्धेतोः श्राद्धं निर्व्वर्त्त्य तच्छिष्टाद्वैश्वदेवादिकं कर्त्तव्यमिति। अत्र वचनस्थादिशब्देन नित्यश्राद्धमपि गृह्यते तेन यच्छाखायां नित्यश्राद्धस्य पञ्चयज्ञान्तःपातित्वं नास्ति तच्छाखीयानां श्राद्धपाकशेषेण पृथग्पाकेन वा नित्यश्राद्धं वैश्वदेवात्प्रागेव।

अत्रोभयत्रापि मार्कण्डेयः।

ततो नित्यक्रियां कुर्य्यादिति।

ततः श्राद्धशेषान्नित्यक्रिया नित्यश्राद्धादि।

तथा ।

पृथक्पाकेन नैत्यं स्यादिति ।

यदि ब्राह्मणविसर्ज्जनान्ते वैश्वदेवस्तदा तच्छेषेण, इतरत्र पृथगिति निर्णयः ।

इति वैश्वदेवपाकनिर्णयः ।

## अथ वैश्वदेवकालनिर्णयः ।

तत्र साग्निः श्राद्धात्पूर्व्वमेव वैश्वदेवं कुर्व्वीत तदाह लौकाक्षिः

पञ्चान्त्यकर्म्म निर्व्वर्त्य वैश्वदेवञ्च साग्निकः ।
पितृयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकम्बुधः ॥

इति पञ्चान्त्यमन्नाधानमन्वाहार्य्यकं दर्शश्राद्धं ननु वैश्वदेवस्य पञ्चान्तपिण्डपितृयज्ञयोर्म्मध्यविधिबलादेव साग्निककर्त्तृत्वावगतेः पुनः साग्निकशब्दोपादानमपार्थकमिति चेन्नैवम् । अन्नाधानपिण्डपितृयज्ञकर्त्तुरौपासनाग्निनिवृत्त्यर्थत्वेन सार्थकत्वात् ।

देवलोऽपि वैश्वदेवानन्तरमेव पिण्डपितृयज्ञादिकर्त्तव्यतामाह ।

अकृते वैश्वदेवे तु स्थालीपाकः प्रकीर्त्तितः ।
अन्यत्र पिण्डयज्ञात्तु सोऽपराह्ले विधीयते ॥ इति ।

स्थालीपाकशब्देन स्थालीपाकसाध्यकर्म्माण्युच्यन्ते । एतानि

पञ्चान्तादीनि कर्म्माणि वैश्वदेवात्पूर्व्वमेव कर्त्तव्यानि । पिण्ड-पितृयज्ञस्यापि स्थालीपाकसाध्यत्वे तस्यापि पूर्व्वं कर्त्तव्यतायां प्राप्तायामपवादः अन्यत्रेति पिण्डपितृयज्ञादन्यत्रेत्यर्थः ।

दर्शश्राद्धस्य पिण्डपितृयज्ञानन्तर्य्यमाह

मनुः ।

पिण्डयज्ञन्तु निर्व्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्य्यकं श्राद्धङ्कुर्य्यान्मासानुमासिकम् ॥

एवञ्च यानि श्राद्धात्पूर्व्वं वैश्वदेवकर्त्तव्यतापादकानि वचनानि तानि सर्व्वाणि लौकाग्निमनुवचनानुसारेण श्रौताग्निमद्विषयानि व्यवस्थापनीयानि । साग्निकस्याप्येकादशाहश्राद्धपश्चादेव ।

सम्प्राप्ते पार्व्वणे श्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥ इति ।

परिशिष्टे विशेषविधानात् ।

तथा सालङ्कायनोऽपि ।

श्राद्धे प्रागेव कुर्व्वीत वैश्वदेवन्तु साग्निकः ।
एकादशादिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥ इति ।

एवं वैदिकाग्नेः श्राद्धात्प्रागेव नियमादौपासनाग्नेरनग्नेश्च यानि प्रतिषेधाश्च* यानि श्राद्धमध्ये विकिरान्ते ब्राह्मणत्रिस-

---

* सर्व्वेषु आदर्शपुस्तकेषु एकरूपपाठदर्शनादेवं रचितः परन्तु यान्यप्रतिषिद्धानीत्येव पाठो भवितुमर्हति ।

र्जनान्ते च वैश्वदेवविधायकानि तान्यौपासनाग्निविषये अनग्निविषये च व्यवतिष्ठन्ते यानि श्राद्धादौ निषेधकानि तान्यपि तद्विषय* एव। अथवा साग्नेरपि श्राद्धपाकविषये अतएवास्य पृथक्पाको वैश्वदेवार्थनिषेधश्च।

षट्त्रिंशन्मते।

प्रतिवासरिको होमः श्राद्धादौ क्रियते यदि।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा॥ इति।

वृद्धगौतमोऽपि।

पितृश्राद्धमकृत्वा तु वैश्वदेवङ्करोति यः।
अकृतं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥

वशिष्ठः।

वैश्वदेवमकृत्वा तु श्राद्धङ्कुर्यादनग्निकः।
लौकिकेऽग्नौ हुते शेषं पितॄणां नोपतिष्ठते॥

अनग्निको वैदिकाग्निरहितोऽपि तस्यौपासनाग्नावपि वैश्वदेवो निषिद्धः। अयमर्थो लोकाक्षिवचने साग्निकपदस्य सार्थकत्वप्रतिपादने दर्शितः। अतएवात्र लौकिकाग्निरिति स्मार्त्ताग्नेरप्युपलक्षणम्। औपासनाग्नेरनग्निकस्य च त्रयः काला वैश्वदेवे एकः श्राद्धमध्ये अपरो विकिरान्ते अन्यो ब्राह्मणविसर्जनान्ते।

तत्र मध्यकर्त्तव्यता

ब्रह्माण्डपुराणे।

---

* औपासनाग्निनिरग्निविषय एव।

वैश्वदेवाहुतीरग्नावर्व्वाक् ब्राह्मणभोजनात् ।
जुहुयाद्भूतयज्ञादि*श्राद्धं कृत्वा तु तत् स्मृतम् ॥ इति ।

ब्राह्मणभोजनादर्व्वाक् अग्नौकरणानन्तरमित्यर्थः । अत्र भूतयज्ञादेः श्राद्धानन्तरकर्त्तव्यताभिधानादस्मिन् प्रयोगे यानि भूतयज्ञोत्तरभावीनि कर्म्माणि सम्बन्धक्रमाणि तानि तदाद्युत्कर्षन्यायेनोत्कृष्टानि† श्राद्धान्ते कर्त्तव्यानि न तु भूतयज्ञात् पूर्व्वभावीन्युत्कृष्टानीति‡ । यच्छाखायां बलिहरणादिकमेव भूतयज्ञादिकं तेषां बलिहरणादिकस्यैवोत्कर्षः येषान्तु बलिहरणादिव्यतिरिक्ता भूतयज्ञास्तेषां वहिर्बलिव्यतिरिक्तभूतयज्ञावधिकानां बलिहरणादीनामपि श्राद्धमध्ये कर्त्तव्यता भवतीति विवेकः । न चैवं मन्तव्यं प्रारब्धे पित्र्ये कर्म्मण्यसमाप्ते तन्मध्ये कर्म्मान्तरकरणायुक्तमिति निशीष्टिन्यायेना§विरोधात् अतएव

---

* बलिहरणादि । † आदीनां कर्त्तव्यतायां तदन्तस्यापि कर्त्तव्यता इति तदाद्युत्कर्षन्यायार्थः । तान्युत्कर्षज्ञानेनैवोत्कृष्टानीति पाठान्तरम् । ‡ तदाद्युत्कृष्टन्यायेन करणीयानि इत्यर्थः । § निशियज्ञे दर्शतन्त्रं नोतास्त्वेतन्नदर्शिके ।

तन्त्रमध्ये विध्यभावादस्त्वयोत्तद्विधानतः ॥

अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभीयादिति विधायेदमाम्नातम् । अमावास्यायां यजेतेति । एतस्मिन् यज्ञे दर्शयागस्याङ्गतन्त्रं न प्रसज्यते । कुतः दर्शकर्म्मणस्तन्त्रमध्येऽस्य रक्षोघ्नस्य विध्यभावात् । यत्तु अमावास्यायामिति पदं तत्कालपरं कर्म्मपरत्वे लक्षणापत्तेः । अतो न वाक्यात् तन्त्रमध्ये विधिः प्रकरणन्तु भिद्यते काम्येष्टिकाण्ड एतस्य पाठादिति प्राप्ते ब्रूमः । मा भूद्वाक्येन वा प्रकरणेन वा तन्त्रमध्ये विधिः । तथाप्यमावास्याकाले दर्शकर्म्मणः प्रक्रान्तत्वेन निशि क्रियमाणोयागोऽयमवश्याद्दर्शकर्म्मतन्त्रमध्यपाती भवति तस्मादस्त्यस्ति प्रसङ्गसिद्धिः इति निशीष्टिन्यायः ।

दृश्यते पूर्व्वेद्युर्निमन्त्रितेषु ब्राह्मणेषु श्राद्धापरिसमाप्ताविव सायं प्रातर्होमकरणम् ।

द्वितीयः कालो भविष्यपुराणे ।

पितॄन् सन्तर्प्य विधिवद्बलिं दत्त्वा विधानतः ।
वैश्वदेवं ततः कुर्य्यात्पश्चाद्ब्राह्मणभोजनम् ॥

बलिरत्र विकिरसंज्ञकः ।

यतस्तत्रैव ।

ये अग्निदग्धा मन्त्रेण* भूमौ यन्निक्षिपेद्बुधः ।
जानीहि तं बलिं वीर श्राद्धकर्म्मणि सर्व्वदा ॥ इति ।

पश्चाद्ब्राह्मणभोजनं भूरिभोजनम् ।

तृतीयकालोब्राह्मणविसर्जनान्ते सच मत्स्यपुराणे दर्शितः ।

उच्छेषणन्तु† तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
वैश्वदेवं ततः कुर्य्यान्निवृत्ते पितृकर्म्मणि ॥

मनुरपि ।

पूर्व्वार्द्धं तदेव ।
ततो गृहबलिं कुर्य्यादिति धर्म्मो व्यवस्थितः ॥ इति ।

---

* ओं येऽग्निदग्धा येऽनग्निदग्धा मध्येदिवः स्वधया मादयन्ते । तेभिः स्वराड़सूनीतिमेतां यथावतंसं तनुं कल्पयस्व । ओं असंस्कृतप्रमीतानां त्यागिन्यो याः कुलस्त्रियः । ददामि तेभ्योविकिरमन्नन्ताभ्यश्च पैतृकम् । ओं असोमपाश्च ये जीवा यज्ञभागवहिष्कृताः । तेषामन्नं प्रदातव्यं विकिरं वैश्वदेविकम् । ओं येषां न माता न पिता न बन्धुर्नैवान्नसिद्धि र्न तथान्नमस्ति । तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु लोकाय सुखाय तद्वदिति । † सर्व्वेषु आदर्शपुस्तकेषु एकपरूपाठदर्शनादेवं रक्षितः परन्तु उत्सेचनमिति पाठो भवितुमर्हति ।

बलिशब्दो वैश्वदेवप्रदर्शनार्थ इति मतं मेधातिथेः।
भविष्यपुराणे।

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसर्ज्जयेत्।
वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप॥ इति।

इति वैश्वदेवकालनिर्णयः।

## अथातिथिपूजा।

तत्र विष्णुपुराणे।

ततो गोदोहमात्रन्तु तिष्ठेत्कालं गृहाङ्गने।
अतिथिग्रहणार्थाय तदूर्द्धञ्च यथेच्छया॥

वैयाघ्रपद्यः।

अनिन्दितमनाहूतं वैश्वदेवेष्ववस्थितम्।
अतिथिं तं विजानीयान्नैकग्रामनिवासिनम्॥
क्षुधार्त्तस्तृषितश्चैव श्रान्तो गृहमुपागतः।
प्रयत्नेन तु सम्पूज्य सोऽतिथिः स्वर्गसंक्रमः* ॥
इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव च।
सम्प्राप्ते वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः॥
न पृच्छेद्गोत्रचरणं† न स्वाध्यायं व्रतानि च।
चित्तेन भावयेत्तन्तु सर्व्वदेवमयो हि सः॥

---

* स्वर्गप्रापकः। † चरणं शाखा गोत्रञ्च चरणञ्च द्वयोः समाहार इति समासे दीर्घः।

विष्णुः ।

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥

याज्ञवल्क्यः ।

दिनेऽतिथौ तु विमुखे गते यत्पातकं भवेत् ।
तदेवाष्टगुणं प्रोक्तं सूर्य्योढे* विमुखे गते ॥

ऋष्यशृङ्गः ।

गवां ग्रासञ्च कुर्व्वीत नित्यमेव समाहितः ।
गवाङ्गकण्डूयनं स्पर्शं ग्रासमाह्निकमेव च ॥

मार्कण्डेयपुराणे ।

अस्नाताशी मलं भुङ्क्ते अजापी पूयशोणितम् ।
अहुत्वान्नं कृमीन् भुङ्क्ते अदत्त्वा विषभोजनम् ॥
आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनम् ।
वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् ॥

## अथ भोजनविधिः ।

तत्र देवलहारीतौ ।

आहारन्तु रहः कुर्य्यान्निर्हारञ्चैव सर्व्वदा ।
गुणाभ्यां लक्ष्मुपेतः स्यात्प्रकाशे हीयते श्रिया ॥

---

* सूर्य्यास्ते इत्यर्थः ।

मनुः।

उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः।

आपस्तम्बः।

यस्तु भोजनशालायां भोक्तुकामः सन्नासनस्थो वा अन्यत्र आसनस्थो वा न चोपस्पृशेत् यस्तूपस्पृशेत् स पङ्क्तिदूषक इत्यन्वयः।

याज्ञवल्क्यः।

बालं सुवासिनी*वृद्धगर्भिण्यातुरकन्यकाः।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्॥

यमः।

विप्रः स्वर्गपरो नित्यमर्च्चयेत्त्विष्टदेवताम्।
गुरूनतिथिबालांश्च तर्पयेत्पूर्व्वमेव तु॥
आत्मानं तर्पयेत्पश्चान्नियतो वाग्यतः शुचिः।
स्त्रीशूद्रं तर्पयेत्पश्चादेष धर्म्मः सनातनः॥

व्यासः।

पञ्चार्द्रो भोजनं कुर्य्यात्प्राङ्मुखो मौनमास्थितः।
हस्तौ पादौ तथैवास्यमेषां पञ्चार्द्रता मता॥

बौधायनः।

प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमधिष्ठितः।

विष्णुः।

---

* नवोढ़ा इत्यर्थः।

न भुवि आसनान्तरितायां चितावुपविशेदिति ।

आसने वर्ज्यान्याह प्रचेताः ।

गोशकृन्मृण्मयं भिन्नं तथा पालाशपैप्पलम् ।
लोहबद्धं सदैवार्कं वर्जयेदासने बुधः ॥

ब्रह्मपुराणे ।

उपलिप्ते समे स्थाने शुचौ सिद्धासनान्विते ।
मण्डलं गोमयेनैयादथवा गौरमृण्मया ॥

अत्र विशेषमाह शङ्खः ।

चतुष्कोणं द्विजाग्रस्य त्रिकोणं क्षत्रियस्य च ।
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥

व्यासस्तु शूद्रस्यार्द्धचन्द्राकृति मण्डलं प्राह ।

चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धचन्द्रकम् ।
कर्त्तव्यमानुपूर्व्वेण ब्राह्मणादिषु मण्डलम् ॥

हारीतः ।

न कार्ष्णायसे मृण्मये वा पात्रे नाश्नीयात् ।

मनुः ।

न पादौ धावयेत्कांस्ये कदाचिदपि भाजने ।
न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते ॥

भिन्नभाण्डे निषेधस्ताम्रादिव्यतिरिक्तविषयः ।

तथाच पैठीनसिः ।

ताम्ररजतसुवर्णशङ्खमुक्ताश्मस्फाटिकानां भिन्नमभिन्नमिति ताम्रपात्रं यतिविषयं गृहस्थस्य निषिद्धत्वात् ।

तथाच वृद्धमनुः ।

ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले ।

पलाशपद्मपात्रेषु गृही भुक्त्वैन्दवञ्चरेत् ॥

पलाशो वल्लीपलाश इति ।

स्मृत्यर्थसारे ।

एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।

चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम् ॥

अत्रिः ।

आसने पादमारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित् ।

मुखेन वान्नमश्नाति तुल्यं गोमांसभक्षणे ॥

मुखेन गवादिवदित्यर्थः ।

बौधायनः ।

भोजनं वन्दनन्दानमुपहारं प्रतिग्रहः ।

वहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम् ॥

हारीतः ।

मार्जनाचमनबलिकर्म्मभोजनानि देवतीर्थेन कुर्य्यात् ।

वृद्धमनुः ।

न पिवेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।

एकहस्तेन न जलं शूद्रेनावर्ज्जितं पिवेत् ॥

मार्कण्डेयपुराणे ।

पादप्रसारणं कृत्वा न च वेष्टितमस्तकः ।

विष्णुः ।

नाश्नीयाद्भार्य्यया सार्द्धं नाकाशे न तथोत्थितः।
शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकम्॥

आकाशे मञ्चादौ।

अत्र विशेषमाह मार्कण्डेयः।

न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान् महामुने।
शेषमुद्धृत्य भोक्तव्यमिति।

उद्धृत्य मञ्चादौ पात्रं निक्षिप्येत्यर्थः। पित्रर्थभोजने तु भूमौ पात्रस्थापनमावश्यकम्। पित्रार्थन्तु न लुप्यत इति अत्रैव वाक्यशेषे तेनैवाभिधानात्। पादारोपितपादः प्रौढ़पादः।

ब्रह्मपुराणे।

पञ्च ग्रासांस्तु भुञ्जीत क्वचिद्वेश्मनि सङ्करे।
पात्रमुद्धृत्य शेषन्तु भक्षयेत्सङ्कराद्भयात्।
पित्रेर कर्म्मणि भुञ्जानो भूमौ पात्रं न चालयेत्॥

विष्णुः।

न भिन्नभाजनोत्सङ्गे न भुवि न पाणौ।

उत्सङ्गे ऊर्व्वोरुपरि पात्रं स्थापयित्वा।

वशिष्ठः।

सर्व्वाभिरङ्गुलीभिरश्नीयात्पाणिञ्च नावधुनीयात्।

मार्कण्डेयः।

यस्तु पाणितले भुङ्क्ते यः सवायुं समश्नुते।
अङ्गुलिश्चोद्धरेद्यस्तु गोमांसाशनवत्स्मृतम्॥

सवायुं सशब्दमित्यर्थः।

विष्णुः।

नोच्छिष्टं घृतमादद्यात्।

आदित्यपुराणे।

नोच्छिष्टो ग्राहयेदाज्यं जग्धशिष्टं न सन्त्यजेत्।
शूद्रभुक्तावशिष्टन्तु नाद्यात्कांस्यस्थितन्त्वपि॥

तथा।

न सन्ध्ययोर्न मध्याह्ने नार्द्धरात्रे कदाचन।
नार्द्रवासा नार्द्रशिरा न चायज्ञोपवीतवान्॥

एवञ्च।

सायम्प्रातर्द्विजातीनामशनं श्रुतिचोदितम्।
नान्तरा भोजनङ्कुर्य्यादग्निहोत्रसमो विधिः॥ इति।

मनुना यत्सायम्प्रातरित्युपात्तं* तत्तु रात्रिदिनयोर्ग्रहणार्थं न तु सन्ध्याकालनिर्णयार्थं न सन्ध्ययोरिति निषेधात्। अग्निहोत्रसाम्यविधानाद्दिवा रात्रौ वा द्विर्भोजनं निषिद्धमेव। एवं पूर्व्वोक्तप्रकारेण शुचौ देशे उपविष्टः उक्तनियमयुक्तो भूत्वा व्याहृतिभिः गायत्र्या चान्नमभिमन्त्र्याभ्युक्ष्य परिषिच्य धर्म्मराजादिबलिन्दत्वा आपोशानक्रियाङ्कृत्वा पञ्च ग्रासान् गृहीत्वा भोजनान्तरं†मग्नीकरणादिकं विधायाचमनङ्कुर्य्यात्।

तथाच गोभिलः।

अथातः प्राणाहुतिकल्पो व्याहृतिभिर्गायत्र्या चाभिमन्त्र्य ऋतन्त्वा सत्येन परिषिञ्चामीति सायं सत्यं त्वर्त्तेन

---

* उपादानं कृतम्। † भोजनमध्ये।

परिषिञ्चामीति । प्रातः ।

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कारः त्वं ब्रह्मा त्वं प्रजापतिः ।
आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।

अमृतोपस्तरणमसीत्यपः पीत्वा दशहोतारं मनसानुस्मृत्याचरन् पञ्चग्रासान् गृह्णीयात् । प्राणाय स्वाहेति गार्हपत्यमेव जुहोत्यपानाय स्वाहेत्यन्वाहार्य्यपचनमेव तेन जुहोति व्यानाय स्वाहेति आहवनीयमेव जुहोत्युदानाय स्वाहेति सत्यमेव तेन जुहोति समानाय स्वाहेत्यावसथ्यमेव तेन जुहोतीति ।

शौनकस्तु विशेषमाह ।

स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्रास्तु वायवः ।
जिह्वयैव ग्रसेदन्नं दशनैन न संस्पृशेत् ॥
तर्ज्जनीमध्यमाङ्गुष्ठलग्नः प्राणाहुती भवेत् ।
मध्यमानामिकाङ्गुष्ठैरपाने जुहुयाद्बुधः ।
समाने सर्व्वहस्तेन समुदायाहुतिर्भवेत् ॥

भविष्यपुराणे ।

भोजनात्किञ्चिदन्नाग्रं धर्म्मराजाय वै बलिम् ।
चित्राय* चित्रगुप्ताय प्रेतेभ्यश्चेदमुद्धरेत्† ॥

---

* दद्यादिति पाठान्तरम् । † उत्सृजेदिति पाठान्तरम् । प्रेतेभ्यश्चेदमुद्धरेत्—यत्र क्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम् । प्रेतानां तृप्तयेऽक्षय्यमिदमस्तु यथासुखम् ॥ इत्याचारमयूखे विशेष उक्तः ।

ब्रह्मपुराणे।

हस्तेन लङ्घयेन्नान्नं* सोदकेन कदाचन।
दन्ताद्यो लङ्घयेदन्नं तेनान्नं न हितम्भवेत्† ॥

विष्णुपुराणे।

अश्नीयात्तन्मना भूत्वा पूर्व्वन्तु मधुरं रसम्।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनम्।
अन्ते पुनर्द्रवाशी तु बलारोग्येण मुच्चति ॥
जठरं पूरयेदर्द्धमन्नैर्भागञ्जलस्य‡ च।
वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ॥

आदिपुराणे।

एकपङ्क्तेरनुच्छाय§मध्ये चेदाचमेत्परः।
तदा शेषं विहायैव¶ विप्रः सम्यगपः स्पृशेत् ॥

एकपङ्क्तिस्थितानां सर्व्वेषां भोजने अपरिसमाप्ते इत्यर्थः।

पङ्क्तिभेदानाह बृहस्पतिः।

अग्निना भस्मना चैव स्तम्भेन सलिलेन च।
द्वारेणैव च मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥

---

* सोदकेन हस्तेन अन्नं न लङ्घयेत् न त्यजेत् अर्थाद्गृह्णीयादित्यर्थः। † हस्तेन लङ्घयेन्नान्नं नोदकेन कदाचन। हस्ताद्यो लङ्घयेद्भुङ्क्ते तेनान्नं निहितं भवेत्। हतश्चान्नमभक्ष्यत्वं तस्य याति दुरात्मनः॥ इति ब्राह्मणसर्व्वस्वे हलायुधधृतः पाठः। ‡ भागं तृतीयभागरूपं जलस्य पानेन पूरयेदित्यनुषङ्गेणान्वयः। § पङ्क्तिभेदमकृत्वा। ¶ विधायैवेति पाठान्तरम्।

ग्रासनियममाह आपस्तम्बः ।

अष्टौ ग्रासा मुनेर्भक्ष्यं षोड़शारण्यवासिनः ।
द्वात्रिंशतं गृहस्थस्य अमितं ब्रह्मचारिणः ॥
आहिताग्निरनड्वांश्च ब्रह्मचारी च ये त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥

यदा गृहस्थस्योपवासः प्राप्तस्तदा बौधायनोक्तम् ।

प्राणाग्निहोत्रमन्त्रांश्च निरुद्धो भोजने जपेत् ।
त्रेताग्निहोत्रं मन्त्रांश्च निरुद्धो भोजने जपेत् ।
त्रेताग्निहोत्रमन्त्रांस्तु द्रव्यालाभे जपेदिति ॥

निरुद्धो भोजन इति उपवासेन भोजनरहित इत्यर्थः ।
पुलस्त्यः ।

भोजने तु न निःशेषं कुर्य्यात्प्राज्ञः कथञ्चन ।
अन्यत्र दधिशक्ताज्यपललक्षीरमध्वपः ॥

भोजनानन्तरं देवलः ।

भुक्तोच्छिष्टं समादाय सर्व्वस्मात्किञ्चिदाचमन् ।
उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि ॥

अत्र मन्त्रः ।

रौरवे पुण्यनिलये पद्मार्व्वुदनिवासिनाम् ।
अर्थिनामुदकं नित्यमक्षय्यमुपतिष्ठतु ॥

गद्यव्यासः ।

ततस्तृप्तः सन्नमृतापिधानमसीत्यपः प्राश्य तस्मा
ग्रान्मनागपासृत्य विधिवदाचमेत् ।

अपां प्राशने श्लोकव्यासः ।

हस्तं प्रक्षाल्य गण्डूषं यः पिबेत्पापमोहितः ।
स दैवञ्चैव पित्र्यञ्च आत्मानञ्चैव सादयेत् ॥
अर्द्धम्पीत्वा तु गण्डूषमर्द्धन्त्याज्यं महीतले ।
रसातले गता नागास्तेन प्रीणन्ति नित्यशः ॥

देवलः ।

आचम्य तु ततः कार्य्यं दन्तकाष्ठस्य भक्षणम् ।
भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ॥
दन्तलग्नमसंहार्य्यं लग्न*म्मन्येत दन्तवत् ।
न तत्र बहुशः कुर्य्याद्यत्नमुद्धरणम्प्रति ॥

दन्तलग्नङ्कालान्तरे स्थानाच्चुतं यत्तु त्यक्त्वैव शुचिर्नाचमेत् ।

तथाच याज्ञवल्क्यः ।

श्मश्रु चास्यगतं दन्तसक्तन्त्यक्त्वा ततः शुचिः ।

निगरन्नपि तु तच्छुचिरित्याह

मनुः ।

दन्तवद्दन्तलग्नेषु जिह्वास्पर्शे शुचिर्न तु ।
परिच्युतेषु च स्थानान्निगिरन्नेव तच्छुचिः ॥

परित्यागनिगरयोर्विकल्पः ।

स्थानचलनात्प्राग्जिह्वाघट्टनेऽपि शुचिरित्याह

गौतमः ।

---

* लेपमिति देशान्तरीयः पाठः ।

दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात्प्राक्च्युतेरेव इति ।

प्राक्च्युतेर्जिह्वाभिमर्शने दोषो नास्तीत्यर्थः ।

एवं दन्तधावनानन्तरम्

देवलः ।

आचान्तो हृदयदेशमभिस्पृशति प्राणानां ग्रन्थीरुद्र-
माविशन्ते कस्तेनान्येनाप्यायस्वेति ।

पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणिं निस्तारयति ।

अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठं वा समाश्रितः ।
ईशः सर्व्वस्य जगतः प्रभुः प्रीणातु विश्वभुक् ॥

ततः करादिमुपस्पृशेत् । जानू संस्पृशेत् ।

तथाच व्यासः ।

मा करेण करं प्राचीर्मा जङ्घे मा च चक्षुषी ।
ऊरू संस्पृश कौन्तेय भर्त्तव्यस्ते महाजनः ॥

ऊरू जानुनी । जानुनी स्पृश राजेन्द्र भर्त्तव्यो बहुरापदीति तेनैवाभिधानात् ।

मार्कण्डेयः ।

भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूलभक्षणम् ।
श्रवणञ्चेतिहासस्य ततः कुर्य्यात्समाहितः ॥

याज्ञवल्क्योऽपि ।

अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः । इति ।

इति भोजनविधिः ।

# अथ भोज्याभोज्यद्रव्याणि ।



याज्ञवल्क्यः ।

अनर्च्चितं वृथामांसं केशकीटसमन्वितम् ।
शुक्तं पर्य्युषितोच्छिष्टं श्वस्पृष्टम्पतितेक्षितम् ॥
उदक्यास्पृष्टसङ्घुष्टपर्य्यायान्नानि वर्ज्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टञ्च कामतः ॥

अनर्च्चितं अवज्ञापूर्व्वकं दत्तं वृथामांसमनिषिद्धेष्वपि मांसेष्व-विहितकालसम्पादितम् । शुक्तङ्कालेनाम्लीभूतम् । पर्य्युषितं रात्र्यन्तरितम् । एतच्च दध्यादिव्यतिरिक्तम् । न शुक्तं न पर्य्युषितमन्यत्र रागखण्ड*चुक्रदधि गुड़ गोधूम यवपिष्टविकारेभ्य इति शङ्खस्मरणात् । यदुद्घोष्य दीयते तदासुष्टान्नम् ।

अत्रे प्रतिप्रसवः ।

अन्नं पर्य्युषितम्भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥

शङ्खः ।

अपूपाः शक्तवो धानास्तक्रं दधि घृतं मधु ।
एतत्पण्येषु भोक्तव्यं मण्डलेपो न चेद्भवेत् ॥

भक्ष्याणि ।

भक्ष्याः पञ्चनखा सेध्या गोधाकच्छपखड्गकाः ।

* रागशाड़व इति पाठान्तरम् । अस्यार्थः अवलेहद्रव्यम् ।

अशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥

भक्षणकालमाह ।

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।
देवान् पितॄन् समभ्यर्च्य खादन्मांसं न दोषभाक् ॥

प्रोक्षितं योगप्रोक्षणाख्यसंस्कारेण स्मृतम् । द्विजकाम्यया ब्राह्मणभोजनार्थं यत्सम्पादितमतिथिपूजादौ तदुच्यते ।

यत्तु निगमवचनम् ।

देवरजं गो*पशोर्घातं श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्ज्जयेत् ॥

मांसं विवर्ज्जयेदिति निषेधः कलियुगे ब्राह्मणकर्त्तृकश्राद्ध-विषयः ।

सुन्वन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रधानं शूद्रस्येति

श्राद्धप्रकरणे पुनस्तेन विशेषाभिधानात् । द्विजदेवतापितुरुद्देशेन कृतस्य यः शेषस्तस्य त्ववश्यभक्षता नास्ति । न दोषभागित्युपादानाद्भक्षणे प्रत्यवायो नास्तीति यतोऽवगम्यते ।

उक्तप्रकारव्यतिरेकेण भक्षणे दोषमाह ।

वसेत्स नरके घोरे दिनानि पशुरोमभिः ।
शंसितानि दुराचारो यो हन्त्यविधिना पशून् ॥

परित्यक्तमांसस्य फलमाह ।

---

* सुता इति पाठान्तरम् । अक्षता गोपतिश्चैवेति पाठान्तरम् ।

सर्व्वान् कामानवाप्नोति हयमेधफलं तथा ।
गृहेऽपि निवसन्विप्रो मुनिर्मांसं विवर्ज्जयेत् ॥

इति भोज्याभोज्यद्रव्याणि ।

## अथ भोज्याभोज्यद्रव्यप्रसङ्गाद्भोज्याभोज्यान्ना अपि प्रदर्श्यन्ते ।

तत्र गौतमः ।

प्रसक्तानां स्वकर्म्मसु द्विजातीनां ब्राह्मणो भुञ्जीत इति । प्रशस्तानामित्यपि पाठः । स्वकर्म्मसु प्रसक्तानां निष्णातानां स्वकर्म्मनिरतानामिति यावत् ।

याज्ञवल्क्योऽपि ।

परपाकरुचिर्न स्यादनिन्दामन्त्रणादृते । इति ।

यमदग्निपैठीनसी ।

ब्राह्मणस्य सदाश्नीयात्क्षत्रियस्य च पर्व्वसु ।
प्रकृतेषु च वैश्यस्य शूद्रस्य न कदाचन ॥

अत्रापि ब्राह्मणादयः स्वकर्म्मनिष्ठा एव, पर्व्वसु पूर्णिमादिषु । प्रकृतेषु प्रक्रमविशेषेषूत्सवेषु गोमङ्गलादिषु ।

तथा ।

अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यस्य त्वन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ॥

अभोज्यान्नाः याज्ञवल्क्येन दर्शिताः ।

अग्निहीनस्य विप्रस्य नान्नमद्यादनापदि ।
कदर्य्यबद्धचौराणां क्लीवरङ्गावतारिणाम् ॥
वैणाभिशस्तवार्द्धुष्यगणिकागणदीक्षिणाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ इति ।

अग्निहीनः श्रौतस्मार्त्ताग्निरहितः* शूद्रादिः । सत्यपि अधिकारे अग्निहीनो ब्राह्मणादिश्च† । कदर्य्यो लुब्धः । बद्धो निगड़ादिना वैणो वीणावादनजीवी वार्द्धुष्यं निषिद्धवृत्त्युपजीवनमात्मनः स्तुतिः परनिन्दाकरणम् ।

तथाच विष्णुः ।

यस्तु निन्देत्परं जीवं प्रशंसत्यात्मनो गुणान् ।
स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥

गणदीक्षी बहुयाजकः ।

शूद्रस्य न कदाचन‡ । अग्निहीनस्य विप्रस्य नान्नमद्यादनापदीत्यादिभिः शूद्रस्याभोज्यत्वे प्राप्ते प्रतिप्रसवमाह याज्ञवल्क्यः ।

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

दासा गर्भदासादयः । गोपालो गोपरिपालनजीवी । कुल-

---

* स्वभावतः श्रौतस्मार्त्ताग्निरहित इत्यर्थः । † विप्रपदस्योपलक्षणत्वेन अग्निहीनपदस्यानुषङ्गेणान्वयस्वीकारेण चाभिप्रेत्य उक्तं ब्राह्मणादिश्चेति । ‡ ब्राह्मणस्य सदाश्नीयादित्यादि यमदग्निपैठिनसिवचनस्यस्येति शेषः ।

मित्रं वंशपरम्परायातः । अर्द्धसीरी सम्भूयसमुत्थायितया सह कर्षकः अथवा सीरोपलक्षितकृषिफलार्द्धग्राही । नापितो गृहे व्यापारकारयिता क्षौरकर्त्तापि । यश्च शूद्रः क्रीत एव वाङ्मनःकायकर्म्मभिरात्मानं द्विजाय निवेदयति तवाहमिति ददाति स आत्मनिवेदयिता । एते दासादयो यदीयास्तस्यैव ते भोज्यान्नाः ।

हारीतः ।

कुलमित्रं कुलपुत्रो भैक्षदः शिक्षकः सुहृत् ।
भवेद्यस्य सुखं लाभो भयत्राता च यो भवेत् ॥

कुलपुत्रः कुलमित्रपुत्रः । भवेद्यस्य यस्य सम्बन्धी भवेत् इत्यर्थः । अत्र स्वशब्दः* सर्व्वत्रान्वेति एते दासादयोऽपि स्व-विहितनित्यकर्म्मनिरता एव भोज्यान्नाः ।

तथाच मनुः ।

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकम् † ॥

अश्राद्धी नित्यश्राद्धरहितः । एतच्च नित्यकर्म्मप्रदर्शनार्थम् । अस्मादश्राद्धिनः । एकरात्रिकमेकाहपर्य्याप्तम् । पक्वान्नान्यपि विशेषात् ‡ ।

---

* स्वसम्बन्धित्वेन । † अश्राद्धिनः श्राद्धादिपञ्चयज्ञशून्यस्य शूद्रस्य शास्त्रविद्द्विजः पक्वान्नं न भुञ्जीत । किन्त्वन्नान्तराभावे सति एकरात्रनिर्व्वाहोचितमाममेवान्नमस्माद्गृह्णीयात् न तु पक्वान्नमिति कुल्लूकभट्टः । ‡ क्वचित् पुस्तके पक्वान्नान्यपि विशिष्टमिति पाठो दृश्यते वस्तुतस्तु एकाहपर्य्याप्तमामान्नं न तु पक्वान्नमित्येव पाठो युक्तः ।

सुमन्त्वङ्गिरसौ ।

गोरसञ्चैव शक्तूंश्च तैलं पिण्याकमेव च ।
अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसा शृतम्* ॥

हारीतः ।

कन्दुपक्वं स्नेहपक्वं पायसं दधि शक्तवः ।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

एवञ्च यानि शूद्रान्ननिषेधकानि वचनानि तानि शूद्रपरिगणितपक्वान्नव्यतिरिक्तविषयाणि । यानि च दासादिलक्षणानि पराशरस्मृतावभिहितानि तानि च न शूद्राभिप्रायेण । तथा सति परस्परविरोधात् । लक्षणानि च ।

शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारे तु भवेद्दासः असंस्कारे तु नापितः ॥
क्षत्रियाच्छूद्रकन्यायां सुतो जातस्तु नामतः ।
गोपालस्तु स विज्ञेयो भोज्योविप्रैर्न संशयः ॥
वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
तदर्द्धिकस्तु विज्ञेयो भोज्यो विप्रैर्न संशयः ॥

गोपालस्य क्षत्रियो जनकः अन्येषान्तु ब्राह्मणः । अत्र यद्यपि दासनापितगोपालानां मातृद्वारापि शूद्रत्वं तथापि कुलमित्रार्द्धशीरिणोर्न मातृद्वारापि ततः क्वचिन्मातृद्वारा शूद्रत्वं क्वचिन्नेति एते शूद्रेषु भोज्यान्ना इत्यनेन विरोधः स्यात्किञ्च

* पक्वमित्यर्थः ।

मूर्द्धावसिक्तजात्यन्तःपातित्वादेतेषां न शूद्रत्वं तथा चैतेषां शूद्रत्वे मूर्द्धावसिक्तादिजातिप्रतिपादकवचनैः सह विरोधः स्याल्लक्षणवाक्यानान्त्वयमभिप्रायः शूद्ररूपदासादीनां भोज्यान्नत्वकथनं प्रसङ्गात्। डित्थडपित्थसंज्ञान्तराणीव दासादिसंज्ञा अपि सन्तीति प्रदर्शनार्थमिति। अतएव सुतो जातस्तु नामतः गोपालस्तु स विज्ञेय इत्यत्र नामत इति ग्रहणं कृतम्। किञ्च आत्मनिवेदकस्य कुम्भकारादेश्च केवलशूद्रतान्यायेने*तरेषामपि शूद्रत्वमेव युक्तम्।

इति भोज्याभोज्यान्ननिर्णयः।

## अथ शयनविधिः।

तत्राङ्गिरास्तथा याज्ञवल्क्योऽपि।

उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च।
भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याथ† संविशेत्॥

चकारो विश्वेदेवादिसमुच्चयार्थः। एतच्च पाकान्तरेण न दिवावशिष्टेन।

तथाच विष्णुपुराणे।

पुनः पाकमुपादाय साध्यमप्यवनीपते।
वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं बलिं हरेत्॥

---

* यथा शूद्रता तद्वदित्यर्थः। † नातितृप्तोऽथ इति पाठान्तरम्।

व्यासः ।

शुचौ देशे विविक्ते तु गोमयेनोपलेपिते ।
प्रागुदक्प्लवने चैव संविशेत्तु सदा बुधः ॥

तथा ।

मङ्गल्यम्पूर्णकुम्भन्तु शिरःस्थाने निधाय तु ।
वैदिकैर्गारुडैर्मन्त्रैरक्षाङ्कृत्वा स्वपेत्ततः ॥

विष्णुपुराणे ।

गच्छेच्छय्यामधिष्ठाय रात्रिसूक्तं जप्त्वा विष्णुं नमस्कृत्य सर्पाय सर्प्पभद्रं ते इत्येतच्छ्लोकद्वयं जप्त्वेष्टदेवतास्मरणङ्कृत्वा समाधिमास्थायान्यांश्च वैश्वदेविकान्मन्त्रान्सावित्रीञ्जप्त्वा मङ्गलश्रुतिशङ्खञ्च शृण्वन्दक्षिणाशिराः स्वपेदिति।

दक्षिणाशिरा इति प्रदर्शनार्थम् । अतएव

पुराणे ।

प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतन्तु रोगदम् ॥ इति ।

मार्कण्डेयः ।*

शून्यालये श्मशाने च न वह्निसमीपे न वेदसमाप्तौ नाशुचिर्न नग्नो न विशीर्णखट्वायां न भूतयक्षगृहायतनेषु श्मशानवल्मीकमहावृक्षच्छायासु च इति ।

---

* शून्यालये श्मशाने च एकवृक्षे चतुष्पथे । महादेवगृहे वापि मातृवेश्मनि न स्वपेदिति पुस्तकान्तरे पाठः ।

विष्णुः ।

नार्द्रपादः स्वपेन्न पलाशशयने न पञ्चदारुकृते न विद्युद्दग्धकृते नाग्निपुष्टे न घटसिक्तद्रुमजे न बालमध्ये नारिमध्ये न धान्यगोगुरुहुताशसुराणामुपरि नोच्छिष्टे न दिवेति ।

तथा ।

निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत् ।
पर्य्यङ्कात्प्रमदां भाला*त्पुण्ड्रम्पुष्पाणि मस्तकात् ।
गदप्रमादयक्ष्माहिभयदाः सर्व्वदा इमे ॥

इति शयनविधिः ।

इह मदनपारिजाते मदनक्षितिपालदानजलरूढ़े ।
स्तवकस्तृतीय आसीदामोदाकृष्टपण्डितभ्रमरः ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमियादियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति पण्डितपारिजातभट्टारमल्लेत्यादिविरुदराजीविराजमानस्य
श्रीमदनपालस्य निबन्धे मदनपारिजाताभिधेये
तृतीयस्तवकः ।

---

* बालामिति पाठान्तरम् ।

# चतुर्थः स्तवकः।

अथ शयनानन्तरं प्राप्तगर्भाधानादिसंस्काराः। तत्र गर्भाधानोपयुक्तत्वेन प्रथमसृतुकाला निरूप्यन्ते।

याज्ञवल्क्यः।

षोड़शर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत्।
ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रस्तु वर्ज्जयेत्॥

स्त्रीणां षोड़शनिशा ऋतुः गर्भाधानयोग्यकालस्तत्रोक्तविधिना गच्छन् ब्रह्मचार्य्येव।

चतुर्द्दश्यष्टमी चैव अमावस्या च पूर्णिमा।
चत्वार्य्येतानि* पर्व्वाणि रविसंक्रान्तिरेव च॥

मनुः।

अमावास्यामष्टमीञ्च पौर्णमासीञ्चतुर्द्दशीम्।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥

तथा।

तासामाद्याश्चतस्रश्च निन्दितैकादशी तथा।
त्रयोदशी च शेषाः स्युः प्रशस्ता दशरात्रयः॥

एकादशीत्रयोदश्यावृतोर्न† पक्षस्य।

हारीतस्तु।

चतुर्थरात्रावपि गर्भाधानमिच्छति चतुर्थेऽहनि स्नातायां

---

* पर्व्वाण्येतानि राजेन्द्रेति पाठान्तरम्। † स तु प्रथमर्त्तुदिनमारभ्य एकादशनिशा-त्रयोदशनिशे त्याज्ये इत्यर्थः।

युग्मासु च गर्भाधानं तदुपेतम् । ब्रह्मगर्भं सन्दधाति इति ।

तथा ।

शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला* ।
दैवे कर्म्मणि पित्रे च पञ्चमेऽहनि शुध्यति ॥ इति ।

तथा ।

ततश्चतुर्थ्यां स्त्रीगमनस्य परिहितप्रतिषेधत्वाद्विकल्पः स च व्यवस्थितः रजोनिवृत्तौ चतुर्थ्यां विधिस्तदनिवृत्तौ प्रतिषेधः अनेनैवाभिप्रायेण ।

मनुः ।

रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला । इति ।

साध्वी गर्भाधानादिविहितकर्म्मयोग्येत्यर्थः ।

याज्ञवल्क्यः ।

एवं गच्छन्स्त्रियङ्क्षामां मघां मूलञ्च वर्ज्जयेत् ।
सुस्थ इन्दौ सकृत्पुत्त्रलक्षणं जनयेत्पुमान् ॥

एवं सकृद्दानावेकवारमेव गच्छेदित्यर्थः । पुमानेकनियमयुक्तः अप्रतिहतपुंस्को भवेत् ।

ज्योतिःशास्त्रे ।

पित्र्यं पौष्णं नैर्ऋतं वा निधिरूपन्त्यजेति ।

पित्र्यं मघा पौष्णं रेवती नैर्ऋतं मूलम् ।

---

* अशुद्धा दैवपैत्र्ययोरिति क्वचित्पाठः ।

ऋतुगमने स्नानमाहापस्तम्बः ।

ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु सदा कार्य्यं शौचं मूत्रपुरीषवत् ॥
द्वावेतावशुची स्यातान्दम्पती शयनङ्गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

प्रसङ्गाद्रजस्वलाव्रतानि ।

तत्र वशिष्ठः ।

त्रिरात्रं रजस्वलाऽशुचिर्भवति । सा नाञ्ज्यान्नाभ्यञ्ज्यान्नाप्सु स्नायादधः शयीत न दिवा सुप्यान्न रज्जुं प्रमृजेन्न दन्तान्धावयेन्न मांसमश्नीयान्न ग्रहान्निरीक्षेत न हसेन्न किञ्चिदाचरेन्नाञ्जलिना जलं पिबेन्न खर्व्वेण पात्रेण लोहितायसेन वेति ।

खर्व्वो वामहस्तः । अयञ्च वामहस्तस्य निषेधः केवलस्यैव अथवा खर्व्वपात्रम् । लोहितायसं ताम्रम् ।

स्नानानन्तरं पुनरपि रजोदर्शने विशेषमाह

हारीतः ।

रजस्वला यदि स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्व्वागशुचित्वं न विद्यते ॥
एकोनविंशतेरर्व्वागेकाहं स्यात्ततो द्व्यहम् ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥ इति ।

अष्टादशदिनादर्व्वाक् सप्तदशदिनाभ्यन्तरे इत्यर्थः । एवमुत्तरत्रापि । इयञ्च गणना रजोदर्शनदिनादारभ्य ।

यत्तूक्तम् ।

चतुर्दशदिनादर्व्वागशुचित्वं न विद्यते । इति ।

तत्तु स्नानप्रभृति इति न विरोधः । प्रौढ़यौवनायास्तु अष्टादशदिनाभ्यन्तरे रजोदर्शनेऽपि त्रिरात्रमशुचित्वम् ।

इति ऋतुकालनिर्णयः ।

## अथ गर्भाधानम् ।

तत्र विष्णुपुराणे ।

ऋतावुपगमः शस्तः स्वपत्न्यां मन्त्रतो द्विजः । इति ।

मन्त्र इति द्विजातिविषयः । तत्र मन्त्रा गोभिलेनोक्ताः । ऊर्द्ध्वं त्रिरात्रं सम्भवे इत्येके । यदर्त्तुमती भवत्युपरतशोणिता तदा सम्भवकाले इत्युपक्रम्य दक्षिणेन पाणिना उपस्थमभिमृशेत् । विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि सिनीवालीति च समाप्नुयाद्वचौ सम्भवतः ।

स्त्रीणां बहुत्वे ऋतुयौगपद्ये गमनक्रममाह

देवलः ।

यौगपद्ये तु तीर्थानां विप्रादिक्रमशो व्रजेत् ।

रक्षणार्थमपुत्राणां ग्रहणक्रमशोऽपि च ॥ इति ।

तीर्थस्त्वृतुर्विप्रादिक्रमो वर्णक्रमः ग्रहणक्रमो विवाहक्रमः । ननु वर्णक्रमेणैव विवाहोऽपीति पुनरपि ग्रहणक्रमोपादानमनर्थकमिति चेन्नैवं प्रथमतः स्वजात्यादिक्रमेणोढ़दारस्य

दैवादन्यतरवर्णदारान्तरितस्य पुनस्तद्वर्णकन्यकापरिणीतस्य सवर्णापुत्रवती दारेषु ऋतुकालयौगपद्ये विवाहक्रमेण गमनं नियम्यत इति ग्रहणक्रमोपादानस्य सार्थकत्वात् ।

पराशरः ।

ऋतुस्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

अत्रासन्निधौ तु न दोषः । सन्निधानेऽपि सुस्थस्यैवायं नियमः ।

यः स्वदारानृतुस्नातां सुस्थः सन्नोपगच्छति ।

इति स्मरणात् । अयञ्च ऋतुगमननियमोऽजातपुत्रस्यैव मनुना ज्येष्ठस्य प्राशस्त्याभिधानादितरेषां कामजत्वनिर्द्देशाच्च ।

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते ।
स एव धर्म्मजः पुत्रः कामजानितरान्विदुरिति ॥

इति गर्भाधानम् ।

## अथ पुंसवनम् ।

तत्र याज्ञवल्क्यः ।

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरेति ।

पुंसवनमित्यनुवृत्तौ

पारस्करः ।

मासे द्वितीये वा यदहः पुंसा नक्षत्रेण चन्द्रमाः स्यादिति ।

पुंसां नक्षत्रेण पुंनक्षत्रेण तानि च रत्नकोषे दर्शितानि ।

हस्तो मूलं श्रवणः पुनर्व्वसुर्मृगशिरस्तथा ।

पुष्यः पुंसंज्ञितेषु कार्य्येषु ह्येतानि शुभानि धिष्ण्यानीति॥

बृहस्पतिस्तु जातगर्भे स्पन्दने पुंसवनमाह ।

सवनं स्पन्दिते शिशाविति ।

अत्र यथाशाखं व्यवस्था ।

इति पुंसवनम् ।

## अथ सीमन्तोन्नयनम् ।

गोभिलः ।

प्रथमे गर्भे चतुर्थे मासीति ।

बौधायनः ।

अथ सीमन्तोन्नयनं मासि चतुर्थे षष्ठे पञ्चमे वेति ।

लौकाक्षिः ।

तृतीये गर्भमासे तु सीमन्तोन्नयनङ्कारयेत् । इति ।

अत्र विशेषमाह शौनकः ।

आपूर्य्यमाणे पक्षे यदा पुंसां नक्षत्रेण चन्द्रमा युक्तः स्यादिति पुंसवनसीमन्तोन्नयने स्त्रीसंस्कारौ ।

अतएव सकृत्कर्त्तव्याविति केचन ।

पारस्करः ।

पुंसवनसीमन्तोन्नयनम्प्रथमगर्भे । इति ।

तथाच देवलोऽपि ।

सकृच्च संस्कृता नारी सर्व्वगर्भेऽपि संस्कृतेति ।

हारीतः ।

सकृत्संस्कृतसंस्कारा* सीमन्तेन द्विजस्त्रियः† ।
यं यङ्गर्भं प्रसूयन्ते स गर्भः‡ संस्कृतो भवेत् ॥ इति ।

विष्णुः ।

सीमन्तोन्नयनङ्कर्म्म न स्त्रीसंस्कार इष्यते ।
केचिद्§गर्भस्य संस्काराद्गर्भङ्गर्भम्प्रयुञ्जते¶ ॥ इति ।

अत्रापि स्वस्वगृह्यानुसारेण व्यवस्था ।

अकृतसीमन्तायाः प्रसवे सत्यव्रतोक्तो विशेषः ।

स्त्री यदाऽकृतसीमन्ता प्रसूते तु कथञ्चन ।
गृहीतपुत्रा विधिवत्पुनः संस्कारमर्हति ॥ इति ।

इति सीमन्तोन्नयनम् ।

## अथ जातकर्म्म ।

तत्र विष्णुः ।

जातकर्म्म ततः कुर्य्यात्पुत्रे जाते यथोदितम् । इति ।

यथोदितं स्वस्वगृह्योक्तविधिनेत्यर्थः । तच्च स्नानानन्तरम् ।

जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते ।

---

* सकृच्च कृतसंस्कारा इति पुस्तकान्तरे पाठः । † कुलस्त्रिय इति पुस्तकान्तरे पाठः ।
‡ सर्व्वेति पाठान्तरम् । § किञ्चिदिति पाठान्तरम् । ¶ गर्भे गर्भं इति पाठान्तरम् ।

इति संवर्त्तस्मरणात् । एतच्च स्नानं रात्रावपि भवति ।
यथाह व्यासः ।

रात्रौ स्नानं न कुर्व्वीत दानञ्चैव विशेषतः ।
नैमित्तिकन्तु कुर्व्वीत स्नानन्दानञ्च रात्रिषु ॥ इति ।

नैमित्तिकदानान्यपि स एवाह ।

ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥

जातकर्म्म च नाभिनालभेदनात्* पूर्व्वमेव ।
तथाच मनुः ।

प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म्म विधीयते । इति ।

जैमिनिः ।

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकन्तु विधीयते ॥

यच्च विष्णुधर्म्मोत्तरे ।

अच्छिन्ननाभ्याङ्कर्त्तव्यं श्राद्धं वै पुत्त्रजन्मनि ।
अशौचोपरमे कार्य्यमथवा नियतात्मभिः ॥ इति ।

तत्तु कर्त्तृप्रधानाद्यपेक्षया† वेदितव्यम् ।
तथाच वैजवापः ।

जन्मनोऽनन्तरङ्कार्य्यं जातकर्म्म यथाविधि ।
दैवादतीतकालश्चेदतीते सूतके भवेत् ॥ इति ।

* नाभिनालच्छेदनादिति पाठान्तरम् । † कर्त्तृप्रधानाद्यभाव इति पाठान्तरम् । कर्त्तुः प्रधानस्य पितुर्विदेशगमनादिना सन्निधानाभावे तदपेक्षयेत्यर्थः ।

तच्च श्राद्धमामेन ।

अतएव प्रचेताः ।

स्त्री शूद्रः श्वपचश्चैव जातकर्म्मणि चाप्यथ ।
आमश्राद्धं सदा कुर्य्याद्विधिना पार्व्वणेन तु ॥ इति ।

आमाभावे हेम्ना ।

तथाच व्यासः ।

द्रव्यालाभे द्विजालाभे प्रवासे पुत्त्रजन्मनि ।
हेमश्राद्धम्प्रकुर्व्वीत यस्य भार्य्या रजस्वला ॥

द्रव्याभावे आमद्रव्यालाभे यस्य भार्य्येत्ययं पक्षः श्राद्धस्तवके व्याख्यास्यते । प्रतिग्रहस्य नाभिवर्द्धनात्पूर्व्वं तदहर्व्वा ।

यथाह शङ्खः ।

कुमारप्रसवे नाभ्यामच्छिन्नायां गुड़तिलहिरण्यवस्त्र-गोधान्यादिप्रतिग्रहेष्वदोषस्तदहस्त्वेके कुर्व्वत इति ।

सर्व्वेषां सकुल्यानां द्विपदचतुष्पदौ धान्यानि हिरण्यानि दद्यात् ।

अशौचमध्येऽप्येतत्कार्य्यमित्याह प्रजापतिः ।

अशौचे तु समुत्पन्ने पुत्त्रजन्म यदा भवेत् ।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचेन शुध्यति ॥ इति ।

यत्तु ज्योतिःशास्त्रे ।

मृदुध्रुवक्षिप्रचरेषु भेष्वेषामुदयेऽपि वा ।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म्म च नाम वा ॥ इति ।

तद्दैवाज्जातकर्म्मनामकरणोत्कर्षे* वेदितव्यम्। अनुत्कर्षे तु नायं नियमः। नित्यस्नानोत्तरभावित्वान्नैमित्तिकस्य।

इति जातकर्म्म।

## अथ नामकरणम्।

तत्र मनुः।

नामधेयं दशम्यान्तु द्वादश्यां वास्य* कारयेत्।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते॥

याज्ञवल्क्यः।

अहन्येकादशे नामेति।

भविष्यपुराणे।

नामधेयन्दशम्यान्तु केचिदिच्छन्ति पार्थिव।
द्वादश्यामपरे रात्रौ मासे पूर्णे तथा परे।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः॥

गृह्यपरिशिष्टे।

जननाद्दशरात्रे व्युष्टे† शतरात्रे संवत्सरे चेति।

---

* स्वकालादुत्तरकाले कर्त्तव्ये इत्यर्थः।

---

* वाथ कारयेदिति अन्यत्र पाठः। † गते।

शङ्खः ।

अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते । इति ।
न चायं नियमः, तथाच नामधेयं दशम्यामित्यादिवचनविरोधात् । ततश्चाहन्येकादशे नामेत्यादीनां विवक्षितार्थत्वमेव तेनाशौचमध्येऽपि कार्य्यं स्वगृह्यानुसारेण वेति पक्षा व्यवस्थिता* विज्ञेयाः ।

शङ्खलिखितौ ।

दशम्यामुत्थाप्य पिण्डवर्द्धनं पितॄणां तत्र सान्निध्यमिति श्रुतेः । ब्राह्मणे चाहुतिम्पूर्व्वं पितॄननुमान्य तदहरेव नामकरणं कुर्य्याद्दैवतानक्षत्रादिसम्बद्धं पिता नाम कुर्य्यादन्यो वा कुलवृद्धश्चतुरक्षरं द्व्यक्षरं वा घोषवदाद्यन्तस्थं† पुंसामीकारान्तं स्त्रीणामेवं कृते नाम्नि शुचि तत्कुलं भवतीति ।

अयमर्थः । दशमेऽहनि सूतिकां पूर्व्वशय्यादुत्थाप्य पिण्डवर्द्धनमिति नाम कर्म्म तत्कुर्य्यात् । तत्र चायं क्रमः । ब्राह्मणे पूर्व्वमाहुतिं पितॄननुमान्याभ्युदयश्राद्धेन पूजयित्वा पिता तदभावे सान्निध्यादिना अन्यो नाम कुर्य्यात् । तत्र नियमः चतुरक्षरमित्यादि । वर्गतृतीयचतुर्थान्यक्षराणि गकारघकारादीनि तान्यादौ कृत्वा यरलवा अन्तस्थास्तन्मध्ये कुर्य्यादिति ।

---

* व्यवस्थितविकल्पाः । † स्वरवर्णयुक्ताद्यन्तस्थम् ।

वैजवापः ।

पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरं चतुरक्षरं परिमितञ्चेति ।

अत्र समसंख्या पुंसः ।

शङ्खः ।

अयुग्माक्षरमाकारान्तं स्त्रियै तद्विहितमपि ।

ईकारान्तं स्त्रीणामिति स्वकुलसम्बद्धं कुर्य्यात् ।

तथाच शङ्खः ।

कुलदेवतासम्बद्धं पिता नाम कुर्य्यादिति ।

कुलसम्बद्धं देवतासम्बद्धं वेत्यर्थः ।

मनुः ।

मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥

मङ्गलबलधननिन्दाप्रतिपादकानि क्रमेण नामानि भवन्तीत्यर्थः । यथा रुद्रशर्म्मा शक्तिपालो धनपुष्टो हीनदास इति ।

यमस्तूत्तरपदनियममाह ।

शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च भूभुजः ।
भूतिर्द्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

त्रातेति रक्षाशब्दप्रदर्शनार्थम् । अत्र शक्तिपालेत्यादिशब्दाभवन्ति ।

इति नामकरणम् ।

## अथ निष्क्रमणम् ।

भविष्यपुराणे ।

उत्तरार्द्धे मनुरपि ।

द्वादशेऽहनि* राजेन्द्र शिशोर्निष्क्रमणं गृहात् ।
चतुर्थे मासि कर्त्तव्यं यथान्येषां मतं विभो ॥

अत्र विशेषमाह यमः ।

ततस्तृतीये† कर्त्तव्यं मासि सूर्य्यस्य दर्शनम् ।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥

लोकाक्तिः ।

तृतीये मासे आदित्यस्य दर्शनमिति ।

अत्रापि पूर्ववदेव‡ व्यवस्था ।

सुरेश्वरः ।

जीवभार्गवसौम्यानां शिशुनिष्क्रमणक्रिया ।
दिवसे शस्यते नित्यमायुर्वृद्धिर्बलं प्रजा ॥
अश्विनी रेवती हस्ता धनिष्ठा रोहिणी तथा ।
श्रवणं पुष्यसंयुक्तं मृगेणो§त्तरफल्गुनी ॥
अनुराधोत्तराषाढ़ा तथाचैव पुनर्व्वसुः ।
इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ ॥

इति निष्क्रमणम् ।

---

* नाम कुर्य्यादिति पूर्ववचनानुषङ्गेनान्वयः । † तृतीये मासि इति सामवेदिविषये ज्ञेयः । चतुर्थे मासि इति ऋग्वेदियजुर्वेदिविषये ज्ञेय इति स्मार्त्ताः । ‡ कुलानुसारिणी व्यवस्था । § मृगशिरसा सह उत्तरफल्गुनी ।

## अथ कर्णवेधः ।

ज्योतिःशास्त्रे ।

कार्त्तिके पौषमासे* वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥
सुनक्षत्रे शुभे चन्द्रे सुस्थे शीर्षोदये शुभे ।
दिनच्छिद्रेऽव्यतीपाते विष्टिवैधृतिवर्ज्जिते† ॥
शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः ।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥

हस्ताश्विनीस्वातिपुनर्व्वसौ च
तिष्येन्दुचित्राहरिरेवतीषु ।
चन्द्रेऽनुकूले गुरुशुक्रवारे
कर्णौ तु वेध्यौ प्रवरेज्यलग्ने‡ ॥

अयञ्च कर्णवेधः कुलक्रमागतकाले कर्त्तव्यः ।

इति कर्णवेधः ।

---

* पौर्णमासे वा इति संस्कारमयूखे पाठः ।

† पौषादिविधिः मुख्यकाले कर्णवेधे विज्ञेयः अन्यच पौषादिनिषेधात् । शीर्षोदयो यथा

अजगोपतियुग्मञ्च कर्किधन्विमृगास्तथा ।
निशासंज्ञाः स्मृताश्चैते शेषाश्चान्ये दिनात्मकाः ॥
निशासंज्ञाविमिथुनाः स्मृताः पृष्ठोदयास्तथा ।
शेषाः शीर्षोदया ह्येते मीनश्चोभयसंज्ञकः ॥

इति । दिनञ्च छिद्रञ्च दिनच्छिद्रं तस्मिन् छिद्रे अष्टमलग्ने छिद्राख्यमष्टमस्थानमिति स्मरणात् ।

‡ प्रवरे प्रशस्ते इज्यलग्ने वृहस्पतियुक्तलग्ने ।

## अथान्नप्राशनम्।

तत्र मनुः।

षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले।

लौगाक्षिः।

षष्ठे मासेऽन्नप्राशनं जातदन्तेषु वेति।

यमः।

ततोऽन्नप्राशनं मासि षष्ठे कार्य्यं यथाविधि।
अष्टमे वाथ कर्त्तव्यमिति।

शङ्खः।

संवत्सरेऽन्नप्राशनमिति। व्यवस्था च पूर्व्ववत्*।
अत्र विशेषो मार्कण्डेयपुराणे।

देवतापुरतस्तस्य धात्रुत्सङ्गगतस्य च।
अलङ्कृतस्य दातव्यमन्नं पात्रेऽथ काञ्चने।
मध्वाज्यकनकोपेतं प्राशयेत्पायसैर्युतम्॥

तदनन्तरं शिशोर्जीविकापरीक्षाप्रकारमाह स एव।

देवाग्रतोऽथ विन्यस्य शालिभाण्डानि सर्व्वशः।
शस्त्राणि चैव शास्त्राणि ततः पश्येत्तु लक्षणम्॥
प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा।
जीविका तस्य बालस्य तेनैव च भविष्यति॥ इति।

इत्यन्नप्राशनम्।

* कुलाचारानुरूपेणेत्यर्थः।

# अथ चूड़ाकर्म्म।

तत्र मनुः।

चूड़ाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

यमः।

तथा संवत्सरे पूर्णे चूड़ाकर्म्म विधीयते।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

शङ्खलिखितौ।

तृतीये वर्षे चूड़ाकर्म्म विधीयते।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

शङ्खलिखितौ।

तृतीये चूड़ाकर्म्म पञ्चमे वा।

लौगाक्षिः।

तृतीयस्य वर्षस्य भूयिष्ठे गते चूड़ां कारयेत्। दक्षिणतः कमुजा वशिष्ठानामुभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूड़ा अङ्गिरसो राजिमेके मङ्गलार्थं शिखिनोऽन्ये च वटपत्रवद्यथा कुलधर्म्मं वा शुक्लपक्षस्य पुण्याहे पर्व्वणि चेति।

कमुजा चूड़ा राजिं केशपङ्क्तिं मङ्गलार्थमिति अन्ये तु मङ्गलार्थं शिखामात्रं वटपत्राकृतिं केचन कुर्व्वन्ति। अत्रापि यथागृह्यं व्यवस्था।

व्यासः ।

अश्विनी श्रवणा स्वाती चित्रा पुष्यपुनर्व्वसू ।
धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत् ॥

चौरमिति शेषः ।

तथा ।

नचत्रे न तु कुर्व्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्य्यं नैवाग्नेये च भारत ।
दारुणेषु च सर्व्वेषु दुष्टतारांश्च वर्ज्जयेत् ॥

अन्ये सत्तिथितारादयो विशेष उपनीयते तत्प्रकरणोक्ता अत्र द्रष्टव्याः ।

इति चूड़ाकर्म्म ।

## अथ स्त्रीसंस्काराः ।

तत्र मनुः ।

अमन्त्रिता तु कार्य्या च स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥

आवृज्जातकर्म्मादिक्रिया । यथाक्रममित्यभिधानात् क्रमातिक्रमो न कर्त्तव्य इत्युक्तं भवति ।

अतएव कालातिक्रमणे कात्यायनेन प्रायश्चित्तमभिहितम् ।

देवतानां विपर्य्यासे जुहोतिषु कथं भवेत् ।
सर्व्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात्पुनः ॥

संस्कारा अतिपद्येरन् स्वकालाच्चेत्कथञ्चन ।
हुत्वा तदेव कर्त्तव्या ये तूपनयनादधः ॥

सर्व्वप्रायश्चित्तमपि स एवाह ।

सर्व्वप्रायश्चित्तञ्च पञ्चभिः प्रत्यृचं त्वन्नो अग्न इति ।
द्वाभ्यामयाश्चाग्नेश्चेति शतमुत्तममिति वेति ।

उपनयनकालातिपत्तौ तु व्रात्यस्तोमाद्येव । एतेष्वेकैकलोपे पादकृच्छ्रः चौड़लोपेऽर्द्धकृच्छ्रम् ।

स्त्रीसंस्कारे गोभिलो विशेषमाह ।

तूष्णीमेताः क्रियाः स्त्रीणां मन्त्रेण तु होम इति ।

## अथ विद्यारम्भः ।

तत्र मार्कण्डेयः ।

प्राप्तेऽथ पञ्चमे वर्षे अप्रसुप्ते जनार्द्दने ।
षष्ठीम्प्रतिपदञ्चैव वर्ज्जयित्वा तथाष्टमीम् ॥
रिक्तां पञ्चदशीञ्चैव सौरभौमदिनं तथा ।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीञ्चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां विद्याञ्च विशेषतः ॥
एतेषामेव देवानां नाम्ना तु जुहुयाद्घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यञ्चात्र पूजनम् ॥
प्राङ्मुखो गुरुरासीनो वारुणाभिमुखं शिशुम् ।

अध्यापयेत प्रथमं द्विजाग्नीभिः प्रपूजितम् ॥

ततःप्रभृत्यनध्यायान्वर्ज्जनीयानि* वर्ज्जयेदिति ॥

अस्य निगोश्च कामचारवादभक्षः† ।

यथाह गौतमः ।

प्रागुपनयात्कामचारवादभक्ष इति ।

कामचारोऽप्यपतनीयकर्म्मस्वेव । तत्र पादो बालेषु दातव्य-इत्यादिप्रायश्चित्तस्मरणात् ।

इति गर्भाधानादिसंस्काराः ।

## अथ तृतीयाश्रमः ।

ब्रह्मचर्य्याश्रमो गृहस्थाश्रमश्चेति द्वावाश्रमौ धर्म्मौ विस्तारेण प्रतिपादितौ । अथ तृतीयाश्रमः प्रस्तूयते । तत्र शङ्खः ।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥
पुत्रे दारान्विनिक्षिप्य तया वानुगतो वने ।
अग्नीनुपाचरेन्नित्यं वन्यमाहारमाहरेत् ॥
यदाहारो भवेत्तेन पूजयेत्पितृदेवताम् ।

---

* वर्ज्जनीयानिति पाठान्तरम् । † कामचारवादेन यदृच्छाचारानुगुण्येन भक्षः भक्षणं निषिद्धान्नादेरिति शेषः ।

तेनैव पूजयेद्विद्वानतिथिं समुपागतम् ॥
ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् समाहितः ।
स्वाध्यायञ्च तथा कुर्य्याज्जटाश्च बिभृयात्तथा ॥
तपसा शोषयेन्नित्यं स्वकञ्चैव कलेवरम् ।
आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा ॥
प्रावृष्याकाशशायी* च नक्ताशी च सदा वसेत्† ।
चतुर्थकालिको‡ वा स्यात् षष्ठकालिक§ एव वा ॥
कृच्छ्रैर्वापि नयेत्कालं ब्रह्मचर्य्यञ्च पालयेत् ।
एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी¶ भवेत् ॥ इति ।

## अथ चतुर्थाश्रमः ।

तत्र‖ प्रथमं त्रैवर्णिकेषु कोऽधिक्रियत** इति विचार्य्यते । तत्र छन्दोगसूत्रकारः ।

त्रयाणामधिकृतिः ।

ब्राह्मणः क्षत्त्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात् ।

धर्म्मविवृतावपि ।

ब्राह्मणः क्षत्त्रियो वैश्यस्ततो गच्छेद्वनङ्कृती ।
सन्न्यसेद्वासनाशान्तः सर्व्वभूतदयापरः ॥　इति ।

---

* अनावृतस्थलशायी ।　† भवेदिति पाठान्तरम् ।　‡ एकदिनोपवासानन्तरं नक्तभोजनम् ।　§ दिनद्वयाभोजनानन्तरं नक्तभोजनम् ।　¶ वानप्रस्थाश्रमी ।　‖ चतुर्थाश्रमे ।　** शास्त्रैरिति शेषः ।

त्रैवर्णिकस्याधिकारमेतानि वाक्यानि विदधति। अतस्त्रैवर्णिकानामपि तुर्य्याश्रमेऽस्त्येवाधिकारः। या तु जावालश्रुतिः। ब्राह्मणाः प्रव्रजन्तीति तस्येयं गतिः ब्राह्मणशब्दः प्रदर्शनार्थः। अतः क्षत्रियवैश्यावप्युपलक्षयति तेन न विरोध इति। अथ ब्रह्म वेदस्तन्निष्ठस्तदधीतवान् ब्राह्मण इति व्युत्पत्त्या ब्राह्मणशब्दो वर्णत्रयपरः। एतेन

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्।

इत्यादि मन्वादिवचनान्यपि व्याख्यातानि।

यच्च दत्तात्रेयवचनम्।

मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानामयं धर्म्मो न विद्यते॥ इति।

तथा।

गतिस्तुर्य्याश्रमे नास्ति बाहुजोरुजयोः क्वचित्।
तुर्य्याश्रमे गतिः प्रोक्ता मुखजानां स्वयम्भुवा॥ इति।

एतच्च वचनद्वयं वस्तुतो न विरुध्यते। मुखजाः ब्राह्मणाः। बाहुजाः क्षत्रियाः। ऊरुजाः वैश्याः। एषामयं धर्म्मो लिङ्गधारणात्मको न विद्यते। लिङ्गं लक्षणं चिह्नं त्रिदण्डैकदण्डरूपम्।

तथाच दक्षः।

मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते।
गृहस्थो यष्टिवेदाद्यैर्नखरोमैर्वनाश्रितः।
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक्॥ इति।

त्रिदण्डग्रहणमेकदण्डस्यापि प्रदर्शनार्थम्। एवंविधं चत्त्रिय-वैश्ययोर्नेति दण्डधारणनिषेध एव नाश्रमनिषेधः। तथाच गतिस्तुर्य्याश्रमे नास्तीत्यस्याप्ययमर्थः गतिर्ज्ञानं सर्व्वे गत्यर्था ज्ञानार्था इति स्मरणात्। ज्ञानञ्च ज्ञापकनिष्पाद्यमतएव ज्ञापककार्य्यं तत्तेन ज्ञापकरूपेण कार्य्येण कारणं लक्ष्यते। तथाचैतदुक्तं भवति चत्त्रियवैश्ययोर्ज्ञापकं दण्डधारणं नास्तीति लिङ्गनिषेध एव नत्वाश्रमनिषेध इति दण्डधारणं वहिरङ्गं विषयविराग एव मुख्यः विरागाभावे अधिकाराभावात्। यच्च धर्म्मविवृताविव वचनान्तरम्।

सन्न्यसेद्ब्राह्मणः सम्यक् वानप्रस्थो भवेन्नृपः।
वानप्रस्थो भवेद्वैश्य एवं वर्णक्रमः स्मृतः॥ इति।

अत्रापि ब्राह्मणः सम्यक् न्यसेदिति सम्यक्शब्दोपादानात् ब्राह्मणस्य वहिरङ्गभूतदण्डधारणोपेत एव सन्न्यासी न तु तद्र-हित इति गम्यते। तथाच चत्त्रियवैश्ययोस्तद्रहित आश्रमी भवतीत्यर्थादुक्तम्भवति अन्यथा छन्दोगसूत्रकारादिवचनविरो-धापत्तेः। अयञ्च तात्पर्य्यार्थः। अबाधेनोपपत्तौ बाधोन न्याय्य इति न्यायेन श्रुतिस्मृतिवाक्यविरोधपरिहाराय विधिवाक्या-नामाश्रमस्वरूपविधौ* तात्पर्य्यम्। निषेधवाक्यानान्तु दण्ड-ग्रहणमात्रनिषेधे तात्पर्य्यम्। तस्मात् चत्त्रियवैश्ययोर्दण्डग्रहण-मात्रनिषेधो न त्वाश्रमनिषेध इति। एवं प्राप्ते† ऽभिधीयते।

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी। इति।

---

* दण्डादिकमपहाय केवलाश्रमग्रहणरूपविधौ। † पूर्व्वपक्षिते।

अतः श्रुत्यनुसारेण व्यवस्थात्र विधीयते। ब्राह्मणाः प्रव्रजन्ति इति श्रूयन्ते। अत्र ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिर्व्वाच्यो-ऽर्थः* ब्राह्मणोद्देशेन च प्रव्रज्या अभिधीयते। उद्देश्य-विशेषणमेवाविवक्षितं हविरुभयत्ववदुद्देश्यमविवक्षितं,† तस्मा-दिह ब्राह्मणोद्देशेन सन्न्यासविधानादुद्देश्यस्य ब्राह्मणत्वस्येह विवक्षितत्वात्तस्यैव प्रव्रज्याधिकारो नान्यस्य। ननु यदि भवेद्ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिर्वाच्यार्थः तर्हि तस्योद्देश्यत्वेन विवक्षितत्वात्क्षत्रियवैश्ययोः प्रव्रज्यायां माभूदधिकारः न च तथा ब्राह्मणत्वजातिरर्थः। अपि तु ब्रह्म वेदस्तन्निष्ठास्तद-ध्ययनवन्तो ब्राह्मणा इति वेदाध्ययनवत्त्वमेकोऽनुगतो धर्म्मः। स च‡ ब्राह्मणशब्दस्यार्थः। तथाच वेदाध्ययनवत्त्वरूपेणैकेनो-पाधिना ब्राह्मणक्षत्रियवैश्यास्त्रयोऽपि क्रोड़ीभूता§ भवेयुः। एवञ्च ब्राह्मणोद्देशेन प्रव्रज्याविधानात्त्रयाणामपि वर्णानां तत्राधिकारोऽस्त्विति चेन्नैवम्। यथा क्षत्रियशब्दस्य क्षत्रियत्वं वैश्यशब्दस्य वैश्यत्वं गोशब्दस्य च गोत्वमर्थः तथा ब्राह्मण-शब्दस्यापि ब्राह्मणत्वमेवार्थ इति शेषः जैमिनिबादरायणा-दिभिरङ्गीकृतं तद्व्याहन्येत। तथोक्तव्याघातभयात् ब्राह्मण-शब्दस्य ब्राह्मणत्वं वेदाध्ययनवत्त्वं वोभयमिति वाच्यत्वेन परि-कल्प्येत तदन्यायस्यानेकार्थ इति तान्त्रिकैरनेकार्थत्वमेकशब्दस्य निषिद्धं तेन न्यायेन सह विरोधः प्रसज्यते।

---

* अर्थात् ब्राह्मणत्वजात्यवच्छिन्नव्यक्तिर्ग्राह्या। † बहुषु पुस्तकेषु एकरूपपाठदर्शनात् वद्रक्षितं परन्तु नतूद्देश्यमविवक्षितमित्येव साधु। ‡ वेदाध्ययनवत्त्वरूपः। § लक्षीभूताः।

अथैवं ब्रूषे अन्यायश्चानेकार्थत्वमिति न्याये जाग्रत्यपि गवादिशब्दानां यथानेकार्थत्वमेवं ब्राह्मणशब्दस्यापि अनेकार्थत्वमस्त्विति। न चैतदुचितमगतिका ह्मीयं गतिर्यदनेकशक्तिपरिकल्पनयानेकार्थत्वस्वीकरणं शब्दार्थज्ञाने हि वृद्धव्यवहारः प्रमाणम्। वृद्धाश्च गवादिशब्दानामनेकशक्तिकल्पनयाप्यनेकार्थत्वमङ्गीकुर्व्वते न ब्राह्मणशब्दस्य। अतएवाभिधानकारैरपि गवादिशब्दा अनेकार्थवर्गे परिगणितास्तेषा*मपि व्यवहारः शब्दश्लेषादिष्वेव शास्त्रं निर्णीय शास्त्रार्थपरिज्ञाने तु प्रसिद्धस्यैव ग्रहणं नेतरस्य† इतरस्यापि ग्रहणे गोपशुविधायकवाक्येऽपि सास्नाद्युपेतगोपिण्डव्यतिरिक्तस्यापि ग्रहणं स्यान्न च गृह्यते। तस्माच्छास्त्रार्थनिर्णयेषु प्रसिद्धार्थस्यैव ग्रहणं युक्तं विपरीतार्थद्योतकवाक्यशेषाभावादतोऽनेकार्थशक्तिकल्पनादोषभयाद्ब्राह्मणशब्दस्य ब्राह्मणत्वजातिरेवार्थः। ननु च जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायत इत्यत्र ब्राह्मणशब्दो यथा वर्णत्रयपर एवमत्राप्यस्त्विति चेन्नैवम्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्तथाहि ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति वाक्यशेषे ब्रह्मचर्य्यादिभिर्ऋष्याद्यृणत्रयापकरणप्रतीतेर्ब्रह्मचर्य्यादिषु च त्रैवर्णिकस्याधिकारात्। फलचमसवन्मुख्यान्तरेण‡ जायमानो वै ब्राह्मण इत्यत्रापि त्रैवर्णि-

---

* अनेकार्थानाम्। † अप्रसिद्धस्य। ‡ फलचमसवत् सोमाहर्तॄणां भक्ष्यः फलचमस इत्यत्र सोमादीनामपि भक्षणाकाङ्क्षितत्वात् यथा सोमाहृतपदं सोमादिग्राहकं तद्वदित्यर्थः। फलचमसः सदधिवटवल्कचूर्णम्। मुख्यान्तरेण क्षत्रियादिरूपेण इत्यर्थः।

कानुप्रवेशाद्युज्यते तच्च त्रैवर्णिकपरत्वम्। प्रकृते तु वाक्यशेषाद्यभावात्तत्रैवान्यो ब्राह्मणशब्देन प्रत्याख्यास्यते* ततः पूर्व्वमेव लब्धार्थिकाया रूढेः प्राबल्यादनुपपत्त्यभावाच्च रूढ्या ब्राह्मणत्वमेव प्रत्याय्यते।

अतश्च प्रथमप्रतीतब्राह्मणोद्देशेन प्रव्रज्याविधेश्चरितार्थत्वात् न चरमप्रतीतयौगिकार्थस्वीकरणमुचितम्। ततश्च औडुम्बरीं स्पृष्ट्वोद्गायेत् इति श्रुत्या विरुद्धमौडुम्बरी† सर्व्वा वेष्टयितव्येति स्मृतिवचनं यथा विरोधाधिकरणे‡ अप्रमाणमित्युक्तं एवं ब्राह्मणाः प्रव्रजन्तीति जाबालश्रुतिविरुद्धं तत्र त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इत्यादिकं स्मार्त्तवचनजातमप्रमाणमेव स्मार्त्तवचननिचयस्य सर्व्वथा प्रामाण्यपरिजिहीर्षया श्रुत्यनुकूलएवार्थः परिकल्पनीयः त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति छन्दोगसूत्रस्यायमर्थः। त्रयाणां वर्णानां यथोचितं चत्वार आश्रमा इति। औचित्यं च श्रुतिविरोधाद्ब्राह्मणस्यैव तुर्य्याश्रमाधिकारविधौ नान्यथा§।

त्रैवर्णिकानां सन्यासो विद्यते नात्र संशयः।
शिखायज्ञोपवीतानां त्यागपूर्व्वैकदण्डयुक्॥ इति

ब्रह्माण्डपुराणवचनमपि छन्दोगसूत्रेण समानार्थः।

---

* निषिद्धयते। † ताम्रमयी प्रतिमा। ‡ विरोधमधिकृत्य यत्र विचार्य्यते तद्विरोधाधिकरणम्। § श्रुतिविरोधाद्ब्राह्मणमात्रस्य चतुर्थाश्रमाधिकारविधाने औचित्यञ्च न अन्यथा क्षत्रियादिसाधारण्येनेत्यर्थः।

यच्च ब्रह्मवैवर्त्तवचनम् ।

वैराग्योत्पत्तिमात्रे च सन्न्यासे परियुज्यते ।

रागवान्न तु विप्रोऽपि वेदवेदाङ्गवित्तमः ॥ इति ।

वेदवेदाङ्गवित्तमोऽपि विप्रो रागवांश्चेत्स सन्न्यासे न परियुज्यत इत्यन्वयः । एवञ्च विप्रस्य विरक्तस्यैवाधिकारोऽभिहितो भवेन्न क्षत्रियादेः ।

यच्च स्मृत्यन्तरम् ।

ऋणत्रयमपाकृत्य निर्ममो* निरहङ्कृतिः ।

ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात् ॥

इत्यस्यायमभिप्रायः गृहात्प्रव्रजेत् वानप्रस्थाश्रमङ्गच्छेत् । प्रव्रज्याशब्दो यद्यपि सन्न्यासे रूढ़स्तथापि श्रुतिविरोधपरिहारार्थमत्र तृतीयाश्रमपरः अस्यापि† वैराग्यहेतुकत्वात्‡ । यद्वा ब्राह्मणः स्ववृत्तावजीवन् क्षत्रियवृत्तिमाश्रितः । तत्राप्यजीवन् वैश्यवृत्तिं ततश्च तामापदं निस्तीर्य्यापि न वर्णान्तरवृत्तिं परित्यजति किन्तु तत्रैव वृत्ताववस्थितः तदा तत्तत्क्षत्रियादिवृत्तिः क्षत्रिय इति वैश्य इति च व्यपदिश्यते§ शास्त्रानभ्यनुज्ञानकालेऽपि क्षत्रियादिवृत्तिनिरतत्वात् ततः सोऽपि प्रव्रजेद्गृहादिति प्रव्रज्याधिकारं दर्शयति । अतएव

---

* ममताशून्यः । † वानप्रस्थस्यापि । ‡ विषयविरागजन्यत्वात् । § क्षत्रियवृत्त्युपजीवी ब्राह्मणः क्षत्रियत्वेन व्यपदिश्यते एवं वैश्यवृत्त्युपजीवी ब्राह्मणः वैश्यत्वेन व्यपदिश्यते ।

ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात् ।

इत्यथशब्द उपात्तः । ब्राह्मण एव अनन्तरं क्षत्रियस्य श्रवणात् क्षत्रियः अथ वैश्य इत्यानन्तर्य्यप्रतिपादनादयमर्थो गम्यत इत्यर्थः । एतेन

ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनन्तु ती ।

सन्न्यसेद्वाथ वा शान्त

इत्येतदपि व्याख्यातम् । एवञ्च मनुदत्तात्रेयादिवचनान्यप्यानुकूल्यानि नेयानि ।

यञ्च जड़भरतम्प्रत्युपदेशः

पैङ्गिरहस्ये ।

यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भवाहेति ।

अत्रेदं चिन्त्यं किं जड़भरतं प्रत्येवोपदेश उत लक्षणया क्षत्रियमात्रम्प्रति । आद्ये जड़भरतस्यैवेति नेतरक्षत्रियप्राप्तिः । किञ्च जड़भरतोऽपि प्रैषोच्चारणपूर्व्वकमाश्रमं* गृहीतवान् इति न क्वापि श्रूयते । ततो ब्राह्मणाः प्रव्रजन्ति इति एतदनुरोधात्परमहंसो भवेत्यस्यायमर्थः परमहंस इव निर्म्ममो भवेति । नापि द्वितीयः तत्र हि लक्षणा सा च न युक्ता न विधौ लक्षणेति भट्टगुरुप्रभृतिभिर्विधौ लक्षणानिषेधात् । विधि-

---

* ब्रह्मसूत्रमहमेव छिन्नवान् छिन्नसूत्रं त्यजेदित्यारुणिश्रुत्युक्तमन्त्रोच्चारणपूर्व्वकमाश्रमम् ।

रिति वदन् वादी प्रष्टव्यः किं विशिष्टविधिः उत प्राप्ते कर्म्मण्यधिकारिविधिरिति ।

पक्षद्वयेऽपि* लक्षणाप्रसक्तिर्दुर्व्वारा। ननूद्देश्ये लक्षणा न विध्यंशे अतो न दोष इति चेत्तर्हि लक्षणोद्देश्येऽपि न युक्तेति ब्रूमः। तथाहि सम्बन्धानुपपत्तिभ्यां† हि लक्षणा। न चानुपपत्तिः पूर्व्वोक्तरीत्या वाक्यस्यार्थान्तरपरतयाप्युपपत्तेः‡। या च जावालिश्रुतिर्जनकयाज्ञवल्क्यसंवादे तत्र परमहंस-रामसंवर्त्त कारुणि श्वेतकेतु दुर्व्वासो रिभु निदाघ जड़भरत दत्तात्रेय रैवतकप्रभृतय इति। अत्रापि विधायकप्रत्यया-भावात्§ परमहंससदृशधर्म्मवन्त इति। अहङ्कारममतयोर-भावात्परमहंसा इति व्यपदिश्यन्ते। तस्मात्त्रिष्वेव ब्राह्मण-स्यैवाधिकार इति ।

## अथ यतिधर्म्माः ।

तत्र याज्ञवल्क्यः ।

सर्व्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।
एकावासः¶ परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥

त्रिदण्डीत्यनेनैकदण्डोऽपि गृह्यते ।

---

* विशिष्टविधिपक्षे अधिकारिविधिपक्षेऽपीत्यर्थः । † शक्यसम्बन्धतात्पर्य्यानुपपत्ति-भ्यामित्यर्थः । ‡ क्षत्रियवत्त्युपजीवित्वरूपार्थान्तरस्वीकारेणाप्युपपत्तेरित्यर्थः । § विधि-बोधकलिङादिरूपप्रवर्त्तकवाक्याभावात् । ¶ एकाराम इति पाठान्तरम् ।

अनेनैवाभिप्रायेण मनुः ।

वाग्दण्डोऽथ मनोदण्डः कर्म्मदण्डश्च ते त्रयः ।
यस्यैते नियताः दण्डाः स त्रिदण्डीति कथ्यते ॥

बौधायनः ।

एकदण्डी त्रिदण्डी वेति ।

चतुर्व्विंशतिमते ।

एकदण्डी त्रिदण्डी वा सर्व्वसङ्गविवर्ज्जितः ।

ते च दण्डाः वैणवाः ।

तथाच स्मर्य्यते ।

प्राजापत्येष्ट्यनन्तरं त्रीन् वैणवदण्डान्मूर्द्धप्रमाणान्दक्षिणेन पाणिना धारयेत् । सव्येन सोदकं कमण्डलुमिति ।

वशिष्ठः ।

मुण्डोऽममोऽपरिग्रह इति ।

सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीतमिति काठकश्रुतिः ।

तथा परिशिष्टेऽपि ।

अथ यज्ञोपवीतमप्सु जुहोति भूः स्वाहेत्यथ दण्डमादत्ते सखे मा गोपायेति ।

देवलः ।

काषायी मुण्डस्त्रिदण्डी कमण्डलुपवित्रपादुकासनकन्थामात्र इति ।

कण्वः ।

एकरात्रं वसिष्यामि नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांस्तु चतुरो वसेत् ॥

मत्स्यपुराणे ।

अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरोमासान्वार्षिकान्निवसेत्पुनः ॥
अविमुक्तप्रविष्टानां विहारस्तु न विद्यते ।
न देहो भविता तत्र दृष्टं शास्त्रे पुरातने ॥ इति ।

मनुः ।

विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते नित्यं भिक्षां यतिश्चरेत्* ॥
एककालश्चरेद्भिक्षां प्रसज्जेन्न तु विस्तरे ।
भैक्षप्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥

तत्राशक्तं प्रति वशिष्ठः ।

ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीत सायम्प्रातर्मधुमांसवर्ज्जमिति । तथा सप्तागाराण्यसङ्कल्पितानि चरेत् ।

संवर्त्तः ।

अष्टौ भिक्षाः† समादाय स मुनिः पञ्च सप्त वा ।

---

* विधूम इत्यादि विगतपाकधूमे निवृत्तावहननमुषले निर्व्वाणपाकाङ्गारे गृहस्थपर्य्यन्तभुक्तवज्जने उत्सृष्टशरावेषु त्यक्तेषु सर्व्वदा यतिर्भिक्षां चरेत् । एतच्च दिनशेषमुहूर्त्तत्रयरूपसायाह्नोपलक्षणम् । यथाह याज्ञवल्क्यः । अप्रमत्तश्चरेद्भैक्षं सायाह्ने नाभिसन्धितः इति कुल्लूकभट्टः । † अष्टभवनादानीता भिक्षाः ।

अद्भिः प्रक्षाल्य ताः सर्व्वास्ततोऽश्नीयाच्च वाग्यतः ॥
यथोक्तान्यपि कर्म्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने समाचक्ष वेदाभ्यासे च यत्नवान् ॥

अत्र वेदः प्रणवः ।

अतएव स्मृत्यन्तरम् ।

एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
उपवासात्परं भैक्ष्यं दया दानाद्विशिष्यते ॥ इति ।

तथा ।

नाभिनन्देत मरणं नाभिनन्देत जीवनम् ।
कालमेव प्रतीक्षेत निर्व्वेशम्भृतको* यथा ॥
अतिवादांस्तितिक्षेत† नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरङ्कुर्व्वीत केनचित् ॥

याज्ञवल्क्यः

यतिपात्राणि मृद्वेणुदार्व्वलाबुमयानि च ।
सलिलं शुचिरे‡ तेषां गोबालैश्चावकर्षणम् ॥

इयञ्च शुद्धि§र्भिक्षाचरणादिप्रयोगाङ्गभूता न पुनरमेध्याद्युपहतिविषया। अमेध्याद्युपहतौ तु द्रव्यशुद्धिप्रकरणे वक्ष्यमाणमनुसन्धेयम् । अतश्चैतदुक्तम्भवति। यदा भिक्षाचरणादिकङ्कर्म्म करिष्यमाणस्तदा तत्कर्म्मोपयुक्तमृदादिपात्राणि गोबालैश्चावघृष्य प्रक्षाल्य तत्कर्म्म कुर्य्यादिति ।

* निर्व्वेशं वेतनं भृतको दासः । † अप्रियोक्तिं सहेत । ‡ चिरतरस्थायिपात्रे । § गोबालैः मार्ज्जनरूपा ।

मनुरपि ।

अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।
तेषामद्भिः स्मृतं शौचञ्चमसानामिवाध्वरे ॥

भोजनमपि पात्रान्तराभावे तत्रैव कार्य्यम् ।

तथाच देवलः ।

तन्नैच्यं गृहीत्वैकान्ते* तेन पात्रेणान्येन वा तुष्णीं भुञ्जीतेति ।

एवङ्कुर्व्वतः फलमाह

याज्ञवल्क्यः ।

सन्निरुद्धेन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं हृत्वा च भूतानाममृती† भवति द्विजः ॥ इति ।

इह मदनपारिजाते मदनक्षितिपालदानजलरूढ़े ।
स्तवकश्चतुर्थ आसीदामोदाकृष्टपण्डितभ्रमरः ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमिया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति पण्डितपारिजातभट्टारमल्लेत्यादिविरुदराजीविराजमानस्य
श्रीमदनपालस्य निबन्धे मदनपारिजाताभिधेये
चतुर्थस्तवकः ।

---

* निर्जने ।  † मुक्तो भवति ।

# पञ्चमः स्तवकः ।

उक्ता वर्णाश्रमधर्म्मा अधुना तद्धर्म्मसंकोचे सति तेषामशौच-कालो निरूप्यते। तत्र च प्रथमं गर्भस्रावादिकालः। मासचतुष्टयाभ्यन्तरे स्रावः पञ्चमषष्ठयोश्च पातः। सप्तमादिषु प्रसवः।

तथाच स्मृत्यन्तरे।

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः।

अत ऊर्द्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्॥ इति।

तत्र मासत्रयादर्व्वाक् स्रावे त्रिरात्रमशौचम्। स्रंसने गर्भस्य त्र्यहं चेति गौतमस्मरणात्।

मरीचिरपि।

गर्भस्रावे यथामासमचिरे तूत्तमे त्र्यम्*।

राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु।

अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता॥ इति।

अचिरे मासत्रयाभ्यन्तरगर्भस्रावे उत्तमे ब्राह्मणे। अत्र राजन्ये तु चतूरात्रमित्याद्यपि विवक्षितम्।

स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्ज्जनम्।

पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्॥ इति

तेनैवाभिधानात्। यद्यचिरस्रावे राजन्यादिषु चतूरात्रादि-

---

* त्र्यह इति पाठान्तरम्।

पाते मातुर्यथामासमित्युक्तं स्यात्। वैश्यशूद्रयोरचिरस्रावे पञ्चाहाष्टाहाशौचं पञ्चममासपाते तु पञ्चाहमेवेति विप्रतिषिद्धं न तु पाते मातुर्यथा मासमिति द्वितीयं मरीचिवचनं ब्राह्मण-व्यतिरिक्तविषयमस्तु। एवं क्षत्रियादिष्वेकाहाशौचं परिकल्प्यते ततश्च मरीचिवचनयोः परस्परविरोधः। अतएव

ऋष्यशृङ्गोऽपि।

यत्र त्रिरात्रं विप्राणामशौचं सम्प्रदृश्यते।
तत्र शूद्रे द्वादशाहं षड़हः* क्षत्रवैश्ययोः॥

इति कल्पनाप्रकारमुपदिशति। नैतत्समञ्जसं मरीचिवचनाभ्यामेव विरोधान्तरस्य दुष्परिहार्य्यत्वात्।

तथाहि।

गर्भस्रावे यथामासमचिरे तूत्तमे त्रयः। इति

स्रावे तु त्रिरात्रं स्यादिति च वाक्यद्वयम्। तत्र स्रावे मातुरित्येतच्च विरोधपरिहाराय अचिरे तूत्तमे त्रय इत्येतद्विषय एवोपसंहरणीयम्। तथाच चतुर्थे मासि स्रावे त्रिरात्रापेक्षयाधिकं सार्द्धत्रिरात्रमशौचं कल्पनीयमचिरस्रावत्वाभावात्। पाते मातुर्यथामासमिति पञ्चमषष्ठयोर्यथामासाशौचाभिधानाच्च। ततश्च गर्भस्रावे यथामासमिति चतुर्थे मासेऽपि दिनचतुष्टयाशौचाभिधानं विरुध्येत। अथात्र स्रावशब्दः पातपरः तर्हि पाते मातुरित्यनेन पौनरुक्त्यं स्यात्।

---

* षन्नवः क्षत्रवैश्ययोरिति देशान्तरीयपाठः।

अतः स्रावयचनविरोधपरिहाराय

रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।

इत्यादिमन्वादिवचनानुसारेण राजन्ये तु चतूरात्रमित्यादिवचनशेषस्य विवक्षितार्थत्वमिच्छतापि मरीचिनाङ्गीकर्त्तव्यम् ।

अतश्च सर्व्ववर्णसाधारणमासत्रयादर्वाग्गर्भस्रावे त्रिरात्रमशौचम् । अथवा आपदि न्यूनकल्पानुसरण*मनापदि चतूरात्रादिकमिति व्यवस्था विज्ञेया । स्रावे तु सपिण्डानामशौचं नास्ति पितुस्तु स्नानमेव । सपिण्डाशौचवर्ज्जनमिति मरीचिस्मरणात् । स्नानमात्रं पुरुषस्येति वृद्धवशिष्ठस्मरणाच्च । चतुर्थमासप्रभृति सप्तममासपर्य्यन्तं यावन्तो गर्भधारणमासास्तावन्ति दिनानि शुद्धिहेतुः ।

तथाच याज्ञवल्क्यः ।

गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ।

तत्र स्रवति द्रवाद्रवसाधारणः पतने वर्त्तते† ।

अत्र च पातरूपे पञ्चमषष्ठमासस्रावे पित्रादीनां दिनत्रयमशौचम् ।

पाते मातुर्य्यथामासं पित्रादीनां दिनत्रयम् । इति मरीचिस्मरणात् ।

यदुक्तं यमेन ।

---

* त्रिरात्रकल्पना । † एषोऽतिरिक्तः पाठः क्वचित् क्वचित् प्रामाणिकपुस्तके न दृश्यते ।

अजातदन्ते तनये मृते गर्भस्रुते* तथा।
सपिण्डानान्तु सर्व्वेषामेकरात्रमशौचकम्॥ इति।

एतच्च गर्भपात एकाहविधानम् गुणवत्पित्रादिविषयम्। यत्तूक्तमादिपुराणे।

सद्यःशौचं सपिण्डानां गर्भस्य पतने सति। इति।

तत्तु द्रवरूपगर्भस्य† मासचतुष्टयाभ्यन्तरपतने। एवमन्यान्यपि वचनान्यनुसन्धेयानि।

इति गर्भस्रावाशौचम्।

## अथ जननाशौचम्।

सप्तममासप्रभृति प्रसवरूपत्वात्‡ पूर्णाशौचमेव भवति। तत्र मृतजाते जातमृते वा सपिण्डानां दशाहमशौचमिति दशाहमिति तत्तत्पूर्णाशौचोपलक्षणम्§। यच्च जाते मृते कुलस्य सद्यःशौचमिति वृहद्विष्णुवचनम् तत्तु शिशुमरणनिमित्ताशौचाभावप्रतिपादनपरं न प्रसवहेतुकस्य¶। मरणनिमित्ताशौचमपि स्नानादपैति सपिण्डानां न स्वरूपतोऽभावः‖।

---

* च्युत इति पाठान्तरम्। † अनाकारितस्येत्यर्थः। ‡ प्रसवकालत्वादित्यर्थः। § क्षत्रियवैश्यशूद्राणां पूर्णाशौचबोधकत्वम्। ¶ न जन्मनिमित्ताशौचस्याभावप्रतिपादनमित्यनुषङ्गेणान्वयः। ‖ न स्वभावतोऽशौचाभावः परन्तु स्नानादेव अशौचस्य नाश इत्यर्थः।

सद्यःशौचमिति प्राप्तस्य शुद्ध्यभिधानात्। नाभिच्छेदात्प्राङ्मरणे मातुः सम्पूर्णसूतकम्। पित्रादीनान्तु जन्मनिमित्ताशौचं त्रिरात्रम्।

तथाच बृहन्मनुः।

जीवञ्जातो यदि ततो मृतः सूतक एव तु।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्॥

ततस्तदनन्तरमेव नाभिवर्द्धनादर्व्वागित्यर्थः। अत्राप्यग्निहोत्रार्थं सद्यःशौचमस्त्येव अग्निहोत्रार्थं स्नानोपस्पर्शनात् सद्यःशौचमिति शङ्खस्मरणात्। नाभिवर्द्धनोत्तरकालं शिशूपरमे पित्रादीनां जननाशौचं सम्पूर्णमेव।

तथाच जैमिनिः।

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।
छिन्ने नाले ततः पश्चात्सूतकन्तु विधीयते॥ इति।

जननिमित्तमस्पृश्यत्वं मातुर्दशाहादिकं पितुस्तु सचेलस्नानादस्पृश्यत्वमपगच्छति।

तथा च संवर्त्तः।

जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥

अत्र पुत्र इत्यपत्यपरम्। अतस्त्वपत्ये पितुः स्नानं भवति। यथा गर्भाधानशङ्कायामृतुकालगमने स्नानमेवं जननेऽपि समानं पितुरपि स्नानादस्पृश्यत्वं निवृत्तमित्यभिधानात्सपिण्डानामस्पृश्यत्वं नास्त्येव ततो न तेषां स्नानमपि।

तथा चाङ्गिराः ।

सूतके सूतिकावर्ज्जं संस्पर्शो* न निषिध्यते । इति ।

अदृष्टार्थकार्य्येषु पैठीनसिर्विशेषमाह ।

सूतिकां पुत्त्रवतीं विंशतिरात्रेण† कर्म्माणि कारयेत् ।

मासेन स्त्रीजननवतीति‡ ।

प्रथमषष्ठदशमदिवसेषु दानप्रतिग्रहाधिकारमाह व्यासः ।

सूतिकावासनिलया जन्मनामादिदेवताः§ ।

तासां यागनिमित्तन्तु शुद्धिर्जन्मनि कीर्त्तिता ॥

प्रथमे दिवसे षष्ठे दशमे चैव सर्व्वदा ।

त्रिष्वेतेषु न कुर्व्वीत सूतकं पुत्त्रजन्मनि ॥

वृद्धयाज्ञवल्क्योऽपि ।

तत्र सर्व्वं प्रतिग्राह्यं कृतान्नन्तु न भक्षयेत् ।

भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥

मार्कण्डेयः ।

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।

रात्रौ जागरणं कार्य्यं जन्मदानां तथा बलिः ॥

---

* संस्पर्शं इति पाठान्तरम् । संस्पर्शो नैव दुष्यतीति देशान्तरीयः पाठः । † स्नातां सर्व्वकर्म्माणीति देशान्तरीयः पाठः । ‡ स्त्रीजननीमिति पाठान्तरम् । § जन्मदा नाम देवतेति पाठान्तरम् ।

पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कुर्य्युर्दशम्यां चैव सूतके ॥ इति ।

इति जननाशौचम् ।

## अथानुपनीताशौचम् ।

तत्र नामकरणात्प्राक् सद्यःशौचमेव ।

यदाह शङ्खः ।

प्राङ्नामकरणात्सद्यः शुद्धिरिति ।

नामकरणानन्तरमग्न्युदकदानं वैकल्पिकम् ।

तथाच मनुः ।

नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्य्यान्नाम्नि वापि कृते सति ॥

उदकक्रियेत्येतत्साहचर्य्यादग्निदानमपि लक्षयति । ततश्च नामकरणादूर्द्धं दन्तजननादर्व्वागग्निसंस्कारे कृतेऽप्यकृतेऽपि मातापित्रोस्त्रिरात्रम् । बालानामदन्तजातानां त्रिरात्रेण शुद्धिरिति कश्यपस्मरणात् ।

तथा ।

वैजिकादभिसम्बन्धादनुरुन्ध्यादघन्त्र्यहम् ।

इत्यत्र वैजिकादितिविशेषोपादानाच्च । एवमुपनयनपर्य्यन्तं मातापित्रोस्त्रिरात्रमेव । इतरेषां सपिण्डानामग्निसंस्कारे कृते एकाहमशौचम् ।

अदन्तजाते तनये शिशोर्गर्भच्युते तथा।
सपिण्डानान्तु सर्व्वेषां एकरात्रमशौचकम्॥

इति यमस्मरणात्। स च संस्कारस्तूष्णीमेव।

तूष्णीमेवोदकङ्कुर्य्यात्तूष्णीं संस्कारमेव च।

इति लौकाक्षिस्मरणात्।

जातारणिश्चेद्भवति तदा तन्मथिताग्निना।

तदभावे त्वनिषिद्धलौकिकाग्निना दाहः अग्निसंस्काराद्यभावे सद्यःशौचम्। आदन्तजननात्सद्य इति याज्ञवल्क्यस्मरणात्। अग्निसंस्काररहितस्योनद्विवर्षस्य निखननमेव।

तथाच याज्ञवल्क्यः।

ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः।
आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः॥

इतरः पूर्णद्विवर्षः।

अत्र विशेषमाह।

ऊनद्विवार्षिकम्प्रेतं निदध्युर्बान्धवा वहिः।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते॥ इति।

वहिः ग्रामाद्वहिः। अस्थिसञ्चयनादृते अस्थिसञ्चयनरहितायां भुवीत्यर्थः। अन्ये त्वेवं वर्णयन्ति। अस्थिसञ्चयनप्राप्तेरेवाभावादुपपादितञ्चेत्यायश्चित्तञ्चास्माभिर्मिताक्षराटीकायां सुबोधिन्याम्।

यमः।

ऊनद्विवार्षिकम्प्रेतं घृताक्तं निखनेद्भुवि।

यमगाथा* गायमानो यमसूक्त†मनुस्मरन् ॥ इति ।

* ओं चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ १ ।
न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भवाति ।
महस्पुत्रासो असुरस्य वीरा दिवो धर्त्तार उर्विया परिख्यन् ॥ २ ।
उशन्ति घा ते अमृतास एतदेकस्य चित्त्यजसं मर्त्त्यस्य ।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्व १मा विविश्याः ॥ ३ ।
न यत्पुरा चकृमा कद्ध नूनमृता वदन्तो अनृतं रपेम ।
गन्धर्व्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ ॥ ४ ।
गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः ।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥ ५ । (६)
को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् ।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन् ॥ ६ ।
यमस्य मा यम्यं १काम आगन्त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्व' रिरिच्यां विचिद्वृहेव रथ्येव चक्रा ॥ ७ ।
न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा ॥ ८ ।
रात्रीभिरस्मा अहभिर्दशस्येत् सूर्य्यस्य चक्षुर्मुहुरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य बिभृयादजामि ॥ ९ ।
आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उपबर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ १० । (७)
किं भ्राता सद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
कामभूता बह्वे ३तद्रपामि तन्वा मे तन्व' १सं पिपृग्धि ॥ ११ ।
न वा उ ते तन्वा तन्वं १सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥ १२ ।
बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम् ॥ १३ ।
अन्यमूषुत्वं यम्यन्य उ त्वां परिष्वजाते लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वातवाधा कृणुष्व संविदं सुभद्राम् ॥ १४ ।

ऋग्वेदसंहिता १०म, १०सू ।

† परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।

वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥ १ ।
यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्त्तवा उ ।
यत्रा नः पूर्व्वे पितरः परेयुरेना जज्ञानाः पथ्या ३ अनु स्वा. ॥ २ ।
मातली कव्यैर्यमो अङ्गिरोभिर्वृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वावृधुर्य्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥ ३ ।
इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥ ४ ।
अङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे वर्हिष्या निषद्य ॥ ५ ।
अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम् ॥ ६ ।
प्रेहि प्रेहि पथिभिः पूर्व्वेभिर्यत्रा नः पूर्व्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणञ्च देवम् ॥ ७ ।
सं गच्छस्व पितृभिः सं यमेनेष्टापूर्त्तेन परमे व्योमन् ।
हित्वा यावद्यं पुनरस्तमेहि सङ्गच्छस्व तन्वासुवर्च्चाः ॥ ८ ।
अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ।
अति द्रव सारमेयौ श्वानौ चतुरक्षौ शवलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति ॥ १० ।
यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्स्वस्ति चास्मा अनमीवञ्च धेहि ॥ ११ ।
उरूणसावसुतृपा उदुंवलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्य्याय पुनर्दातामसुमद्येह भद्रम् ॥ १२ ।
यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरं कृतः ॥ १३ ।
यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥ १४ ।
यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्व्वजेभ्यः पूर्व्वेभ्यः पथिकृद्भ्यः ॥ १५ ।
त्रिकद्रुकेभिः पतति षडुर्व्वीरेकमिद्वृहत् ।
त्रिष्टुब्गायत्रीछन्दांसि सर्व्वा ता यम आहिता ॥ १६ । ऋग्वेदसंहिता १०म, १४सू।

जातदन्तस्य प्रथमे वर्षे अकृतचूड़स्य वर्षत्रयाभ्यन्तरे मृतस्याग्निसंस्कारे सत्यसत्यप्येकाहः। दन्तजातेऽप्यकृतचूड़े त्वहोरात्रेण शुद्धिरिति विष्णुस्मरणात्। प्रथमवर्षचूड़ाकरणे त्वग्निसंस्कारस्य चूड़ाकरणानन्तरं नियतत्वात्त्रिरात्रमेव।

अतएव वशिष्ठः।

जनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमेवेति। वर्षत्रयादूर्द्धं चूड़ाभावेऽपि अग्निसंस्कारो नियतस्तथा त्र्यहमशौचम्।

नात्रिवर्षस्य कर्त्तव्यं बान्धवैरुदकक्रिया। इति।

मनुना त्रिवर्षन्यूनस्य संस्कारनिषेधे नात्रिवर्षस्याभ्यनुज्ञानात्। अङ्गिरसा च न्यूनत्रिवर्षरूपकालापेक्षया नैशिक्यभिधानादत ऊर्द्धं त्र्यहाभिधानाच्च।

विप्रे न्यूनत्रिवर्षे तु तेषां* शुद्धिस्तु नैशिकी। इति।

यद्यप्यकृतचूड़ो वै जातदन्तस्तु संस्थितः।

दाहयित्वा तथाप्येनमशौचं त्र्यहमाचरेत्॥

स्त्रीणामकृतचूड़ानां मृतौ सद्यःशौचम्। अकृतचूड़ायान्तु कन्यायां सद्यःशौचमित्यापस्तम्बस्मरणात्। कृतचूड़ानामपि वाग्दानादर्व्वागेकाहः।

यदाह याज्ञवल्क्यः।

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम्। इति।

---

* मृत इति पाठान्तरम्।

अदत्ता वाग्दानरहिता। कन्यासापिण्ड्यं* पुरुषत्रयपर्य्यन्त-मेव ।

तथाच वशिष्ठः ।

अप्रत्तानाञ्च स्त्रीणां त्रिपुरुषी विज्ञायते । इति ।

त्रिपुरुषानन्तरं समानोदकाशौचञ्त्र्यहम् । एतच्चाशौचमविवा-हितविषयमेव । विवाहे त्वन्यथा तथैव पूर्व्वं प्रतिपादितत्वात् । वाग्दानादूर्द्धं विवाहसंस्कारात्प्राक् पतिकुले पितृकुले च त्रिरात्रम् ।

यथाह मरीचिः ।

वारिपूर्व्वम्प्रदत्ता तु या नैव प्रतिपादिता ।

असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ॥ इति ।

या तु प्रतिपादिता वाग्दत्ता वारिपूर्व्वं नैव प्रतिपादितेत्यन्वयः। उभयोः पतिपितृपक्षयोः ।

विवाहानन्तरं विष्णुः ।

संस्कृतासु स्त्रीषु नाशौचम्पितृपक्षे तत्प्रसवमरणे चेत्पितृ-गृहे स्यातां तदैकरात्रञ्चेति ।

प्रसव एकरात्रं मरणे त्रिरात्रमिति विवेकः। एतच्च वयो-विशेषकृतमशौचं सर्व्ववर्णसाधारणम् ।

तथाचाङ्गिराः ।

अविशेषेण वर्णानामर्व्वाक्संस्कारकर्म्मणः ।

---

* कन्यकानां सापिण्ड्यमिति पाठान्तरम् ।

त्रिरात्रन्तु भवेच्छुद्धिरिति ॥

व्याघ्रपादोऽपि ।

तुल्यं वयसि सर्व्वेषामिति ।

यत्त्वङ्गिरसाभिहितम् ।

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी ।
द्व्यहेन क्षत्रिये शुद्धिस्त्रिभिर्वैश्यमृते तथा ॥

तथान्यदपि तेनैव ।

निवृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते ॥
शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अत ऊर्द्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥
षड्वर्षान्तमतीतो यः शूद्रः संम्रियते यदि ।
मासिकन्तु भवेच्छौचमित्यङ्गिरसभाषितम् ॥ इति ।

न्तमतीतो य इत्यनेन च हारीतवचनं विरुध्यते ।

न्तु ।

आमौञ्जिबन्धनाद्विप्रः क्षत्रियश्च धनुर्ग्रहात् ।
आप्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहात् ॥ इति ।

न्धनाद्यनन्तरं मृतः पूर्णाशौचनिमित्तं भवतीत्यर्थः ।
त्रद्वयग्रहणयोग्यो द्वादशादिवर्षदेशीय* एव न षड्वर्ष-

नार्थे देशीयप्रत्ययविधानात् आदिपदाच्च द्वादशवर्षमारभ्य षोड़शवर्षादी-
इत्यर्थः ।

देशीय इति । शूद्रस्य षड्वर्षानन्तरं मासिकाशौचाभिधानमाङ्गिरसहारीतेन विरुध्यते । तस्माद्दहनामनुग्रहे त्याज्या इति मन्वाद्यनेकस्मृतिपर्य्यालोचनया विश्वरूपधारेश्वरमेधातिथिविज्ञानेश्वरप्रभृतिभिराचार्य्यैर्वयोऽवस्थाशौचं* सर्व्ववर्णसाधारणमेवेति व्याख्यातम् । अथवाङ्गिरसऋष्यशृङ्गवचनान्यधिकाशौचप्रतिपादकान्यनापद्विषयतया व्यवस्थापनीयानि ।

## अथ जननमरणाशौचे वर्णनियमेन कालनिर्णयः† ।

तत्र मनुः ।

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
जननेऽप्येवमेवं स्याद्विपुलां शुद्धिमिच्छताम् ॥ इति ।

महागुरौ त्वाश्वलायनोक्तो विशेषः ।

द्वादशरात्रं महागुरुषु दानाध्ययने वर्ज्जयेरन्निति ।

पुत्त्रानुत्पाद्य संस्कृत्य वेदार्थङ्ग्राहयित्वा वृत्तिञ्च‡ यो ददाति स महागुरुः । एतच्च विप्रविषयम् । क्षत्त्रियादिविषये तु याज्ञवल्क्यः ।

क्षत्त्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः ॥ इति ।

पाकयज्ञद्विजशुश्रूषादिरतः शूद्रो न्यायवर्त्ती तस्य तदर्द्धं मासार्द्धम् ।

---

* बाल्यादिभेदेनाशौचकल्पनम् । † कालनियम इति पाठान्तरम् । ‡ भक्तादिकम् ।

पराशराङ्गिरःशातातपवशिष्ठैः क्षत्रियस्य दशाहेन विंशति-रात्रेण च वैश्यस्य द्वादशाहेन विंशतिरात्रेण च शूद्रस्य विंशति-रात्रेण सर्व्वेषां वर्णानां दशाहेन च सूतके मृतके शुद्धिरित्यभि-हितम्। तल्लोकसमाचाराभावादनादरणीयमिति केचन मन्यन्ते। अथवा देशाचारतो व्यवस्था विज्ञेया। उत गुणव-दगुणवद्विषयेयथाक्रमं न्यूनाधिककल्पाश्रयेण निर्व्वाहः। किं वा आपदनापद्भेदेन व्यवस्था। एतच्च जननमरणञ्च ज्ञातमेवा-शुचित्वापादकं* दशाहादि†कालनियमस्तूत्पत्त्यादिप्रभृत्येव।

विगतन्तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेदिति॥

अत्र शृणुयादित्युपादानाच्छ्रवणमेव निमित्तमिति गम्यते। यच्छेषं दशरात्रस्येत्यनेन च उत्पत्त्यादिप्रभृत्येव कालनियमो-ऽवगम्यते।

तथाहि।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्त्रस्य जन्म च। इति।

अत्रापि श्रवणस्यैवोपादानाच्च। नृपादिहतानां शास्त्राविहित-मार्गेणात्मघातिनां पाषण्डादिप्रेतानाञ्च सम्बन्धिनो ये सपिण्डास्तेषां सद्यः शौचम्।

तथाच याज्ञवल्क्यः।

---

* जननं मरणञ्च यदा ज्ञातं तदैव वैदिककर्म्मानधिकारापादकं भवतीत्यर्थः।

† दशाहादिकालगणना तु जननमरणदिनमारभ्येत्यर्थः।

हतानां नृपगोविप्रैरन्वक्षञ्चात्मघातिनाम्।

अन्वक्षं सद्यःशौचमित्यर्थः। नृपेण प्रमादहते दशाहादिकमेव। क्रोधाद्युद्धहते सद्यःशौचम्। युद्धक्षतेन कालान्तरहतस्यैकाहः।

अत्र च गौतमः।

गोब्राह्मणहतानामन्वक्षं क्रोधाच्चायुध्यतः*। इति।

क्रोधग्रहणम्प्रमादव्यापादितनिरासार्थम्।

तथा।

ब्राह्मणार्थं विपन्ना ये योषितां गोग्रहेऽपि वा।
आहवेऽपि हतानाञ्च एकरात्रमशौचकम्॥

क्षत्रधर्म्मेण सङ्ग्रामाङ्गनस्थतस्य सद्यःशौचम्।

तदाह मनुः।

उद्यतैराहवे शस्त्रैः क्षत्रधर्म्महतस्य च।
सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः॥

यज्ञः पिण्डदानादिरूपः सन्तिष्ठते समाप्तो भवतीत्यर्थः। दक्षेण दश पक्षाः सूतके मृतके चोपन्यस्ताः।

सद्यःशौचमथैकाहस्त्र्यहश्चतुरहस्तथा।
षड्दशद्वादशाहश्च पक्षो मासस्तथैव च।
मरणान्तं तथा चान्यद्दशपक्षास्तु सूतके॥

सूतकशब्दोऽशौचोपलक्षणार्थः। अत्र सद्यःशौचादि षड़ह-

---

* युद्धमकुर्व्वतः।

पर्य्यन्तपचा यायावरादीनां* यद्विना यन्न निर्वहति तादृश-प्रतिग्रहाग्निहोत्रादिविषयः। तत्र स्मार्त्तविषयत्वेनापि वच-नस्य चरितार्थत्वात्। दशाहादिकपचास्तु ब्राह्मणादिवर्ण-विषयाः। मरणान्तिकविषयस्तु दचेणैव दर्शितः।

अस्नात्वा नाप्यहुत्वा च अदत्त्वान्नं तथा द्विजः।
एवंविधस्य सर्व्वस्य सर्व्वदा सूतकम्भवेत्॥
व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्व्वदा।
क्रियाहीनस्य सर्व्वस्य स्त्रीजितस्य विशेषतः॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
श्राद्धत्यागविहीनस्य भस्मान्तं† सूतकम्भवेत्॥

श्राद्धत्यागः श्राद्धकरणम्। एतच्च जननमरणं रजोदर्शनं चापद्युदयोत्तरकाल एव निष्पन्नम्। तदा तद्दिनप्रभृत्येव दशाहादिकालनिर्णयः। यदा त्वहनि च प्रहराधिकेऽतिक्रान्ते रजन्यां वा जननादिकमर्द्धरात्रात्प्राक् चेद्भवति तदा तदर्द्धदिनै-कदेशव्यापित्वेऽपि तदाशौचस्य तद्दिनप्रभृत्येव गणनेत्येकः कल्पः। रात्रिं त्रिधा विभज्य प्रथमभागद्वये चेत्पूर्व्वदिन-प्रभृत्येवेत्यपरः। प्रागुदयात्पूर्व्वदिनप्रभृत्येवेति तृतीयः। यदाह काश्यपः।

उदिते तु यदा सूर्य्ये नारीणां दृश्यते रजः।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्व्वरी।

---

* यागशीलानाम्। † मरणान्तम्।

अर्द्धरात्रावधिः कालः सूतकादौ विधीयते ॥
रात्रिं कुर्य्यात्त्रिभागन्तु द्वौ भागौ पूर्व्व एव तु ।
उत्तमोऽंशः प्रभातेन युज्यते मृतसूतके ॥
रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्व्वमेव दिनङ्ग्राह्यं यावन्नाभ्युदितो रविः ॥ इति ।

अत्र देशाचारः प्रमाणम् ।

अत्र जनने पूर्व्वेतिकर्त्तव्यता विहिता साम्प्रतमितरत्रा-भिधीयते ।

तत्र मनुः ।

न विप्रं स्वेषु* तिष्ठत्सु मृतं शूद्रेण हारयेत्† ।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंसर्गदूषिता ॥

स्वेषु तिष्ठत्स्वित्यविवक्षितार्थमस्वर्ग्यत्वादिदोषकथनात् ।

तथा ।

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।
पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजातयः ॥

यथायोगमिति वैश्याप्रतिलोमक्रमेण । अतएव स्वाभिप्राय-प्रकटनार्थं प्रथमतः शूद्र एवोपात्तो वचने ।

हारीतः ।

न ग्रामाभिमुखं प्रेतं निर्हरेयुः ।

---

* सजातीयेषु । † वाहयेदिति पाठान्तरम् । सजातीयसत्त्वे शूद्रेण कर्त्रा मृतं विप्रं न वाहयेदित्यर्थः । अत्र हृधातोर्विकल्पविधानात् शूद्रेणेति अनुक्तकर्त्तरि तृतीया ।

याज्ञवल्क्यः ।

स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ।

उपेत उपनीतः । शूद्रस्तु वस्त्रद्वयग्रहणयोग्यकालीन उपनीतसदृशः वस्त्रद्वयग्रहणं द्वादशादिषोडशवर्षमध्ये तु । आहिताग्निदाहप्रक्रियया दाहादिकङ्कार्य्यम् ।

तत्रायं विशेषः ।

उपनीतस्य लौकिकाग्निना अनाहिताग्नेः स्वगृह्याग्निना आहिताग्नेश्च वैतानाग्निभिरिति ।

लौकिकाग्निश्च चाण्डालाग्न्यादिव्यतिरिक्तः ।

तथाच देवलः ।

चाण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् ।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः* ॥ इति ।

स्वगृह्योक्तविधिना असौ स्वर्गाय लोकाय स्वाहेति हुत्वा दग्धव्यः ।

प्रचेताः ।

स्नानम्प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः ।
नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत् ॥

किञ्चिच्छब्दाद्वस्त्रैकदेशं श्मशानवास्यर्थं देयं परित्यजेदित्यर्थः ।

निगमः ।

सन्ध्यायां वा तथा रात्रौ दाहः पार्थ्यकर्म्म च ।

---

* शिष्टकर्तृकचण्डालादिकाग्निपरिग्रहो न उचित इत्यर्थः ।

नवश्राद्धञ्च नो कुर्य्यात्कृतं निष्फलतां व्रजेत् ॥

दाहानन्तरम्प्रचेताः ।

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य्य नोद्वर्षयेयु*रुद-काञ्जलिम्प्रसिञ्चेयुः । अपसव्ययज्ञोपवीतवाससा दक्षि-णाभिमुखाः ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च राजन्यवैश्य-योरिति ।

याज्ञवल्क्यः ।

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।
अप नः शोशुच दवमनेन पितृदिङ्मुखाः ॥

सप्तमाद्दिवसादर्व्वाग्दशमदिवसाद्वा अर्व्वाक् ज्ञातय एकसगोत्र-पिण्डाः समानोदकाश्च । एतच्च विषमदिनेषु कार्य्यमेव ।

तथाच गौतमः ।

प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रियेति ।

वशिष्ठः ।

सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्व्वीरन्निति ।

उदकदाने संख्यानियममाह

याज्ञवल्क्यः ।

सकृत्प्रसिञ्चेदुदकं नामगोत्रेण वाग्यतः ।

नामगोत्रेणोपलक्षितमुदकं नामगोत्रे समुच्चार्य्योदकं सिञ्चेयु-रित्यर्थः ।

---

* गात्रमार्ज्जनं न कुर्य्यात् । नोद्वर्षयेरन्निति अन्यत्र पाठः ।

नामगोत्रे समुच्चार्य्येति उदकं सिञ्चेयुरित्यर्थः ।

प्रचेताः ।

त्रिः प्रसेकं जलैः कुर्य्यात्प्रेतस्तृप्यत्विति ब्रुवन् ।
दिने दिनेऽञ्जलीन्पूर्णान् प्रदद्यात्प्रेतकारणात् ॥
तावद्वृद्धिश्च कर्त्तव्या यावत्पिण्डः समाप्यते ।

यावद्दशमः पिण्डः समाप्यते इत्यर्थः ।

यमस्तु विशेषान्तरमाह ।

सचेलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततः सम्प्रविशेद्गृहम् ॥

एतच्चोदकदानं मृतं मातामहमाचार्य्यञ्चोद्दिश्य नियमेन कार्य्यम् । सख्यादिषु सत्यामिच्छायाङ्कार्य्यमसत्यां न ।

यथाह याज्ञवल्क्यः ।

एवं मातामहाचार्य्यप्रेतानामुदकक्रिया ।

एवम्पूर्व्वोक्तप्रकारेण नित्यतयेत्यर्थः ।

कामोदकं सखी प्रत्ता स्वस्रीयश्वशुरर्त्त्विजाम् ।*

कामोदकमित्युपादानादिच्छाभावे अकरणे दोषो नास्ति इति गम्यते ।

पिण्डदानप्रकारमाह याज्ञवल्क्यः ।

---

* सखिपुत्रे इति पाठान्तरम् ।

पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ।
जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये ॥

पिण्डयज्ञावृता पिण्डयज्ञप्रक्रियया प्राचीनावीतित्वदर्भादिना सहितत्वरूपया च आकाशे शिक्यादौ* ।

प्रचेताः ।

प्रेताय स्वाहीत्युदकं स्थाप्यमिव चेदक्षीरमिति । पिण्ड-दानञ्च संस्कृतानां कुशेषु असंस्कृतानां भूमौ पिण्डं दद्यात् ।

संस्कृतानान्तु कुशेषु इति प्रचेतःस्मरणात्पाषाणेऽपि पिण्डो देयः।

तथाच शङ्खः ।

भूमौ माल्यं पिण्डस्थानीयमुपलेष्वादद्युरिति ।

याज्ञवल्क्येन पिण्डत्रयमेवाभिहितम् । विष्णुस्तु यावत्या-शौचदिनानि तावत्पिण्डदानमाह ।

यावदशौचं तावत्प्रेतस्योदकं पिण्डञ्च दद्युरिति ।

पारस्करः ।

प्रेतेभ्यः सर्व्ववर्णेभ्यः पिण्डान्दद्युर्दशैव तु ।

एवम्पिण्डोदकदाने गुरुलघुकल्पावाम्नातौ । तत्र यद्यप्यन्य-तरपक्षानुष्ठानेऽपि शास्त्रार्थसिद्धिः तथापि गुरुकल्पे प्रेतो-पकारातिशयः कल्प्यः । अन्यथा गुरुतत्पक्षानुपपत्तेः । एवं दत्तस्य पिण्डस्य प्रतिपत्तिकर्म्माह

---

* रज्जुनिर्म्मिते पदार्थे यत्र द्रव्यं स्थाप्यते शिका इति प्रसिद्धिः ।

वृद्धशातातपः* ।

वाग्यताः प्रयताश्चैव† तिष्ठेयुः पिण्डसन्निधौ ।
ततो वासे निवृत्तेऽस्य नद्यान्तु प्रक्षिपेच्च तम् ॥ इति

नद्यभावे प्रशस्ताकाशेषु प्रक्षिपेत् । यत्राशौचस्य ह्रासस्तत्रापि दश पिण्डाः दातव्याः ।

अशौचस्य च ह्रासेऽपि पिण्डान्दद्याद्दशैव तु ।

इति शातातपस्मरणात् ।

पक्षात्त्रिरात्राशौचे पारस्करः ।

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरो दद्यादस्थिसञ्चयनन्तथा ॥

पिण्डे द्रव्यादिनियममाह शुनःपुच्छः ।

फलमूलैश्च पयसा शाकेन च गुड़ेन च ।
तिलमिश्रञ्च दर्भेषु पिण्डं दक्षिणतो हरेत् ॥
द्वारदेशे प्रदातव्यो देवतायतनेऽपि च ।
तूष्णीं प्रसक्तं‡ पुष्पञ्च धूपदीपस्तथैव च ॥
शालिना सक्तुभिर्व्वापि शाकैर्वाप्यथ निर्व्वपेत् ।
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहकम्§ ॥ इति ।

कर्त्तृनियमो गृह्यपरिशिष्टे ।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।

---

* वृद्धप्रचेता इति पाठान्तरम् । † पूरिता इति पाठान्तरम् । ‡ प्रसक्तमिति सकलपुस्तके पाठः परिदृश्यते परन्तु प्रशस्तमित्येव साधु । § दशमपिण्डदानपर्य्यन्तम् ।

प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्॥

दशाहपर्य्यन्तमेवायं नियमः। अतस्तन्मध्ये देशान्तरस्थितसन्निहितसपिण्डपुत्त्राद्यागमनेऽपि प्रथमदिवसोपक्रान्तैव* दशपिण्डाः दातव्याः। न पुत्त्रादिभिः सन्निहितैरपि। दाहानन्तरकृत्यमेकादशाहादिकन्तु सन्निहितसपिण्डेन पुत्त्रादिनैव कार्य्यं पुत्त्राद्यभावे प्रथमप्रक्रान्तैव†। सपिण्डीकरणे तु विशेषः। स च श्राद्धस्तवके वक्ष्यते।

उदकदानन्तु सर्व्वैः सपिण्डादिभिः कार्य्यं पिण्डदानन्त्वेकेनैव पुत्त्रादिना। पुत्त्रबहुत्वे त्वितरानुमत्या ज्येष्ठेनैव पातित्यादिदोषरहितेन।

मरीचिः। अनेनैवाभिप्रायेण।

सर्व्वैरनुमतङ्कृत्वा‡ ज्येष्ठेनैव तु यत्कृतम्।

द्रव्येण वा विभक्तेन सर्व्वैरेव कृतम्भवेत्॥ इति।

अविभक्तानान्तु द्रव्यमविभक्तमेव। विभक्तैस्तु स्वस्वशक्त्यपेक्षया स्वाङ्गनात्किञ्चिदौर्द्ध्वदेहिकोद्देशयुक्तमुद्धृत्य ज्येष्ठाय निवेदयेत्। तदा च द्रव्यमविभक्तमेव भवतीति द्रव्येण वाविभक्तेनेत्यस्य निर्व्वाहः। विभक्तेषु द्रव्यसमीकरणेनैकस्य कर्त्तृत्वं षोडशश्राद्धादावेव न सांवत्सरिके।

पिण्डदानाधिकारिक्रममाह शङ्खः।

पितुः पुत्त्रेण कर्त्तव्या पिण्डदानोदकक्रिया।

---

* प्रथमपिण्डदेनैव। † पूरकपिण्डदात्रा। ‡ सर्व्वेषान्तु मतं कृत्वा इति ग्रन्थान्तरीयपाठः।

पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः ॥

गौतमः ।

पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तद-भावे ऋत्विगाचार्य्याः ।

अत्र शङ्खवचनानुरोधेन पुत्राभावे पत्नी तदभावे सपिण्डा इति क्रमः । पुत्राश्च द्वादशविधा औरसादयः ।

अतएवौरसादिपुत्रपरिगणनानन्तरम्

याज्ञवल्क्यः ।

पिण्डदोऽंशहरश्चैव पूर्व्वाभावे परः परः । इति ।

तत्रापि औरसाभावे पौत्रः तदभावे प्रपौत्रस्तदभावे पुत्रिका-दिक्रमः ।

अतएव स्मृतिसङ्ग्रहे ।

पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकासुत एव च । इति ।

ऋष्यशृङ्गः ।

पुत्रेषु वर्त्तमानेषु नान्यो वै कारयेत्स्वधाम् ।

आनुकूल्यादपुत्रस्य श्राद्धं कुर्य्यात्समन्त्रकम् ॥

बौधायनः ।

अपुत्रस्य स्त्रिया कार्य्यं पिण्डश्राद्धं तथोदकम् ।

क्रियालोपो न कर्त्तव्यः प्रेतस्य गतिकाङ्क्षिभिः ॥

यदा त्वनुपनीतः पुत्रः संस्कर्त्ता पत्नी वा तदग्निदानमेव सम-न्त्रकङ्कार्य्यम् ।

तथाच कात्यायनः ।

असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्।
कर्त्तव्यमितरत्सर्व्वं कारयेदन्यमेव* हि॥ इति।

अत्र विशेषमाह सुमन्तुः।

अनुपनीतोऽपि कुर्व्वीत मन्त्रवत्पित्रमेधिकम्†।
यद्यसौ कृतचूड़ः स्याद्यदि स्याच्च त्रिवत्सरः॥

वर्षत्रयानन्तरं चूड़ाभावेऽपि स एवौर्द्ध्वदेहिकं मन्त्रवच्च कुर्य्यात् वर्षत्रयादर्व्वाक् कृतचूड़ोऽपि शक्तश्चेत्सर्व्वं मन्त्रवच्च कुर्य्यात्। यद्यशक्तः अथाकृतचूड़ो वा तदाग्निदानमात्रं कुर्य्यादिति व्यवस्था।

शङ्खः।

भार्य्यापिण्डं पतिर्दद्याद्भर्त्रे भार्य्या तथैव च।
श्वश्र्वादेस्तु स्नुषा चैव तदभावे तु सोदरः॥

भार्य्यापिण्डमित्यादि पुत्राद्यभावविषयम्।

वीजिक्षेत्रिणोर्विषये मरीचिः।

सगोत्रे वान्यगोत्रे‡ वा यो भवेद्विधवासुतः।
पिण्डश्राद्धविधानन्तु क्षेत्रिणे प्राग्विनिर्वपेत्॥
वीजिनेऽपि ततः पश्चात्क्षेत्री जीवति चेत्क्वचित्।
वीजिनि दद्युरादौ च मृते पश्चात्प्रदीयते॥
उभौ यदि मृतौ स्यातां वीजिन्यादौ तदा ददेत्।

---

* अन्यद्वारा कारयेदित्यर्थः। † पितुरौर्द्ध्वदेहिककर्म्मकलापम्। ‡ सगोत्रादन्यगोत्राद्वा इति चन्द्रिकाधृतपाठः।

क्षेत्रिण्यादौ न दत्तं स्याद्वीजिने नोपतिष्ठति* ॥
क्षेत्रिणि दत्वा वीजिने दत्ते तद्वीजिने नोपतिष्ठत इत्यर्थः। एतच्च विधवानियोगविधिना यत्र नियोगस्तद्विषयम्। अनियोगस्थले तु नारदोक्तं द्रष्टव्यम्।

जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा।
अरिक्थभाजस्ते सर्व्वे वीजिनामेव ते सुताः॥
दद्युस्ते वीजिने पिण्डं माता चेच्छुल्कतो हृता।
अशुल्कोपनीतायान्तु† पिण्डता वोढुरेव तु॥ इति।

पिण्डता वीजिसापिण्ड्यमात्रमेव तेषां न पिण्डदानाद्यधिकारः। ते सुता वोढुरेव क्षेत्रिण एवेत्यर्थः। पिण्डदा वोढुरेव ते इत्यपि पाठः। सापिण्ड्ये सत्यपि न ब्रह्मचार्य्यादिभिः पिण्डोदकदानादिकङ्कर्त्तव्यम्।
तथाच याज्ञवल्क्यः।

न ब्रह्मचारिणः कुर्य्युरुदकं पतितास्तथा।

उदकमिति पिण्डदानाद्युपलक्षणं ब्रह्मचारिण‡ उदकदानादि-

---

* क्षेत्रिणि प्राक् प्रदापयेदादौ क्षेत्रिणि मृते इति शेषः ततः। क्षेत्रिमरणानन्तरं वीजिमरणे पश्चाद्वीजिने तु दापयेदित्यन्वयः। क्वचित् कदाचित्क्षेत्रे जीवति अर्थादादौ वीजी मृतः तदा वीजिने आदौ दद्युः मृते तु तदनन्तरं क्षेत्रिणि चेत् तदा पश्चात् क्षेत्रिणे प्रदीयते। उभौ यदि मृतौ एकदेति शेषः। तत्रादौ वीजिने श्राद्धं पश्चात् क्षेत्रिणे तत्र हेतुं दर्शयति आदौ न दत्तं स्यादित्यादि। † अशुल्कोपहृतायान्तु इति ग्रन्थान्तरीयपाठः। ‡ ब्रह्मचारिकर्तृकोदकदानादिनिषेध इत्यर्थः।

निषेधो मातापित्रादिव्यतिरिक्तविषयः।

तथाच स एव।

आचार्य्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती।
शकटान्नञ्च नाश्नीयान्न च तैः सह संविशेत्॥

व्रती ब्रह्मचारी व्रती व्रत्येव नास्य ब्रह्मचर्य्यव्रतभ्रंश इत्यर्थः। स ब्रह्मचारी शकटान्नमाशौचान्नं नाश्नीयात्। निर्हृत्येत्यनेन दाहाद्यौर्द्ध्वदेहिकं सकलमपि लक्ष्यते।

मात्रादिव्यतिरिक्तविषये मनुः।

आदिष्टी नोदकं कुर्य्यादाव्रतस्य समापनात्।
समाप्ते तूदकङ्कृत्वा त्रिरात्रमशुचिर्भवेत्॥

आदिष्टी ब्रह्मचारी। केचन प्रायश्चित्तिनमादिष्टीति मन्यन्ते। व्रते समाप्ते तूदकङ्कृत्वा दिनत्रयमशुचिः स्यादित्यर्थः।

वृद्धमनुः।

क्लीवाद्या नोदकं कुर्य्युः स्तेनव्रात्याविधर्म्मिणः।
गर्भभर्त्तृद्रुहश्चैव सुराप्यश्चैव योषितः॥

पूर्व्वोक्तब्रह्मचार्य्यादिव्यतिरिक्तैरपि सपिण्डैर्मृतपाषण्डाद्युद्देशेनोदकादिकं न कार्य्यम्।

तथाच याज्ञवल्क्यः।

पाषण्ड्यनाश्रिताः स्तेना भर्त्तृघ्न्यः कामगादिकाः।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः॥

वेदबाह्यलिङ्गधारणं पाषण्डम्। अनाश्रिताः अधिकारे सत्यप्याश्रमविशेषरहिताः। स्तेनाः ब्राह्मणसुवर्णव्यतिरिक्तोत्तमद्रव्य-

हारिणः। पाषण्डाद्यादिमरणस्याशौचादिनिमित्ताभावान्मरणे सति सपिण्डैरुदकादिकं न कर्त्तव्यमित्यर्थः। सुराप्य इत्यादिषु* लिङ्गमविवक्षितमुद्देश्यगतत्वात्।

आत्मत्यागिषु विशेषमाह गौतमः।

> प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैः स्वेच्छतामिति।

प्रायो महाप्रस्थानम्। अनाशकमनशनम्। प्रपतनं शैलशिखरादवपातनम्। इत्यादिभिर्निमित्तैः शास्त्राविहितमार्गैरिच्छापूर्व्वकं मृतानामशौचादिकं न कर्त्तव्यमित्यर्थः।

अङ्गिराः।

> चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि।
> दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मिणाम्॥
> उदकं पिण्डदानञ्च प्रेतेभ्यो यत्प्रदीयते।
> नोपतिष्ठति तत्सर्व्वमन्तरीक्षे विनश्यति॥

मनुः।

> वृथासङ्करजातानां† प्रव्रज्यासु च तिष्ठताम्।
> आत्मनस्त्यागिनाञ्चैव निवर्त्तेतोदकक्रिया॥

वृथासङ्करजातानामिति वृथाजाताः पञ्चमहायज्ञादिरहिताः सङ्करजाताः प्रतिलोमजाः। प्रमादात्पूर्व्वोक्तनि-

---

* आदिना आत्मत्यागिन्य इत्यत्र स्त्रीत्वमविवक्षितम्। † वृथाजातानां सङ्करजातानाञ्चेत्यर्थः द्वन्द्वात्परः श्रूयमाणः प्रत्येकं सम्बध्यते इति न्यायादिति शेषः।

मित्तैर्मरणे विद्यत एवाशौचादिकम् ।

अतएवाङ्गिराः ।

अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः ।

तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया ॥

चाण्डालादिमृताहिताग्नेरग्न्यादीनां प्रतिपत्तिकर्म्म च स्मृत्यन्तरेऽभिहितम् ।

वैतानमप्सु क्षिपेदस्सु आवसथ्यञ्चतुष्पथे ।

पात्राणि तु दहेदग्नौ यजमाने वृथामृते ॥

वृथामृतः अविहितमार्गेण मृतः ।

तथा ।

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।

तेषामपि च गङ्गायास्तीरे संस्थापनं मतम् ॥

गङ्गेति पुण्यनद्युपलक्षणम् । एवं पूर्व्वोक्तनिन्दितमरणे मृतानां स्नेहादिनाग्न्याद्यौर्द्धदेहिककरणे स्मृत्यन्तरे प्रायश्चित्तमाम्नातम् ।

कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं तथा ।

रज्जुच्छेदाश्रुपातञ्च तप्तकृच्छ्रेण शुध्यति ॥ इति ।

एतच्च बुद्धिपूर्व्वकप्रत्येकाग्न्यादिकरणे ।

अबुद्धिपूर्व्वके तु संवर्त्तः ।

एषामन्यतमं प्रेतं यो वहेत दहेत वा ।

कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥

यच्च सुमन्त्वादिभिर्मासं भैक्षाहारस्त्रिषवणञ्च तथा एकरात्राभोजनादिकञ्चाभिहितम् तदयत्नविषये देशकाला-

व्यपेक्षानुसारेण योजनीयम्। यस्तु वृद्धादिर्लुप्तभिषक्क्रिय-*
स्तस्यात्महननमप्यनुज्ञातमादिपुराणेषु।

वृद्धः शौचस्मृते†र्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानङ्घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः।
तृतीये तूदकङ्कृत्वा चतुर्थे श्राद्धमारभेत्॥

तथा।

गच्छेन्महापथं वापि तुषारगिरिमादरात्।
प्रयागे वटशाखायां देहत्यागङ्करोति यः॥
स्वयं देहविनाशस्य काले प्राप्ते महामतिः।
उत्तमान्प्राप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्॥
एतेषामधिकारस्तु सर्व्वेषां सर्व्वजन्तुषु।
नराणामथ नारीणां सर्व्ववर्णेषु सर्व्वदा।
अशौचं स्यात्त्र्यहं तेषां वज्रानलहतेषु च॥
वाराणस्यां म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः।
प्रणवं तारकं ब्रूते नान्यथा कस्यचित्क्वचित्॥

विवस्वान्।

सर्व्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च।
प्रायश्चित्तमनुज्ञातमग्निपातो महापथः॥

---

* औषधसेवनादिचिकित्सारहितः इत्यर्थः। † शौचेन सह स्मृतिः तस्याः भ्रष्टाचाररहित इत्यर्थः।

धर्म्मार्ज्जनासमर्थस्य* द्वादशवार्षिकादिरूपप्रायश्चित्तासमर्थस्य। एवं शास्त्राविहितमार्गेण मृतानां चाण्डालादिमृतानां संवत्सरादूर्द्ध्वमौर्द्ध्वदेहिकङ्कार्य्यम्।

षट्त्रिंशन्मते ।

गोब्राह्मणैर्हतानाञ्च पतितानां तथैव च।
ऊर्द्ध्वं संवत्सरात्कुर्य्यात्सर्व्वमेवौर्द्ध्वदेहिकम् ॥

अत्रापरं विशेषमाह

पराशरः ।

चाण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि ।
आहिताग्निर्मृतो विप्रो विषेणात्मघातकः ॥
दहेत ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्ज्जितम् ।
दग्ध्वास्थीनि पुनर्गृह्य चारेण चालयेत्ततः ।
स्वेनाग्निना स्वमन्त्रेण पृथगेतत्पुनर्दहेत् ॥

संवत्सरादर्व्वागपि तत्तत्पापानुसारेण द्विगुणादिकं प्रायश्चित्तं विधाय नारायणबलिञ्च कृत्वा और्द्ध्वदेहिकङ्कार्य्यम्। आयुषोऽनित्यत्वेन† संवत्सरानन्तरमौर्द्ध्वदेहिकादिलोपप्रसङ्गात् ।

तच्च नारायणबलिङ्कृत्वा ।

तथाच वृद्धयाज्ञवल्क्यः ।

* बहुषु पुस्तकेषु दर्शनादेवं रचितं परन्तु स्वव्यापारात्तमस्य इत्येव पाठो युक्तः ।
† पुत्रादिरूपाधिकारिणामिति शेषः ।

नारायणबलिः कार्य्या लोकगर्हाभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥

नारायणबल्यौर्द्ध्वदेहिककरणे भवतीत्यर्थः ।

सर्पहतेषु विशेषः ।

संवत्सरं यावत्पञ्चम्यां नागपूजां विधाय तदनन्तरं नारायणबलिङ्कृत्वा सौवर्णनागं प्रत्यचाङ्गाञ्च व्यासोद्देशेन ब्राह्मणाय दत्त्वा और्द्ध्वदेहिकङ्कुर्य्यात् ।

नारायणबलिस्वरूपञ्च विष्णुनाभिहितम् ।

एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं समर्च्चयेद्देवं यमं वैवस्वतं तथा ॥
दश पिण्डान् घृताभ्यक्तान्दर्भेषु मधुसंयुतान् ।
तिलमिश्रान् प्रदद्याद्वै संयतो दक्षिणामुखः ॥
विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ।
नामगोत्रग्रहङ्कृत्वा पुष्पैरभ्यर्च्चनं तथा ।
धूपदीपप्रदानञ्च भक्ष्यभोज्यं तथापरम् ॥
निमन्त्रयेत विप्रान्वै पञ्च सप्त नवापि वा ।
विद्यातपःसमृद्धान्वै कुलोत्पन्नान् समाहितान् ॥
अपरेऽहनि सम्प्राप्ते मध्याह्ने समुपोषितः ।
विष्णोरभ्यर्च्चनङ्कृत्वा विप्रांस्तानुपवेशयेत् ।
उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
मनो निवेश्य विष्णौ वै सर्व्वङ्कुर्य्यादतन्द्रितः ।
आवाहनादि यत्प्रोक्तं दैवपूर्व्वं तथाचरेत् ॥

वह्निमान्त्वा ततो विप्रस्तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ।
पञ्च पिण्डान् प्रदद्याच्च दैवं रूपमनुस्मरन् ॥
प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ।
यमाय सानुसाराय चतुर्थं पिण्डमुत्सृजेत् ॥
मृतं सङ्कीर्त्य मनसा गोत्रपूर्व्वमतःपरम् ।
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्व्ववत्क्षिपेत् ॥
विप्रानाचम्य विधिवद्दक्षिणाभिः समर्च्चयेत् ।
एकं वृद्धतमं विप्रं हिरण्येन समर्च्चयेत् ।
गवा वस्त्रेण भूम्या च प्रेतन्तं मनसा स्मरेत् ॥
ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः ।
क्षिपेयुर्गोत्रपूर्व्वन्तु नामबुद्धौ निवेश्य च ॥
हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः ।
मित्रभृत्यजनैः सार्द्धं पश्चाद्भुञ्जीत वाग्यतः ॥

भविष्यपुराणे ।

सुवर्णभारनिष्पन्नं नागङ्कृत्वा तथैव गाम् ।
व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्तवान् ॥ इति ।

उदकादिदानानन्तरकर्त्तव्यतामाह

याज्ञवल्क्यः ।

कृतोदकान् समुत्तीर्णान्मृदुशाद्वलसंस्थितान् ।
स्नाता नाववदेयुस्तानितिहासैः पुरातनैः ॥

अववदेयुः बोधयेयुः ।

इतिहासरूपञ्च।

मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्।

करोति यः स मूढ़ात्मा जलबुद्बुदसन्निभे॥ इति।

तथाच न रोदितव्यमपीति स एवाह।

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।

अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः॥

इतिहासश्रवणानन्तरं किङ्कर्त्तव्यमित्यत आह।

इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः।

विदश्य निम्बपत्राणि नियता द्वारवेश्मनि*॥

आचम्यादाय सलिलं गोमयं गौरसर्षपान्।

प्रविशेयुः समालभ्य कृत्वाश्मनि† पदं शनैः॥

धर्म्मार्थप्रेतनिर्हरणादिकर्त्तव्यतायामपि स्नानानन्तरं प्राणानायस्य निम्बपत्रदंशनप्रभृतिगृहप्रवेशान्तकर्म्मकरणेन सद्यः शुद्धिः‡।

यतः स एवाह।

प्रवेशनादिकङ्कर्म्म प्रेतसंस्पर्शिनामपि।

इच्छतां तत्क्षणाच्छुद्धिं परेषां§ स्नानसंयमात्॥

पराशरः।

अनाथं ब्राह्मणम्प्रेतं ये वहन्ति द्विजातयः।

---

* द्वारि वेश्मनः इति पाठान्तरम्। † प्रस्तरे। ‡ सम्बन्धशून्यानामिति शेषः।

§ उदासीनानामशौचसम्बन्धरहितानामिति यावत्।

पदे पदे यज्ञफलमानुपूर्व्वाल्लभन्ति ते ॥
न तेषामशुभं किञ्चित्पापं वा शुभकर्म्मणाम्* ।
जलावगाहनात्तेषां सद्यःशौचं विधीयते ॥

यत्तु स्नेहादिवशान्निर्हृत्य† तदन्नमश्नाति तद्गृहे च निवसति तस्य दशाहाच्छुद्धिर्यस्तत्पूर्व्ववदेव निर्हृत्य तद्गृहे वसति न तदन्नमश्नाति स त्रिरात्राच्छुध्यति। यश्च निर्हरणादिकमेव करोति न तद्गृहवासं न च तदन्नभोजनं स त्र्यहात्।

तथाच मनुः।

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषान्तु दशाहेनैव शुध्यति।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥

एतच्च सजातीयविषयम्।

विजातीयविषये तु गौतमोक्तो विशेषः।

अवरश्चेद्वर्णः पूर्व्ववर्णमुपस्पृशेत्पूर्व्वो वावरम्। तत्र शावोक्तमाशौचमिति।

उपस्पृशेन्निर्हरेत्। हीनवर्णश्चेदुत्कृष्टं निर्हरति उत्कृष्टश्चेन्नीचं तत्र निर्हरणीयाशौचदिनैः शुद्धिः। ब्राह्मणश्चेच्छूद्रं निर्हरति तदा मासेन शुद्धिः, शूद्रश्चेद्ब्राह्मणं तदा दशभिर्दिनैः, इत्यनेन प्रकारेणानुसन्धेयम्।

---

* शुभं कर्म्म येषां शुभकर्म्मकारिणामित्यर्थः। † दाहं कृत्वा।

ब्रह्मपुराणे ।

ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन ।
कामान्मोहाद्भयाल्लोभात्कृत्वा तज्जातितां व्रजेत् ॥
पुत्राः कुर्व्वन्ति* विप्राय† चत्रविट्शूद्रयोनयः ।
स‡ तादृशेभ्यः§ पुत्रेभ्यो न करोति कदाचन ॥
राज्ञि मृते सपिण्डे तु निरपत्ये पुरोहितः ।
मन्त्री वा तदशौचन्तु चीर्त्वा पश्चात्करोति सः ॥

अनपत्ये अविद्यमानसपिण्डे च राजनि मृते स्वपुरोहितस्तस्मै राज्ञे श्राद्धं कुर्य्यात्तत्प्रयुक्ताशौचं चीर्त्वेत्यर्थः । शवसंस्पर्श-निमित्तं चाशौचं स्पर्शवत एव न तद्भार्य्यादीनां तद्द्रव्याणां वा । तथाचाङ्गिराः ।

आशौचं यस्य संसर्गाज्जायते गृहमेधिनः ।
क्रियास्तस्य न लुप्यन्ते गृह्याणाञ्च न तद्भवेत् ॥

क्रिया वैतानोपासनाद्याः । गृह्याणां गृहे भवानामति-क्रान्ताशौचेऽप्येवमेव ।

अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही ।
त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित्¶ ॥

इति स्मरणात् । त्रिरात्रमिति मातापितृव्यतिरिक्तविषयम् । आशौचिनां नियमविशेषो याज्ञवल्क्येन दर्शितः ।

---

* आहमिति शेषः । † विप्रमिति पाठान्तरम् । ‡ विप्र इति शेषः । § चत्रि-यादिस्त्रीषु जातेभ्यः । ¶ कस्मिन् स्थलेऽपीत्यर्थः । वस्तुतः कस्यचिदित्येव साधु ।

क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक्।

क्रीताशना अयाचितलब्धाशना भवेयुरिति नियमादर्थादेतदभावे अनशनं सिद्धं दिनत्रयपर्य्यन्तमयं नियमः।

तथाच वशिष्ठः।

गृहाद्व्रजित्वा अयस्त्रस्तरे त्र्यहमनश्नन्त आसीरन्।
क्रीतोत्पन्नेन वर्त्तेरन्निति।

आशौचिनां शयनाय तृणमयस्त्रस्तरः अयस्त्रस्तर इत्युच्यते।

मनुः।

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम्।
मांसाशनञ्च नाश्नीयुरिति॥

गौतमः।

अधःशय्याशायिनो ब्रह्मचारिणः सर्व्वे इति।

तथा वपनं दुःखानुभाविभिः सर्व्वैः सपिण्डैः पुत्रैरेव स्वस्वदेशाचारानुसारेण। प्रथमदिनप्रभृति विषमदिनेषु अपि आद्यादिप्रदानात्पूर्व्वङ्कर्त्तव्यम्।

यदाहापस्तम्बः।

अनुभाविनाञ्च परिवापनमिति।

अनुभाविनोऽल्पवयसः सपिण्डाः पुत्राश्च।

तथा।

द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म्म प्रयत्नतः।
तृतीये पञ्चमे वापि सप्तमे वा प्रदानतः॥

तथा।

गङ्गायां भास्करे क्षेत्रे मातापित्रोर्गुरौ मृते ।
आधाने सोमपाने* च वपनं सप्तसु स्मृतम् ॥ इति ।

देवलः ।

दशमेऽहनि सम्प्राप्ते स्नानङ्ग्रामाद्बहिर्भवेत् ।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥ इति ।

प्रथमादिदिनेषु कृतक्षौरस्यापि शुद्ध्यर्थं दशमदिनेऽपि वपनङ्कर्त्तव्यम् । दशमदिनमिति सूतकान्तोपलक्षणम् । अन्ते च वाससां त्याग इति स्मरणात् । सूतकान्तकर्त्तव्यवासस्त्यागसाहचर्य्यात्केशश्मश्र्वादित्यागोऽपि सूतकान्तेऽपि कर्त्तव्यः ।

अस्थिसञ्चयनदिनमपि वैकल्पिकम् ।

तत्र संवर्त्तः ।

प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।
अस्थिसञ्चयनङ्कार्य्यं दिने तद्गोत्रजैः सह ॥

विष्णुः ।

चतुर्थे दिवसेऽस्थिसञ्चयनं कुर्यात्तेषाञ्च गङ्गाम्भसि प्रक्षेपः । द्वितीये त्वस्थिसञ्चय इति स्वेच्छानुसारेण व्यवस्था । अस्थिसञ्चयनदिवसे च श्मशानवासिदेवतानामुद्देशेन पूजा कर्त्तव्या ।

अस्पृश्यत्वलक्षणाशौचनिवृत्तिकालनियममाह

देवलः ।

दशाहादिविभागेन कृते सञ्चयने क्रमात् ।

* आधानकाले सोमे च इति पाठान्तरम् ।

अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनाम् ॥
त्रिचतुःपञ्चदशभिः स्पृश्या वर्णक्रमेण तु ।
अस्थिसञ्चयनक्षतएव स्वाशौचत्रिभागतः ॥

शुद्धिर्न त्वस्थिसञ्चयनाभाव इति तात्पर्य्यम् ।

तथाच स्मर्य्यते ।

अस्थिसञ्चयनादूर्द्धमङ्गस्पर्शो न दुष्यति । इति ।

एतदुपनीतविषयम् । अनुपनीते त्वस्थिसञ्चयनमन्तरेण स्वाशौचत्रिभागतः स्पृश्यत्वम् ।

तदाह देवलः ।

स्वाशौचकालाद्विज्ञेयं स्पर्शनन्तु त्रिभागतः ।
शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम् ॥ इति ।

कर्म्मानधिकारलक्षणं त्वाशौचं स्वस्ववर्णाशौचकालानन्तरं स्नानादिभिरपगच्छति । एतच्चाशौचमाहिताग्नेः संस्कारदिनप्रभृति अनाहिताग्नेस्तु मरणदिनप्रभृति अस्थिसञ्चयनं तूभयोरपि संस्कारादिदिनप्रभृतीति विवेकः ।

तथाचाङ्गिराः ।

अनग्निमत उत्क्रान्तेः* साग्नेः संस्कारकर्म्मणः† । इति ।

पैठीनसिरपि ।

अनग्निमत उत्क्रान्तेराशौचादिर्द्विजातिषु ।
दाहादग्निमतो विद्याद्विदेशस्थे मृते तथा ॥ इति ।

* जननमरणदिनैः । † दाहदिनमारभ्य ।

साग्निकस्य दाहप्रभृत्येवाशौचादीनि तत्पुत्रादीनामासंस्कारात्सन्ध्यादिकर्म्मलोपो नास्ति* ।

अशौचे नित्यनैमित्तिकयोर्निवृत्तिः पारस्करेण दर्शिता ।

नित्यानि विनिवर्त्तेरन्नित्यवैतानवर्जं शालाग्नावेक:
अन्य एतानि कुर्य्युः ।

अत्र नित्यशब्देनावश्यकनैमित्तिकानामप्युपसंग्रहणम् । अतो वैतानानां स्मार्त्तानाञ्च कर्म्मणां प्रतिप्रसवेऽपि नैमित्तिकस्यापि प्रतिप्रसवः । काम्यानान्तु सर्व्वत्र सर्व्वथापिनिवृत्तिः । वितानाग्नीनां विस्तारः त्रेताग्निः । तत्र क्रियमाणानि नित्याग्निहोत्रादीनि वैतानानि वर्ज्जयित्वा नित्यानि विनिवर्त्तेरन् इत्ययं निषेधो नित्याग्निहोत्रादिषु न प्रवर्त्तते इत्यर्थः । अतः स्वयमेव कुर्य्यात् । शालाग्निर्गृह्योऽग्निस्तत्सम्बन्धिनां सायंप्रातर्होमस्थालीपाकादीनां पाक्षिकी कर्त्तव्यता करणमकरणं वा शास्त्रार्थ इत्यर्थः । यदा करणपक्षस्वीकारः तदा अन्य असपिण्डा एतानि कुर्य्युः अन्येनासपिण्डेनैतानि कारयेदित्यर्थः । तत्रापि स्वद्रव्यत्यागात्मकप्रधानं स्वयमेव कुर्य्यात् । तस्यानन्यनिष्पाद्यत्वात् ।

पुलस्त्यः ।

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजन् गच्छेदधो द्विजः ॥

---

* दाहात्प्राक् सन्ध्यादिकर्म्मलोपो नास्तीत्यर्थः ।

इष्टिराहिताग्नेर्दर्शपौर्णमासादिकश्चरुः । अनाहिताग्नेः स्थालीपाकादिरूपः ।

जातूकर्णः ।

सूतके तु समुत्पन्ने स्मार्त्तङ्कर्म्म कथं भवेत् ।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ॥

पिण्डयज्ञः पिण्डपितृयज्ञः । चरुश्रपणकर्म्माश्वयुज्यादिकः स्थालीपाकश्च । असगोत्रा असपिण्डाः पिण्डनिषेधस्याशौचनिमित्तत्वात् । अशौचरहितेन ब्रह्मचारिणा सपिण्डेन होतव्यमिति गम्यते ।

वृहस्पतिः ।

सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु हावयेत्* न तु हापयेत्† ॥

अग्निसाध्येऽपि वैश्वदेवस्य निवृत्तिस्तथा पञ्चयज्ञादीनामपि ।

तथाच संवर्त्तः ।

विप्रो दशाहमासीत वैश्वदेवविवर्ज्जितः ।
पञ्चयज्ञविधानन्तु न कुर्य्यान्मृत्युजन्मनोः ॥ इति ।

एवञ्चोक्तनित्यनैमित्तिकव्यतिरेकेणेतरेषां नैमित्तिकानामपि निवृत्तिः । यत्पुनः

दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते । इति

तत्काम्यहोमाभिप्रायं वैश्वदेवाभिप्रायं वा ।

---

* अन्येन होमं कारयेत् । † न तु त्यजेदित्यर्थः ।

सन्ध्याविषये विष्णुपुराणे ।

सर्व्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥

सूतके आशौचे सन्ध्यायाः न स्वरूपतः परित्यागः अपि तु मन्त्रोच्चारणपूर्व्विकायाः । पुलस्त्येन प्राणायामरहितमानसिकसन्ध्याभ्यनुज्ञानात् ।

सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत् ।
मनसा धारयेन्मन्त्रान् प्राणायामादृते द्विजः ॥ इति ।

अञ्जलिप्रक्षेपस्तु सावित्रीमुच्चार्य्य कार्य्यः ।

तथाच पैठीनसिः ।

सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य दक्षिणाकृत्वा सूर्य्यं ध्यायन्नमस्कुर्य्यात् ! इति ।

सूतकादौ ग्रहणे जाते स्नानदानश्राद्धे न दोषः ।

तथाच वृद्धवशिष्ठः ।

चन्द्रसूर्य्यग्रहे स्नायान्मृतके सूतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति ॥

तथा ।

सूतके मृतके चैव न दोषो राहुदर्शने* ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

सूतके मृतके वाऽसपिण्डैरसमानोदकैश्चाशौचान्नं न भोक्तव्यम् ।

---

* राहुदर्शननिमित्तस्नानदानश्राद्धादिकरणे इति ग्रन्थकाराशयः ।

उभयत्र दशाहानि* कुलस्यान्नं न भुज्यते ।
उभयत्र सूतके मृतके च । सकुल्यानान्तु न दोषः ।

सूतकेषु कुलस्यान्नमदोषं मनुरब्रवीत् ।

इति तेनैवोक्तत्वात् ।

षट्त्रिंशन्मते ।

उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् ।
एकेनापि परिज्ञाते भोक्तुर्दोषोऽनुपावहेत् ॥

उभाभ्यां दातृभोक्तृभ्यां यद्यपि दात्रा सूतकाद्यपरिज्ञाते दातुः सूतकं नास्ति ज्ञातस्यैव जननादेर्निमित्तत्वात्† तथापि दातृपरिज्ञानमन्तरेण केवलं भोक्तुर्ज्ञानेऽपि वचनाद्भोजने दोषो भोक्तुरेव उपपद्यते भोक्तुरपि ज्ञानं भोजननिवृत्तौ निमित्तम् । सूतकादिस्वरूपनिष्पत्तिरेकोऽंशः तज्ज्ञानञ्चापरः एतदुभयविशिष्टं‡ निमित्तम् । एवञ्च निमित्तैकदेशस्य प्रसवादेर्भोक्त्रा ज्ञातत्वादेकदेशविभावितन्यायेनाऽ§न्यस्यापि सम्भाव्यमानत्वात्

---

* दशाहानि इत्युपलक्षणं तेन क्षत्रियादेरपि जननमरणाशौचे जाते असपिण्डैः असमानोदकैश्च द्वादशाहादिपर्य्यन्तम् अशौच्यन्नं न भोक्तव्यम् । † अशौचं प्रतीति शेषः । ‡ सूतकादिस्वरूपोत्पत्तितज्ज्ञानरूपोभयविशिष्टम् ।

§ निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्व्वं नृपेणार्थमग्राह्यस्त्वनिवेदितः ॥

इति याज्ञवल्क्यवचनम् । यो लिखितानेकं सुवर्णादिकमपलपति स एकद्रव्ये साक्ष्यादिभिर्विभावितः सर्व्वं दद्यात् । एकदेशविभावनाद्विजानतः एव तस्य तदपलापेन दुःशीलत्वावधारणादपरांशेऽपि तथात्वमेव सम्भाव्यते । सत्यविभावकस्यापि प्रक्रान्तविषये यथार्थवाक्यनिश्चयादविभावितांशेऽपि सत्यवादित्वसम्भावनमित्येव तर्कपरम्परागत एकदेशविभावितन्यायः ।

केवलभोक्तृज्ञानेऽपि भोजननिवृत्तिः। यदा तु दात्रा ज्ञातं न भोक्त्रा एकदेशविभावितन्यायात्तदापि भोक्तुरेव वचनाद्भोजन-निमित्तो दोषः न दातुः। अपि च दातुः सूतकान्नभोज-यितृत्वदोषो*ऽस्त्येव अयञ्च भोजयितृत्वनिमित्तो दोषः मृतके सूतके विहितप्रथमादिदिननवश्राद्धादिव्यतिरिक्तकाले विज्ञेयः तत्काले विहितत्वात्।

ब्रह्मपुराणे।

अपि दातृगृहीतोश्च सूतके मृतके तथा।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कदाचन†।
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात्॥

बृहस्पतिः।

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके।
परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः॥
भुञ्जानेषु च विप्रेषु त्वन्तरा मृतसूतके।
अन्यगेहोदकाचान्ताः सर्व्वे ते शुचयः स्मृताः॥

मरीचिः।

लवणे मधुमांसे च पुष्पमूलफलेषु च।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च॥
तिलौषधाजिने‡ चैव पक्वापक्वे स्वयङ्ग्रहः§।

* भोजनकारयितृत्वनिमित्तदोषः। † ग्रन्थकारमते ज्ञातेऽज्ञाते वा श्राद्धादौ ब्राह्मण-भोजने कोऽपि दोषो नास्ति। ‡ तिलौषध्यजिन इति पाठान्तरम्। § स्वयंग्रहे इति ग्रन्थान्तरीयः पाठः।

पुष्पेषु चैव सर्व्वेषु नाशौचं मृतसूतके ॥

स्वयङ्गृहः स्वाम्यनुज्ञातो गृह्णीयादित्यर्थः । पक्कापक्क इति पक्कं भक्ष्यजातमपक्कं तण्डुलादिकं चान्नसत्रप्रवृत्तादेव ग्राह्यं नान्यस्मात् ।

तथाचाङ्गिराः ।

अन्नसत्रप्रवृत्ताना*माममन्नमगर्हितम् ।
भुक्त्वा पक्कान्नमेतेषां त्रिरात्रन्तु पयः पिवेत् ॥

अत्र भक्ष्यव्यतिरिक्तौदनादिविषये पक्कशब्दः । इतरथा मरीचिवचनविरोधात् । व्रतादिष्वारब्धेषु सत्सु पश्चाच्चेत्सूतकादिकं भवति तदा तावन्मात्रे सूतकाभावः ।

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्च्चने जपे† ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इति स्मरणात् । सूतकमिति मृतकस्याप्युपलक्षणम् । प्रारम्भश्च तेनैवोक्तः ।

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः‡ ।
नान्दीमुखं§ विवाहादौ श्राद्धे पाकपरिष्क्रिया ॥

प्रारम्भाभावेऽपि कन्याया अधार्ष्यत्वे, सन्निहितलग्नान्तराभावे च विष्णुनैवाभ्यनुज्ञा दत्ता ।

---

* अन्नदानरूपयज्ञप्रवृत्तानामशौचिनां सकाशात् आमान्नग्रहणे दोषो नास्ति इति समुदायार्थः । † तथेति पाठान्तरम् । ‡ व्रतसत्रयोरिति पाठान्तरम् । § नान्दीश्राद्धमिति पाठान्तरम् ।

अनारब्धविशुद्ध्यर्थं कुष्माण्डैर्जुहुयाद्घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतिकी ॥
कुष्माण्डैः कुष्माण्डमन्त्रैः* ।

---

* यद्देवा देवहेलनं देवासश्चकृमा वयम् ।
आदित्यास्तस्मान्मा मुञ्चतर्तस्यर्तेन मामित ॥
देवा जीवनकाम्या यद्वाचानृतमूदिम ।
तस्मान्न इह मुञ्चत विश्वेदेवाः सजोषसः ॥
ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वती ।
कृतान्नः पाह्येनसो यत्किञ्चानृतमूदिम ॥
इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः ।
ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम ॥
स जात शꣳसादुत जामिशꣳसाज्ज्यायसः शꣳसादुत वा कनीयसः ।
अनाधृष्टं देवकृतं यदेनस्तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि ॥
यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳ शिश्नैर्यदनृतं चकृमा वयम् ।
अग्निर्मा तस्मादेनसः गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥
येन त्रितो अर्णवान्निर्बभूव येन सूर्यं तमसो निर्मुमोच ।
येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आक्षि ॥
यत्कुसीदमप्रतीतं मयेह येन यमस्य निधिना चरामि ।
एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि ॥
यन्मयि माता यदा पिपेष यदन्तरिक्षं यदा शसाति ।
क्रामामि त्रिते देवा दिवि जाता यदाप इमं मे ।
वरुण तत्त्वायामि त्वन्नो अग्ने सत्वन्नो अग्ने त्वमग्ने अयासि ॥
मुमुग्धि, सप्त च ॥ ३ ॥
तैत्तिरीये आरण्यके द्वितीयप्रपाठके तृतीयोऽनुवाकः ।
यददीव्यन्नृणमहं बभूवादित्सन्वा सञ्जगर जनेभ्यः ।

## अथानुलोमजविजातीयसपिण्डाशौचम् ।

तत्र बौधायनः ।

क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बान्धवाः ।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥

तेषामशौचे क्षत्रियादिजननादिनिमित्ताशौचे ।

हारीतः ।

दशाहाच्छुद्ध्यते विप्रो जन्महानौ* स्वयोनिषु ।

---

अग्निर्मा तस्मादिन्द्रश्च संविदानौ प्रमुञ्चताम् ॥
यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः ।
उग्रम्पश्या च राष्ट्रभृच्च तान्यप्सरसावनुदत्तामृणानि ॥
उग्रम्पश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत् ।
नेन्न ऋणानृणव इत्समानो यमस्य लोके अधिरज्जुराय ॥
अव ते हेड उदुत्तममियस्मे वरुण तत्त्वायामि त्वन्नो अग्ने स त्वन्नो अग्ने ।
सङ्कुसुको विकुसुको निर्ऋथो यश्च निस्वनः ॥
ते येऽस्मत् यक्ष्ममनागसो दूराद्दूरमचीचतम् ।
निर्यक्ष्ममचीचते कृत्यान् निर्ऋतिञ्च ॥
तेन योऽस्मत्समृच्छातै तमस्मै प्रसुवामसि ।
दुःशꣳस सानुशꣳस साभ्यां घणेनानुघणेन च ।
तेनान्योऽस्मत्समृच्छातै तमस्मै प्रसुवामसि ॥
संवर्चसा पयसा सन्तनुभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा नो अत्र विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टं ॥
कृत्यान् निर्ऋतिञ्च पञ्च च ॥ ४ ॥
तैत्तिरीये आरण्यके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ।

* जननमरणे इत्यर्थः ।

विष्णुः ।

क्षत्रियस्य विट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्राभ्यां वैश्यस्य शूद्रे सपिण्डे षड्रात्रेण शुद्धिर्हीनवर्णानामुत्कृष्टेषु सपिण्डेषु जाते मृते वा तदाशौचव्यपगमे शुद्धिः ।

बौधायनेनोक्तमनापद्विषयं हारीताद्युक्तं त्वापद्विषयमिति व्यवस्था । एतेषां सापिण्ड्यं त्रिपुरुषमेव पिण्डास्त्वावर्त्तन्ते त्रिष्विति सापिण्ड्यप्रकरणेऽभिहितत्वात् ।

अपरो विशेषः आपस्तम्बेनोक्तः ।

क्षत्रविट्शूद्रजातीनां यावन्मृतकसूतके ।
तेषान्तु पैतृकं शौचं विभक्तानान्तु मातृजम् ॥

पितृगेहेऽवस्थितानां तदविभक्तानां पितृजातीयमाशौचं विभक्तानान्तु मातृजात्याभिहितमित्यर्थः । प्रतिलोमानान्तु सूतकादिकं नास्त्येव प्रतिलोमा धर्म्महीना इति स्मरणात् । मूत्रपुरीषोत्सर्गवन्मलापकर्षणार्थं शौचं कुर्य्यात् ।

## अथ समानोदकाशौचम् ।

जन्मन्येकोदकानान्तु त्रिरात्राच्छुद्धिरिष्यते ।

तत्र मनुः ।

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥

एकोदकाः समानोदकाः ते च सप्तमपुरुषोर्द्ध्वभागिनः* ।

---

* गामिन इत्यर्थः ।

समानोदकभावानुवृत्तिश्च यावज्जन्मनाम्नोर्विज्ञानम्।

तथाच मनुः।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।

समानोदकभावस्तु जन्मनाम्नोरवेदने॥ इति।

वर्त्तत इत्यन्वयः।

## अथ प्रोषितमरणजननाशौचम्।

तत्र निर्दशजननश्रवणे पितुः सचेलस्नानाच्छुद्धिः।

यदाह मनुः।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्त्रस्य जन्म च।

सवासा जलमाप्लुत्य शुद्धो भवति मानवः॥

पुत्त्रस्य इति सम्बन्धसूचकत्वात्पितुरेव स्नानं सपिण्डानान्तु दशाहादिके व्यतीते सूतकं नास्त्येव।

अतएव देवलः।

नाशुद्धिः प्रसवाशौचव्यतीतेषु* दिनेष्वपि।

प्रोषितमरणे तु याज्ञवल्क्यः।

प्रोषिते कालशेषः स्यादिति।

देशान्तरस्थसपिण्डमरणे दशरात्राद्यशौचकाले चानतिक्रान्ते दशरात्रादिशेषं यावदशौचं भवति। न श्रवणप्रभृति पुनर्द-

* नाशौचं प्रसवेष्वस्तीति ग्रन्थान्तरीयः पाठः।

श्राह्निकमित्यर्थः। दशाहाद्यनन्तरं मासत्रयपर्य्यन्तं त्रिरात्रं ततः षण्मासपर्य्यन्तं पक्षिणी ततो नवमाद्वर्षांगेकाहः। ततः संवत्सरपर्य्यन्तं स्नानोदकदानाभ्यामेव शुद्धिः। संवत्सरानन्तरं स्नानेनेति विवेकः।

यदाह वृहद्वशिष्ठः।

मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा।
अहस्तु नवमाद्वर्षांगूर्द्ध्वं स्नानेन शुध्यति॥

स्नानं सहचरित*मुदकदानमप्याक्षिपति।

मनुः।

संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति।

स्पृष्ट्वा स्नानेनेत्यर्थः। अन्यानि यानि विरुद्धवचनानि तानि पूर्व्वोक्तविषय एव योज्यानि एतन्मातापितृव्यतिरिक्तविषयम्।

अतएव पैठीनसिः।

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्॥

दशाहमिति द्वादशाहाद्युपलक्षणार्थम्। सूतकी भवेदित्यनेन प्रेतकार्य्यकर्त्तव्यतां दर्शयति। सापत्न्यमातरि विशेषो दक्षेणोक्तः।

पितृपत्न्यामपेतानां मातृवर्ज्जं द्विजोत्तमः।
संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेत्॥

---

* स्वसहचरितमिति पाठान्तरम्।

एतच्च वक्ष्यमाणदेशान्तरलक्षणरहितदेशान्तरस्थलमृतौ। देशान्तरमृते तु सपिण्डे मासत्रयादर्व्वागपि सद्यःशौचम्।

देशान्तरमृतं श्रुत्वा क्लीवे वैखानसे* यतौ†।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः॥

इति स्मरणात्।

देशान्तरलक्षणमाह वृद्धमनुः।

महानद्यन्तरं यत्र गिरिर्व्वा व्यवधायकः।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते॥

वृहस्पतिः।

देशान्तरं वदन्त्येके षष्टियोजनमायतम्।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च॥

अत्र च देशान्तरतो व्यवस्था।

स्मृत्यर्थसारे तु अन्यथा, तद्यथा

स्त्रीपुरुषयोः परस्परं त्वेवं सवर्णोत्तमपत्नीषु चैवम्।

एवमित्यनेन मातापितृसवर्णाशौचमेवेति ग्रन्थकारः परामृष्टवान्। देशान्तरे कालान्तरे च हीनवर्णायाः मातुः सपत्न्या मरणे तु पुत्रस्य त्रिरात्रं हीनवर्णपत्नीषु चैवम्। संवत्सरे व्यतीते तु सपत्न्योः परस्परं चैवमिति। अतिक्रान्ताशौचमुपनीतोपरमएव। एतच्च वयोवस्थाशौचवत्सर्व्ववर्णसाधारणम्।

तथाच व्याघ्रपादः।

---

* वानप्रस्थाश्रमिणि। † भर्त्तरि, अस्य च क्लीवे वैखानसे च इत्यनेन सम्बन्धः। तथाच क्लीवे यतौ वानप्रस्थे च यतौ भर्त्तरि मृते स्नानमात्रमशौचम्।

तुल्यं वयसि सर्व्वेषामतिक्रान्ते तथैव च ।
उपनीते तु विषमं तस्मिन्नेवातिकालजम् ॥

अयमर्थः । जन्मप्रभृत्युपनयनादर्व्वाचीने* वयसि यदाशौचं तत् सर्व्वेषां ब्राह्मणादीनां तुल्यम् । यच्च दशाहादिके अतिक्रान्ते तदपि तुल्यम् । उपनीतोपरमे दशद्वादशेत्यादिरूपेण विषमम् । तस्मिन्नेव उपनीतोपरम एवातिकालजमतिक्रान्ताशौचम्भवति । न पुनर्व्वयोवस्थाशौचातिक्रम इति ।

## अथ प्रोषितमृतदाहविधिस्तदशौचम् ।

प्रोषितादिमृतशरीरालाभे तदस्थिभिः प्रतिकृतिं† कृत्वा अस्थामप्यलाभे स्वस्वगृह्योक्तप्रकारेण पर्णशरैः प्रतिकृतिं कृत्वा दाहः कार्य्यः । तत्राहिताग्निर्यदि प्रोषितमृतस्तदा दशाहद्वादशाहादिक‡मेवाशौचं भवति ।

तथाच वशिष्ठः ।

आहिताग्निश्चेत्प्रवसन् म्रियेत पुनः संस्कारङ्कृत्वा शववदशौचमिति ।

सम्पूर्णाशौचं संस्कारादूर्द्धमिति शेषः । अनाहिताग्नेस्त्रिरात्रम् ।

---

* पूर्व्वकाले । † शरीरप्रतिनिधिम् । ‡ शरीरालाभे अस्थिमात्रदाहे च आहिताग्नेर्ब्राह्मणस्य दशाहाशौचं क्षत्रियस्य द्वादशाहाशौचं वैश्यस्य पञ्चदशाहाशौचमिति दाहादूर्द्धमिति शेषः ।

सुपिष्टै*र्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्ता स्वबान्धवैः ॥
एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।

इति स्मरणात् ।

## अथोपाध्यायाद्युपरमे ।

तत्र सन्निधाने अहरित्यनुवृत्तौ

याज्ञवल्क्यः ।

गुर्व्वन्तेवास्य†नूचान‡मातुलश्रोत्रियेषु च ।

गुरुरुपाध्यायः । एकग्रामनिवासिनः सन्निहितश्रोत्रियस्यैतदाशौचम् ।

तद्यथाश्वलायनः ।

एकाहं सब्रह्मचारिणि समानग्रामे च श्रोत्रियः । इति । सब्रह्मचारी एकाचार्य्योपनीतः ।

आचार्य्यविषये मनुः ।

त्रिरात्रमाहुराशौचमाचार्य्ये संस्थिते सति ।
तस्य पुत्त्रे च पत्न्याञ्च दिवारात्रमिति स्थितिः ॥

सन्निहितगुणवच्छ्रोत्रियसन्निहितमातुलाद्युपरमे मनुरेव ।

श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत् ।

---

* यवपिष्टैः । † शिष्यः । ‡ साङ्गवेदाध्यायी ।

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥

उपसम्पन्नो मैत्रादियुक्तो* गुणयुक्तो वा ।

बृहस्पतिः ।

त्र्यहं मातामहाचार्य्यश्रोत्रियेषु शुचिर्भवेत् ।

वृद्धप्रचेताः ।

संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ।

संस्कृते तु त्रिरात्रं स्यादिति धर्म्मो व्यवस्थितः ॥

पित्रोरुपरमे स्त्रीणामूढ़ानान्तु कथं भवेत् ।

त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः ॥

श्वशुरयोर्भगिन्याञ्च मातुलान्याञ्च मातुले ।

पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥

तथा ।

मातुले श्वशुरे मित्रे गुरौ गुर्व्वङ्गनासु च ।

अशौचं पक्षिणीं रात्रिं मृता मातामही यदि ॥

विदेशस्थभगिन्यादिषु स्नानाच्छुद्धिः ।

तथाच वृद्धविष्णुः ।

भगिन्यां संस्कृतायान्तु भ्रातर्य्यपि च संस्कृते ।

मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥

श्यालके तत्सुते चैव सद्यःशौचेन शुध्यति ।

अत्र भ्रातपेक्षया भगिन्यास्तदपेक्षया च भ्रातुः स्नानाच्छुद्धिः ।

---

* जपयज्ञादियुक्तः । तथाच मनुः । जप्येनैव तु संसिद्धेद्ब्राह्मणो नात्र संशयः । कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥

न तु भ्रात्रन्तरापेक्षया तस्य पूर्व्वोक्तरीत्या निर्दशादिमरणे* ज्ञेयं तथा सन्निधाने।

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि।
शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात्॥

अत्र शिष्यश्रोत्रियौ निर्गुणौ। दिवा चेदाशौचमायाति† तदा नक्षत्रदर्शनाच्छुद्धिः।

विष्णुः।

असपिण्डे स्ववेश्मनि सूतमृत एकरात्रम्।

वृद्धविष्णुः।

ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित्।
ग्रामस्य तावदाशौचं निर्गते शुचितामियात्॥

अनेनैव न्यायेन नगरेऽपि स्ववीथीं‡ यावत् शवस्तिष्ठति तावदाशौचमिति विज्ञेयम्। उक्तप्रकारेण अन्येऽपि गुरुलघ्वाशौचकल्पाः सन्निधिविदेशस्थापेक्षया गुणवद्गुणापेक्षया व्यवस्थापनीयाः। क्षेत्रजादिषु

याज्ञवल्क्यः।

अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च।

अहोरात्रमित्यनुवर्त्तते। अनौरसेषु क्षेत्रजदत्तकादिषु जातेषु मृतेषु च। प्रतिलोमव्यतिरिक्तमन्यमाश्रिता अन्यगताः। प्रतिलोमाश्रितासु त्वाशौचाभाव एव। एतच्चासन्निधाने।

---

* दशाहादिकालोत्तरमरणश्रवणे। † आपततीति पाठान्तरम्। ‡ स्वकीयपथम्।

सन्निधौ विष्णुः ।

अनौरसेषु पुत्त्रेषु जातेषु च मृतेषु च ।
परपूर्व्वासु भार्य्यासु प्रसूतासु मृतासु च ॥

अत्र त्रिरात्रमित्यनुवर्त्तते। परः पूर्व्वः पतिर्यासां भार्य्याणां ताः परपूर्व्वाः एवंविधाः स्वैरिण्याद्या यमाश्रितास्तस्यापि त्रिरात्रमित्यर्थः। भार्य्यापुत्त्रशब्दयोः सम्बन्धिशब्दत्वात्। यस्य च भार्य्या यस्य च पुत्त्रस्तस्यैवाशौचं सपिण्डानान्तु सद्यः शौचम्।

तथाच प्रजापतिः।

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता॥

एतच्च सन्निधाने असन्निधाने तु पूर्व्वोक्तमेकाहं गोत्रिणः स्नानशुद्धाः स्युरिति। यत्र पितुस्त्रिरात्रात् पूर्णाशौचम्, तत्र सपिण्डानां स्नानाच्छुद्धिः। यत्र तु पितुस्त्रिरात्रं तत्र सपिण्डानामेकाहम्*।

अतएव मरीचिः।

सूतके मृतके चैव त्रिरात्रं परपूर्व्वयोः।
एकाहन्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः॥

स्वदेशराजनि मृते

---

* बहुषु पुस्तकेषु दर्शनात् एष पाठो रचितः परन्तु यत्र पितुस्त्रिरात्रं तत्रासन्निधाने सपिण्डानां स्नानात् शुद्धिः सन्निधाने तु एकाहमित्येवं भवितुमर्हति।

मनुः ।

प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः ।

ज्योतिषा सह वर्त्तते सज्योतिः अह्नि चैवास्तमनपर्य्यन्तं रात्री चेदुदयपर्य्यन्तमित्यर्थः । राज्ञां विषये विशेषेणैव अशौचाभावमाह ।

महीपतीनां नाशौचं हतानां विद्युता तथा ।

गोब्राह्मणार्थे सङ्ग्रामे यस्य चेच्छति भूमिपः ॥

महीपतीनामाशौचाभावस्तु असाधारणप्रजापरिपालनशान्तिकपौष्टिकादौ नित्यनैमित्तिकादिषु तु पूर्व्वोक्तैव व्यवस्था । यस्य च मन्त्रिपुरोहितादेरनन्यसाध्यकर्म्मणि सद्यः शौचम् ।

यदाह प्रचेताः ।

कारवः शिल्पिनो वैद्या दासी दासास्तथैव च ।

राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः ॥

कारवः सूपकारादयः । शिल्पिनः चेलनिर्णेजकचित्रकारादयः । एतेषाञ्च स्वीयस्वीयासाधारणकर्म्मस्वेव सद्यः शौचं नान्यत्र ।

तथाच विष्णुः ।

न राज्ञां राजकर्म्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्म्मणि ।

शातातपः ।

मूल्यकर्म्मकराः शूद्रा दासी दासस्तथैव च ।

स्नाने शरीरसंस्कारे गृहकर्म्मण्यदूषिताः ॥

एतदापद्विषयम्।

तथाच।

सद्यः स्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः।
चिकित्सको यत्कुरुते तदन्येन न शक्यते॥
तस्माच्चिकित्सकः स्पर्शशुद्धो भवति नित्यशः।

## अथानुगमनाशौचम्।

तत्र याज्ञवल्क्यः।

ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित्।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः॥

इयञ्च स्नानादिजन्याशुद्धिः समानोत्कृष्टजातीयानुगमने। ब्राह्मणेन क्षत्रियानुगमने कृते

वशिष्ठेनोक्तम्।

मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचमस्निग्धं त्वहो-रात्रम्। शवानुगमने चैवमिति।

एवमित्यनेनाहोरात्रमतिदिशति। वैश्यानुगमने पक्षिणी परिकल्पनीया। क्षत्रियापेक्षया न्यूनत्वात् शूद्रापेक्षयाधिक-त्वात्। ब्राह्मणस्य शूद्रानुगमने

पराशरः।

प्रेतीभूतन्तु यः शूद्रं ब्राह्मणो ज्ञानदुर्ब्बलः।
अनुगच्छेन्नियमाणं स त्रिरात्रेण शुध्यति॥

त्रिरात्रे तु ततश्चीर्णे नदीं गत्वा समुद्रगाम्* ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥

अनेनैव न्यायेन क्षत्रियस्य वैश्यानुगमने एकाहमित्यनुसन्धेयम् ।

शङ्खः ।

कृच्छ्रपादः सपिण्डस्य प्रेतालङ्करणे कृते ।
अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते ॥

ज्ञाने तु द्विगुणम् ।

पारस्करः ।

मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनम्† ।
वर्ज्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म्म च ॥

## अथाशौचसन्निपातनिर्णयः ।‡

तत्र यस्याशौचस्य यावत्कालस्तन्मध्ये तत्समस्य न्यूनस्य वा सन्निपाते पूर्व्वाशौचशेषेण शुद्धिरन्तरापतितस्य च ।

तथाच याज्ञवल्क्यः ।

अन्तराजन्ममरणे शेषाहोभिर्विशुध्यति ।

स्वल्पाशौचमध्ये तु दीर्घाशौचसन्निपाते पूर्व्वशेषेण शुद्धिः ।

यदाहोशना ।

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।

* गङ्गाम् । † विलापम् । ‡ अशौचसङ्करनिर्णयः ।

न पूर्व्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति ॥

अपरो विशेषस्त्वङ्गिरसाभिहितः ।

सूतके मृतकञ्चेत्स्यान्मृतके त्वथ सूतकम् ।
तत्राधिकृत्य मृतकं शौचं* कुर्य्यान्न सूतकम् ॥
मातर्य्यग्रे प्रमीतायामशुद्धौ† म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्य्यात्तु पक्षिणीम् ॥

पितुः शेषेण इति पित्राशौचकालनैव शुद्धिः न मात्राशौचशेषेणेत्यर्थः। पित्राशौचकालमध्ये माता यदि म्रियते तदा पित्राशौचगमनानन्तरं मातुः पक्षिणीं कुर्य्यादिति तात्पर्य्यम् । ब्रह्मपुराणे ।

आद्यं भागद्वयं यावत्सूतकस्य तु सूतके ।
द्वितीये पतिते चाद्यात्सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्द्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृता ।
एवमेव विचार्य्यं स्यान्मृतके मृतकान्तरे ॥

अस्यार्थः। सूतकसम्बन्धिचरमाहोरात्रस्य यदाद्यं भागद्वयं दिवसस्य चतुर्द्धा विभागो यदह्नोभागात्मकं तत्र द्वितीयसूतके पतित आद्यात् सूतकाच्छुद्धिः। अत ऊर्द्ध्वमस्तमयानन्तरं सूतकान्तरापाते द्वितीयमृतकविशेषमर्थवदिति । अमुमेवाभिप्रायं प्रकटयन्द्वितीयसूतकान्तरमप्याह

---

* शौचं शुद्धिं तथाच मृतकं मरणाशौचमधिकृत्य शुद्धिं कुर्य्यान्नतु सूतकं जननाशौचमधिकृत्य इत्यर्थः। † मातृमरणजन्याशौचमध्ये ।

गौतमः ।

रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिः रात्रिमात्राव-
शेषेण पूर्व्वाशौचेन शुद्धिः ।

अपितु तदनन्तरं द्वाभ्यां प्रभाते रात्रेः पश्चिमयामे जननादि-सन्निपाते तिसृभिः रात्रिभिः शुद्धिर्न पूर्व्वशेषेणैव ।

शातातपः ।

रात्रिशेषे द्व्यहाच्छुद्धिः सूतिकामग्निदञ्च हित्वेतर-
सपिण्डानाम् ।

सूतिकामग्निदं हित्वेत्याद्यसंग्रहे स्मरणात् ।

शातातपः ।

अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि ।
प्रेतमुद्दिश्य कर्त्तव्यं पिण्डदानं स्वबन्धुभिः ॥
प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् ।
तथैवाशौचपिण्डैस्तु शेषं दद्याद्यथाविधि ॥

एवमेवाशौचसन्निपातेऽपि ।

प्रजापतिः ।

अशौचे तु समुत्पन्ने पुत्त्रजन्म यदा भवेत् ।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचेन शुध्यति ॥

जातकर्म्मादिकर्म्मणि तात्कालिकी शुद्धिः ।

## अथ दहनकालेऽग्निनाशे ।

तत्र यमः ।

यजमाने चितारूढे पात्रन्यासे तथा कृते ।

वर्षाद्यभिहते चाग्नौ ततः पृच्छामि याज्ञिकाः ॥
शेषा लब्धावदग्धेन निर्म्मन्थं तत्र कारयेत् ।
शेषं लाभे तथा कुर्य्याद्दग्धशेषस्य वा पुनः ॥
अप्सु प्राश्यन्ततः शेषमाग्नेय्यस्ताः स्मृता बुधैः* ।

शेषं लब्ध्वा अरणिप्रभृतिकाशेषं लब्ध्वा दग्धे वाग्न्युत्पादनसमर्थेन निर्मन्थं वा कृत्वाग्निमुत्पाद्य तेनाग्निना दहेत् । अरण्यादिकाष्ठालाभे दग्धशेषकाष्ठस्य सम्बन्धि योमथिताग्निस्तेन तस्याप्यभावे अप्सु प्रक्षिपेत् इत्यर्थः । एवमनाहिताग्नेरपि न्यायस्य समानत्वात् । अयन्तु विशेषः अरण्यभावान्नमन्थीभाव इति ।

## अथ दशाहमध्ये दर्शपाते ।

तत्र भविष्यपुराणे ।

प्रवृत्ताशौचतन्त्रस्तु यदि दर्शः प्रपद्यते ।
अशौचसमाप्तिपर्य्यन्तमिति शेषः ।

---

* बहुषु पुस्तकेषु दर्शनात् एष पाठो रक्षितः परन्तु अप्सुप्राश्यन्तु तत् शेषं समर्थेन निमथ्य चेति पाठः समीचीनः । निर्णयसिन्धौ तु यज्ञपार्श्व इति कृत्वा क्वचित्क्वचिदन्यथा कृत्वा च वचनं लिखितम् । यथा यजमाने चितारूढे पावन्यासे तथा कृते । वर्षाद्यभिहते वह्नौ कथं कुर्व्वन्ति याज्ञिकाः ॥ तदर्द्धदग्धकाष्ठेन मथनं तत्र कारयेत् । तच्छेषालाभतोऽन्येन दग्धशेषेण वा पुनः । हुत्वाज्यं लौकिके वह्नौ हुतशेषं दहेत्तु वा इति ॥

समाप्य चोदकं पिण्डान् स्नानमात्रं समाचरेत् ॥
आशौचमन्तरा दर्शो यदि स्यादवर्णिनाम्* ।
समाप्तिं प्रेततन्त्रस्य कुर्य्यादित्याह गौतमः ।

पैठीनसिः ।

आद्येन्दावेव कर्त्तव्याः प्रेतपिण्डोदकक्रियाः ।
द्विरैन्दवे तु कुर्व्वाणः पुनः शावं समश्नुते ॥

द्विरैन्दवे चन्द्रद्वये एकः प्राचीनः क्षीणः चन्द्रः अपरो भावी वृद्धिमान् । एवं सामान्येन मातापितृविषयेऽपि दर्श एव पिण्डोदकदानादितन्त्रसमाप्तिप्रसक्तौ श्लोको गौतमेनोक्तः ।

अन्तर्दशाहे दर्शश्चेत्तत्र सर्व्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात्पिण्डं तिलाञ्जलीन् ॥

पित्रोरित्येकशेषः ।

यत्तु ।

पित्रोराशौचमध्ये तु यदि दर्शः समापयेत् ।
तावतैवोत्तरं तन्त्रं पर्य्यवस्य त्र्यहात्परम् ॥

इति गालववचनम् । तस्य त्वयमर्थः पित्राशौचमध्ये दर्शपाते समाप्तिरुत्तरतन्त्रस्योचिता किमुतान्याशौचमध्य इति । पितृव्यतिरिक्तसपिण्डविषये तु उत्तरतन्त्रस्यावश्यकसमाप्तिप्रदर्शनार्थं पुनः पितृविषयेऽपि नियमार्थमिति । भवतु वा पितृविषयेऽपि नियामकम् । तथापि

* ब्राह्मणादीनाम् । सर्व्ववर्णिनामिति निर्णयसिन्धौ पाठः ।

अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु ।

इत्यनेन न्यायेन शिष्टाचारसहकृतेन पित्रोस्तु यावदाशौचमित्यनेन गौतमवचनं गालववचनञ्च बाध्यत इति पित्राशौचमध्ये दर्शपातेऽपि यावदाशौचं पिण्डादिकं दद्यात्। इतरेषान्तु दर्शावधिकमिवोत्तरतन्त्रसमापनमिति विवेकः। अथवा क्षेत्रजस्य वीजिपितृविषयं दत्तकादिपुत्राणां प्रतिग्रहीत्रादिमातापितृविषयञ्च गालववचनं गौतमवचनन्तु औरसपुत्रिकापुत्रमातृविषयम् अथवा औरसादीनां सर्व्वेषामपि स्वमातापितृविषये आपदनापत्कल्पाश्रयणेन व्यवस्था विज्ञेया।

अथ देशान्तरगतस्य जीववार्त्तां नाकर्ण्यते तत्र पितृविषये जातूकर्णः।

पितरि प्रोषिते यस्य न वार्त्ता नैव वा गतिः।
ऊर्द्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम्॥
कुर्य्यात्तस्य च संस्कारं यथोक्तविधिना ततः।

पितृव्यतिरिक्तविषये

वृहस्पतिः।

यस्य न श्रूयते वार्त्ता यावद्द्वादशवत्सरम्।
कुशपुत्तलदाहेन तस्य स्यादवधारणम्॥*

---

* वङ्गदेशीयनिवन्धे तु सन्देहे त्वाह यम इति कृत्वा अन्यथा कृत्वा च पितृविषये तु एतद्वचनं पठितं यथा गतस्य न भवेद्वार्त्ता यावद्द्वादशवार्षिकी। प्रेतावधारणं तस्य कर्त्तव्यं सुतवान्धवैः॥ इति।

अथ च पितृमेधिकारम्भकालनियमस्त्वज्ञातमरणदिनस्य सांवत्सरिकस्य कालनियमवद्विज्ञेयः । स च श्राद्धप्रकरणे वक्ष्यते । एवं पैतृमेधिके कृते यदि जीवन्नागच्छेत्तदा तं घृतकुम्भे स्नापयित्वा शुभलग्ने उत्थाप्य जातकर्मादिभिश्चूडाकरणान्तैः संस्कृत्य उपनयनविधानेनोपनीय वहनपूर्व्वकं द्वादशाहमशक्तौ त्रिरात्रं वा व्रतं कारयित्वा स्नानानन्तरं पूर्व्वस्थितभार्य्यां तदभावे अन्यां वा उद्वाहयेत् । ततश्च अग्नय आयुष्मते पुरोडाशकपालं कुर्य्यादिति विहितामिष्टिमायुष्मतीङ्कृत्वा यद्याधानेच्छुस्तदा व्रात्यस्तोमेनेष्ट्वा तथैन्द्राग्न्येन पशुना चेष्ट्वा अग्नीनादध्यात् ।

यदाह मनुः ।

जीवन्यदि समागच्छेद्घृतकुम्भे नियोज्य तम् ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतं कुर्य्यात्त्रिरात्रमुपवास्य तु ।
स्नात्वोद्वहेत तां भार्य्यां अन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्न्येन पशुना गिरिङ्कृत्वा च तत्र तु ॥
इष्टिमायुष्मतीं कुर्य्यादीप्सितांश्च क्रतूंस्ततः । इति ।

आहिताग्नेर्यत्र पुरोडाशस्तत्र नाहिताग्नेश्चरुः ।

तथाच गृह्यप्रायश्चित्ते ।

यत्र वाहिताग्नेः पुरोडाशास्तत्र वा नाहिताग्नेश्चरवः ।

इति मदनपारिजाते मदनक्षितिपालदानजलरूढ़े ।
स्तवकः पञ्चम आसीदामोदाकृष्टपण्डितभ्रमरः ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमियात्
इयं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति पण्डितपारिजातकभट्टारमल्लेत्यादि विरुदराजी-
विराजमानस्य श्रीमदनपालस्य निबन्धे मदन-
पारिजाताभिधेये पञ्चमः स्तवकः ।

---

## षष्ठः स्तवकः ।

दाहादिकरूपकालापगमे चाशौचस्तवके कुलव्यापिनी शुद्धिरभिहिता । तदनन्तरमिह स्तवके द्रव्यशुद्धिरभिधीयते ॥

तत्र याज्ञवल्क्यः ।

सौवर्णराजताब्जानामूर्द्ध्वपात्रग्रहाश्मनाम् ।
शाकरज्जुमूलफलवासो विदलचर्म्मणाम् ॥
पात्राणां चमसानाञ्च वारिणा शुद्धिरिष्यते ।

सौवर्णं सुवर्णविकारः । राजतं रजतविकारः । अब्जं शङ्खशुक्तिमुक्ताफलादि । ऊर्द्ध्वपात्रं यज्ञियोलूखलादि । ग्रहा ऐन्द्रवा यवादयः । अश्मा दृषदादि । मूलमार्द्रकादि । विदलं वेणुदलादि । विदलग्रहणं तद्विकाराणां छत्रादीनामुपलक्षणार्थम् । चर्म्म अजादीनां तच्च तद्विकाराणां वरत्रादीनामुपलक्षणार्थम् । पात्राणि प्रोक्षणपात्रादीनि स्नेहरहितानि । चमसा होतृचमसादयः । एतेषां लेपरहितानां मूत्राद्युच्छिष्टस्पर्शमात्रे वारिणा शुद्धिः प्रक्षालनात् शुद्धिः ।

तथा ।

चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ।

चरुर्मृण्मयी चरुस्थाली । स्रुक् जुह्वादि । स्रुवः प्रसिद्धः । सस्नेहपात्राणि प्राशित्रहरणादीनि* लेपरहितानि चर्व्वादीनि

---

* प्राशितहरणादीनीति पाठान्तरम् । प्राशिविहरणादीनीति पाठान्तरम् ।

उष्णेन वारिणा शुध्यन्ति। सौवर्णादीनां लेपरहितानामेव पूर्व्वोक्तशुद्धिः।

तथाच मनुः।

> निर्लेपङ्काञ्चनं भाण्डमद्भिरेव विशुध्यति।
> अञ्जमश्ममयञ्चैव राजतञ्चानुपस्कृतम्॥

अनुपस्कृतम् उपस्कृतं उत्कीर्णं रेखाद्युपेतं न उपस्कृतमनुपस्कृतम्। रेखादिखातेषु मूत्राद्युच्छिष्टावस्थानरहितमित्यर्थः।

काकमुखदूषितपात्रस्य शुध्यन्तरमाह

शङ्खः।

> कृष्णशकुनिमुखावसृष्टं निर्लिखेच्छ्वापदमुखावसृष्टं* पात्रं न प्रयुञ्जीतेति।

निर्लेखनं शस्त्रैरुपरितनावयवापकर्षणं त्वचणमिति† यावत्। यच्चापस्तम्बेनोक्तम्।

> गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च।
> शुध्यन्ति दशभिः‡ क्षारैः श्वकाकोपहतानि च॥ इति।

एतच्च स्वल्पोपहतविषयम्। अत्र च क्षारो भस्म। एवं सर्व्वत्र न्यूनाधिकशौचकल्पाः। स्वल्पाधिकाधिकारविषयत्वेन व्यवस्थापनीयाः। उष्णेन वारिणा शुध्यन्तीत्यनुवृत्तौ

याज्ञवल्क्यः।

> स्फ्यशूर्पाजिनधान्यानां मूषलोलूखलानसाम्।

---

* पशुमुखावशिष्टम्। † त्वचां मोचनम्। ‡ दशभिर्दिनैः।

स्फ्रः काष्ठकुरिका यज्ञाङ्गम् । अनः शकटम् । अत्र पुनरजिनग्रहणं यज्ञाङ्गाजिनप्राप्त्यर्थम् । एतेषामुष्णेन वारिणा वक्ष्यमाणमृदाद्यन्यतमेन सहितेन शुद्धिरित्यर्थः ।

बौधायनः ।

तैजसानां मूत्रपुरीषशुक्रास्रक्कुणपमद्यैरत्यन्तवासितानामावर्त्तनम् । अल्पसंसर्गे तु परिलेखनम् । स्पर्शमात्रोपघाते तु त्रिःसप्तकृत्वो भस्मना परिमार्ज्जनमतैजसानामेवंभूतानामुत्सर्ग इति ।

अग्निसंयोगेन द्रवीकरणमावर्त्तनम् । भस्मना परिमार्ज्जनं कांस्यस्य नियतम् । यत्तु याज्ञवल्क्येन सौवर्णराजताब्जाना-मित्युपक्रम्य वारिणा शुद्धिरिष्यते इति केवलोदकमेवोपात्तम् । तदपि मृदादिसहितमेव वारिणा शुद्धिहेतुरिति विज्ञेयम् ।

तत्र विशेषमाह हारीतः ।

अद्भिः काञ्चनरजतशङ्खशुक्तीनां तद्गुणवर्ज्जनम् । स्नेहवैवर्ण्योपहतानां यवगोधूमकलायमाषमसूरमुद्गमयचूर्णैर्धावनम् । अम्ललवणाभ्यां ताम्राणां भस्मना कांस्यानां शाणतैलसिकता*वघर्षणैः कार्ष्णायसानां† शिलावघर्षणैर्मार्जनैर्मणिमयानामिति ।

शाणं‡ लौहभेदाय साधनम् । तद्गुणवर्ज्जनं तद्गन्धापकर्षणम् ।

---

* वालुका ।   † लौहाकर्षणकारिलौहविशेषाणाम्, चुम्बकः यस्य प्रसिद्धिः ।

‡ घर्षणयन्त्रविशेषः ।

स्नेहवैवर्णोपहताः उच्छिष्टादिस्नेहेन विवर्णं यथा भवति तथोपहता इत्यर्थः। यवादिचूर्णानामेकार्थत्वात्* विकल्पः। उदकस्य तु पूर्व्वशोधनद्रव्यैः सह समुच्चयः।

शङ्खः।

सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च।
त्रिःसप्तमार्ज्जनाच्छुद्धिर्न तु कांस्यस्य तापनम्॥

सूतिकोच्छिष्टादिभिः कांस्यव्यतिरिक्ततैजसानामल्पकालोपघाते यवचूर्णादिभिर्मार्ज्जनं शुद्धिहेतुः कांसस्य तथा न। अपि तु तापनं मार्ज्जनञ्च शुद्ध्यापादकमित्यर्थः। प्रतिमार्ज्जनमुदकप्रक्षालनमावर्त्तते।

द्विजातिभुक्तोच्छिष्टसंसर्गे तु स एवाह शङ्खः।

ब्रह्मक्षत्त्रविशाञ्चैव सकृत्सम्मार्ज्जनाच्छुचिः।
चतुर्थेन† तु यद्भुक्तं चतुर्भिर्यन्त्र मार्ज्जनम्॥
अग्नौ प्रक्षिप्य गृह्णीयाद्धस्तौ प्रक्षाल्य यत्नतः।
गोशृङ्गेण तु संस्पृष्टं‡न्तत्पात्रं शुचितामियात्॥

आहापस्तम्बः।

गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च।
मणिमुक्ताप्रबालानां शुद्धिः प्रक्षालनेन तु॥

इदल्पोपहतविषयम्।

---

* एकरूपेण कार्य्यनिर्व्वाहकत्वात्। † शूद्रेण। ‡ संस्पृष्टमिति पाठान्तरम्।

मृद्भाण्डानामल्पोपहतौ

याज्ञवल्क्यः।

पुनःपाकान्महीमयमिति।

मद्याद्युपहतौ तु परित्याग एव।

तथाच मनुः।

मद्यैर्मूत्रपुरीषैर्वा ष्ठीवनैः* पूयशोणितैः।

संस्पृष्टं नैव शुध्येत पुनःपाकेन मृण्मयम्॥ इति।

स्मृत्यन्तरे।

भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते।

सुरामूत्रपुरीषैस्तु शुध्यते तापलेखनैः† ॥

सुरादिग्रहणं शुक्रशोणितादीनामुपलक्षणार्थम्।

तथा।

ताम्रमम्लेन शुध्येत न चेदामिषलेपनम्।

आमिषेण तु यल्लिप्तं पुनर्दाहेन शुध्यति॥

आदिपुराणे।

सुवर्णरौप्यशङ्खाश्मशुक्तिरत्नमयानि च।

कांस्यायस्ताम्ररैत्यानि‡ त्रपु§सीसमयानि च॥

निर्लेपानि च शुध्यन्ति केवलेन जलेन च।

शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिः॥

---

* मुखाम्बुभिः। † बहुषु पुस्तकेषु दर्शनादेष रक्षितः परन्तु तापनैः खनैरिति पाठः साधुः खनैः मृत्तिकाभ्यन्तररक्षणैः अथवा लेखनं शाणम्। ‡ पित्तलम्। § रङ्गम्।

अत्र द्रव्याणां त्रिधा त्रिप्रकारं मार्ज्जनम्। न तु त्रिमार्ज्जनम्। शातातपेन दशकृत्वो मार्ज्जनविधानात्।

गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टे तु वा पुनः।
दशभिर्भस्मभिः शुद्धिः श्वकाकोपहतेषु च॥

एतच्च भस्मभिः शोधनं श्वकाकाद्युपहतौ भूमौ सप्तरात्रखननानन्तरम्।

यथा।

सूतिकाशवविण्मूत्ररजस्वलाहतानि च।
प्रक्षेप्तव्यानि तान्यग्नौ यद्यद्यावत्सहेदपि॥

यद्द्रव्यं यावदग्निप्रक्षेपं सहते यावता अग्निप्रक्षेपेण न नश्यति तावत्कुर्य्यादित्यर्थः।

बौधायनः।

तैजसानां मूत्राद्युपघाते पुनःकरणम्। गोमूत्रे वा सप्तरात्रं परिवासनम्*। लेपनिर्हरणा†शक्तौ पुनःकरणम्। अन्यथा गोमूत्रे वा वासनमिति व्यवस्था।

अङ्गिराः।

गण्डूषं पादशौचञ्च यः कुर्य्यात्कांस्यभाजने।
षण्मासं भुवि निक्षिप्य पुनराकारमादिशेत्॥

पुनराकारमादिशेत् पुनराकारः पुनःकरणम्।

तथा।

---

* रक्षणम्। † निर्हरणं दहनम्।

लौहानां दहनाच्छुद्धिर्भस्मना गोमयेन वा ।
दहनात्खननाद्वापि शैलाना*मम्भसापि वा ।
काष्ठानां तक्षणा†च्छुद्धिर्मृद्गोमयजलैरपि ॥

याज्ञवल्क्यः ।

तक्षणं दारुशृङ्गास्थ्नां गोबालैः फलसम्भुवाम् ।
मार्ज्जनं यज्ञपात्राणां पाणिना यज्ञकर्म्मणि ॥

उच्छिष्टस्नेहादिलिप्तानामेतेषां मृदुदकादिभिर्लेपानपाये तक्षणं लेपयुक्तावयवापनयनं शुद्धिः । फलसम्भुवां नारिकेलादिफलसम्भूतानां प्रक्षालनेनानपगतलेपानां गोबालैरवघर्षणं शुद्धिः । यज्ञपात्राणां स्रुवादीनां प्रक्षालनादिभिः कृतशौचानां दर्भैर्दर्शपवित्रेण वा कर्म्माङ्गत्वसिद्ध्यर्थं हस्तेन मार्ज्जनं कर्त्तव्यम् । ततो यज्ञकर्म्मणि विनियोजनीयानीत्यर्थः ।

हारीतशातातपौ ।

संहतानान्तु पात्राणां यद्येकमुपहन्यते ।
तस्यैव शोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि‡ ॥

शङ्खः ।

मलसंयोगजं तज्जं यस्य येनोपहन्यते ।
तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥

यस्य शोध्यद्रव्यस्योच्छिष्टादिसंयोगजं तज्जं स्वभावजं च मलं

---

* प्रस्तराणाम् । † त्वचां मोचनात् । ‡ संसर्गिणाम् ।

येन भस्मादिनोदकसहितेनोपहन्यते तस्य तच्छोधकं भवतीत्यर्थः।

इति तैजसादिपात्रशौचम्।

## अथ वस्त्रादेः।

तत्र यमः।

यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण वा।
चैलं समुपहन्येत अद्भिः प्रक्षालयेत्तु तत्॥
यदम्भसा न शुध्येत्तु वस्त्रं चोपहतं दृढम्।
छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते॥

एतच्च छेदनादिना शुद्ध्यापादनमत्यन्तामेध्योत्तमवस्तुविषयम्। छिन्नदग्धयोरपि परित्यागविधानाद्दरिद्रस्य च उत्तमेष्वपि छेदनादिना शुद्धिः।

व्यासः।

वस्त्रं मृदम्भसा शुध्येद्रज्जुर्वैदलमेव च।
रज्ज्वादिकञ्चातिदुष्टं त्याज्यं तन्मात्रमेव च॥

वेणुवेत्रनडादिविकारो वैदलं सूर्पादि, यदा तु बहुविधान्यपि वासःप्रभृतीनि राशीकृतानि चाण्डालादिभिः स्पृष्टानि तत्रापि स्पृष्टान्यल्पानि अस्पृष्टानि च स्पृष्टापेक्षयाधिकानि वा तदा स्पृष्टमात्रमुद्धृत्य तस्योक्तप्रक्षालनादिभिः शुद्धिः कार्या। अवशिष्टस्य प्रोक्षणाच्छुद्धिः।

अनेनैवाभिप्रायेण याज्ञवल्क्यः।

प्रोक्षणं संहतानाञ्च बहूनां धान्यवाससाम् ।

तथा स्मृत्यन्तरमपि ।

वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे ।

तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥

शेषस्य प्रोक्षणविधानात् उद्धृतस्य प्रक्षालनादिभिः शुद्धिरिति गम्यते। यदा तूक्तबहूनि राशीकृतानि सर्व्वाण्यपि स्पृष्टानि तदा प्रोक्षणादेव शुद्धिः यदा तु पुनः स्पृष्टानि बहूनि अस्पृष्टानि चाल्पानि तदा सर्व्वेषामपि प्रक्षालनमेव ।

यदाह मनुः ।

अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।

प्रक्षालनेन त्वल्पानां अद्भिः शौचं विधीयते ॥

राशिगतबहुत्वञ्च पुरुषग्राह्यभारादूर्द्ध्वं वेदितव्यम्। अनेकोद्वाह्ये दारुशिले भूमिसमे इति बौधायनेनानेकोद्वाह्यस्यैव द्रव्यान्तरस्य स्वल्पशौचत्वदर्शनात् ।

याज्ञवल्क्यः ।

सोषरोदकगोमूत्रैः शुध्यत्याविककौशिकम् ।

सश्रीफलैरंशुपट्टं वारिष्टैः कुतपं तथा ।

सगौरसर्षपैः क्षौममिति ।

ऊषरं मृत्तिकाविशेषः। तत्सहितेनोदकेन गोमूत्रेण वाविककौशिकं शुध्यति। ऊर्णामयमाविकं कोशप्रभवं तसरीपट्टादि कौशिकम्। वल्कलं तन्तुकृतमंशुपट्टम्। श्रीफलं विल्वफलम्। पर्व्वतच्छागलोमकृतः कुतपः। अरिष्टफलं फेनकम्। अतसी-

सूत्रनिर्म्मितं क्षौमम्। एतच्चातिघाते अल्पोऽल्पघाते तु प्रोक्षणमेव द्रव्याविनाशेनैव शुद्धेरिष्टत्वादेतेषां क्षालनासहत्वाच्च।
अतएव देवलः।

> ऊर्णाकौशेयकुतपपट्टक्षौमदुकूलजाः।
> अल्पशौचा भवन्त्येते शोषेण प्रोक्षणादिभिः।
> तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः॥
> तूलिकामुपधानञ्च पुष्परक्ताम्बरं तथा।
> शोधयित्वातपैः किञ्चित्करैः सम्मार्ज्जयेन्मुहुः॥
> पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्म्मणि।
> तान्यप्यतिमलिष्ठानि यथावच्छोधयेदिति॥

तूलिकोपधाने चोर्णादिमये ऊर्णादिनिर्म्मितानामिव प्रक्षालनेन पूर्व्वरूपनाशात्। पुष्परक्तग्रहणम् प्रक्षालनासहहरिद्रादिरक्तस्यापि प्रदर्शनार्थम्। एतदुक्तं भवति यत्कुसुम्भादिरागरक्तं क्षालनासहं तदातपशोषणादिना शुध्येत। यच्च मञ्जिष्ठादिकं क्षालनेन न विनश्यति तत्क्षालनेनैव नातपशोषणमात्रेण।
आपस्तम्बः।

> शुनोपहतश्चैलमवगाहेत प्रक्षाल्यं वा। तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ वाचम्य प्रयतो भवति।

वस्त्रसहितस्यैव नाभेरूर्द्ध्वस्पर्शे अवगाहः अधस्ताच्चेत्प्रक्षालनमिति विवेकः।
प्रचेताः।

चेलानामुपहतानामुत्स्वेदनं गन्धलेपापनयनं तन्मात्र-
च्छेदनं वा नवानां वाससामभ्युक्षणादिति ।

उत्स्वेदनं क्वाथनम् । नवानां वाससां यन्त्रादुत्तीर्णानाम् ।

शङ्खलिखितौ ।

अहतानां प्रोक्षणमिति ।

अहतं यन्त्रनिर्मुक्तम् ।

शङ्खः ।

शयनासनयानानां संहतवच्छौचम् ।

संहतवद्राशीभूतद्रव्यवत् । अनेन प्रोक्षणाच्छुद्धिरित्युक्तं भवति ।

अङ्गिरास्तु शयनादीनामपि संहतशब्दवाच्यत्वमाह ।

शयनासनयानानि रोमबन्धानि यानि च ।
वस्त्राणि तानि सर्व्वाणि संहतानि प्रचक्षते ॥

इति चेलादिशुद्धिः ।

## अथ धान्यादेः ।

तत्र बौधायनः ।

व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ।
तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा ॥

विष्णुः ।

असिद्धस्यान्नस्योपहतमुत्सृज्य शेषे कण्डनप्रक्षालने
कुर्य्यात् । बहूनान्तु कश्यपोक्तं द्रष्टव्यम् । प्रोक्षण-

पर्य्यग्निकरणावगाहनैर्व्रीहियवगोधूमानां विमर्शन-प्रोक्षणैः फलीकृतानां निष्पेषणदलनप्रोक्षणैः शमी-धान्यानामिति ।

अस्यार्थः । अनेकपुरुषोद्वार्य्याणां व्रीहियवगोधूमानां प्रोक्षण-पर्य्यग्निकरणावगाहनैः शुद्धिः । पर्य्यग्निकरणमग्न्यभिमर्शनम् । अवगाहनं प्रक्षालनम् । अत्र प्रोक्षणादीनि सर्व्वाणि सर्व्वत्र दोषाल्पत्वमहत्त्वापेक्षया योज्यानि । व्रीह्यादितण्डुलानां फलीकृतानां विमर्शनप्रोक्षणेन च शुद्धिः । विमर्शनमल्पानां बहूनां प्रोक्षणं कण्डनशुक्लीकृता निरस्तक्षुद्रकणास्तण्डुलाः फलीकृता इत्युच्यन्ते । विमर्शनं पाणिभ्यां निर्म्मलीकरणम् । शमीधान्यानां कोशीधान्यानां मुद्गादीनामेकपुरुषोद्वार्य्याणां विघर्षणविमर्शनं ततोऽल्पानां दलनेन अनेकपुरुषोद्वार्य्याणां प्रोक्षणेन च । यच्च तण्डुलांस्तु परित्यजेदिति तदत्यन्ताल्पपरिमाणविषयम् ।

आदिपुराणे ।

गृहदाहे समुत्पन्ने दग्धे च पशुमानुषे ।
अभोज्यस्तद्गतो व्रीहिर्धातुर्द्रव्यस्य सङ्ग्रहः ॥
मृण्मयेनावबद्धानामधोभुवि च तिष्ठताम् ।
यवमाषतिलादीनां न दोषं मनुरब्रवीत् ॥
ततः संक्रममाणेऽग्नौ स्थाने स्थाने च दह्यति ।
न च प्राणिविधौ यत्र केवलं गृहदीपनम् ।
तत्र द्रव्याणि सर्व्वाणि गृह्णीयादविचारयेत् ॥

शङ्खः ।

पुष्पफलानां विष्किरावधूतानां प्रक्षालनमभ्युक्षण*मित्येके । पर्णानामद्भिः प्रक्षालनं शकृदुपयुक्तानां†मुत्सर्गः । विष्किरा ग्राम्यकुक्कुटादयः । अवधूतं पादावकीर्णम्‡ । विष्किरावधूतानामिति सर्व्वत्रान्वेति ।

बौधायनः ।

> असंस्कृतायां भूमौ न्यस्तानां प्रक्षालनं परोक्षाहृताना§-मभ्युक्षणमेवं क्षुद्रसमिधामसंस्कृतानाममेध्याद्युपहृतानामेकपुरुषोद्धार्य्याणाम् ।

क्षुद्रसमिधां यज्ञियत्वेन प्रसिद्धपलाशादिव्यतिरिक्तापामार्गादिसमिधाम् ।

विष्णुः ।

> मृत्पर्णतृणकाष्ठानां श्वभिश्चण्डालवायसैः ।
> स्पर्शने विहितं शौचं सोमसूर्य्याग्निमारुतैः ॥

तथा प्रोक्षणेन तु पुस्तकमिति ।

व्यासः ।

> रथ्याकर्द्दमतोयानि नावः पथि तृणानि च ।
> मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च¶ ॥

इति धान्यादिशौचम् ।

---

* इह अभ्युक्षणमेव प्रक्षालनशब्दलक्ष्यमिति केषाञ्चिद्वादिनां मतम् । † कुक्कुटविष्ठोपयुक्तानाम् । ‡ स्पृष्टम् । § अप्रत्यक्षाहृतानाम् । ¶ पंक्तिक्रमेण इष्टकेन रचितानि ।

## अथ सिद्धान्नादेः।

तत्र मनुः।

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण विशुध्यति॥

भक्ष्यपक्षिजग्धविषयमेतत्*। अवधूतं यस्योपरि वासोऽवधूतं† पक्षिभिरुत्क्षिप्योत्क्षिप्य त्यक्तं वा। अवक्षुतं यस्योपरि क्षुतं क्षतम्। मृद्ग्रहणमुदकभस्मनोरपि प्रदर्शनार्थम्।

तथाच याज्ञवल्क्यः।

सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये। इति।

यच्च पाकानन्तरं केशकीटैर्दूषितं तस्य मृदादिप्रक्षेपेण शुद्धिः। यच्च केशकीटावलीभिः सह पक्वं तत्परित्याज्यमेव।

अनेनैवाभिप्रायेण गौतमः।

नित्यमभोज्यं केशकीटावपन्नम्। इति।

पराशरः।

पक्वं द्रोणाधिकं त्वन्नं काकश्वाद्युपघातितम्।
ग्रासमुद्धृत्य तन्मात्रं यत्तु लालाक्षतं‡ भवेत्।
हैमोदकेन वाभ्युक्षेद्राजतेनाम्बुनाथ वा॥
अग्निज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषाम्§।
विप्राणां ब्रह्मघोषेण¶ पूतं भोज्यञ्च तद्भवेत्॥

---

* येषां पक्षिणां मांसभक्षणं शास्त्रविहितं तद्विषयम्। † वस्त्रं कम्पायितम्।
‡ लालायुक्तम्। § संस्पर्शादिति शेषः। ¶ वेदध्वनिना।

द्रोणः षट्पञ्चाशदधिकं पलशतद्वयम् ।

यच्च यमदग्निनाभिहितम् ।

अन्नमैकाहिकं पक्वं श्वकाकाद्युपघातितम् ।
केशकीटावपन्नञ्च तदप्येवं विशुध्यति ।
क्रीतस्यापि विधिर्द्दिष्टः एष एव मनीषिभिः ॥

तदल्पधनविषयम् ।

वशिष्ठः ।

देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्ज्जयेत् ।
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ॥

देवद्रोणी देवयात्रा । एतद्ग्रहणं बह्वन्नकार्य्यप्रदर्शनार्थम् । प्रकृतेषु प्रस्तुतेष्ववश्यम्भाविसर्व्वोत्सवेषु च ।

संस्कारमपि स एवाह ।

द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन च ।
छागेन मुखसंस्पृष्टमन्नन्तु शुचितामियात् ॥

घनाः पर्पटवटकादयः*। द्रवाणां प्लावनेनैव तेषां शुद्धिर्गो-रसस्य ।

यदाह शङ्खः ।

अपणं† घृततैलानां प्लावनङ्गोरसस्य च ।
भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च ॥

---

* अटवटुकचय इति पाठान्तरम् । † अग्निना प्रतापनम् ।

अर्पणासम्भवे सजातीयद्रव्यप्लावनेनैव शुद्धिः*। तथा घृतदधिपयस्तक्राणामाकरभाण्डस्थितानामदोषः।

तथा।

आधारदोषे तु नयेत्पात्रात्पात्रान्तरं द्रवम्।
घृतञ्च पायसं क्षीरं तथैवेक्षुरसो गुड़ः।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति॥

यमः।

आममांसं घृतक्षौद्रं स्नेहाश्च फलसम्भवाः।
म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः॥

एतच्चाकरभाण्डविषयम्। अनाकरेऽपि द्रोणाधिकान्नोपसेचनसमर्थघृतादिविषयमपि। ततो न्यूनस्य देशकालाद्यपेक्षया अर्पणादिभिः शुद्धिर्भवति।

यदाह बौधायनः।

देशङ्कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचम्प्रकल्पयेत्॥ इति।

शातातपः।

गोकुले कुण्डशालायां तिलचक्रेक्षुयन्त्रयोः†।
अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च॥

कुण्डशाला यज्ञशाला।

---

* सजातीयेन पात्रान्तरस्थिततज्जातीयेन सह प्लावनेन वस्त्रान्तरितकरणेन इत्यर्थः।

† गोकुले कुन्दशालायां तलयन्त्रेक्षुयन्त्रयोः इति ग्रन्थान्तरीयपाठः।

शङ्खः ।

निर्यासानां गुड़ानाञ्च लवणानान्तथैव च ।
कुसुम्भकुङ्कुमानाञ्च ऊर्णाकार्पासयोस्तथा ।
शेषेषु* कथिता शुद्धिरित्याह भगवान्यमः ॥

निर्यासा हिङ्गुप्रभृतयः । इदं स्वल्पपरिमाणविषयम् । बहूनान्तु बौधायनेनोक्तम् ।

बहूनां कुसुम्भकार्पासगुड़लवणानां सर्पिषां कठिनीभूतानां चाण्डालादिस्पर्शे प्रोक्षणेनैव शुद्धिः ।

अत्यल्पे तु परित्यागः । तत्रापि देशकालाद्यपेक्षया परित्यागः ।
मनुः ।

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥

इति सिद्धान्नादिशुद्धिः ।

## अथ भूम्यादेः ।

त्रिविधाशौचशोध्या भूमिः ।
तथाच देवलः ।

यत्र प्रसूयते जन्तुर्म्रियते दह्यतेऽथवा ।
चाण्डालेनोषितं† यत्र यत्र मूत्रादिसङ्गतिः ।

---

* शेषेषु निःशेषेषु परित्यागेषु इति यावत् । † वासः कृतः ।

एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्त्तिता ॥
श्वशूकरखरोष्ट्राद्यैः संस्पृष्टा दुष्टतां व्रजेत् ।
अङ्गारतुषकेशास्थिभस्माद्यैर्मलिना भवेत् ॥

एवं त्रिविधाया* अपि शुद्धिप्रकरणमाह

स एव ।

पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।

यत्र मनुष्या जायन्ते म्रियन्ते दह्यन्ते वा यत्र चाण्डालेनैवाध्युषितमेवंविधा अमेध्या भूः पञ्चधा पञ्चभिर्दहनगन्धार्द्रताद्यपनयनकिञ्चित्कालगोक्रमणसेकोल्लेखनैः शुध्यति । यत्र च मनुष्या जायन्ते म्रियन्ते वा अत्यन्तविष्ठादिसंसर्गवती वा स्यात्सा दहनवर्ज्जितैः पूर्व्वोक्तैश्चतुर्भिरेव शुध्यति ।

दुष्टान्विता द्विधा त्रिधा शुध्यते मलिनैकधा ॥

श्वशूकरखरादिभिः प्रत्येकं मिलित्वा वा चिरकालमधिवासिताया दुष्टायास्तु त्रिभिः गोक्रमणसेकोल्लेखनैः । उष्ट्रग्रामकुक्कुटादिभिश्चिरकालमधिवासिताया भुव उल्लेखनैकेन शुद्धिः ।

अतएव याज्ञवल्क्यः ।

भूशुद्धिर्मार्ज्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपाद्गृहमार्ज्जनलेपनात् ॥

मार्ज्जनं सम्मार्ज्जन्या तृणादीनामपसारणम् । दाहस्तृणकाष्ठादौ । कालः गन्धलेपादिक्षयो यावता भवति सः । सेकः

* अमेध्यायाः दुष्टायाः मलिनायाश्च ।

प्रवर्षणेन क्षीरगोमूत्रयोरुदकैर्व्वा । उल्लेखनं खननं त्वचणं* वा । लेपनं गोमयादिभिः । अत्र भूग्रहणेनैव सिद्धे पुनर्गृह-ग्रहणं प्रतिदिनं मार्ज्जनलेपनप्राप्त्यर्थं मार्ज्जनमुपलेपनञ्च सर्व्वत्र समुच्चीयते ।

यमः।

खननात्पूरणाद्दाहादद्भिर्घर्षण† लेपनात् ।
गोभिराक्रमणात्कालाद्भूमिः शुध्यति सप्तधा ॥

एतच्च पूर्व्वोक्तहेतुभिः पुनःपुनर्दुष्टभूविषये समस्तं शुद्धिहेतुः अन्यत्र व्यस्तं‡ यथायोग्यम् ।

तथा ।

गोचर्म्ममात्रमुद्बिन्दुः गोः शोधयति पातितः ।
समूढ़मसमूढ़ं वा यत्र लेपो न दृश्यते ॥

यत्रैकादशगावः§ उपविशन्ति तावान् भूभागो गोचर्म्म गोः पृथिव्याः समूढ़ं कृतसम्मार्ज्जनमथवा गोः पुच्छसम्बन्धाद्भुवि पातित उदकविन्दुः गोचर्म्ममात्रं शोधयति । गोपुच्छं स्पर्श-यित्वा तेनोदकेन सेके कृते एकेन विन्दुनेयती भूः शुद्धा भव-तीत्यर्थः¶ ।

संवर्त्तः ।

---

* उपरितनानां किञ्चित् कृत्वा मृत्तिकोन्मोचनम् । † वर्षण इति पाठान्तरम् ।
‡ व्यस्तं असमस्तं अनेकश इति यावत् । § यत्रैव ता दशगाव इति पाठान्तरम् ।
¶ एकेन विन्दुनैव तावत्तीर्थमुद्भावयतीत्यर्थ इति पाठान्तरम् ।

गृहशुद्धिं प्रवक्ष्यामि अन्तस्थशवदूषणे ।
प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नं तथैव च ॥
गृहादपास्य तत्सर्व्वं लेपनेनोपलेपयेत् ।
गोमयेनोपलिप्याथ छागेन घ्रापयेद्बुधः ॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिणा ।
सर्व्वमभ्युक्षयेद्वेश्म ततः शुध्येदसंशयः ॥

बौधायनः ।

घनाया भूमेरुपघात उपलेपनमुषरायाः* कर्षणं क्लिन्नाया मेध्यमाहृत्य छादनमूर्द्धन्तु शवोपघाते भित्तिलक्षणं सूर्य्यरश्मिप्रवेशोऽग्निज्वालाभिमर्षणम् ।

क्लिन्ना कृमिकीटाद्याक्रान्ता तामाच्छादयेन्मेध्यां मृदमाहृत्य इत्यर्थः ।

व्यासबृहस्पती ।

भूमिष्ठमुदकं मेध्यं वैतृष्ण्यं यत्र गोर्भवेत् ।
अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम् ॥

देवलः ।

अविगन्धा रसोपेता निर्म्मलाः पृथिवीगताः ।
अक्षीणाश्चैव गोपाना दापः शुद्धिकराः स्मृताः ॥
उद्धृत्य ताः प्रशस्ताः स्युः शुद्धे पात्रे यथाविधि ।
एकरात्रोषितास्तास्तु त्यजेदपः समुद्धृताः ॥

---

* ऊषरायाः क्षारमृत्तिकाया भूमेरित्यर्थः ।

ता इति सर्व्वनाम्नो गोतृप्तिमात्रपर्य्याप्ताः अल्पा एव ताः परामृश्यन्ते । अतो बहूदकादेरुद्धृतानां रात्रुपषितानां न दोषः । तड़ागादेरुद्धृता अथापो रात्रावनुषितोदकान्तरसम्भवे अशुद्धा एव ।

तथा ।

अक्षोभ्याणि* तड़ागानि नदीवापीसरांसि च ।
चण्डालाद्यशुचिस्पर्शात्तीर्थतः परिवर्ज्जयेत्† ॥

तीर्थमुदकावतरणमार्गः ।

बृहस्पतिः ।

मृतपञ्चनखाः कुप्या दम्पत्योपहता‡स्तथा ।
अपः समुद्धरेत्सर्व्वाः§ शेषा वस्त्रेण शोधयेत् ॥
वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्पश्चान्नवे तोयसमुद्भवे ॥

हारीतः ।

वापीकूपतड़ागे तु मानुषं शीर्य्यते यदि ।
अस्थिचर्म्मविनिर्मुक्तैर्दूषितञ्च खरादिभिः ।
उद्धृत्य तज्जलं सर्व्वं शोधनं परिमार्ज्जनम् ॥

अस्थिचर्म्मविनिर्मुक्तैः चिरकालवासेन विशीर्णैरित्यर्थः ।

---

* अत्र अक्षोभ्याणि इत्येव साधु परन्तु आदर्शपुस्तके अदर्शनान्न लिखितम् । † तीर्थतः परिवर्ज्जयेदित्यनेन तीर्थातिरिक्ते दोषो नास्तीति प्रतीयते । ‡ स्त्रीपुरुषसम्बन्धिरजोरेतसा उपहताः । § शेषं शस्त्रेण शोधयेदिति पाठान्तरम् ।

देवलः ।

उद्धरेदुदकं सर्वं पञ्चपिण्डान्मृदस्तथा ।

अचिरकालोपघाते स्वल्पे तु

हारीतः ।

घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः ।
श्वभिः श्वपाकचण्डालैर्दूषितेषु विशेषतः ॥

आपस्तम्बः ।

उपानच्छ्लेष्मविण्मूत्रस्त्रीरजोमद्यमेव वा ।
एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत् ॥

विष्णुः ।

जलाशयेष्वप्यल्पेषु स्थावरेषु महीतले ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥

स्थावरेषु प्रवाहरहितेषु ।

शातातपः ।

अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥

यमः ।

चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रेणैव शुध्यति ॥

कश्यपः ।

दृतीनां व्यञ्जनं शुद्धिः ।

दृतिश्चर्मकोशः । व्यञ्जनङ्कषायद्रव्येण शोधनम् ।

यमः ।

प्रपास्वरण्येऽवटके च कूपे
द्रोण्या जलं कोषगतास्तथापः ।
ऋतेऽपि शूद्रात्तदपेयमाहु-
रापद्गतश्च क्षितिजम्पिबेत्तत् ॥

अयमर्थः । यद्यपि शूद्रव्यतिरिक्तब्राह्मणादिवर्णसम्बन्धि प्रपादि तथापि तद्गतं जलं धर्म्मार्थं दीयमानमनापदि न पेयम् । आपदि तु पेयं यदि चेदरण्यगतं प्रपादि । द्रोणी अश्मादिमयी जलपात्री सर्व्वसाधारणी । कोशोद्धृतिः ।

अजा गावो महिष्यश्च ब्राह्मणस्य* प्रसूतिकाः ।
दशरात्रेण शुध्यन्ति भूमिष्ठञ्च नवोदकम् ॥

बौधायनः ।

आत्मशय्यासनं वस्त्रं जायापत्यं कमण्डलुः ।
आत्मनः शुचिरेतानि परेषामशुचीनि च† ॥

हारीतः ।

स्नानुपपत्तौ शुद्धेन तदन्तर्द्धाय समामनन्ति संस्पर्शे सचेलं स्नानमेवं ग्राह्यमिति ।

अयमर्थः । स्वीयशय्याद्यलाभे शुद्धेन कम्बलादिना तत्परकीयं शय्यादिकमन्तर्द्धायोपयोक्तव्यम् । यतः पतितादेः शय्यादिस्पर्शे

---

* ब्राह्मण्यश्चेति पाठान्तरम् । † आसनं शयनं वस्त्रं जायापत्यं कमण्डलुः । शुचीन्यात्मन एतानि परेषामशुचीनि च इति पाठान्तरम् ।

सचेलं स्नानं विधीयत इति। एतच्च बलात्पतितादिशय्यादि-स्वीकारे प्राप्तौ वेदितव्यम्।

इत्युदक्यादिशुद्धिः।

## अथाशुद्ध्यपवादः।

तत्र मनुः।

नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम्।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः॥

ब्रह्मचारीति विहितभिक्षावृत्तीनामुपलक्षणार्थम्। भिक्षावृत्तावधिकारिणश्चाह

मनुः।

सान्तानिकं यक्ष्यमाणमध्वगं सर्व्ववेदसम्।
गुर्व्वर्थपितृमात्रर्थं स्वाध्यायार्थ्युपतापिकः।
नवैतान् स्नातकान्विद्याद्ब्राह्मणान्धर्म्मभिक्षुकान्॥

सन्तानप्रयोजनं सान्तानिकः, दत्तसर्व्वस्वः सर्व्ववेदसः। रोग्युपतापी। यावता रथ्याप्रसर्पणादिरूपेणोपघातेन विना भैक्षं न सिध्यति तन्मात्रापवादो द्रष्टव्यः।

तथा।

श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत्।
क्रव्याद्भिश्च हतस्यान्यैश्चाण्डालाद्यैश्च दस्युभिः॥

क्रव्यादः श्येनादयः । दस्यवो व्याधाः* ।

मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः ।
रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् ॥

मक्षिकाग्रहणं†मवर्ज्जनीयस्पर्शानां दंशादीनामुपलक्षणार्थम् । विप्रुषः अविज्ञाताकाराः‡ । छाया निषिद्धातिरिक्ता रजोऽपि निषिद्धेतरत् ।

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

एतच्चोपघातसन्देहे विज्ञेयम् ।

शङ्खः ।

नारीणाञ्चैव वत्सानां शकुनीनां शुनो मुखम् ।
रतौ प्रस्रवणे वृक्षे मृगयायां§ सदा शुचिः ॥

यमः ।

मुखतो गौरमेध्या तु मेध्योऽजो¶ मुखतस्तथा ।
पृष्ठतो गौर्गजः स्कन्धे सर्व्वतोऽश्वः शुचिस्तथा ॥
अदूष्यं काञ्चनञ्चावः स्त्रीमुखं कुतपङ्कुरम् ।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा ॥

---

* दस्युविलः वकः इति पाठान्तरम् । † मक्षिकाग्रहणमतिवर्त्तनीयस्पर्शादीनामुपलक्षणार्थमिति पाठान्तरम् । ‡ वेदपाठकालीनच्युतमुखाम्बुविन्दव इति शेषः विप्रुषो-ऽम्बुविन्दव इत्यमरः । § रतिकाले स्त्रीमुखं शुचि स्तनात्पयःप्रस्रवणकाले वत्समुखं वृक्षे वृक्षस्थफलभक्षणे पक्षिमुखं शुचि मृगयाकाले मृगदंशने कुक्कुरमुखं शुचि इत्यर्थः । ¶ छागः ।

काञ्चनस्यालङ्करणीभूतस्य स्वेदादिदोषाभावप्रतिपादनपरम् । उच्छिष्टाद्युपहतस्य शुद्ध्यभिधानात् ।

आकराः शुचयः सर्व्वे शकुनिः फलपातने ।
श्वा मृगग्रहणे मेध्यः स्त्रीमुखेषु च वारुणी ॥

आकराः सुराकरव्यतिरिक्ताः । आकराः शुचयः सर्व्वे वर्ज्जयित्वा सुराकरमिति पैठीनसिस्मरणात् । ब्राह्मणभार्य्याया अपि शूद्रायाः पीतमद्यायाः बुद्धिपूर्व्वकं गन्धरसास्वादनरहितं मुखं रतिसंसर्गे शुद्धमेवेत्यर्थः ।

दधि सर्पिः पयः क्षौद्रं भाण्डे दोषो न विद्यते ।
मार्ज्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः ॥

मार्ज्जारस्य स्पर्शे शुद्धत्वमेवेत्यर्थः । अशुचित्वं कर्म्मकालादन्यत्र तत्र स्नानविधानात् ।

अत्रिः ।

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्य भवेद्दोषस्त्वत्रेश्च वचनं यथा ॥

अप्सु भोजनानन्तरममृतापिधानमसीति अग्नीकरणार्थं या आपो गृह्यन्ते ताः मधुपर्काद्युच्छिष्टस्य मन्त्रोच्चारविषयम् ।

बृहस्पतिः ।

पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचिः ।
गवां पृष्ठानि मेध्यानि सर्व्वगात्राणि योषिताम् ॥

उपहतिरहितब्राह्मणचरणस्पृष्टं वस्तु शुद्धमित्यर्थः । एवञ्च ब्राह्मणव्यतिरिक्तचरणस्पर्शो दोषावह इत्युक्तम्भवति ।

अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन॥

षट्त्रिंशन्मते।

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः॥

दन्तलग्ने तु विशेषो भोजनप्रकरणेऽभिहितः।

अत्रिः।

पत्रैर्मूलफलैः पुष्पैस्तृणकाष्ठमयैस्तथा।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टस्तु भवेद्द्विजः॥

याज्ञवल्क्यः।

मुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः॥

मुखजाः विप्रुषः श्लेषविन्दवो मुखान्निर्गता आचमनप्रापका न भवन्ति।

अत्र विशेषमाह गौतमः।

न मुख्या* विप्रुष उच्छिष्टं कुर्व्वन्ति चेदङ्गे निपतन्तीति।

वृहस्पतिः।

द्राक्षेक्षुयन्त्राकरकारुहस्ता-
गोदोहनीयन्त्रविनिःसृतानि।
बालैरथ स्त्रीभिरनुष्ठितानि
प्रत्यक्षदुष्टानि शुचीनि तानि॥

* स्वाध्याया इति पाठान्तरम्।

यत्र विनिःसृतानि इक्षुरसादीनि बालैः स्त्रीभिश्च कृतानि रथ्याप्रसर्पणादिभिर्निमित्तैर्यत्राचमनप्राप्तिस्तत्राचमनमकृत्वापि, यान्यप्यवस्तुस्पर्शपाकादीनि कृतानि तानि प्रत्यक्षतो दुष्टानि* अशुचिभिः कृतानीति ज्ञातान्यपि शुद्धानीत्यर्थः।

इह मदनपारिजाते मदनक्षितिपालदानजलरूढे।
स्तवको हि षष्ठ आसीदामोदाकृष्टपण्डितभ्रमरः॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमियात्॥
इयं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः॥

इति पण्डितपारिजातभट्टारमल्लेत्यादिविरुदराजी-
विराजमानस्य श्रीमदनपालस्य निबन्धे मदन-
पारिजाताभिधेये षष्ठः स्तवकः।

---

* दृष्टानीति क्वचित्पाठः।

## सप्तमः स्तवकः ।

दशाहादिरूपकालापगमने कुलव्यापिनी शुद्धिरभिहिता। तदनन्तरञ्च श्राद्धविधेः क्रमप्राप्तत्वेऽपि शुद्धिप्रसङ्गात्पूर्व्वस्तवके द्रव्यशुद्धिर्निरूपिता । साम्प्रतं परिसमाप्य क्रमप्राप्तश्राद्धविधि-रेव प्रतन्यते ।

तत्रादौ श्राद्धमहिमा ।

तत्र याज्ञवल्क्यः ।

आयुः प्रजां धनं विद्यां स्वर्गमोक्षसुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ॥

मार्कण्डेयपुराणे ।

तान् सर्व्वान्यजमानो वै श्राद्धं कुर्व्वन्यथाविधि ।
समाप्यते यथा वत्स येन येन शृणुष्व तत् ॥
अन्नप्रकरणं यत्तु मनुजैः क्रियते भुवि ।
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ॥
यदम्बु स्नानवस्त्रोत्थं भूमौ पतति पुत्रक ।
तेन ये तरुतांप्राप्तास्तेषां तृप्तिः प्रजायते ॥
यास्तु गन्धाम्बुकणिकाः पतन्ति धरणीतले ॥
ताभिराप्यायनं तेषां ये देवत्वं कुले गताः ॥
ये चादग्धाः कुले बालाः क्रियया ये ह्यसंस्कृताः ।
विपन्नास्ते तु विकर सम्मार्ज्जनजलाशिनः ॥
भुक्त्वा वाचमतां यच्च जलं यच्चांघ्रिसेचनम् ।

ब्राह्मणानां तथैवान्ये तेन तृप्तिन्तु यान्ति* वै ॥
तेषामेव कुले तत्र तत्तद्योन्यन्तरङ्गताः ।
प्रयान्त्याप्यायनं वत्स सम्यक् श्राद्धक्रियावताम्† ॥

## अथ श्राद्धस्वरूपम् ।

तत्रापस्तम्बः ।

अथैतन्मनुः श्राद्धशब्दं कर्म्म प्रोवाच प्रजानिःश्रेयसार्थं तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थे मासि मासि कार्य्यमपरपक्षस्यापराह्णः श्रेयानिति । श्राद्धमिति शब्दो वाचको यस्य तत्कर्म्म श्राद्धशब्दं तस्मिन् कर्म्मणि देवताः पितरो वसु रुद्रादित्यरूपाः । ब्राह्मणस्त्वाहवनीयवत् त्यक्तद्रव्यप्रतिपत्तिस्थानत्वादाहवनीयस्थाने भवतीत्यर्थः । एतदुक्तं भवति पित्रुद्देशेन त्यक्तस्य द्रव्यस्य ब्राह्मणस्वीकरणं यदेतद्विशिष्टं श्राद्धस्य प्रधानं रूपमिति ।

अत्र पितृदेवताके कर्म्मणि मुख्यः श्राद्धशब्दः यथा नित्याग्निहोत्रशब्दः देवश्राद्धादौ गौणप्रयोगः । स च तद्धर्म्मप्राप्त्यर्थं यथोक्तम् । कुण्डपायिनामयने मासमग्निहोत्रं जुहोति इत्यत्राग्निहोत्रशब्दप्रयोगो नित्याग्निहोत्रधर्म्मप्राप्त्यर्थः । अग्नि-

---

* तेन तृप्तिं प्रयान्ति वै इति पाठान्तरम् । † ते तावता कुले तत्र तत्तद्योन्यन्तरं गताः । प्रयान्त्याप्यायनं वत्स सम्यक् श्राद्धक्रियावता इति पाठान्तरम् ।

षोमीयं पशुमालभेतेत्यत्र यथा अग्निश्च सोमश्च मिलित्वैक-देवता तथात्रापि पित्रादीनां न मिलितानां देवतात्वमपि तु प्रत्येकमेव पित्रे पितामहाय प्रपितामहायेति विष्णादिभिः पृथक् चतुर्थ्येकवचनत्वेन निर्देशात्। यत्तु। पितृभ्यो दद्यादित्यादिवचने चतुर्थीबहुवचननिर्देशः स चाभिधानसौकर्य्यायैकविभक्त्यन्तत्वेन* निर्देशः। गर्गा भोज्यन्तामितिवत्। यथा गर्गाः प्रत्येकमेव भोज्याः एवं पितरोऽपि प्रत्येकमेव तस्मान्न व्यासज्यवृत्ति देवतात्व†मपि तु प्रत्येकम्। न सपत्नीकस्य पित्रादेर्देवतात्वं प्रापकप्रमाणाभावात्। स्वभर्तृपिण्डमात्राभ्य‡स्तृप्तिरासां यतः स्मृता। इति।

## अथ श्राद्धभेदाः§।

तत्र विश्वामित्रः।

नित्यं नैमित्तिकङ्काम्यं वृद्धिश्राद्धं सपिण्डनम्।
पार्व्वणञ्चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम्॥
कर्म्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्।
यात्रास्वेकादशम्प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतमिति॥

---

* एकोक्तिक्रियापेक्षयैवेत्यर्थः। † साहित्यरूपदेवतात्वं साहित्यञ्च परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियासम्बन्धार्हत्वमित्युक्तं सह साहित्यविवेके। साहित्यमतिरिक्तपदार्थः व्यासज्यवृत्ति इति तौतातिकमतम्। व्यासज्यवृत्तित्वञ्च प्रत्येकावृत्त्युभयपर्य्याप्तधर्म्मत्वम्। ‡ स्वभर्तृदत्तपिण्डांशेभ्य इत्यर्थः। § श्राद्धभेदाः श्राद्धविभागा इत्यर्थः विभागस्तु सामान्यधर्म्मावच्छिन्नानामेव वस्तूनां परस्परविरुद्धतद्व्याप्यधर्म्मप्रकारेण प्रतिपादनम्।

एतल्लक्षणानि च भविष्यपुराणे ।

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवङ्कर्त्तव्यमयुग्मान् भोजयेद्विजान् ॥
कामाय विहितङ्काम्यमभिप्रेतार्थसिद्धये ।
पार्व्वणेन विधानेन तदप्युक्तङ्खगाधिप ॥
वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्व्वं प्रदक्षिणङ्कार्य्यं पूर्व्वाह्णे चोपवीतिना ॥
गन्धोदकतिलैर्युक्तं कुर्य्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थम्पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥
अमावास्यां यत्क्रियते तत्पार्व्वणमिति श्रुतम् ।
क्रियते वा पर्व्वणि यत्तत्पार्व्वणमिति स्थितिः ॥
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते* ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।

---

* गोष्ठीश्राद्धन्तु तत् स्मृतमिति ग्रन्थान्तरे पाठः ।

ज्ञेयं पुंसवने चैव श्राद्धं कर्म्माङ्गमेव च ॥
देवानुद्दिश्य यच्छ्राद्धं तत्तद्दैविकमुच्यते ।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः ॥
गच्छन्देशान्तरं यत्तु श्राद्धं कुर्य्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धं अर्थोपचय एव च ।
पुष्ट्यर्थमेतद्विज्ञेयमौपचारिकमुच्यते ॥

वृद्धिः पुत्त्रजन्मविवाहादिः, नित्येनावश्यकेनैकोद्दिष्टेन पार्व्वणेन च तुल्यं शेषमङ्गजातं भवति सपिण्डीकरणस्योभयात्मकत्वात् एकोद्दिष्टं स्त्रिया अपि एकोद्दिष्टं सपिण्डीकरणमुभयार्थस्यैकदेशेन* निर्द्देशः । क्रियते पर्व्वणि यदत्र पर्व्वणि संक्रान्त्यादौ । गोष्ठीश्राद्धं श्राद्धगोष्ठ्यां क्रियमाणायां तत्प्रसङ्गाद्यच्छ्राद्धं तद्गोष्ठीश्राद्धम् । कल्पतरौ त्वन्यथा गोष्ठीश्राद्धं कर्त्तृसमुदायः† संपत्सुखार्थमिति । संपत् श्राद्धसामग्री तया यत्सुखं तदर्थम् । अयमर्थः बहूनां विदुषां केनापि निमित्तेन युगपत्तीर्थश्राद्धादिकर्त्तव्यतया ग्रामदेशकालादिवशात्पृथक्पाकाद्यसम्भवे सम्भूय

* सपिण्डीकरणस्य एकोद्दिष्टपार्व्वणोभयात्मकत्वेन एकोद्दिष्टं स्त्रिया अपि इत्यनेन एकदेशनिर्द्देशः । † शूलपाणिना तु शङ्खधर इति कृत्वा एतन्मतं लिखितम् । श्रीकृष्णतर्कालङ्कारस्तु श्राद्धविवेकटीकायामन्यथा उक्तवान् यथा वस्तुतस्तु गोष्ठीश्राद्धं भोक्तृसमुदायः विद्वत्सु ब्राह्मणेषु चेत्येकवाक्यत्वात् तथाच बहूनां पात्रभूतानां सम्पदा लाभेन यत्सुखं पितृप्रीत्यतिशयरूपं तदर्थं तन्निमित्तं गोष्ठ्यां पात्रसमुदायरूपायां यच्छ्राद्धं बहुब्राह्मणकश्राद्धं तद्गोष्ठीश्राद्धमित्यर्थः ।

श्राद्धसामग्रीसम्पादनेन यच्छ्राद्धं क्रियते तद्गोष्ठीश्राद्धमिति। निषेककाले इत्यादि एतच्च श्रौतस्मार्त्तकर्म्मोपलक्षणम्। एतच्च वृद्धिश्राद्धवत्कर्त्तव्यम्। कर्म्माङ्गं वृद्धिवत्कृतमिति पारस्करेणाभिधानात्। कर्म्माङ्गसंज्ञाप्रकरणमकरणे कर्म्मवैगुण्यद्योतनार्थम्। दैविकन्तु नित्यश्राद्धवत्कुर्य्यात्।

अतएव दैविकमित्यनुवृत्तौ

पारस्करः।

तन्नित्यश्राद्धवत्कुर्य्याद्द्वादश्यादिषु यत्नतः। इति।

गच्छन्देशान्तरमिति तीर्थयात्रार्थं देशान्तरगमनसमये यात्रां कृत्वा पुनर्गृहप्रवेशे चेति ज्ञेयम्। सर्पिषा सर्पिःप्रधानकेन। तथा शरीरोपचये शरीरोपचयनिमित्तरसायनादिप्रयोगकाले।

## अथाधिकारिणः।

तत्राशौचप्रकरणस्तवके पुत्राद्याश्राधिकारिणो निरूपिताः। साम्प्रतं केषुचित्कर्म्मविशेषेषु तेषामधिकारो निरूप्यते।

तत्र विष्णुपुराणे

पराशरः।

पूर्व्वाः क्रिया मध्यमाश्च तथैव चोत्तराः क्रियाः।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदान् शृणुष्व मे॥
आद्याहाद्द्वादशाहाच्च मध्ये याः स्युः क्रिया मताः।
पूर्व्वास्ताः मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः॥

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥
पितृमातृसपिण्डैश्च समानसलिलैस्तथा ।
तत्सङ्घातगतै*श्चैव राज्ञा वा धनहारिणा ॥
पूर्व्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्व्वा नरश्रेष्ठ कार्य्यास्तत्तनयै†स्तथा ॥ इति ।

पूर्व्वाः क्रिया मध्यमाश्च कर्त्तव्या इत्यर्थः । पुत्राद्यैर्भ्रातृसन्ततिभिः ।

पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः । इति ।

तेनैवोक्तत्वात् ।

दौहित्रे तु भविष्यपुराणे विशेषः । यथा

व्रताव्रतस्थोऽपि सुतः पितुः कुर्य्यात्क्रिया नृप ।
उदकाद्या महाबाहो दौहित्रोऽपि तथा इति ॥

एवं साचाचत्र ब्रह्मचारिणि उदकदानादिकर्त्तृत्वे विधिर्नास्ति तत्र व्रतलोपो भवतीति गम्यते ।

मातामहश्राद्धाधिकारेषु पौलस्त्यः ।

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषान्तु पितृवत् श्राद्धं कुर्य्याद्दुहितृसूनवः ॥

पितृवत् श्राद्धं पार्व्वणम् ।

तथा ।

---

* संघातान्तर्गतैर्वापि इति ग्रन्थान्तरीयः पाठः । † पौत्रादिभिः ।

पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

सर्व्वत्र पितृशब्देन मातामहश्राद्धमपि कर्त्तव्यमित्यर्थः ।

अत्र क्वचिदपवादमाह कात्यायनः ।

कर्षुसमन्वितं त्यक्ता तदाद्यं श्राद्धषोड़शम् ।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः ॥

कर्षुसमन्वितं सपिण्डीकरणम् । अयञ्च विवेकः । यस्तु धनहारी दौहित्रः स नवश्राद्धादिक*मपि कुर्य्यादिति । इतरस्तु अमावस्यादौ षड्दैवतं कुर्य्यात् । तत्र मातामहश्राद्धाकरणे प्रत्यवाय इति न तु सपिण्डीकरणादाविति ।

अथामश्राद्धाधिकारिणः ।

तत्र कात्यायनः ।

आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं प्रकुर्व्वीत भार्य्यारजसि सिद्धये ॥

यस्य यजमानस्य भार्य्या ऋतुमतीति तत्र पाककर्त्तॄभावे नित्यनैमित्तिकश्राद्धेषु मासिकसांवत्सरिकव्यतिरिक्तेषु यजमान-आमश्राद्धाधिकारी भवतीत्यर्थः । यच्चापरपक्षे प्रतिपदादिष्वन्यतमदिन एव श्राद्धं क्रियते तन्नित्यकाम्यत्वेनोभयात्मकम् । तथा सति न केवलं नित्यत्वबुद्ध्यानुष्ठीयते अथवा भार्य्या रजस्वला तस्य च दिनान्तरे ब्राह्मणासम्भवः पाककर्त्रन्तरासम्भवश्च

---

* चतुर्थे पञ्चमे चैव नवमैकादशे तथा । यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

तदा अमावस्याश्राद्धवद्देवामान्नेन कुर्य्यादथवा कामनयाऽनुष्ठीयते तदा यथा शक्नुयात्तथा कुर्य्यादिति । श्राद्धार्थमुख्यपाकानिष्पत्तौ पञ्चमहायज्ञादिषु कर्त्तव्यं* एवं सकलपक्षे† पञ्चम्यादिपक्षश्राद्धे‡ दशम्यादिपक्षे§ च वेदितव्यम् ।

बौधायनः ।

संक्रमेऽन्नद्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं¶ संग्रहे च द्विजः शूद्रः सदाचरेत् ॥

आमाभावे हेमश्राद्धं संक्रमग्रहणयोस्तु आमश्राद्धं पाकाभावे ब्राह्मणासम्भवे वा भवति अत्र शिष्टाचारः प्रमाणम् ।

एवं तीर्थश्राद्धे च सुमन्तुः ।

पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप ।
सपत्नीनां महाबाहो विदेशगमनादिभिः ॥
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ।
आत्मनो देशकालाभ्यां विप्लवे समुपागते ॥
आपद्यनग्नौ तीर्थे च प्रवासे पत्न्यसम्भवे ।
चन्द्रसूर्य्यग्रहे चैव दद्यादामं विशेषतः ॥

यमदग्निः ।

यावत्स्यान्नाग्निसंयुक्त उत्पन्नाग्नि‖रथापि यः ।

---

* पञ्चमहायज्ञादिनिमित्तं यत्पाकादि कर्त्तव्यं तेनैव श्राद्धकरणम् । † सकलकृष्णपक्षश्राद्धे इत्यर्थः । ‡ भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम् । तत्रापि महती पूजा कर्त्तव्या पितृदैवते इत्यपि ॥ § कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्दशीम् । श्राद्धे प्रशस्तास्तिथयः यथैता न तथेतरा ॥ ¶ श्राद्धानुकल्पं स्वर्णदानरूपम् । ‖ उत्पन्नाग्निर्न इत्यनुषङ्गेणान्वयः ।

आमश्राद्धं तथा कुर्य्यात्तेना*ऽग्नीकरणं भवेत् ॥

प्रचेताः ।

स्त्री शूद्रः स्वपचश्चैव जातकर्म्मणि चाप्यथ ।
आमश्राद्धं तथा कुर्य्युर्विधिना पार्व्वणेन तु ॥

स्वपचः स्वयम्पचः ।

हारीतः ।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं विधीयते† ।
अमावास्यादि नियतं माससंवत्सरादृते ॥

मासिकमाब्दिकञ्च पक्वान्नेनैव कर्त्तव्यमिति नियमः शूद्रस्य तु सर्व्वत्रामान्नमेव ।

आमश्राद्धे विशेषमाह

व्यासः ।

आमं ददतु कौन्तेय दद्यादन्नं चतुर्गुणम् ।

यानि च द्वैगुण्यविधायकानि वचनानि तानि चातुर्गुण्यदानाशक्तौ वेदितव्यानि । चातुर्गुण्यञ्च पुरुषाहारापेक्षया ।

तथा ।

सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ।
आवाहनादिः सर्व्वः स्यात्पिण्डदानञ्च भारत ॥
दद्याच्चाथ‡ द्विजातिभ्यः शृतं वाऽशृतमेव वा ।
तेनाग्नीकरणं कुर्य्यात्पिण्डांस्तेनैव निर्व्वपेत् ॥

---

* हस्त इति पाठान्तरम् । † प्रकीर्त्तितमिति पाठान्तरम् । ‡ यच्चेति पाठान्तरम् ।

षट्त्रिंशन्मते ।

आमश्राद्धं यदा कुर्य्यात्पिण्डदानङ्कथं भवेत् ।
गृह्यपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥

पिण्डदानं भवतीति शेषः । आमद्रव्यगृहपाकशक्तुपायसेषु यथालाभं व्यवस्था । एतच्चामश्राद्धं हेमश्राद्धञ्च पार्व्वणश्राद्धाधिकारिणैव कर्त्तव्यम् । यच्चाङ्गं साक्षान्निषिद्धं यच्च लुप्तप्रयोजनं तन्निवर्त्तते । केषुचिन्मन्त्रेषु ऊहोऽपि भवति अतएवमभिदधाति ।

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्ज्जने ।
अन्यकर्म्मस्वनूह्याः स्युरामश्राद्धविधिः स्मृतः ॥

अयमर्थः । आवाहने आवाहनमन्त्रे उशन्तस्त्वा आवह पितॄन् हविषे अत्तवे इत्यत्र अत्तवे इति पदस्थाने स्वीकर्त्तव्य इति पदस्योहः कर्त्तव्यः । स्वधाकारे नमो वः पितरः इष इत्यादिमन्त्रे इष इति पदस्थाने आमद्रव्यायेति पदस्योहः । विसर्ज्जनमन्त्रे वाजे वाजे वतेति मन्त्रे तृप्तायातपथिभिर्देवयानैरित्यत्र तृप्ता इति पदगतक्तप्रत्ययस्थाने लोट्प्रत्ययेन तृप्यत इत्यूहः कार्य्यः । अन्यकर्म्मणि विष्णो हव्यं रक्षस्वेत्यादौ नोह इति ।

## अथ श्राद्धदेशः ।

तत्र मनुः ।

शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ।

दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् ॥

स्वतः गृहप्रदेशं शुचिं तीर्थदेशं वाऽन्यकृताशुचिपरिहारार्थम्। विविक्तं केशादिरहितं कृत्वा गोमयेनोपलेपयेत्। तं देशं उपहननादिभिः*दक्षिणाप्रवणं दक्षिणां दिशं प्रत्युदकादिसमर्पणयोग्यं कुर्यादित्यर्थः।

यत्तु शङ्खेन कृत्रिमभूमिनिषेधः कृतः।

गोगजाश्वादिभ्रष्टेषु† कृत्रिमायां तथा भुवि।
न कुर्याच्छ्राद्धमेतेषु पारक्यादिषु भूमिषु॥ इति।

अयञ्च निषेध उन्नतीकृतवेदिका विषयः।

विष्णुधर्मोत्तरे।

दक्षिणाप्रवणे देशे तीर्थादौ‡ वा गृहेऽपि वा।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः॥

तीर्थमृषिसेवितं सलिलम्। आदिशब्द ऋषिसेविताश्रमादिपरः।

यमः।

परकीयप्रदेशेषु पितॄणां निर्व्वपे§त्तु यः।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म्म विहन्यते॥

परकीयप्रदेशाः परैरेव परिगृहीताः गृहा न तु तीर्थादयः तेषामस्वामिकत्वेन साधारणत्वात्। तथाच पुराणे स्मर्य्यते।

---

* खननपूरणादिभिः। † गोगजाश्वादिकृष्टेषु इति पाठान्तरम्। ‡ सत्तीर्थादाविति पाठान्तरम्। § श्राद्धं कुर्यादित्यर्थः।

अटव्यः पर्व्वताः पुण्याः नदीतीर्थानि* यानि च ।
सर्व्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥
वनानि गिरयो नद्यस्तीर्थान्यायतनानि च ।
देवखाताश्च गर्त्ताश्च न स्वामी तेषु विद्यते ॥ इति ।

आयतनानि देवादिसेवितानि । गर्त्ताः अकृत्रिमाः स्रोतो-विशेषाः ब्रह्माख्यादयः† ।

यमः ।

रूक्षङ्कृमियुतं‡ क्लिन्नं सङ्कीर्णानिष्टगन्धकम् ।
देशन्त्वनिष्टशब्दञ्च वर्ज्जयेच्छ्राद्धकर्म्मणि ॥

अग्निदग्धमस्निग्धञ्च रूक्षं कर्दमसहितं क्लिन्नं श्राद्धानुपयुक्तवस्त्वन्तरैराकीर्णं संकीर्णं पूतिगन्धमनिष्टगन्धकमश्राव्यशब्दोपेतम् अनिष्टशब्दम् । काम्यदेशानाह

शङ्खः ।

वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे हिमालये ।
नर्म्मदावाहुदातीरे सर्व्वमानन्त्यमश्नुते ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायाञ्च दत्तमक्षयतां व्रजेत् ॥

अन्येऽपि काम्यदेशाः स्मृतिपुराणेभ्यो विज्ञेयाः । विस्तरभयान्नेह प्रदर्शिताः ।

---

* तीराणीति पाठान्तरम् । † ब्रह्मयोन्यादय इति पाठान्तरम् । ‡ हतमिति पाठान्तरम् ।

## अथ श्राद्धकालाः ।

तत्र याज्ञवल्क्यः ।

अमावास्याष्टका वृद्धिः कृष्णपक्षेऽयनद्वयम् ।
द्रव्यब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः ।
श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥

अमावास्या कृष्णपक्षस्य पञ्चदशी तिथिः अष्टका आश्वलायनेनोक्ताः । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका- इति ।

विष्णुस्तु त्रयमेवाह ।

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघीप्रोष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशी व्रीहियवपाके चेति ।
एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।

विष्णुस्मृतेरेवं पाठान्तरम् ।

अमावास्यास्तिस्रोऽन्वष्टकास्तिस्रः पूर्व्वेद्युः प्रोष्ठपदे हेमन्तशिशिरयोरपरपक्षेषु त्रयोदशी व्रीहियवैर्वा याग इति ।

केचनैतद्बृहद्विष्णुवचनं मन्यन्ते । माघी पौर्णमासी प्रोष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशी । बृहद्विष्णुवाक्येऽपि त्रयोदशीमेव ।

वायुपुराणे ।

पितृदानाय मूले स्युरष्टकास्तिस्र एव च ।

कृष्णपक्षे वरिष्ठा हि पूर्व्वा चैन्द्रीति भाष्यते* ॥
प्राजापत्या द्वितीया स्यात्तृतीया वैश्वदेविकी।
आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा ॥
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः।

पितृदानाय मूले स्युरिति। मूले प्रधानस्थान इत्यर्थः।
ब्रह्मपुराणे।

ऐन्द्र्याञ्च प्रथमायाञ्च शाकैः सन्तर्पयेत्पितॄन्।
प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत् ॥

शुद्धैः प्रशस्तैः।

वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम्।
वर्षासु मध्ये शाकैस्तु चतुर्थीमेव सर्व्वदा ॥

अत्र शाकादीनां विकल्पः स्वस्वशाखानुसाराद्विज्ञेयः। वृद्धिः पुत्त्रजन्मादि। कृष्णपक्षः प्रसिद्धः तस्य च श्राद्धकालत्वं प्रतिपदाद्यपराह्णद्वारेण। अयनद्वयं दक्षिणोत्तरात्मकम्। द्रव्यं श्राद्धार्हं तस्य प्राप्तिर्यस्मिन्काले तथा पङ्क्तिपावनस्य ब्राह्मणस्य सम्पत्तिर्लाभो यत्र स श्राद्धकालः। विषुवन्मेषतुलयोः सूर्य्यसंक्रमः सूर्य्यस्य राशे राश्यन्तरगमनं संक्रान्तिः। संक्रान्तिग्रहणेनैवायनविषुवतोरपि ग्रहणे सिद्धे पुनरुपादानं फलाधिक्यद्योतनार्थम्। व्यतीपातो योगविशेषः पारिभाषिको वा।
तथाच वृद्धमनुः।

श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके।

---

* विभाव्यत इति पाठान्तरम्।

यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतमश्लेषा सर्व्वत्र मस्तक इति सम्बध्यते। मस्तके प्रथमे पादे चन्द्रः स्यादित्यर्थः। यद्वा मस्तकं मृगशिरः। गजच्छाया हस्तिच्छाया।

तथाच श्रुतिः काठकी।

एतद्देवपितॄणां चायनं यद्धस्तिच्छाया पारिभाषिकी वा।

तथाच स्मर्य्यते।

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः।
तिथिर्वैश्रावणी या च गजच्छायेति सा स्मृता॥

पितृदैवत्यं मघा। हंसः सूर्य्यः। करो हस्तनक्षत्रं वैश्रावणी त्रयोदशी। एतत्त्रितययोगो गजच्छायेत्यर्थः। ग्रहणमुपरागः यदा श्राद्धं प्रति रुचिः कर्त्तुर्भवति सोऽपि श्राद्धकालः। चशब्दादुपरागादयोऽपि गृह्यन्ते एते श्राद्धकालाः। अथामावास्यादिश्राद्धानां वृद्धिश्राद्धादिव्यतिरिक्तानामपराह्णकालसाध्यत्वादमावास्याचतुर्द्दशीप्रतिपद्द्वित्वे तु क्व वा श्राद्धमित्याकाङ्क्षायामपराह्णव्यापित्वाव्यापित्वमुखेन श्राद्धकाला निरूप्यन्ते। तत्र च तदुपयोगित्वेन पश्चात्तसंज्ञकान्वाधानकालः। अन्वाधानं पिण्डपितृयज्ञो दर्शश्राद्धमित्येतत्त्रितयं वाजसनेयिव्यतिरिक्तानामेकस्मिन् दिने कर्त्तव्यमिति एतत् प्रथममुपपादयामः।

तत्र पर्व्वकालनिर्णयः।

पर्व्व दर्शः पौर्णमासी च । अस्मिन् प्रकरणे मध्याह्नशब्दः अह्नो द्विधा विभक्तस्य मध्यपरः तदेवावर्त्तनमित्युच्यते । पूर्व्वाह्णापराह्णशब्दावपि द्विधाविभक्तस्य पूर्व्वपरांशपरौ । पर्व्वप्रतिपदां सन्धिर्मध्याह्ने ततः प्राग्वा भवेत्तदा सन्धिदिने यागस्तत्पूर्व्वदिने अग्न्याधानम् ।

यदाह गोभिलः ।

आवर्त्तने यदा सन्धिः पर्व्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ॥
पर्व्वप्रतिपदां सा स्यादर्व्वागावर्त्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्व्वेद्युः स्यादुपक्रमः ॥

उपक्रमः अग्न्याधानं यदा मध्याह्नात्परतः सन्धिस्तदा सन्धिदिने अग्न्याधानं परेद्युरिष्टिः ।

तथाच गोभिलः ।

आवर्त्तनात्परः सन्धेर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येष पर्व्वद्वयविनिर्णयः ॥

मध्याह्नात्प्राक् प्रतिपत्सन्धावपि सन्धिदिनेऽन्वाधाय परेद्युरिष्टिर्वाजसनेयशाखिनः ।

यदाह लौगाक्षिः ।

अपराह्णेऽथवा सायं यदि पर्व्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वो भूते याग इष्यते ॥
आवर्त्तनादधः सन्धिर्यद्यन्वाधाय तद्दिने ।
परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिनः ॥

पर्व्वप्रतिपत्सन्धेरपि ज्ञानोपायमाह

कात्यायनः ।

परेह्नि घटिका न्यूना तथैवाभ्यधिकाश्च याः ।
छित्ता तदर्द्धं पूर्व्वस्मिन्ह्रासवृद्धी प्रकल्पयेत् ॥

लौगाक्षिरपि ।

तिथेः परस्या घटिकाश्च याः स्यु-
र्न्यूनास्तथा चाप्यधिकाश्च तासाम् ।
अर्द्धं वियोज्यञ्च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिनेऽस्याः ॥

अस्यास्तिथेः प्रतिपदः पूर्व्वतिथ्यपेक्षया या* न्यूना घटिकास्तन्मध्ये अर्द्धं प्रथमदिने पर्व्वणि नियोज्यमर्द्धं पर्व्वदिनाद्वियोज्यम् । अर्द्धहानिः पूर्व्वदिने ज्ञेयेत्यर्थः । एवं वृद्धावर्द्धं द्वेधा विभज्यार्द्धं पूर्व्वदिने अर्द्धं परदिने च योज्यमिति ।

यागकालमाह शातातपः ।

पर्व्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातरुक्तो† मनीषिभिः ॥

यदा मध्याह्नादूर्द्धं सन्धिस्तदा तस्मिन्दिनेऽन्वाधाय‡ परेद्युरिष्टौ क्रियमाणायां कदाचित्प्रतिपदश्चतुर्थांशोऽपि यागकालो भवति तदा चतुर्थांशस्य वचनान्तरैर्निषिद्धत्वात्कथमित्याकाङ्क्षायाम्

---

* अमावस्यापौर्णमास्यपेक्षया । † प्रातर्युक्त इति देशान्तरीयः पाठः । ‡ अग्निं गृहीत्वा ।

शातातपः ।

सन्धिर्यद्यपराह्णे स्याद्यागः* प्रातः परेऽहनि ।

कुर्व्वाणः प्रतिपद्भागे चतुर्थोऽपि न दुष्यति ॥ इति ।

अयमभिप्रायः । पर्व्वणोयस्तुरीयांश आद्याः प्रतिपदस्त्रयइत्या-द्युक्तकालासम्भवे त्वनेन वचनेन चतुर्थभागोऽप्यङ्गत्वेन विधी-यते इति। ननु यदा मध्याह्ने तत्समीपवर्त्तिनि पूर्व्वकाले वा सन्धिस्तदा सन्धिदिन एव यागविधानाद्ग्रीष्मादिकाले च मध्याह्नस्य षोड़शसप्तदशदण्डात्मकत्वात् अमावास्यायां सूर्य्यो-दयात्प्रागिष्ट्यन्तरविधानात्† । इष्टेश्च द्वियाम‡साध्यत्वात् उपक्रान्तस्य§ कर्म्मणो विधिमन्तरेण मध्ये मध्ये विरम्य व्यापा-रानुपपत्तेः सेष्टिर्दर्श एव समाप्येत ।

तथाच ।

प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते ।

पुनः प्रणीय तत्रेष्टिः कर्त्तव्या यागवित्तमैः ॥

इति वचनेन विरोधः प्रसज्येत इति चेन्नैवं यदा सूर्य्योदयात् प्रागुक्तकालमध्ये¶ विहितक्रमेणेष्टौ क्रियमाणायां इष्टिकाल-भूतयामद्वयमध्ये प्रतिपदि विद्यमानायामपि पाटवाधिक्यव-शाद‖मावास्यायामेव समाप्येत तद्विषयत्वादस्य वचनस्य सन्धि-

---

* पाद इति देशान्तरीयः पाठः । † बहुषु पुस्तकेषु दर्शनादेवं रचितं परन्तु सूर्य्यो-दयात् प्रागुक्तकालमध्ये इष्ट्यारम्भविधानादित्येव पाठः साधुः सूर्य्योदयात् सूर्य्योदयमारभ्य प्रागुक्तकालमध्ये यामद्वयात्मकपूर्व्वाह्णकालमध्ये इत्यर्थः । ‡ प्रहरद्वयसाध्यत्वात् । § आरब्धकर्म्मणः । ¶ सूर्य्योदयमारभ्येति पाठान्तरम् । ‖ पटुतातिशयेन ।

सुभयतो* यजेतेत्यादीनामपि वाक्यानामयमेव विषयः इयञ्चोक्त-विषये प्रतिपदिष्टिसमाप्तिराहिताग्नेरेव नानाहिताग्नेः तस्य तु स्थालीपाक एव नेष्टिः स च सूर्य्योदयानन्तरमेव वर्त्तनीयः† तथा स्वल्पकालसाध्यस्य प्रयोगप्रेप्सुभावस्य च शास्त्रे विधाना-त्तन्मध्ये विरामासम्भवः। विराममन्तरेण च प्रतिपदि समा-पयितुं न शक्तः न ह्यशक्यं विदधाति शास्त्रं तस्मात्प्रतिपद्यप्रवि-ष्टायां यदि चेष्टिः समाप्यत इत्येतदनाहिताग्निविषयम्।

पौर्णमास्यान्तु विशेषमाह कात्यायनः।

सन्धिश्चेत्सङ्गवादूर्द्ध्वं‡मर्व्वागावर्त्तनाद्भवेत्।
सा पौर्णमासी विज्ञेया सद्यः कालविधौ तिथिः॥ इति।

तत्रैवान्वाधानं तत्रैव याग इत्यर्थः।

अमावास्यायां§ विशेषमाह शातातपः।

द्वितीया त्रिमुहूर्त्ता चेत्प्रतिपद्यापराह्णिकी।
अन्वाधानञ्चतुर्द्दश्यां परतः सोमदर्शनात्॥ इति।

एतदप्यावर्त्तने ततः पूर्व्वं वा सन्धौ च चतुर्द्दश्यामन्वाधान-विषयम्¶।

---

* पर्व्वप्रतिपदोः सन्धिं सन्धौ इत्यर्थः। † आरम्भनीय इति पाठान्तरम्। ‡ प्रातः-कालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु इति वचनानुसारेण द्वादशदण्डात् परमित्यर्थः। § अग्न्याधानम्। ¶ यत्र प्रातश्चतुर्द्दशी परतोऽमावास्या तत्परदिनेऽमावस्या आवर्त्तनकाले तत्पूर्व्वकाले वा प्रतिपत् तत्परदिने मध्याह्नपर्य्यन्तं प्रतिपत् द्वितीया च अपराह्णमुहूर्त्तत्रय-व्यापिनी अस्मिन् कल्पे चतुर्द्दश्यां चतुर्द्दशीयुक्तामावस्यायां सिनीवालीत्वेन प्रातश्चन्द्रदर्शनात् परतो अग्न्याधानम्।

यच्च लौकाक्षि*वचनम् ।

त्रीनंशान् परतस्तस्य यागस्य चतुरो विदुः ।

द्वावंशावुत्सृजेदन्त्यौ योगे च व्रतकर्म्मणि ॥

एतदप्यावर्त्तने ततः पूर्व्वं वा सन्धौ चतुर्द्दश्यामन्वाधानविषयम् । यच्च व्रतकर्म्मणीति । यागे प्रतिपदन्त्यांशस्य अन्वाधाने चतुर्द्दश्यन्त्यांशस्य वर्ज्यत्वमुक्तं तत्र प्रतिपदश्चतुर्थांशनिषेधस्य व्यवस्था प्राग्दर्शिता । चतुर्द्दश्यास्तु आवर्त्तनोत्तरकालः पर्व्वप्रतिपत्सन्धौ निषेधः । यदन्वाधानदिने प्रातर्विस्मरणादिनान्वाधानादिकं न करोति तदा समारोपिताग्निश्चेत् पुनरग्निमवाप्य प्रत्यचाग्निश्चेदग्निं वितत्य भोजनात्प्रागन्वाधानादिकं कुर्य्यात् । तत्राप्यसम्भवे सायं तत्राप्यसम्भवे यागदिने प्रातः पार्थक्येन इष्टिं चरुं वा कृत्वा सद्यः कालविधिनान्वाधाय पश्चादियागं कुर्य्यात् । पौर्णमास्यान्तु येषां शाखिनां सर्व्वदा सद्यः कालविधिरनुज्ञातस्तेषां न पृथगिष्टिः, येषां सर्व्वदा सद्यः कालविध्यनुज्ञा नास्ति किन्तु क्वचिदेव तत्रानुज्ञातस्थले तेषां पूर्व्वोक्त एव विधिः । एवं प्रकृतयागकालो विहितः ।

## अथ विकृतियागस्य कालोऽभिधीयते ।

यत्र सम्पूर्णैव पञ्चदशी प्रतिपच्च तत्र प्रकृत्यन्वाधानदिने विकृतियागं समाप्यानन्तरं प्रकृतेरन्वाधानादिकं कुर्य्यात् ।

* लौगाक्षि इति पश्चिमदेशीयसम्मतः पाठः ।

यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां पौर्ण-मास्यां वा यजेतेत्यापस्तम्बेन प्रकृतिकालप्राप्तौ सत्यामपि पुनरमावास्यादिकालविधानात्। यदा मध्याह्ने ततः पूर्व्वं वा पर्व्वसन्धिः तदा सन्धिदिने प्रकृतियागानन्तरं विकृतियागं कुर्य्यात्। मध्याह्नादूर्द्ध्वं सन्धौ तु तत्र सन्धिदिने एव प्रातर-न्वाधानादिकं विधाय विकृतियागञ्च तत्रैव कृत्वाऽपरेद्युः प्रकृतियागः कर्त्तव्यः।

तथाच कात्यायनः।

आवर्त्तनात्प्राक् यदि पर्व्वसन्धिः
कृत्वा तु तस्मिन्प्रकृतिं विकृत्या।
तदैव यागः परतो यदि स्या-
त्तस्मिन्विकृत्या प्रकृतेः परेद्युरिति॥

अथान्वाधानपिण्डपितृयज्ञदर्शश्राद्धानामेकदिन एव कर्त्त-व्यता निरूप्यते।

तत्र लौगाक्षिः।

पक्षान्तकर्म्म निर्व्वर्त्त्य वैश्वदेवञ्च साग्निकः।
पिण्डयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकम्बुधः॥

पक्षान्तं कर्म्मान्वाधानं पिण्डयज्ञः पिण्डपितृयज्ञः अन्वाहार्य्यकं दर्शश्राद्धम्।

यथा स्मृत्यन्तरमपि।

पिण्डयज्ञावृतादर्शश्राद्धपिण्डान्न निक्षिपेत्।
पितृयज्ञस्य कालस्तु दर्शश्राद्धे भवेदिति॥

मनुरपि ।

पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।

पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् ॥

मासानुमासिकं प्रतिमासभवमतएव नित्यं पिण्डपितृयज्ञश्चानाहिताग्नेरपि कर्त्तव्यः। आपस्तम्बेनाहिताग्नेः पिण्डपितृयज्ञं विधाय एवमनाहिताग्नेरित्यनेन वाक्येनानाहिताग्नेरप्यतिदेशात्। अत आहिताग्नेर्गृह्याग्नेश्च द्वयोरप्यन्वाधानपिण्डपितृयज्ञदर्शश्राद्धानि कर्त्तव्यानि तान्येकस्मिन्दिने पूर्व्वोक्तवचनान्निष्पाद्यानीति सिद्धम् । अथापराह्णकालः । द्विधा त्रिधा पञ्चधा दशधा चोदितस्याह्नो भागं विभजन्ति ।

स्कन्दपुराणे ।

आवर्त्तनात्तु* पूर्व्वाह्णः ह्यपराह्णस्ततः परः ।

शातातपः ।

पूर्व्वाह्णो मध्याह्नोऽपराह्णः । पूर्व्वाह्णो देवानां मध्याह्नो मनुष्याणामपराह्णः पितॄणामिति ।

व्यासः ।

मुहूर्त्तत्रितयम्प्रातस्तावानेव च सङ्गवः ।

मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णश्च तादृशः ।

सायाह्नस्त्रिमुहूर्त्तः स्यात्सर्व्वकर्म्मसु गर्हितः ॥

व्यासः ।

---

* आवर्त्तनावधि आवर्त्तनन्तु वासरच्छायापरिवर्त्तनकालः ।

रौद्रश्चैत्रश्च मैत्रश्च तथाच सावटः स्मृतः ।
सावित्रश्च जयन्तश्च गान्धर्व्वः कुतपस्तथा ॥
रौहिणश्च विरिञ्चिश्च विजयो नैर्ऋतस्तथा ।
माहेन्द्रो वारुणश्चैव भट्टः पञ्चदशः स्मृतः ॥ इति ।

अत्र द्वेधा भागः शुक्लपक्षपैतृककर्म्मणि दैविके च ग्राह्यः । एतच्च शुक्लपक्षश्राद्धकालप्रकरणे स्फुटीभविष्यतीति । त्रेधा विभागे योऽयमपराह्णः स कृताहश्राद्धादौ । अयमर्थः आह्निककालनिरूपणप्रकरणे ज्ञाप्यते परिशेषात् । पञ्चधा विभागः पञ्चदशधा विभागश्चामावास्याश्राद्धादिषु ग्राह्यः । अमावास्याश्राद्धे पूर्व्वोत्तरविद्धाग्रहणे निर्णयः द्विविधामावास्या शुद्धाशुद्धा चेति । विद्धा तु चतुर्विधा चतुर्द्दश्यामेवापराह्णसम्बन्धायां न प्रतिपदीति प्रथमः प्रतिपद्येवापराह्णिकी न चतुर्द्दश्यामिति द्वितीयः । उभयत्रापराह्णसम्बन्धेति तृतीयः । उभयत्रापराह्णासम्बन्धेति चतुर्थः । तत्र शुद्धायामसंशयः । या तु विद्धा चतुर्द्दश्यामेवापराह्णसम्बन्धे प्रतिपदि सा पूर्व्वैव ग्राह्या सर्व्वैरपि । तथाच जाबालिः ।

पूर्व्वाह्णे चेदमावास्या नापराह्णे भवेद्यदि ।
भूतविद्धैव सा ग्राह्या पितृकार्य्ये तु सर्व्वदा ॥

पूर्व्वाह्णे चेदमावास्या नापराह्णे भवेद्यदि इत्यत्र प्रतिपदीति शेषः ।

तथा ।

प्रतिपद्यप्यमावास्या पूर्व्वाह्णव्यापिनी यदि ।

भूतविद्धैव सा कार्य्या पित्र्ये कर्म्मणि सर्व्वदा ॥

पूर्व्वाह्णव्यापिनी अपराह्णं न व्याप्नोतीत्यर्थः । अन्वाधानं पिण्डपितृयज्ञोऽपि भूतविद्धायामेव ।

द्वितीया त्रिमुहूर्त्ता चेत्प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्द्दश्यामिति ।

वृद्धशातातपस्मरणात् । अमावास्यायामपराह्णे पिण्डपितृयज्ञ इति अमावास्या सम्बन्धापराह्णस्यैवाश्वलायनेन पितृयज्ञाङ्गत्वविधानात् । ननु चापस्तम्बेनामावास्यायां यदहश्चन्द्रमसं न पश्यतीत्युपक्रम्यापराह्णकालं पिण्डपितृयज्ञाङ्गत्वेन विधायाधिवृत्तं सूर्य्ये चेति कालान्तरमपि विहितमतः अपराह्णानुसारेण श्राद्धकालनिर्णयः कथमिति चेदुच्यते । साग्निकस्य जीवत्पितृकस्य दैवात्पितुः पिण्डपितृयज्ञकालोऽपराह्णे व्यतिक्रान्तस्तदाधिवृत्तसूर्य्योऽपि कालाङ्गमिति विधीयते । युक्तञ्चैतत्स केवलं पिण्डपितृयज्ञेऽधिक्रियते न दर्शश्राद्धे तस्मात्तस्य स कालः । प्रमीतपितृकस्य दर्शश्राद्धेऽप्यधिकारः तच्च पिण्डपितृयज्ञानन्तरमेव तथाचाधिवृत्तसूर्य्ये पिण्डपितृयज्ञकरणे सन्ध्यायां रात्रौ दर्शश्राद्धं प्रसज्येत तच्च निषिद्धम् । तस्मात्पूर्व्वोक्त एव विषयः स्वीकार्य्यः यदा प्रतिपद्येवापराह्णिकी न चतुर्द्दश्याः तदा प्रतिपद्विद्धैव । यदाह

हारीतः ।

अपराह्णः पितॄणान्तु यापराह्णानुयायिनी ।
सा ग्राह्या पितृकार्य्ये तु न पूर्व्वाह्णानुयायिनी ॥

मध्याह्नात्परतो यत्र चतुर्द्दश्यनुवर्त्तते ।
सिनीवाली तु सा ज्ञेया पितृकार्य्येषु निष्फला ॥

अत्र त्रेधा विभक्तदिनविभागपरो मध्याह्नशब्दः मध्याह्नात् परतः सायङ्कालमित्यर्थः ।

कार्ष्णाजिनिः ।

भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।
श्राद्धकर्म्मणि ये कुर्य्युस्तेषामायुः प्रहीयते ॥

मोहो विपरीतज्ञानम् । अज्ञानमप्रतीतिः । तत्रैवान्वाधानं पिण्डपितृयज्ञश्च योभयत्रापराह्णसम्बन्धा सा तु त्रिप्रकारा तिथिक्षयोपेता वृद्ध्युपेता साम्योपेता चेति । तत्र तिथिक्षय-प्रक्रमे पिण्डपितृयज्ञाधिकारिणामाहिताग्नीनामौपासनाग्नी-नाञ्च भूतविद्धाः । सत्यप्यधिकार उत्सन्नाग्नीनाम् । तथा विधु-राणां स्त्रीणां शूद्राणां प्रतिपन्मिश्रिता ।

तथाच कार्ष्णाजिनिः ।

सिनीवाली द्विजैर्ग्राह्या साग्निकैः पितृकर्म्मणि ।
स्त्रीभिः शूद्रैः कुहुर्ग्राह्या तथा चानग्निकैर्द्विजैः ॥

साग्निरौपासनाग्निरपि तस्यापि पिण्डपितृयज्ञविधानात्तस्य चापराह्णसाध्यत्वात्तिथिक्षये प्रक्रमे च अपराह्णस्पृष्टचतुर्द्दशी-तुरीययामे दर्शघटिकानुप्रवेशात् अपराह्णे तु उत्तरदिनापेक्षया पूर्व्वदिन एवाधिकामावास्यासंसर्गादन्वाधानं विधाय पिण्ड-पितृयज्ञानन्तरमन्वाहार्य्यकं भूतविद्धायामेव कर्त्तव्यम् ।

अनेनैवाभिप्रायेण बौधायनः ।

चतुर्द्दशीचतुर्य्यामे अमा यत्तेन दृश्यते।
श्वो भूते प्रतिपत्तत्र भूते कव्यादिकी क्रिया ॥

अयमर्थः। चतुर्द्दशीचतुर्य्यामे चतुर्द्दश्या उत्तरार्द्धे चतुर्थयामे अपराह्नस्ते अमागणिते न दृश्यते। अपि तु तिथिक्षय-वशादनुप्रविष्टा दृश्यते इति तात्पर्य्यं श्वो भूते परेद्युरपराह्ने प्रतिपद्दृश्यते। तत्र च चतुर्द्दश्यामेवेति अनग्निका उत्सन्नाग्न्या-दयः तेषाञ्चान्वाधानपिण्डपितृयज्ञयोरधिकाराभावात्। कुह्वा-मेव श्राद्धं तिथिवृद्धिप्रक्रमे साम्ये च सर्व्वेषां परैव। यदाह प्रचेताः।

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहुर्मता।
सिनीवाली कुहुश्चैव श्रुत्युक्ते पितृकर्म्मणि ॥
स्यातां ते यदि मध्याह्नाच्छ्राद्धं तत्र कथं भवेत्।
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहुर्मता।
साम्येऽपि* च कुहुर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥

मध्याह्नात्तु स्यातां मध्याह्नादुपरि अपराह्ने भवेतामित्यर्थः। अत्रापि यत्रापराह्ने अधिकः स्पर्शस्तत्रैव प्रातरन्वाधानं यदा त्वपराह्नाधिकसंस्पर्शवशात्पूर्व्वविद्धायां परविद्धायां वा पिण्ड-पितृयज्ञदर्शश्राद्धप्राप्तिः। अथच पर्व्वकालनिर्णयवशात्पिण्ड-पितृयज्ञदर्शश्राद्धकालव्यतिक्रमेऽन्वाधानस्य तदा कर्म्मद्वयानु-रोधाद्यत्र पिण्डपितृयज्ञदर्शश्राद्धे तत्रैवान्वाधानं बहूनामनु-

---

* लम्बितायाम्।

ग्रहो न्याय्य इति न्यायेनानेकानुग्रहस्य न्याय्यत्वात्। तथाच पर्व्वद्वितीयांशानुष्ठानप्राप्तौ न विरोधः एवञ्च पर्व्वद्वितीयांशे यागनिषेधवचनान्येवंविधस्थलव्यतिरिक्तविषये योज्यानि, पराह्नसंवर्द्धिनीति चतुर्थः पक्षः सा तु सर्व्वेषां परैव तत्रापराह्न-उभयत्राव्यापित्वेऽपि कुतपकालसंबन्धित्वात्।

तथाच हारीतः।

भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा।
पित्र्ये कर्म्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी॥

इति श्लोको गौतमेनाप्यभिहितः।

पूर्व्वाह्णे चेत्प्रतिपदो भूते सायमनापदि।
आरभ्य कुतपे श्राद्धं रौहिणं नैव तत्त्यजेत्*॥

प्रतिपदि पूर्व्वाह्णे कुतपे सायङ्काल एव नापराह्णे तदा प्रतिपदि कुतपकालसम्बन्धात्तत्कुतपे श्राद्धमारभ्य कुर्य्याद्रौहिणन्तु न लङ्घयेदिति तात्पर्य्यार्थः। कुतप उदयमारभ्याष्टमो मुहूर्त्तः।

आपस्तम्बस्तु प्रकारान्तरेणाह।

कुतपाद्यान्मुहूर्त्तांस्त्रीन् यदा चरति भास्करः।
स कालः कुतपस्तत्र पितॄणां दत्तमक्षयम्॥ इति।

ननु पूर्व्वोक्तेषु पक्षेषु क्वचिद्भूतविद्धापि पिण्डपितृयज्ञादौ गृहीता।

* नैव लङ्घयेदिति पाठान्तरम्।

सा च न युक्ता, तत्र चन्द्रदर्शनासम्भवात् चन्द्रादर्शने च पितृयज्ञो विहित आपस्तम्बेन । अमावास्यायां यदहश्चन्द्रमसं न पश्यतीति उच्यते । अदर्शनं नाम कलाक्षयश्चन्द्रस्य न चक्षुर्व्यापारागोचरत्वं तथा सति उदयादूर्द्ध्वं प्रहरमात्रचतुर्द्दशीव्याप्तावपि चन्द्रस्य चक्षुर्गोचरत्वात्, तत्र पिण्डपितृयज्ञादि न स्यात् तथाचापराह्ले पिण्डपितृयज्ञादिविधायकवाक्यविरोधः प्रसज्येत अतोऽदर्शनशब्दः क्षयपरः ।

तथाच कात्यायनः ।

पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।

इति क्षयोऽपि कदा भवतीत्यपेक्षायां स एव ।

अष्टमेंऽशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे च पुनः* किल भवेदनु ॥

अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते
चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्न-
एवं ज्योतिश्चक्रविदो वदन्ति ॥

आग्रहायणीमार्गशीर्षामावास्याद्ये प्रहरे अमावास्यायास्तदन्ते अमावास्यान्ते । अत्र केचिदेवं वर्णयन्ति । आग्रहायणीज्यैष्ठामावास्ययोः परेद्युरपराह्णव्यापित्वे पूर्व्वेद्युरपराह्णाव्यापित्वेऽपि परेद्युरेव पितृयज्ञादिकमिति, तदयुक्तं अपराह्णः पितृणामिति

---

* तत इति देशान्तरीयः पाठः ।

श्रुत्या विरोधात्। तथामावास्यायामपराह्णे पिण्डपितृयज्ञ-इत्याश्वलायनादिवचनान्यपि विरुध्येरन् पूर्व्वदिने तु नश्रुत्यादि-विरोधः। अथच त्रयोऽपि न सम्पूर्णकालोऽस्ति चतुर्थभागोन-कालावशिष्टः। अपरे तु त्रयशब्दस्य सङ्कोचमात्रमेव। वाक्य-विरोधापेक्षया च सङ्कोचः श्रेयान् तर्हि ज्योतिःशास्त्रे आग्रहा-यण्यां ज्यैष्ठ्याञ्च चन्द्रत्रयम्प्रति विशेषोक्तिः किमर्थेति चेत् उच्यते। अन्यमासेषु द्वितीयाया आद्यतृतीयमुहूर्त्तचरमभागे चन्द्रदर्शनं भवति। मार्गशीर्षज्यैष्ठयोस्तु तथा न किन्तु अमावास्याष्टमांशे क्षीणत्वात्। द्वितीयाया आद्यतृतीयमुहूर्त्ता-नन्तरं चतुर्थपञ्चमादिमुहूर्त्तेषु चन्द्रदर्शनमित्येतत्प्रतिपादनार्थं ज्योतिःशास्त्रस्य कालग्रहवारादिविषयत्वात्। श्राद्धकर्म्म-विधिप्राधान्याभावाच्च अयं सङ्गृहीतार्थः। यत्र पूर्व्वोक्त-रीत्या भूतविद्धा श्राद्धादिषु ग्राह्या। तद्व्यतिरिक्तविषयाणि भूतविद्धायामन्वाधानपिण्डपितृयज्ञदर्शश्राद्धनिषेधकवाक्यानि यत्रोक्तरीत्या प्रतिपन्मिश्रितायामन्वाधानादीनि न व्यति-रिक्तविषयाणि, प्रतिपद्विद्धायाममावास्यायामन्वाधानादि-निषेधकानि वाक्यानि तानि व्यतिरिक्ताव्यतिरिक्तपरतया नेयानि।

यत्तु हारीतवचनम्।

कन्यामकरमीनेषु तुलायां मिथुने तथा।
भूतविद्धा तु सर्व्वेषां पूज्यते इति यत्नतः॥ इति।

तद्व्रतविषयम्। अतएव जावालिः।

तुलामकरमीनेषु* कन्यायां मिथुनेऽथवा ।

भूतविद्धा व्रते ग्राह्या† शेषेषु प्रतिपद्युता ॥ इति ।

अमावास्यायामिव अष्टकामन्वन्तरयुगाद्यपरपक्षेऽपि श्राद्धकालनिर्णयो विज्ञेयः । अत्र पिण्डपितृयज्ञाभावात्कुतप एव श्राद्धस्योपक्रमः । अमावास्यायां त्वपराह्णे पिण्डपितृयज्ञादनन्तरं दर्शश्राद्धम् । यानि च शुक्लपक्षश्राद्धानि पौर्णमास्यां वैशाखतृतीयादिषु च विहितानि । तानि कुतपकालप्राधान्येनानुष्ठेयानि, यदुक्तं भवति । यथामावास्यायामपराह्णे प्राधान्येन तिथिः क्षये पूर्व्वा‡ वृद्धौ साम्ये च परा§ तत्राप्यल्पत्वमहत्त्वाभ्यां निर्णयः । एवं कुतपप्राधान्येन निर्णयः इति ।

अनेनैवाभिप्रायेण मार्कण्डेयः ।

शुक्लपक्षस्य पूर्व्वाह्णे श्राद्धङ्कुर्य्याद्विचक्षणः ।

कृष्णपक्षेऽपराह्णे तु रौहिणन्तु न लङ्घयेत् ॥ इति ।

अत्र पूर्व्वाह्णशब्दो द्वेधाविभक्तस्यापराह्णस्य पूर्व्वभागपरः । यद्यप्यत्र सामान्येन पूर्व्वाह्ण इत्युपात्तं तथापि ।

पित्रे कर्म्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी । इति ।

पैतृककर्म्ममात्राङ्गत्वात् कुतपकालस्य तत्संसृष्ट एव पूर्व्वाह्णान्त्यभागो ग्राह्यः आवर्त्तनसन्निकृष्टकालः । शुक्लपक्षः श्राद्धोपक्रमेऽङ्गमित्यर्थः । मध्याह्नोऽपि कुतपः ।

तथाच स्मर्य्यते ।

---

* तुलायां मकरे मीने इति पाठान्तरम् । † कार्य्येति पाठान्तरम् । ‡ भूतविद्धा । § प्रतिपद्युक्ता ।

कुं यत्र गोभिः कार्त्स्न्येन गोपतिस्तापयेत् घृणी* ।
स कालः कुतपो नाम यत्र श्राद्धं प्रदीयते ॥ इति ।

## अथ मृताहकालः ।

तत्र सौम्य†सौरादिभेदेन भिन्नत्वात्कुत्र को मासो ग्राह्यः इत्याकाङ्क्षायाम्

यमः ।

विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्य्येऽपि चान्द्रो मासः प्रशस्यते ॥

स्कन्दपुराणे ।

अभ्युदये‡ रवेर्मासश्चान्द्रः स्यात्पितृकर्म्मणि ।
यज्ञे सावनमित्याहुरार्क्षं सर्व्वव्रतेषु च ॥

आर्क्षं नाक्षत्रं नक्षत्रविशेषे प्रतिमाससाध्यव्रतेष्वित्यर्थः । आद्य-श्लोकस्यायमर्थः । यज्ञादौ माससंवत्सरसाध्ययज्ञव्रतप्रायश्चित्तक्रियादिषु । माससाध्ययज्ञे मासं दर्शपौर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन कौण्डपायिनामयनं मासमग्निहोत्रं जुहोतीत्यादि वाक्यैर्विहिताः । माससाध्यानि व्रतानि मासोपवासादीनि माससाध्याः प्रायश्चित्तक्रियाः ।

---

* कुं पृथ्वीं गोत्रा कुः पृथिवी पृथ्वीत्यमरात् । गोभिरातपैः स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले इत्यमरात् । गोपतिः सूर्य्यः । † मासस्येति पाठान्तरम् । सौम्यश्चान्द्रः ।
‡ विवाहादौ ।

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः ।

इति वचनैर्विहिताः । संवत्सरसाध्ययज्ञा गवामयनादि* सात्त्विकसत्त्रयागाः । संवत्सरसाध्यानि व्रतानि अजस्य तु नाश्नीयादित्यादिश्रुतिविहितानि । अजः संवत्सरः । अत्र अनशनमोदनादेर्न पयःप्रभृतीनाम् । संवत्सरसाध्या प्रायश्चित्त-क्रिया द्वादशवार्षिकाद्या । आब्दिके सांवत्सरिके पितृकार्य्ये षाण्मासिकश्राद्धादौ । अपिशब्दाद्यज्ञादिव्यतिरिक्तमाससंवत्सर-साध्यदैवकार्य्ये ।

तथाच पितामहः ।

दैवे कर्म्मणि पित्र्ये च मासश्चान्द्रमसः स्मृतः ।

एषाञ्च मासानां भेदो ब्रह्मसिद्धान्तेऽभिहितः ।

दर्शाद्दर्शान्तश्चान्द्रः, त्रिंशद्दिवसस्तु सावनोमासः ।
रविसंक्रान्तिकचिह्नः सौरो मासो निगद्यते तज्ज्ञैः ॥
चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥

सावनाद्यहोरात्रव्यवस्था ब्रह्मसिद्धान्ते ।

सावनः स्यादहोरात्रमुदयादुदयाद्रवेः ।
सौरं त्रिंशत्तु राश्यंशस्तिथिसम्भोगमैन्दवम् ॥

यावता कालेन रविर्मेषादिराशीनां त्रिंशमंशं भुङ्क्ते स कालः सौराहोरात्रश्चन्द्रस्य प्रतिपदादितिथिसम्भोगपरिमितः काल-

* सात्त्विकसत्त्राणि गवामयनादीनि माससंवत्सरसाध्यानीत्याहुः ।

चान्द्राहोरात्र इत्यर्थः। एवं प्रासङ्गिकं परिसमाप्य प्रकृत-मनुसरामः।

क्षयाहे विशेषः स्मृत्यन्तरे।

मासपक्षतिथिस्पृष्टे यस्मिन्योम्रियतेऽहनि।

प्रत्यब्दन्तु तथाभूतं क्षयाहं तस्य तं विदुः॥ इति।

तिथिश्चान्द्रोऽहोरात्रः सा च यदा शुद्धा तदा न संशयः। यदा तु विद्धा तदा यत्र सायाह्ने त्रिमुहूर्त्तव्यापिनी मृततिथिः सा ग्राह्या।

तदाह गोभिलः।

द्व्यहन्तु व्यापिनी चेत्स्यान्मृताहस्य* यदा तिथिः।

पूर्व्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद्यदि॥

सायं त्रिमुहूर्त्ता इत्यर्थः।

यत्तु कार्ष्णाजिनिनोक्तम्।

अथास्तमनवेलायां कलामात्रापि या तिथिः।

सैव प्रत्याब्दिके ज्ञेया नापरा पुत्रहानिदेति॥

तत्तु पूर्व्वविद्धाप्रशंसनार्थम्। कलामात्रापि ग्राह्या किमुत त्रिमुहूर्त्तेति।

यत्तु।

दिनान्ते पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः।

उदये च तथा पित्र्ये दैवे चैव तु कर्म्मणि॥ इति।

तत्तु सायङ्कालीनपञ्चनाड़ीनां पुण्यत्वम्प्रतिपादयति न तु

---

* मृतदिनसम्बन्धिनीत्यर्थः।

षष्ठनाद्धा अपुष्यत्वप्रतिपादनपरम् ।

नारदीयपुराणे ।

पारणे मरणे नृणां तिथिस्तात्कालिकी मता ।
पित्रेऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ॥

अस्तमयवेलायां सायङ्काले मुहूर्त्तत्रययुक्तेत्यर्थः ।

श्रुतिरपि ।

तस्मात्पितृभ्यः पूर्व्वेद्युः क्रियत इति ।

तथा ।

पूर्व्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणाम् । इति ।

त्रिधा विभक्तस्याह्नस्तृतीयभागात्मकेऽपराह्णे मुहूर्त्तत्रयव्यापित्वादपराह्णसम्बन्धापि सा तिथिर्भवति ।

सा तिथिः सकलाः ज्ञेया यस्यामस्तङ्गतो रविः । इति ।

एकदेशव्यापित्वे सम्पूर्णत्वमस्तीति कृत्वा कुतप एवोपक्रमस्तस्य सकलपितृश्राद्धशेषत्वादेवं यानि च पूर्व्वविद्धाप्रापकानि तानि त्रिमुहूर्त्तविद्धाविषयाणि ज्ञेयानि, यदा पूर्व्वेद्युः सायङ्काले मुहूर्त्तत्रयव्यापित्वं नास्ति तदा परविद्धैव ग्राह्या ।

तथाच गोभिलः ।

त्रिमुहूर्त्ता न चेद्ग्राह्या परैव कुतपे हि सा । इति ।

यदा पूर्व्वेद्युः सायाह्ने त्रिमुहूर्त्तव्यापिनी तिथिः ह्रासवशात् परेद्युरस्तमयगामिनी चेदपि परेद्युरेव तत्र कुतपास्तमययोः सम्बद्धत्वात् ।

तथाच मरीचिः ।

ह्यपराह्णव्यापिनी* स्यादाब्दिकस्य यदा तिथिः ।
महती यत्र तद्विद्धां† प्रशंसन्ति महर्षयः ॥

यत्र सायङ्काले पूर्व्वेद्युस्त्रिमुहूर्त्तव्यापिनी परेद्युः सायङ्काले-ऽपि वर्त्तते न त्वस्तमनसमये तदा पूर्व्वेद्युः ।

यदाह नारदः ।

दर्शञ्च पौर्णमासञ्च पितुः सांवत्सरं दिनम्‡ ।
पूर्व्वविद्धामकुर्व्वाणो नरकं प्रतिपद्यते ॥ इति ।

यत् शृङ्गग्राहिकतया§ मृततिथेरस्तमयसम्बन्धाया एवोपादानं कृतमप्यस्तमयवेलायामित्यादिभिर्वचनैः¶ । अतः पूर्व्वेद्युरेव युक्तम् । अयञ्च सामान्यनिर्णयः विशेषस्तु कालनिर्णये द्रष्टव्यः एवं षाण्मासिकादिष्वपि विज्ञेयम् । तेषामपि मृतस्य सदृशपक्ष स्पृष्टतिथिकर्त्तव्यत्वाविशेषात्‖ । एकोद्दिष्टे त्वयं विधिविशेषो मध्यन्दिन उपक्रमः कर्त्तव्यः इति ।

तथाच स्मर्य्यते ।

पूर्व्वाह्णे दैविकङ्कर्म्म अपराह्णे तु पैत्रिकम् ।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥ इति ।

यानि च मृताहव्यतिरिक्तान्यापरपक्षिकरूपाणि** श्राद्धादीन्य-

---

* उभयदिने अपराह्णव्यापिनी । † पूर्व्वविद्धाम् । ‡ सांवत्सरी तिथिः । § महिषस्य शृङ्गं धृत्वा एकं एकं गृहे प्रवेशयति इति शृङ्गग्राहिक इति । ¶ ययास्तं सविता याति पितरस्तामुपासते । तिथिस्तेभ्योऽपराह्णे हि स्वयं दत्तः स्वयम्भुवा ॥ इत्यादिवचनैरित्यर्थः । ‖ मृतसजातीयपक्षसम्बन्धितिथिकर्त्तव्यत्वाविशेषादित्यर्थः । ** कालानीति पाठान्तरम् ।

कोद्दिष्टानि* शस्त्रहतस्य चतुर्द्दश्येकोद्दिष्टं श्राद्धञ्च तानि मध्याह्नकालस्याप्रधानत्वात्तत्कालाधिकस्य† स्पर्शवत्यां प्रतिपदादितिथौ‡ कर्त्तव्यानि तेषां मृतसद्दशपक्षस्थतिथिकर्त्तव्यतानियमस्याभावात् नियमाभावश्च शुक्लपक्षस्य§ चतुर्द्दशीव्यतिरिक्ततिथिस्तस्यापि तत्र¶ श्राद्धकरणात्। मृततिथेरेव सायाह्ने त्रिमुहूर्त्तव्यापिन्या वचनोपात्तत्वात् पूर्व्वोक्तैव व्यवस्था यत्रोभयत्र मध्याह्नकालसंस्पर्शाभावस्तत्र पूर्व्वेद्युरेव पितृकार्य्ये पूर्व्वविद्धायाः प्रशस्तत्वात्। मृताहकालनिर्णयप्रसङ्गाद्ग्रहणदिने श्राद्धिकप्राप्तौ विशेषोऽभिधीयते। तत्र यदा ग्रहणदिने सांवत्सरिकप्राप्तिः तदान्नासम्भवे आमेन तदसम्भवे‖ हेम्ना कुर्य्यात्।

तदाह गोभिलः।

दर्शे रविग्रहे पित्रोः प्रत्यब्दं** समुपस्थितम्।
अन्नेनासम्भवे हेम्ना कुर्य्यादामेन वस्तुतः†† ॥ इति।

अत्र दर्शरविपितृसुतशब्दाः प्रदर्शनार्थाः न्यायस्य समानत्वात्। अतश्चन्द्रग्रहणेऽप्यावश्यकपिण्डाद्युद्देशेन श्राद्धाधिकारिणा आमश्राद्धादिकङ्कर्त्तव्यम्। एवं मासिकेऽपि ज्ञेयः।

एवञ्च।

---

* बहुषु पुस्तकेषु दर्शनादिष पाठो रचितः परन्तु पार्व्वणानीति पाठो भवितुमर्हति इति। † अपराह्णकालस्य। ‡ प्रतिपत्प्रभृत्यपरपक्षसम्बन्धितिथौ। § शुक्लपक्षविहितपार्व्वणस्येत्यर्थः। ¶ मध्याह्नकाले। ‖ आमान्नासम्भवे। ** प्रत्याब्दिकमिति पाठान्तरम्। †† वा सुत इति पाठान्तरम्।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।
अमावास्यान्तु कर्त्तव्यं* माससंवत्सरादृते ॥ इति

मासिकसांवत्सरिकविषये योऽयमामश्राद्धनिषेधः स ग्रहण-व्यतिरिक्तविषयः ।

मृताहप्राप्ते यस्य भार्य्या रजस्वला भवति स तस्मिन्नेव दिनेऽन्नेनैव श्राद्धङ्कुर्य्यान्नामेन कालान्तरेण वा ।

यच्च स्मृत्यन्तरम् ।

आब्दिके समनुप्राप्ते यस्य भार्य्या रजस्वला ।
पञ्चमेऽहनि तच्छ्राद्धं न कुर्य्यात्तन्मृतेऽहनि ॥ इति ।

तद्भर्त्तुः प्रत्याब्दिके अपुत्त्रा पत्नी स्वयमेव कर्त्त्री यदि रजस्वला भवेत्तद्विषयमेतत् ।

अपुत्त्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके ।
रजस्वला भवेत्सा तु कुर्य्याच्च पञ्चमेऽहनि ॥

इति गौतमस्मरणात् ।

## अथ मृताहापरिज्ञाने कालः ।

तत्र बृहस्पतिः ।

न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि ॥

---

* नियतमिति पाठान्तरम् ।

मृतेऽहनि मृतदिने यत्कर्त्तव्यं तत्प्रतिविज्ञाते दर्शे विज्ञातमासामावस्यायां कर्त्तव्यमित्यर्थः ।

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु ।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत् ॥
दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्व्वोक्तया दिशा ॥

अत्र दिनशब्दस्तिथिपरः ।

मरीचिः ।

श्राद्धविघ्ने समुत्पन्ने चाविज्ञाते मृतेऽहनि ।
कुर्य्यादन्नेन कृष्णायामेकादश्यां विधुक्षये ॥

श्राद्धदिने भ्रमादिना* सांवत्सरिकमासिकविघ्ने तत्तिथ्यतिक्रमे जाते तदनन्तरभाविकृष्णैकादश्यां दर्शे वा कर्त्तव्यमित्यर्थः । अशौचेन मृतकेन† वा श्राद्धविघ्ने सत्यशौचादिके व्यतीते कर्त्तव्यम् । तत्राप्यकरणे तदनन्तरं कृष्णैकादश्यां दर्शे वा कर्त्तव्यम् ।

तथा च ऋष्यशृङ्गः ।

देये पितॄणां श्राद्धे तु अशौचं जायते यदि ।
अशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते‡ ॥

यत्तु स्मृत्यन्तरम् ।

---

* प्रमादादिनेति क्वचित्पाठः । † सूतक इति पाठान्तरम् । ‡ तदशौचे व्यतीते तु तेषां श्राद्धं विधीयत इति ग्रन्थान्तरीयः पाठः ।

यदहश्चेत्प्रदुष्येत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्य्यात्पुनस्तदहरेव च ॥ इति ।

एतच्च सूतकानन्तरं प्रमादादिना अकरणे मासान्तरे तदहोऽपि कालः इति प्रदर्शनार्थं अतस्तदहरेकादशी दर्शश्चेति गौण-कालस्तत्र प्रत्यासन्नकालो ग्राह्य इति विवेकः ।

## अथामश्राद्धकालनिर्णयः ।

तत्र ।

आत्मनो देशकालानां विप्लवे समुपस्थिते ।
आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि इति ॥

द्विजस्य देशविप्लवादिषु शूद्रस्य तु सर्व्वदामश्राद्धाधिकारः । एतदुक्तं भवति शूद्रस्यामश्राद्धं नित्यं द्विजस्य नैमित्तिकमिति नित्यत्वे चैवम् ।

भार्य्यारतः शुचिर्भृत्यो भर्त्ता श्राद्धक्रियापरः ।

इत्यादिवचनैः शूद्रस्य श्राद्धाधिकारे सत्यपि सुमन्तुना

न पक्वं भोजयेद्विप्रान् शूद्रोऽपि स कदाचन ।
भोजयन्प्रत्यवायी स्यान्न च तस्य फलं भवेत् ॥ इति

ब्राह्मणभोजने निषिद्धे कथं तर्हि श्राद्धप्रयोग इत्यपेक्षायां

आमश्राद्धं द्विजैः कार्य्यं शूद्रः कुर्य्यात्सदैव तु ।

इत्यनेन शूद्रस्य आमान्नगुणो विधीयते अथवा ब्राह्मणभोजने निषिद्धे अर्थाद्भोजनोपयुक्तं सन्निहितमामान्नमेव प्राप्तमिति

गुणस्यामान्नस्य प्राप्तत्वात् अनुद्यते शूद्रः कुर्य्यात्सदैव हीत्यतः शूद्रस्यामश्राद्धं नित्यं तथोच्यते। ब्राह्मणभोजनं तावन्निषिद्धं निषेधश्च प्राप्तिपूर्व्वकः प्राप्तिश्च विधिपूर्व्विका एवञ्च विधिनिषेधयोः शास्त्रगम्यत्वात् षोड़शीग्रहणाग्रहणवद्विकल्पः। तथाच पक्वे भोजनं पक्ष आमान्नमिति न नित्यत्वमिति नैतत्सारम्। रागतः प्राप्तस्यापि कलञ्जभक्षणादेर्निषिद्धत्वाद्यदि रागतः प्राप्तावपि विकल्पः कलञ्जभक्षणमपि विकल्पेत तस्मात्साधूक्तं शूद्रस्यामश्राद्धं नित्यमिति। एवं नित्यत्वे सिद्ध आमश्राद्धन्तु पूर्व्वाह्ण इति शातातपवचनं शूद्रकर्त्तृके नित्ये द्विजकर्त्तृके वाऽनित्ये आमश्राद्धे पूर्व्वाह्णकालस्याङ्गत्वं बोधयितुं नालं नित्यानित्यसंयोगविरोधात्। तस्मादनित्ये द्विजकर्त्तृकेऽवतिष्ठते। नित्ये तु श्राद्धाङ्गभूतापराह्णसम्बन्धत्वादपराह्णे कर्त्तव्यम्।

अनेनैवाभिप्रायेण शातातपेनोक्तम्।

मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः।
आममात्रेण तत्रैव पितॄणां दत्तमक्षयम्॥ इति।

अतः शूद्रोऽपराह्णे द्विजः पूर्व्वाह्णे एवं व्यवस्थायां शातातपवचनयोरेव परस्परविरोधोऽपि परिहृतः स्यात् यस्त्वमावास्यां पिण्डपितृयज्ञाधिकारी द्विजस्तस्य पिण्डपितृयज्ञकालानुरोधेन पिण्डान्वाहार्य्यकमामश्राद्धमप्यपराह्ण एव न पूर्व्वाह्णे। एवञ्च यत्कैश्चिदुक्तं शूद्रोऽप्यपराह्णे कुर्य्यादिति तच्चिन्त्यं तद्यथा तत्रैवं वर्णयन्ति शूद्रकर्त्तृकामश्राद्धे पूर्व्वाह्णकालो विधीयते।

प्रवासादिनिमित्तद्विजकर्तृकामश्राद्धे तु अतिदेशतः पूर्वाह्णकालप्राप्तिरिति तदयुक्तं शूद्रकर्तृकानित्यामश्राद्धे सामान्यतः प्राप्तापराह्णकालपरित्यागः अप्राप्तपूर्वाह्णस्वीकारः। द्विजकर्तृकानित्यामश्राद्धे अतिदेशतः पूर्वाह्णकालस्वीकार इति व्यापारत्रयम्। अस्माकं त्वनित्यद्विजकर्तृकामश्राद्धे पूर्वाह्णकालस्योपदेश एव स्वीकार इति महद्वैषम्यं तस्मादस्मदुक्तरीतिरेवानुसरणीया। एतच्च यस्मिन्दिने अमावस्यादिश्राद्धं विहितं तत्रैव पूर्वाह्णे यदा तिथेर्दिनद्वयसम्बन्धस्तदा कुतपकालीनन्यूनाधिकसम्बन्धवशान्निर्णयः। कुतपस्य पितृश्राद्धाङ्गत्वात्तत्सन्निहितत्वात्पूर्वाह्णस्य।

यत्तु व्याघ्रवचनं।

कालाश्रातस्तनादूर्ध्वं त्रिमुहूर्त्ता तु या तिथिः।
आमश्राद्धं तत्र कुर्य्यात्त्रिमुहूर्त्तापि वा भवेत्॥

एतदपि प्रातःकालानन्तरं त्रिमुहूर्त्तमध्ये वा कर्त्तव्यताप्रतिपादनपरम्। न त्वमावास्यादितिथेस्तावन्मात्रत्वेऽपि तत्रैव कर्त्तव्यतापरम्। तथा सति पूर्वेद्युः पूर्वाह्णकुतपादिस्पर्शे सत्यपि परेद्युरेव श्राद्धसक्तेः*। तथाचानेकवाक्यविरोधः। तस्मात्पूर्वोक्ता व्यवस्था।

अथ श्राद्धकालप्रसङ्गादावश्यकनित्यनैमित्तिकश्राद्धासम्भवे प्रत्याम्नातम्।

---

* श्राद्धप्रसक्तेः।

तत्रैव देवलः ।

यदैव तर्पयेदद्भिराहिताग्निर्दिने पितॄन् ।
तेनैव समवाप्नोति* दर्शिकादिक्रियाफलम्† ॥
पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धाहनि तु सम्प्राप्ते भवेन्निरशनोऽपि वा ॥

निरशनत्वञ्च पिण्डदानासम्भवे ।

पात्राभावे परङ्कृत्वा पितृयज्ञविधिं नरः ।
निर्द्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो गतिः ॥

पितृयज्ञविधिं श्राद्धविधिमत्र सङ्कल्पपर्य्यन्तं यत्र पात्रं ब्राह्मणस्तं देशं प्रति तदन्नं नीत्वा तस्मै दद्यादित्यर्थः ।

सर्व्वाभावे क्षिपेदग्नौ गवे दद्यादथाप्सु वा ।
न तु प्राप्तस्य लोपोऽस्ति पितृकस्य विशेषतः ॥

सर्व्वाभावे तूत्तममध्यमरूपपात्राभावे ।

वृद्धवशिष्ठः ।

अग्निना वा दहेत्कच्चं श्राद्धकाले समागते ।
तस्मिन्नोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् ॥

विष्णुपुराणे ।

सर्व्वाभावे वनं गत्वा कक्षामूलं प्रदर्शयन्‡ ।

---

* यदैव तर्पयेदद्भिराहिताग्निर्दिने दिने । पितॄंस्तेनैव वाप्नोति इति पाठान्तरम् ।
† दर्शश्राद्धजन्यफलमित्यर्थः । ‡ निर्धनत्वख्यापनार्थमूर्द्ध्वबाहुरिति विष्णुपुराणटीकायां श्रीधरस्वामी ।

सूर्य्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं न चान्यत्
श्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ
भुजौ कृतौ वर्त्मनि मारुतस्य ॥
इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम् ।
यः करोति कृतन्तेन श्राद्धं भवति पार्थिव ॥

भावाभावौ द्रव्यब्राह्मणादिसद्भावौ । एषु पक्षेषु द्रव्यशक्त्याद्यपेक्षया विकल्पः ।

अथापरपक्षविषयं किञ्चिल्लिख्यते । याज्ञवल्क्यवचनेऽभिहितान्यमावास्याश्राद्धादीनि कानिचिन्नित्यानि कानिचिन्नैमित्तिकानि इत्यावश्यकानि एतान्येव फलसंयोगात्काम्यानि । अतोऽग्निहोत्रादि यदुभयात्मकानि तत्र कृष्णपक्ष इत्यनेन सामान्येन सकलापरपक्षाणां श्राद्धकालाविशिष्टेऽपि भाद्रपदापरपक्षविशेषोऽभिधीयते ।

तत्र ब्रह्माण्डपुराणे ।

कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥

शुक्लपक्षप्रतिपदमन्तर्भाव्य षोडशसंख्यापूरणम् ।

तथा ।

अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्य्यं दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागन्त्वर्द्धमेव वा ॥

अश्वयुक्कृष्णपक्ष इति पौर्णमास्यान्तमासाभिप्रायः। दिने दिने प्रतिदिनं समस्तेऽपि पक्षे इत्यर्थः। त्रिभागहीनं पञ्चमी-मारभ्य कर्त्तव्यमित्यर्थः। आद्यास्ततस्तिथयश्चतुर्द्दशी चेति पञ्च हीयन्ते अतस्त्रिभागहीनता। एवं त्रिभागपक्षादिषु त्रिभागं दशमीमारभ्य अर्द्धमष्टमीमारभ्य दात्वशक्त्यपेक्षया विकल्पः*।

यमः।

आषाढ़ीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्।
तत्र श्राद्धं प्रकुर्व्वीत कन्यास्थोऽर्को भवेन्न वेति॥

कदाचिन्मलमासापरपक्षोऽपि पञ्चमो भवतीति तत्रापि श्राद्ध-प्रसक्तौ

भृगुः।

एकराशिस्थिते सूर्य्ये यदा दर्शद्वयं भवेत्।
हव्यकव्यक्रिया हन्ता तदा ज्ञेयोऽधिमासकः॥
वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम्।
राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घति॥

महालयमपरपक्षिकश्राद्धम्। यदुक्तं यमेन। कन्यास्थोऽर्को भवेन्न वेति तत्पक्षोपक्रमाभिप्रायम्। अतः पक्षस्यादिमध्याव-सानेषु क्वचन कन्यागतान्वयेन भवितव्यम्।

---

* गौड़देशीयस्मार्त्तप्रभृतयस्तु अन्यथा आहुः त्रिभागं षष्ठादिदशतिथिः। अर्द्ध-शब्देन त्रिभागस्यार्द्धमेकादश्यादिपञ्चतिथिः त्रिभागं त्रयोदश्यादितिथित्रयम् एवं पूर्व्वपूर्व्व-कल्पकरणे फलभूयस्त्वम्।

अनेनाभिप्रायेण शाट्यायनिः ।

नभस्यस्यापरे पक्षे तिथिषोड़शकन्तु यत् ।
कन्यागतान्वितं चेत्स्यात्स कालः श्राद्धकर्म्मसु ॥ इति ।

कार्ष्णाजिनिः ।

आदौ मध्येऽवसाने वा यत्र कन्यां व्रजेद्रविः ।
स पक्षः सकलः पूज्यः श्राद्धषोड़शकं प्रति ॥

अत्र षड्दैवत्यं श्राद्धम् ।

तदाह गौतमः ।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत् ॥

महालये मातृश्राद्धं पृथग्वा सह वा भवति अतएवापरार्कें गयामहालयादौ तु पृथक् सह वा स्वभर्त्तृभिरिति सिद्धमिति स्मृत्यर्थसारेऽपि । तत्र मातृश्राद्धं महर्षय इति ।

तत्रापरपक्षे चतुर्व्विंशतिमतेऽपि ।

केचिदिच्छन्ति नारीणां पृथक् श्राद्धे महर्षयः ।

इत्यन्वष्टकादिषु मातृश्राद्धं पृथगेव कुर्य्यादिति नियमः ।

तथाच शातातपः ।

अन्वष्टकायां वृद्धौ च प्रतिसंवत्सरन्तथा ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥

तथा ।

अन्वष्टकासु वृद्धौ च गयायाञ्च मृतेऽहनि ।
मातृश्राद्धं पृथक्कुर्य्यादन्यत्र पतिना सह ॥

शङ्खः ।

अन्वष्टकामातृश्राद्धं वृद्धौ चैव मृतेऽहनि ।
एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत्पृथग्भवेत् ॥

एकोद्दिष्टशब्देन प्रेतत्वविमुक्त्यापादकषोड़शश्राद्धं सपिण्डीकरणसहितमुच्यते। नन्वष्टकादीन्येकोद्दिष्टानि कार्य्याणीत्यभिधीयते । तत्र विश्वेदेवपूर्व्वकश्राद्धविधानादत्रापरपक्षे आचार्य्याद्युद्देशेन एकस्मिन्दिने क्रमेण वा श्राद्धं कर्त्तव्यम् ।

तथा चतुर्व्विंशतिमते ।

आचार्य्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च ।
तत्पत्नीभ्यश्च सर्व्वाभ्यस्तथैव च जलाञ्जलीन् ॥
पिण्डं तेभ्यः सदा दद्याद्दद्याद्भाद्रपदे नरः ।
तीर्थेषु चैव सर्व्वेषु माघमासे मघासु च ॥
एकस्मिन् ब्राह्मणे सर्व्वानाचार्य्यादीन् प्रपूजयेत् ।
दश द्वादश वा पिण्डान्दद्यादकरणं न तु ॥
नैयोगिको विधिर्नूनं पक्षे वै पञ्चमे स्मृतः ।
तस्मिन्दत्तं हविर्नूनं पितॄणामक्षयं भवेत् ॥

एकस्मिन् ब्राह्मण इत्येतदसमर्थविषयम् । यदैकस्मिन्नेव दिने तदा त्वेक एव पाकः ।

तथा भृगुः ।

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा कुर्य्याच्छ्राद्धं पृथक् पृथक् ॥
पूर्व्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।

तृतीयस्य ततः कुर्य्यात्सन्निपातेष्वयं क्रमः ॥ इति ।
सन्निपात एकस्मिन् समये नानाश्राद्धकर्त्तव्यताप्राप्तिः । एतेषामेकोद्दिष्टमेव ।

तथाच सुमन्तुः ।

सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ।
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्व्वणम् ॥

## अथ काम्यकालः ।

तत्र मनुः ।

कुर्व्वन् प्रतिपदि श्राद्धं सुरूपाँल्लभते सुतान् ।
कन्यकान्तु द्वितीयायां तृतीयायान्तु वन्दिनः ॥
पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यूतं कृषिञ्चापि सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ।
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥
एकादश्यां तथा रूप्यं ब्रह्मवर्च्चस्विनः सुतान् ।
द्वादश्यां जातरूप्यञ्च रजतं कुप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्द्दश्याञ्च कुप्रजाम् ।
प्रीयन्ते पितरश्चास्य ये शस्त्रेण हता रणे ॥
पञ्चम्यादिविनिर्दिष्टान्विपुलान्मनसः प्रियान् ।

श्राद्धदः पञ्चदश्यान्तु सर्व्वकामान्समश्नुते ।

वन्दिनः स्तुतिपाठकास्तद्वन्तीत्यर्थः । द्यूतं द्यूतविजयं जातरूप्यं हेम । कुप्यं सुवर्णरजतव्यतिरिक्तताम्रादि, पञ्चतिः प्रतिपत् । तदादितिथिष्वभिहितानि फलानि तेषु स्वीयमनोऽभीष्टानि सर्व्वान् कामानमावास्याश्राद्धात्प्राप्नोतीत्यर्थः । अत्र यद्यपि सर्व्वत्र कामप्राप्तिरविशेषेण कथिता, तथापि न युगपत्सर्व्व-कामनाप्राप्तिरपि तु पञ्चदश्यामनुष्ठितेन श्राद्धेनैकेनैककाम-एव ममावास्यान्तरानुष्ठितेनान्येन श्राद्धेनान्यः काम इति क्रमे-णाभिलषितसिद्धिरुपपादिता चैतन्मीमांसायां सर्व्वेभ्यः कामे-भ्यो यद्दर्शपूर्णमासावित्येतद्वाक्यविचारः । यत्र स्मृत्यन्तरेषु तिथिषु वारनक्षत्रप्रयुक्त्यापृथक् फलानुपात्तानि अत्रापि पूर्व्वोक्तरीत्या नैकफलसिद्धिर्द्रष्टव्या ।

विष्णुः ।

सततमादित्येऽह्नि श्राद्धं कुर्व्वन्नारोग्यमाप्नोति सौभाग्यं चन्द्रे समरविजयं कौजे सर्व्वान् कामान् बौधे विद्याम-भीष्टां जीवे धनं शौक्रे जीवितं शनैश्चर इति ।

ब्रह्मपुराणे ।

अश्विन्यां प्राप्नुयादश्वान् भरण्यामायुरुत्तमम् ।
कृत्तिकायां विज्वरत्वं श्राद्धकृत्समवाप्नुयात् ॥
प्राजापत्ये तथा पुष्टिं सौम्ये चौजः सुशोभनम् ।
आर्द्रायान्तु वरासिद्धिं पुत्रान् श्रेष्ठान् पुनर्व्वसौ ॥
तिष्ये सुतानीचधर्म्मार्थान् सर्पे च लभते धनम् ।

जातिश्रेष्ठं मघास्वेव भाग्ये सौभाग्यमुत्तमम् ॥
दानशक्तिमर्य्यमणि हस्ते श्रेष्ठं महद्भिमत् ।
त्वाष्ट्रे दुहितरं पुण्यां स्वाती वाणिज्यमुत्तमम् ॥
विशाखायां शुभान् पुत्रान् मैत्रे चाप्यहतां गतिम् ।
ज्येष्ठायाञ्चाधिपत्यन्तु मूले चारोग्यमुत्तमम् ॥
आषाढ्यासु पयोलाभमुत्तरासु विशोकताम् ।
श्रवणे च गतिं पुण्यां धनिष्ठासु धनं महत् ॥
वारुणेन कृषेर्वृद्धिर्वैशस्ते* वाचिकम्बहु ।
बह्वीर्गाश्चोत्तरायाञ्च पौष्णे कुप्यं महानिधिम् ॥
इति सञ्चिन्त्य योगेन विधिना साधयेच्च यत् ।
स तस्मिन्दिवसे श्राद्धे भक्त्या सन्तर्पयेत्पितॄन् ॥

## अथ नित्याधिकारः ।

देवलः ।

अयुग्मास्तिथयः सर्व्वा युग्माद्याः प्रतिपूजिताः ।
कालतः पूजितौ मासौ माघप्रोष्ठपदावुभौ ॥
पक्षयोः शुक्लपक्षादि बहुलं श्राद्धपूजितः ।
उक्ता तिथिः परिचयानक्षत्रेषु प्रवक्ष्यते ॥
उत्तरा श्रवणा तिष्यो मृगशीर्षम्प्रजापतिः ।
हस्ता शतभिषक्स्वाती चित्रा पित्र्यमथाश्विनी ॥

---

* पूर्व्वायामिति पाठान्तरम् ।

नक्षत्राणि प्रशस्तानि सदैवैतानि पैत्रिके ।
अपराणि च ऋक्षाणि प्रोच्यन्ते कारणात्क्वचित् ॥

अपराणि धनिष्ठादीनि कारणैर्माघपञ्चदशीयोगादिभिर्वर्ज्यान्याह

गार्ग्यः ।

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्व्वीत गृही पुत्त्रधनक्षयात् ॥

त्रिजन्मदिनं जन्मनक्षत्रं जन्मतिथिः तारा चेति त्रिजन्म ।

तथा ।

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं सदा स्नानं न कुर्य्यात्तिलतर्पणम् ॥

वृद्धगार्ग्यः ।

प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा ।
यस्तु श्राद्धं प्रकुर्व्वीत तस्य पुत्त्रो विनश्यति ॥

प्राजापत्यं रोहिणी पौष्णं रेवती पित्र्यर्क्षं मघा ।

तथा ।

भरणीकृत्तिकाञ्चैव सायञ्चैव विवर्ज्जयेत् । इति ।

महाभारते ।

नक्षत्रे च न कुर्व्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रोष्ठपदयोः* कार्य्यं न चाग्नेये च भारत ॥

---

* पूर्व्वभाद्रपदोत्तरभाद्रपदयोः ।

दारुणेषु च सर्व्वेषु प्रत्यरिञ्च विवर्ज्जयेत् ।

आग्नेयङ्कृत्तिका । दारुणानि आर्द्राश्लेषा ज्येष्ठा मूला निजनमर्त्त-पञ्चमचतुर्द्दशत्रयोदशञ्च प्रत्यरिञ्चेति ।

ज्योतिःशास्त्रे ।

साधारणध्रुवोग्रमैत्रे च न शस्यते मनुष्याणां प्रेतक्रिया कथञ्चित्त्रिपुष्करे यमलधिष्णेर च ।

साधारणानि कृत्तिका विशाखा । उत्तरात्रयं रोहिणी च ध्रुवाणि । पूर्व्वात्रयं भरणी मघाश्चोग्राणि । मैत्रमनुराधा । त्रिपुष्करं त्रिपान्नक्षत्रभद्रातिथिगुरुशुक्रभौमवारादियोगः* । यमलधिष्णमश्विनी । एवमन्यान्यपि विहितानि निषिद्धानि स्मृत्यन्तरतोऽवगन्तव्यानि । येषु न विधिर्न प्रतिषेधस्तान्यपि विहिताभावे ग्राह्याणि प्रतिदिनमपरपक्षश्राद्धकरणे पूर्व्वोक्त-तिथ्यादिदोषो नास्ति ।

तथाच कार्ष्णाजिनिः ।

नभस्यस्यापरे पक्षे श्राद्धङ्कार्य्यं दिने दिने ।
नैव नन्दादिवर्ज्यं स्यान्नैव वर्ज्या चतुर्द्दशी ॥

दशम्यादिपञ्चत्रये चतुर्द्दशी वर्ज्जनीया ।

यदाह मनुः ।

कृष्णपक्षे दशम्यादौ वर्ज्जयित्वा चतुर्द्दशीम् ।

---

* स्मार्त्तेनान्यथोक्तस्त्रिपुष्करयोगः । यथा, श्रीपतिरत्नमालायां विषमचरणं धिष्ण्यं भद्रातिथिर्यदि जायते दिनकरशनिक्ष्मापुत्राणां कथञ्चन वासरेषु । विषमचरणधिष्ण्यं एक-त्रिपादरूपेणोभयराशिप्रविष्टं नक्षत्रम् ।

श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥

अनादिशब्देन पञ्चम्युपक्रमश्च गृह्यते ।

एवञ्च ।

प्रतिपत्प्रभृतिष्वेकां वर्ज्जयित्वा चतुर्द्दशीम् ।

इति याज्ञवल्क्यवचनं पञ्चम्यादिपक्षेष्ववतिष्ठते* । अपरपक्षे तु या भरणी सा महाभरणीत्युच्यते । तथा मध्याष्टमी गयेत्युच्यते† ।

तदुक्तं मात्स्ये ।

भरणी पितृपक्षे तु महिमा परिकीर्त्तिता ।

अस्यां श्राद्धकृतं येन स गयाश्राद्धकृद्भवेत् ॥

ब्रह्माण्डपुराणे ।

आषाढ्या पञ्चमे पक्षे गयामध्याष्टमी स्मृता ।

त्रयोदशी गजच्छायागयातुल्ये तु पैतृके ॥

सन्न्यासिविषये वायुपुराणे विशेषः ।

सन्न्यासिनोऽप्याब्दिकादि पुत्त्रैः कार्य्यं अमातिथिः‡ ।

महालये तु यच्छ्राद्धं द्वादश्यां पार्व्वणेन तु ॥

त्रयोदशीविषये शङ्खलिखितयमाः ।

पिता पितामहश्चैव तथैव प्रपितामहः ।

जातं पुत्त्रं प्रशंसन्ति पिप्पलं शकुना इव ॥

मधुमांसेन खड्गेन पयसा पायसेन वा ।

---

* पञ्चमीप्रभृति वापरपक्षस्य इत्याद्युक्तकल्पकरणेष्ववतिष्ठते इत्यर्थः । † अत्र तथा-शब्दस्वरसात् यथा भरणी गयातुल्या तथा अष्टमी इत्यवगम्यते अतो मात्स्यब्रह्माण्ड-पुराणेषु तथैवोक्तम् । ‡ पुत्त्रः कुर्य्यात्तथातिथि इति पाठान्तरम् ।

एष दास्यति नस्तृप्तिं वर्षासु च मघासु च ॥

इत्यत्र त्रयोदश्यां युगाद्यादिश्राद्धव्यतिरिक्तश्राद्धं पुत्त्रवता पुत्त्ररहितेन च पिण्डसहितमेव कर्त्तव्यम्। मघायुक्तायां तस्यां ज्येष्ठपुत्त्रवता पिण्डरहितमेव श्राद्धं कुर्य्यात्। कन्यागतापरपक्षप्रकरणे देवीपुराणे पिण्डनिषेधात्

तत्रापि महती पूजा कर्त्तव्या पितृदैवते।

ऋक्षे पिण्डप्रदानं तु ज्यैष्ठपुत्त्री विवर्ज्जयेत् ॥

इति पूजा श्राद्धम्। यच्च त्रयोदश्यां युवानस्तस्य म्रियन्ते इति कात्यायनवचनान्न कर्त्तव्यमिति तस्यार्थः। अतः कन्यागतापरपक्षाधिकारे मघायुक्तत्रयोदश्यां विद्यमाने ज्येष्ठवता पिण्डरहितं श्राद्धङ्कर्त्तव्यमिति सिद्धम्।

अथाङ्गिरसः।

त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः।

पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्त्रस्य निश्चितम् ॥ इति

श्राद्धमात्रनिषिद्धं तन्मातामहवर्गपरित्यागेन केवलपितृकश्राद्धविषयम्।

श्राद्धं नैकस्य वर्गस्य त्रयोदश्यामुपक्रमेत्।

अल्पास्तस्य येऽपि स्युः प्रजा हिंसन्ति तेऽप्रजाः ॥

इति कार्ष्णाजिनिस्मरणात्। कन्यागतापरपक्षचतुर्द्दश्यां शास्त्रविहितमार्गेण महाप्रस्थानादिभिर्मृतानामेकोद्दिष्टं श्राद्धं कर्त्तव्यं नान्येषाम्।

तथाच ब्रह्माण्डपुराणे।

प्रायोमाशक*शस्त्राग्निविषोद्बन्धनिनान्तथा ।
चतुर्द्दश्यान्तु कर्त्तव्यं पित्रर्थमिह निश्चयः ॥

मरीचिः ।

विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनाम् ।
चतुर्द्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता ॥
समत्वमागतस्यापि† पितुः शस्त्रहतस्य तु ।
एकोद्दिष्टन्तु कर्त्तव्यं चतुर्द्दश्यां महानय‡ ॥ इति ।

विषादिमृतगणपरिपठितस्य शस्त्रहतस्यैकोद्दिष्टविधानात् विषादिमृतानामप्येकोद्दिष्टमेव । अत्र कैश्चिदुक्तम् । वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यत्र यथा वसन्त एव ब्राह्मणोऽग्न्याधानं कुर्य्यान्नान्यत्र ब्राह्मण एव वसन्ते नान्य इत्युभयनियमस्तथा चतुर्द्दश्यामेव शस्त्रहतस्य नामावास्यादितिथौ शस्त्रहतस्यैव चतुर्द्दश्यां नान्यस्येति तदयुक्तम् । यस्य पिता शस्त्रहतस्तस्य चतुर्द्दश्यामेव पितुरेकोद्दिष्टे पितामहादितृप्तिर्न स्यात् । पितामहाद्युद्देशाभावाद्विहितश्चापरपक्षप्रकरणे पितामहादेरपि तर्पणीयत्वम् ।

काङ्क्षन्ति पुत्त्रपौत्त्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तानत्र विधिना तर्पयेत्पायसेन तु ॥

---

* प्रायोऽनशनशस्त्राग्नि इति हेमाद्रौ पाठः । † प्रेतत्वपरित्यागेन पितृत्वं प्राप्तैः ॥ पितामहादिभिः सह सपिण्डीकरणात्प्रेतत्वपरित्यागेन पितृत्वप्राप्त्या साम्यमागतस्याप्रीत्यर्थं इति हेमाद्रिः । ‡ भविष्यपुराणे इति कृत्वा हेमाद्रौ एतद्वचनं लिखितम् ।

मध्वाज्यतिलमिश्रेण त्विति देवीपुराणवचनं तु साचात्तिथ्यन्तर-कर्त्तव्यतां प्रतिपादयति ।

आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् ।
चतुर्द्दश्यां भवेत्पूजा ह्यमावास्यान्तु कामिकी ॥

इति । पूजा श्राद्धम् । अमावास्येति तिथ्यन्तरोपलक्षणार्थम् । अपरार्कें तत्र चैकस्य शस्त्रहतस्य एकोद्दिष्टविधानं न तु त्रयाणां तथात्वे पार्व्वणमेवेत्यनेन ग्रन्थेन त्रयाणां शस्त्रहतत्वे पार्व्वण-मेवेत्यभिहितम् । स्मृतिचन्द्रिकायामपि । एकस्मिन् द्वयोर्वैकोद्दिष्टविधिरिति स्मार्त्तवचनमुपन्यस्यैकस्मिन् द्वयोर्वेत्यभिधानात् । एषु पितृपितामहप्रपितामहेषु नैकोद्दिष्टमिति गम्यत इत्युक्तम् । एतच्चिन्त्यं तथा हि आहत्य तावद्वचनं नास्ति त्रिषु मतेषु पार्व्वणमेव कर्त्तव्यमिति । एकोद्दिष्टं कर्त्तव्यमित्येतत्तु वचनं प्राप्तमेकस्मिन्द्वयोर्वेत्येतदपि द्वयोरेकोद्दिष्टप्रापकं न तृतीयस्य निवर्त्तकम्, तथात्वे तात्पर्य्यभेदाद्वाक्यभेदप्रसक्तेः । न च परिसंख्याश्रयणं सूचितं दोषत्रयापत्तेः । तस्मात्पित्रादिषु त्रिषु मृतेष्वेकोद्दिष्टमेवेति सिद्धम् । यदा तस्यामेव चतुर्द्दश्यां पित्रादिसांवत्सरिकं प्राप्तं पार्व्वणात्मकमेकोद्दिष्टात्मकं चतुर्द्दशीश्राद्धं च तदा समग्राङ्गपार्व्वणश्राद्धे न्यूनाङ्गैकोद्दिष्टस्यान्त-र्भावस्य सुकरत्वादेककालकर्त्तॄणां देवतायास्तृप्तिरूपफलस्यै-कत्वात्तन्त्रेण पार्व्वणैकोद्दिष्टयोरनुष्ठानं न पृथगिति निर्णयः । एवमभिहितः सकलोऽप्यापरपक्षिकप्रपञ्चः ।

तत्र श्राद्धासम्भवे

सुमन्तुः ।

सूर्य्ये कन्यास्थिते कुर्य्युश्श्राद्धं ये न गृहाश्रमाः* ।
धनं पुत्राः कुतस्तस्य पितृनिश्वासपीड़नात् ॥
येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये ॥

दीपान्विता पञ्चदशीति तुलासंक्रमणकालोपलक्षिका ।

कार्ष्णाजिनिः ।

कन्यां गते सवितरि पितरो यान्ति वै सुतान् ।
तावत्प्रेतपुरी शून्या यावद्वृश्चिकदर्शनमिति ॥

## अथ संक्रान्तिकालः ।

तत्र वृद्धवशिष्ठः ।

अयने विषुवे चैव चतस्रः षड़शीतयः ।
चतस्रो विष्णुपद्यः स्युः संक्रान्त्यो† द्वादश स्मृताः ॥
मृगकर्क्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवे द्वे तुलामेषे गोलमध्ये ततो‡ऽपराः ॥ इति ।

मृगः मकरः । गोलमध्ये अयनविषुवगोलमध्ये । गोलं चलनम्§ । ततोऽपराः ततोऽपराः संक्रान्तयः स्युरित्यर्थः ।

---

* गृहस्थाः । † संक्रान्तय इत्यस्य स्थाने संक्रान्त्य इति आर्षः । ‡ तथाऽपरा इति गौड़ीयग्रन्थे पाठ. । § गोलो राशिचक्रमिति गौड़ाः ।

ज्योतिर्वशिष्ठः।

वृषवृश्चिककुम्भे च सिंहे चैव यदा रविः।
एतद्विष्णुपदं नाम विषुवादधिकम्फलम्॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः।
षड़शीतिमुखाः प्रोक्ताः षड़शीतिगुणाः फलैः॥

अयञ्च संक्रमकालो निमेषादपि स्वल्पतर इति दीर्घकाल-साध्यकर्म्मस्वङ्गत्वमस्य कथमित्याकाङ्क्षायां

स एव।

संक्रान्तिसमयः सूक्ष्मोदुर्ज्ञेयः पिहितेक्षणैः।
तद्योगाच्चाप्यधश्चोर्द्ध्वं त्रिंशन्नाड्यः पवित्रिकाः॥ इति।

एतच्च सामान्येन फलसंक्रान्तिक्षणसंस्पृष्टपूर्व्वोत्तरकालस्य पावित्र्यं प्रथयति विशेषस्तु वचनान्तरेभ्योऽवगन्तव्यः।

तथाच वृद्धवशिष्ठः।

अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने।
त्रिंशत्तु कर्क्कटे नाड्यो मकरे विंशतिः स्मृताः॥

यत्तु अयने विंशतिः पूर्व्वां मकरे विंशतिः परेति तत्सन्निहितनाड़ीनां विंशतेः पुण्यतमत्वप्रतिपादनार्थम्।

अतएव वशिष्ठः।

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमा इति।

सन्निधिविशेषात् फलविशेषः श्रूयते। एतदुक्तं भवति सर्व्वा-

---

* आच्छादिते।

षस्त्रिंशन्नाड्य ऊर्द्धञ्च त्रिंशन्नाड्यश्च पुण्यकालः क्वचिदध एव क्वचिदूर्द्धमेव। क्वचिदुभयत्रापि दशादिदण्डपरिमितः कालः पुण्यतरः। तत्रापि सन्निहितः पुण्यतम इति। एवञ्च सकल-वचनविरोधः परिहृतोभवेत्।

वृद्धवशिष्ठः।

वर्त्तमाने तुलामेषे नाड्यस्तूभयतोदश।

तथा।

पुण्यायां विष्णुपद्यान्तु प्राक् पश्चादपि षोड़श।
षड़शीत्यां व्यतीतायां षष्टियुक्तास्तु नाड़िकाः॥

गर्गः।

भविष्यत्ययने विष्णोर्वर्त्तमाने तथा विधौ।
षड़शीतिमुखे चैवाप्यतीते चोत्तरायणे॥

वर्त्तमाने विधौ मध्ये इत्यर्थः।

स्मृत्यन्तरमपि।

मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ।
षड़शीतिमुखेऽतीते तथोदगयने च भूरिफलम्॥

ज्योतिर्वशिष्ठः।

अह्नःसंक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्।
संक्रमस्तु निशीथे स्यात् षड़्यामाः पूर्व्वपश्चिमाः।
संक्रान्तिकाला विज्ञेयास्ततः स्नानादिकं चरेत्॥

वृद्धवशिष्ठः।

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्।

रात्रौ संक्रमणे पुण्यं न तु सन्निहितरात्रिगता नाड्यः पुण्या इत्यर्थः। एतदुक्तं रात्रौ संक्रमणे पुण्यमित्येतद्वाक्यं न तावद-समर्थं प्रत्याययति साक्षात् नापि वाक्यान्तरं प्रत्युत विपरी-तार्थद्योतकं वाक्यमस्ति।

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमा इति।

किञ्च।

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्य्यान्निशि काम्यव्रतेषु च॥ इति।

रात्रावपि स्नानदानाद्यधिकारात्सन्निहितरात्रिगतनाड़ीपरि-त्यागकरणाभावादयञ्च संक्रान्तिशब्दोऽयनपर इति स्मृति-चन्द्रिकाकार आह। न चायं प्रतिप्रसवः सर्व्वसंक्रान्तिषु युज्यते। अयनद्वयव्यतिरिक्तसंक्रान्तौ रात्रिगतायां दिनएव संक्रान्त्यभिधानादित्यनेन ग्रन्थेन रात्रौ स्नानं न कुर्व्वीत दानं चैवेत्यस्य प्रतिप्रसवः। दिनसंक्रान्तिकृत्याभिधायकं वचनन्तु वाशिष्टमुदाहृतम्।

तस्मिन्नेव प्रकरणे।

अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरिक्रिया।
ऊर्द्ध्वं संक्रमणे चोर्द्धमुदयात्प्रहरद्वयम्।
पूर्णं चेदर्द्धरात्रन्तु यदा संक्रमते रविः।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्क्कटौ॥ इति।

अत्रापि दिन एव कर्त्तव्यं न रात्रावित्ययमर्थो न प्रतीयते। दिनस्यापि पुण्यकालत्वप्रतिपादनत्वेनाप्युपपत्तेः। तस्मा-

इयमर्थः अहःसंक्रमणे त्वहः पुण्यकालः रात्रावर्द्धरात्रादध-श्चेदपराह्णोऽपि अर्द्धरात्रे चेद्दिनद्वयमूर्द्धं चेत्परेद्युः पूर्व्वाह्णो-ऽपि इति । अत्रापि या याः सन्निहिता नाड्य इत्यनुसन्धेयम् । मकरकर्क्कटयोस्तु नैवं मुक्त्वा मकरकर्क्कटाविति स्मरणात् । तर्हि तत्र कथमित्याकाङ्क्षायामिदमुपतिष्ठते ।

अयने विंशतिः पूर्व्वा मकरे विंशतिः परेति ।

अत्रापि विशेषो भविष्योत्तरे ।

मिथुनात्कर्क्कसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्य्यादहनि पूर्व्वतः ॥
कार्म्मुकन्तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि* ॥

झषो मकरः । कार्म्मुकं धनुः । पूर्व्वतः पूर्व्वत्र ।

तथा वृद्धगार्ग्यः ।

यद्यस्तमयवेलायां मकरं याति भास्करः ।
प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि ॥
अर्द्धरात्रे तदूर्द्ध्वं वा संक्रान्तौ दक्षिणायने ।
पूर्व्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥

अत्रापि कर्क्कटे पूर्व्वतः विंशतिघटिकात्मकः कालः । मकरे च परविंशतिघटिकात्मकः कालः पुण्यतर इत्येव । अतएव पुण्य-तरपूर्व्वकालसन्निहितः पूर्व्वदिनकालः पुण्यतरपरकालसन्नि-

---

* स्नानं कुर्य्यात्परेऽहनि इति गौड़ीयग्रन्थे पाठः ।

हित: परदिनकालश्च कर्कटमकरयो: श्राद्धादिषु अ
सन्निहितपूर्व्वकालासम्भवे ।

## अथ ग्रहणकाल: ।

तत्र वृद्धगार्ग्य: ।

पूर्णिमाप्रतिपत्सन्धौ राहु: सम्पूर्णमण्डलम् ।
ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदान्तरे ॥

ब्रह्मसिद्धान्ते ।

यावत्काल: पर्व्वणोऽन्ते यावान् प्रतिपदादिम: ।
रवीन्दुग्रहणानेहा स पुण्यो मिश्रणाद्भवेत् ॥

पर्व्वान्तकालो ग्रासकाल: । प्रतिपदादिकालो मोक्षकाल: ।

व्यास: ।

त्रिदशा: स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकालेन मोक्षकाले तु राक्षसा: ॥

उत्तममध्यमकनिष्ठकाला इत्यर्थ: ।

विष्णु: ।

सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणै: ।
द्वयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥

मत्स्यपुराणे ।

चन्द्रसूर्य्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम् ॥

लिङ्गपुराणे ।

चन्द्रसूर्य्यग्रहे स्नायान्मृतके सूतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति ॥
सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

एकग्रन्थस्य वचनद्वयमध्ये पूर्व्ववचनं स्नानपरम् उत्तरं श्राद्ध-दानादिपरम् अन्यथा पौनरुक्त्यापत्तेः ।

अङ्गिराः ।

सर्व्वे वर्णाः सूतके मृतके राहुदर्शने ।
स्नानं श्राद्धं प्रकुर्व्वीरन्दानं शाठ्यविवर्ज्जितम् ॥

वृद्धवशिष्ठः ।

ग्रहणे संक्रमे वापि न स्नायाद्यदि मानवः ।
सप्तजन्मनि कुष्ठी स्याद्दुःखभागी च जायते ॥

मार्कण्डेयः ।

चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महाग्रहे ।
अक्षयं कथितं पुण्यं चन्द्रार्के तु विशेषतः ॥

दर्शनस्य चक्षुर्व्यापारत्वान्मेघाच्छन्ने स्नानाद्यधिकारो नास्ति तथा खराशिग्रहणेऽप्येकवारं दृष्ट्वा पश्चात् स्नानादिकं कर्त्तव्य-मिति केचन वदन्ति तद्विचारणीयमसति बाधके दर्शनं चक्षु-र्व्यापारएव न तु दर्शनयोग्यता यदि साक्षाच्चक्षुर्व्यापार एव दर्शनशब्देनात्र गृह्येत तर्हि सूर्य्यग्रहणस्य रात्रौ चन्द्रग्रहणस्य च दिवा चक्षुर्विषयत्वाभावात् स्नानदानयोरधिकाराभावात्

स्नानादिनिषेधो नोपपद्यते ।

निषेधश्च षट्त्रिंशन्मते ।

सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।

तत्र स्नानं न कुर्व्वीत दद्याद्दानं न कुत्रचित्* ॥

तस्मादेतद्वचनबलाद्दर्शनं नाम शास्त्रतो दर्शनमङ्गीकर्त्तव्यं ततो-मेघादिच्छन्नेऽपि दिवा सूर्य्यग्रहणे रात्रौ चन्द्रग्रहणे च स्नाना-द्यधिकारोऽस्ति यदि परो विशेषः परिकल्पेत तर्हि एवं कल्पनीयं चक्षुर्गोचरत्वेऽधिकं फलं तदभावे ततो न्यूनमिति । ये तु षट्त्रिंशन्मतेऽपि विचिकित्सन्ते तेषामपरार्कविज्ञानेश्वर-चन्द्रिकाकारहेमाद्रिप्रभृतयः प्रतिभटीकर्त्तव्याः† । एवञ्च ग्रस्तास्तमये द्वितीयदिने मेघादिभिर्मुक्त्यदर्शनेऽपि शास्त्रदर्शन-सम्भवात्स्नात्वाभोजनाधिकारोऽस्तीति न्यायतः प्राप्तापवादमाह मनुः ।

चन्द्रसूर्य्यग्रहे नाद्याद्द्यात्स्नात्वा विमुक्तये ।

अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनीति ॥

महाभारते ।

अर्व्वाग्यामत्रयादिन्दोर्ग्रहणेऽभुजिमाचरेत् ।

चतुर्यामादधश्चैव राहुग्रस्ते दिवाकरे ॥

एतच्च बालादिव्यतिरिक्तविषयम् ।

तथाच वृद्धवशिष्ठः ।

---

* न च क्वचिदिति पाठान्तरम् । † विरोधिपक्षाः कर्त्तव्याः इत्यर्थः ।

सूर्य्यग्रहे तु नाश्नीयात्पूर्व्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् विना बालादिसत्तमम्* ॥

बालादिविषये तु मत्स्यः ।

अपराह्ने न मध्याह्ने मध्याह्ने चेन्न सङ्गवे ।
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्व्वं भोजनक्रिया ॥

यः समर्थः स निषिद्धकाले भुङ्क्ते तत्र कात्यायनः ।

चन्द्रसूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यति ॥

ग्रहणकाले भुक्तौ प्राजापत्यं ततः पूर्व्वं निषिद्धकाले† तु त्रिरात्र‡मिति विवेकः । यदा चन्द्रग्रहणे ग्रस्तोदयस्तदा तस्मिन्नहनि नाद्यात् ।

तथाच मार्कण्डेयः ।

चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ।
ग्रहणन्तु भवेत्तत्र न पूर्व्वं भोजनक्रिया ॥
नाचरेत्सङ्ग्रहश्चैव तथैवास्तमुपागते ।
यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु ।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानङ्कृत्वा ततः परम्§ ॥

दृष्ट्वेति स्नानोपलक्षणम् ।

तथाच वृद्धगौतमः ।

---

* बालवृद्धातुरैर्विना इति पाठान्तरम् । † चन्द्रग्रहे तद्दिवसीययामत्रयमध्ये सूर्य्यग्रहे तद्दिवसीययामचतुष्टयमध्ये इत्यर्थः । ‡ त्रिरात्रोपवासः । § स्नानं कृत्वा परेऽहनि इति गौड़ीयग्रन्थे पाठः ।

चन्द्रसूर्य्यग्रहे नाद्यात्तस्मिन्नहनि पूर्व्वतः ।
राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्व्वीत भोजनम् ॥

यत्तु विष्णुधर्म्मे ।

अहोरात्रं न भोक्तव्यं चन्द्रसूर्य्यग्रहो यदा ।
मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानङ्कृत्वा ततः परम् ॥ इति ।

एतदपि ग्रस्तास्तमयविषयम् । सूर्य्ये ग्रस्तास्तं गते ग्रहणात्पूर्व्वाहर्भागो ग्रहणोत्तरभागिनी रात्रिश्चेत्यहोरात्रभोजननिषेधः । चन्द्रे ग्रस्तास्तं गते ग्रहणे रात्रिरग्रिमाहश्चेत्यहोरात्रम् । अत्र श्राद्धमावश्यकम् ।

तथाच लिङ्गपुराणे ।

सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्व्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥

तथा ।

यस्त्रिरात्रमुपोष्यैव ग्रहणे चन्द्रसूर्य्ययोः ।
स्नात्वा दत्त्वा च विधिवन्मोदते ब्रह्मणा सह ॥
एकरात्रमुपोष्यैव स्नात्वा दत्त्वा च शक्तितः ।
कञ्चुकादिव सर्पस्य निष्कृतिं पापकोशतः ॥

## अथ युगादिमन्वादिकालः ।

तत्र विष्णुपुराणे ।

वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।

नभस्यमासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे ॥

माघे पञ्चदशी अमावास्या ।

तथाच नारदीयपुराणे ।

द्वे शुक्ले द्वे च कृष्णे च युगाद्याः कवयो विदुः ।

द्वे शुक्ले वैशाखतृतीया कार्त्तिके नवमी च । द्वे कृष्णे भाद्रपद-त्रयोदशी माघामावास्या च । ब्रह्मपुराणानुसारेण माघे पञ्चदशी पौर्णमासी ।

वैशाखे शुक्लपक्षस्य तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षस्य त्रेता च नवमेऽहनि ।*
अथ भाद्रपदे कृष्णे त्रयोदश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्यान्तु घोरं कलियुगन्तथा ।†
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ॥‡
सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु ।
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य तु ॥
ज्ञेयन्तु वृषसंक्रान्त्यां द्वापरान्तञ्च संख्यया ।§

---

* वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥ इति हेमाद्रौ पाठः ।

† अथ भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्याञ्च घोरं कलियुगं तथा ॥ इति हेमाद्रौ पाठः ।

‡ संस्मृता इति हेमाद्रौ पाठः । § ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तश्च संज्ञया । इति हेमाद्रौ पाठः ।

तथाच कुम्भसंक्रान्त्यामन्तं कलियुगस्य तु ।
युगादिषु युगान्तेषु श्राद्धक्षन्मुच्यतेनसा ॥*

कल्पभेदेन माघपञ्चदश्यां व्यवस्थितिरिति केचित् । वयन्तु देशाचारानुसारेण व्यवस्थापयामः ।

पुलस्त्यः ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्व्वासु पिण्डनिर्व्वपनाद्दते ॥

मत्स्यपुराणे† ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च सर्व्वासु पिण्डनिर्व्वपनाद्दते ॥
वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च ।
श्राद्धं कार्य्यन्तु शुक्लायां संक्रान्तिविधिना नरैः ॥

मन्वादयो मत्स्यपुराणे ।

अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढ़ी च पूर्णिमा ।

---

* तथाच कुम्भसंक्रान्त्यामन्तः कलियुगस्य तु ।
युगादिषु युगान्तेषु श्राद्धमक्षयमुच्यते ॥ इति हेमाद्रौ पाठः ।

† हेमाद्रौ मत्स्यपुराण इत्यत्र ब्रह्मपुराण इति पठितम् ।

कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ।
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ॥

यत्र कृष्णेति विशेषनिर्देशस्तत्र कृष्णैव यत्र विशेषनिर्देशाभावस्तत्र सितैव । वृद्धगार्ग्येण तु भाद्रपदसिततृतीयाफाल्गुनामावास्याषाढ़दशमीश्रावणाष्टमीर्विहाय मन्वन्तरादयः कथिताः ।

अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी सिता ।
तृतीया चैत्रमासस्य ज्यैष्ठे पञ्चदशी सिता ॥
सप्तमी माघमासस्य पौषस्यामा तथा परा ।
वृश्चिके चाष्टमी कृष्णा मकरैकादशी सिता ॥
गोविन्दद्वादशी कुम्भे मेषे पञ्चदशी सिता ।
कार्त्तिकी फाल्गुन्याषाढ़ी पूर्णिमा द्वादशी सिता ॥
मन्वन्तरादयश्चैता मुनिभिः परिकीर्त्तिताः ।

अत्रापि पूर्व्ववदेव व्यवस्था ।

## अथ जीवत्पितृकश्राद्धकालः ।

तत्र कात्यायनः ।

सपितुः* पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥

---

* जीवत्पितृकस्य ।

अत्रापवादो मैत्रायणीयपरिशिष्टे ।

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

एते षट्काला इत्यर्थः । पित्र्येष्ट्यां चातुर्मास्येषु तथा पितृपिण्डयज्ञे च । सौमिके मखे सोमादौ पुरोडाशपिण्डदानेन च ।

अन्येऽपि विशेषास्तत्रैव ।

अन्वष्टक्यां गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्य्यात्पितर्य्यपि च जीवति ॥

यत्तु ।

दर्शश्राद्धङ्गयाश्राद्धं श्राद्धञ्चापरपाक्षिकम् ।
न जीवत्पितृकः कुर्य्यात्तिलैः कृष्णैस्तु तर्पणम् ॥ इति ।

गयाश्राद्धनिषेधकं वचनन्तु गयाश्राद्धोद्देशेन गयां गत्वा श्राद्धं न कर्त्तव्यमित्येतत्परं पूर्व्वोक्तवाक्यन्तु दैवाद्गयाप्राप्तौ सत्यां श्राद्धविधायकम् ।

मनुः ।

ध्रियमाणे तु पितरि पूर्व्वेषामेव निर्व्वपेत् ।
विप्रवद्वापि तच्छ्राद्धं स्वकं पितरमाशयेत् ।
पिता यस्य तु वृत्तस्थो जीवेद्वापि पितामहः ॥
पितुः स्वनाम सङ्कीर्त्त्य कीर्त्तयेत्प्रपितामहम् ।
पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः ॥

पूर्व्वेषां पितामहादीनां पितुः स्वनाम सङ्कीर्त्त्य अस्मत्पितुः

पितामह इति स्वप्रपितामहनामापि पिण्डदानादिषु गृह्णीया-दित्यर्थः ।

भविष्यपुराणे ।

जीवमानेन देयं स्याद्यस्माद्भरतसत्तम ।
तस्माज्जीवत्पिता कुर्य्यात्पिण्डनिर्वापनं न हि ॥

पितरि पितामहे च जीवति तेषां पितामहे पितरि मातामहे प्रमातामहे च जीवति नैव कुर्य्यात् । यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात् । यस्य पितापितामहौ च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहप्रपितामहाय दद्यात् । यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यादिति नियमः । यो जीवति पितॄणां मध्ये तं विहाय अन्यान् भोजयेत् स्वपितृस्थानित्येके जीवतामजीवतां वा देयमिति हिरण्यकेतु-रिति ।

पिण्डपितृयज्ञविषये मनुः ।

पित्र्यं जीवत्पितुर्नोक्तं पितृयज्ञोऽपि पाक्षिकः ।
येभ्यो वापि पिता तेभ्योदद्याद्वैतानकर्म्मणि ।
दद्यात्त्रिभ्यः परेभ्यस्तु जीवच्चेत्त्रितयं यदि ॥

आपस्तम्बः ।

यदि जीवत्पिता न दद्यादाहोमं कृत्वा विरमेत् ।

न दद्यात्पिण्डमित्यर्थः ।

यज्ञपार्श्वः ।

होमान्तः पितृयज्ञः स्याज्जीवत्पितरि जानतः ।
पितरं भोजयित्वा वा पिण्डौ न पृणुयात्परौ ॥
उभौ यद्यव्यतीतौ तु जीवेच्चेत्प्रपितामहः ।
पिण्डं न पृणुयात्पूर्व्वौ भोजयेत्प्रपितामहम् ॥

इत्यादि वाक्यान्यप्यनुसन्धेयानि । तत्र यथाशाखं व्यवस्था । जीवत्पितृकस्याग्निमत एवात्राधिकारः ।

तथाच सुमन्तुः ।

न जीवत्पितृकः कुर्य्याच्छ्राद्धमग्निमृते द्विजः ।
येभ्यएव पिता दद्यात्तेभ्यः कुर्व्वीत साग्निकः ॥

साग्निः श्रौतेन स्मार्त्तेन वा । स्मार्त्ताग्नेः पिण्डपितृयज्ञविधानात्तत्राधिकारो विवाहादिषु तस्यैवाधिकारकर्त्तृत्वे । अङ्गरूपश्राद्धाकरणे अङ्गिनो वैगुण्यात्तत्राधिकारः । न च साग्निरित्युपादानादङ्गिकरणेऽपि वैगुण्याभावः अग्निशब्दस्य स्मार्त्ताग्नावपि प्रवृत्तेः श्रौताग्निष्वेव प्रवृत्तिनियमाभावात् । चातुर्मास्यगते पित्रेष्ट्यां सौमिकमखे वाहिताग्नेरेवाधिकारात्तत्रत्यश्राद्धे स्मार्त्ताग्नेर्नाधिकारः । यदि पूर्व्वोक्तकालेषु श्रौताग्नेरेवाधिकारस्तदाहिताग्नेरित्येव ब्रूयान्न साग्निक इति । तस्मादग्निद्वयवतामप्युक्तकाले श्राद्धाधिकारः सिद्धः ।

## अथाधिमासे विहितानि निषिद्धानि च ।

तत्र शातातपः ।

एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।

तत्राद्ये पितृकार्य्याणि देवकार्य्याणि चोत्तरे ॥

व्यासः ।

षष्टिभिर्द्दिवसैर्मासः कथितो बादरायणैः ।
देवकार्य्याणि पूर्व्वस्मिन् पितृकार्य्याणि चोभयोः ॥

देवकार्य्याणि नित्याग्निहोत्रवैश्वदेवादीनि तथा पितृकार्य्याणि अथावश्यकान्येव। एवं वचनद्वयबलादावश्यकानां देवपितृकार्य्याणामुभयत्र कर्त्तव्यता प्रतीयते। एवमादीन्यन्यान्यपि वचनान्यावश्यकदेवकार्य्यपितृकार्य्यविषयाणि।

तथाच वृहस्पतिः।

नित्यनैमित्तिके कुर्य्यात्प्रयतः सन्मलिम्लुचे।
तीर्थश्राद्धं गजच्छाया प्रेतश्राद्धं तथैव च ॥

नित्यं यदकरणे कालातिक्रमनिमित्तं प्रायश्चित्तं श्रूयते यथा अग्नये पथिकृते पुरोडाशमष्टकपालं निर्व्वपेद्यो दर्शपौर्णमासयाजी सन्नमावस्यां वा पौर्णमासीं वापि अतिपातयेदिति नैमित्तिकं यस्याग्निर्गृहान्निर्दहेत् का तत्र प्रायश्चित्तिरित्युपक्रम्य या गृहदाहेष्टिर्विहिता तन्नैमित्तिकम्। अयमभिप्रायः। यस्यातिक्रमे प्रायश्चित्तप्राप्तिः यस्य गृहदाहेष्ट्यादेः मासान्तरे विहितकालासम्भवेन मलमास एवावश्यकमनुष्ठानं तत्सर्व्वमधिमासे कर्त्तव्यमिति।

गृह्यपरिशिष्टे।

अवषट्कारहोमाश्च पर्व्व चाग्रयणं तथा।
मलमासेऽपि कर्त्तव्यं काम्या इष्टीर्विवर्ज्जयेत् ॥

अवषट्कारहोमाः अग्निहोत्रोपासनवैश्वदेवाद्याः दर्शपौर्णमासौ पर्व्व पार्व्वणं स्थालीपाकश्च अग्रयणं अग्रायणेष्टिः आपदि पुरातनधान्याभावे कर्त्तव्याग्रयणेष्टिर्न त्वनापदि स्मृत्यन्तरेष्व-ग्रयणनिषेधात् ।

यमः ।

गर्भे वार्द्धुषिके भृत्ये श्राद्धकर्म्मणि मासिके ।
सपिण्डीकरणे नित्ये नाधिमासं विवर्ज्जयेत् ॥
तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः ।
जातकर्म्मादिकर्म्माणि नवश्राद्धं तथैव च ॥
तथा* त्रयोदशीश्राद्धं श्राद्धान्यपि च षोड़श ।
चन्द्रसूर्य्यग्रहे स्नानं श्राद्धदानजपादिकम् ।
कार्य्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ॥

गर्भे गर्भनिमित्तपुंसवनादिकर्म्मणि वार्द्धुषिके अशीतिभागो वृद्धिः स्यादित्यादिभिरुक्तवृद्धिग्रहणे भृत्ये भृत्यवेतनदाने श्राद्ध-कर्म्मणि मासिके अमावस्याश्राद्धे केचन ऋष्यशृङ्गवचनमन्यथा पठित्वा अमावस्याश्राद्धनिषेधमपि कुर्व्वन्ति ।

वचनन्तु ।

संवत्सरातिरिक्तो वै मासोयः स्यात्त्रयोदश ।
तस्मात्त्रयोदशे श्राद्धं न कुर्य्यादिन्दुसंक्षये ॥

इति । अयं पाठो न युक्तः बहुस्मृतिविरोधादनेकानेकनिबन्ध-

---

* मघेति पाठान्तरम् ।

कारैरनादृतत्वाच्च । अपरे तु तस्मात्त्रयोदशे श्राद्धं न कुर्य्या-न्नोपतिष्ठत इति पठन्ति । अयं पाठो युक्तः । अयं च निषेधो दर्शश्राद्धादिव्यतिरिक्तविषयः । तीर्थस्नानं पूर्व्वोपक्रान्तं तथा जपश्च यवादिभिः होमो नित्यहोमः ॥

काठकगृह्यपरिशिष्टे ।

मलेनान्यगतं नित्यं कुर्य्यान्नैमित्तिकीं क्रियाम् ।
सोमयागादिकर्म्माणि नित्यान्यपि मलिम्लुचे ॥
तथैवाग्रयणाधानचातुर्मास्यादिकान्यपि ।
महालयाष्टकाश्राद्धोपाकर्मादयपि कर्म्म यत् ॥
स्पष्टमासविशेषाख्याद्विहितं वर्ज्जयेन्मले* ।

महालयो भाद्रपदापरपक्षः । स्पष्टमासविशेष इति मास-विशेषनामग्रहणेन यद्विहितं वैशाखे कर्त्तव्यमित्येवं तदपि ।

तथा ।

प्रेतमास्यादिमारभ्य श्राद्धं पिण्डोदकक्रियाः ।
सपिण्डीकरणान्ताश्च यथाकालमुपस्थिताः ।
अनन्यगतिकत्वेन कर्त्तव्यं स्यान्मलिम्लुचे ॥

अगस्त्यः ।

न कुर्य्यान्मलमासे तु कर्म्माकर्म्म कथञ्चन ।
मुक्ता नैमित्तिकं तत्तु† तत्रैव परिकीर्त्तितम् ॥

---

* महालयाष्टकाश्राद्धमुपाकर्म्मादि कर्म्म यत् । स्पष्टमासविशेषाख्यविहितं वर्ज्जयेन्मले ॥ इति गौड़ीयग्रन्थे पाठः । † श्राद्धमिति पाठान्तरम् ।

एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तत्कार्य्यं पूर्व्वमासेऽपि कालाधिक्येऽपि धर्म्मतः ॥

एकोद्दिष्टं षोड़शश्राद्धादि । पूर्व्वमासेऽपि अपिशब्द एवकारार्थे पूर्व्वमासमेव कर्त्तव्यमित्यर्थः ।

कौथुमिः ।

अब्दमम्बु घटं दद्यादन्नं वापि सुसञ्चितम् ।
संवत्सरे विवृद्धेऽपि प्रतिमासञ्च मासिकम् ॥

मलमासमृतानान्तु सांवत्सरिकं पुनर्मलमासपाते मलमासे एव कर्त्तव्यम् ।

तथाच भृगुः ।

मलमासे मृतानान्तु यच्छ्राद्धम्प्रतिवत्सरम् ।
मलमासे तु तत्कार्य्यं नान्येषान्तु कथञ्चन ॥

तुशब्दः एवकारार्थः ।

व्यासः ।

अधिमासे विपन्नानां सौरमासं समाश्रयेत् ।
स एव तस्य मासोऽपि श्राद्धपिण्डक्रियादिषु ॥

यदा प्रथमवत्सरे दैवादधिमासस्त्रयोदश तथा प्रथमाब्दिकमधिमासे एव । अब्दे परिपूर्णे सपिण्डीकरणपक्षाश्रयेणापि सपिण्डीकरणम् ।

तथाह वशिष्ठः ।

असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा ॥

यत्तु सत्यव्रतेनोक्तम् ।

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न कर्त्तव्यं व्यासस्य वचनं यथा ॥ इति ।

एतदधिमासादन्यत्र मृतस्य सांवत्सरिकविषयं प्रथमाब्दिकव्यतिरिक्तविषयम् । अत्र मलमासो नामाधिकमास एव न तु क्षयमासः क्षयमासे तेनैव श्राद्धविधानात् ।

एक एव यदा मासः संक्रान्तिद्वयसंयुतः ।
मासद्वयगतं श्राद्धं मलमासेऽपि* शस्यत इति ॥

गालवोऽपि ।

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मासद्वयेऽपि तत्कुर्य्याद्व्याघ्रस्य वचनं यथा ॥

मासद्वयेऽपि संक्रान्तिद्वयसंयुक्तत्वात्क्षयमास एव मासद्वयात्मकः† । अपिशब्द एवकारार्थे । क्षयमास एव श्राद्धङ्कुर्य्यादिति । एवंविधान्यन्यान्यपि वचनान्यस्मिन्नेव विषये योज्यानि । द्वितीयाब्दिकं शुद्ध एव कार्य्यम् ।

तस्मिंस्तु प्राकृते मासि कुर्य्याच्छ्राद्धं यथाविधि ।
तथैवाभ्युदयं सर्व्वं नित्यमेकं हि सर्व्वदेति ॥

सत्यव्रतस्मरणात् ।

---

* मलमासः एकमात्रसंक्रान्तित्वगुणयोगात् गौणः क्षयमास इत्यर्थः । † असंक्रान्तमासोऽधिमासः स्फुटः स्याद्विसंक्रान्तमासः क्षयाख्यः कदाचिदिति स्मरणात् ।

प्राक्तते शुद्धे। नित्यं नियमेन। एकमेव शुद्धे कुर्य्यान्न मासान्तर-इत्यर्थः।

यत्तु यमवचनम्।

आह्निकं प्रथमं यत्स्यात्तत्कुर्व्वीत मलिम्लुचे।
त्रयोदशे तु सम्प्राप्ते कुर्व्वीत पुनराह्निकमिति॥

तस्यायमर्थः। प्रथमाह्निकं मलिम्लुचे एव कुर्व्वीत। पुनराह्निकं द्वितीयाद्याह्निकं त्रयोदशे मासि परिपूर्णे चतुर्दशमासप्रथमदिने कुर्य्यादिति। अधिमासे काम्यव्रतादीनामारम्भः परिसमाप्तिश्चेति द्वयमपि निषिद्धं क्षयमासे तु प्रथमारम्भ एव निषिद्धः। इति सङ्क्षेपेण मलमासविधिनिषेधौ कर्म्मणा दर्शितौ। विशेषस्तु मलमासनिर्णये द्रष्टव्यः।

उक्ताः श्राद्धोपयुक्तकालाः। अथेदानीं श्राद्धे हविर्विशेषात् प्रीतिविशेषोऽभिधीयते।

तत्र मनुः।

यद्धविश्चिरकालाय यच्चानन्त्याय कल्पते।
पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः॥
तिलैर्माषैर्व्रीहियवैरद्भिर्मूलफलेन वा।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम्॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु।
औरभ्रेणाथ चतुरः शाकुनेन तु पञ्च वै॥
षण्मासांश्छागमांसेन पार्षतेनाथ सप्त तु।
अष्टावेणस्य मांसेन रौरवेण नवैव तु॥

दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्म्मयोस्तु मांसेन मासानेकादशैव तु ॥
संवत्सरन्तु गव्येन पयसा पायसेन वा ।
वार्द्धीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्काः खड्गं लोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः ॥

मत्स्यः पाठीनादिः । उरभ्रः मेषः । शकुनिः पक्षी सोऽप्य-निषिद्धो ग्राह्यः । पृषतश्चित्रमृगः । एणः कृष्णसारः । रुरुः शम्बरः । गव्येन पयसा । वार्द्धीणसो निगमोक्तः ।

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्द्धीणसन्तु तं प्राहुर्याज्ञिकाः पितृकर्म्मणि ॥

त्रिपिबमिति उदकपानसमये मुखं कर्णद्वयं चोदकमध्ये पिब-तीति त्रिपिबः । महाशल्को मत्स्यविशेषः । लोहामिष-मिति लोहनामा लोहपृष्ठाख्यः पक्षिविशेषः सोऽपि वार्द्धीणस-इति व्यपदिश्यते ।

तथाच निगमे ।

कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ।
सर्व्वैर्वार्द्धीणसः प्रोक्त इत्येषा नैगमश्रुतिरिति ॥

अथवा लोहः लोहच्छागः । श्राद्धे मांसोपादानं क्षत्रियादि-विषयम् । मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोरिति पुन-स्तेन क्षत्रियादीनां मांसनियमाच्छागमेषयोरालम्भः कर्त्तव्यः इतरेषान्तु न ।

तथाच कात्यायनः ।

छागमेषा आलब्धव्याः शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृतानां वाहृत्य पचेदिति ।

शङ्खः ।

क्षत्रियैर्मृगयायान्तु विधिना यदुपाहृतम्* ।
श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतञ्च यत् ॥

विष्णुः ।

शाकैः श्यामाकैः प्रियङ्गुनीवारैर्मुद्गैर्गोधूमैश्च मासं प्रीयन्ते ।

पैठीनसिः ।

घृतेन मासं प्रीणाति ।

आदित्यपुराणे ।

मधुकं रामठञ्चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्म्मणि शस्तानि सैन्धवं त्रपुषं† तथा ॥

रामठं हिङ्गु ।

वायुपुराणे ।

श्यामाका हस्तिनामानो विद्धि तान्यज्ञनिःसृतान् ।
प्रसाविका प्रियङ्गुश्च मुद्गाश्च हरितास्तथा ।
प्रशान्तिकाः कोविदारा ग्राह्याः स्युः श्राद्धकर्म्मणि ।
एतान्यपि समानि स्युः श्यामाकानां गुणैर्द्विजाः ॥

---

* उपार्ज्जितमिति पाठान्तरम् । † तरमुज इति भाषा ।

कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः।
महायवा व्रीहियवास्तथैव च मधूलिकाः।
कृष्णाः श्वेता लोहिताश्च ग्राह्याः स्युः श्राद्धकर्म्मणि॥
बिल्वामलकमृद्वीकं पनसाम्रातदाड़िमम्।
भव्यं पारावताक्षोटखर्ज्जुरं गिरिसम्भवम्॥
कसेरुः कोविदारश्च तालकन्दस्तथा बिसम्।
तमालं शतकन्दश्च तथा वै शीतकन्दली॥
कालेयङ्कालशाकञ्च सुनिषण्णा सुवर्च्चला।
मांसं शाकं दधि क्षीरं शस्तं वेत्राङ्कुरस्तथा॥

मासाख्यं दधिशाकञ्च इत्यपि पाठः।

कट्फलं कौङ्गनी द्राक्षा लकुचं मोचमेव च।
अलाबु शीवकं चारु कर्कन्धुर्मधुसाह्वयम्॥

कर्कन्धुविशेषणानि अलाबु शीवकमित्यादीनि। अत्र पाठान्तरमपि।

कर्कन्धुशीवकं चारुतिन्दुकं मधुसाह्वयम्।
वैकङ्कतं नारिकेलं शृङ्गाटकपरूषकम्॥
पिप्पली मरिचञ्चैव पटोलं बृहतीफलम्।
एवमादीनि चान्यानि स्वादूनि मधुराणि च।
नागरं चात्र वै देयं दीर्घमूलकमेव च॥

प्रसाधिकाख्यं धान्यम्। यवशालयो यवप्रभेदाः शालिभेदा वा। महायवा वेणुयवाः। मधूलिका यावनालविशेषः। अस्यैव विशेषणङ्कृष्णा श्वेता लोहिता चेति कल्पतरुकारः। गोविन्द-

राजस्तु स्मृतिमञ्जर्य्यामन्यथा व्याचख्ये। कृष्णाः कृष्णगौराख्याः षष्टिकशालिप्रभेदाः गौरषष्टिकाः श्वेता लोहबालाख्याः शालयो लोहाः। मृद्वीका गोस्तनी द्राक्षा। भव्यं पारावतं कृतमालविशेषः। आक्षोटकं काश्मीरप्रसिद्धम्फलम्। गिरिसम्भवं पीलुफलम्। कसेरुः कूलजो मूलविशेषः। कोविदारं श्वेतकाञ्चनारसदृशम्। तालकन्दो बालमूली। शतकन्दं शतावरी। शीतकन्दली शालूकम्। कालेयं करालाख्यं शाकम्। सुनिषण्णा चाङ्गेरीसदृशं शाकम्*। यदा मांसाद्यमिति पाठस्तदा सुवर्च्चलादयः शाकविशेषाः। कौङ्कनदेशोद्भवा कौङ्कनी द्राक्षा। मोचं कदलीफलम्। कर्कन्धुर्बदरीविशेषः। शृङ्गाटकं जलोद्भवमूलफलविशेषस्तत्साहचर्य्यात् परूषकमपि। तथैव नागरं शुण्ठी। इतरनामान्यप्यभिधानतो देशविशेषनिवासिभिश्चावगन्तव्यानि। एवमादीन्यन्यान्यपि विहितानि स्मृत्यन्तरतोऽवगन्तव्यानि।

## अथ वर्ज्यानि।

तत्र शङ्खः।

भूस्तृणं सुरसं शिग्रुं† पालक्यं मधुकं तथा।
कुष्माण्डालाबुवार्त्ताकुकोविदारांश्च वर्ज्जयेत्॥
पिप्पली मरिचञ्चैव तथा वै पिण्डमूलकम्।
कृतञ्च लवणं सर्व्वं वंशाग्रञ्च विवर्ज्जयेत्॥

---

* सुषुणि इति भाषा। † सजिना इति भाषा।

कोविदारपिप्पलीमरिचवंशान्तराणां विहितप्रसिद्धत्वाद्विकल्पः एवं हिङ्गुवीजपूरादीनामपि विज्ञेयम् । अथवा पिप्पली-मरिचयोः शाकादिष्वनिचिप्तयोः प्रत्यक्षयोर्निषेधः हिङ्गु-निषेधः शाकेषु न फलं व्यञ्जनेषु । तथाच वर्ज्यप्रकरणे व्यासः । हिङ्गुद्रव्येषु शाकेष्विति शाकविशेषणम्। अन्यथा द्रव्येष्वित्यनेनैव सिद्धे शाकपदं न दद्यात् ।

ब्रह्माण्डपुराणे ।

आसनारूढ़मन्नाद्यं पादोपहतमेव च ।
अमेध्यजङ्गमैः स्पृष्टं शुष्कं पर्य्युषितञ्च यत् ॥
द्विस्विन्नं परिदग्धञ्च तथैवाग्रावलेहितम् ।
शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम्* ॥
पिण्याकं मथितञ्चैव तथातिलवणञ्च यत् ।
सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः ॥
वस्त्रावष्टष्टाश्च तथा दुष्टैश्चोपहृतास्तथा ।
वाससा चावधूतानि वर्ज्याणि श्राद्धकर्म्मणि ॥
राजमाषास्तथा चैव वर्ज्याः सद्भिः प्रयत्नतः ।
आविकं मार्गमौष्ट्रञ्च सर्व्वमेकशफञ्च† यत् ।
माहिषं चामर‡ञ्चैव पयो वर्ज्यं विजानता ॥

द्विस्विन्नं शाकादिसंस्कारार्थं जीरकादिप्रक्षेपेण यत्पुनः पक्कम् । अतएव पाकादौ चैव संस्कारः कर्त्तव्यः यश्च व्यञ्जनादेरौष्णाप-

* युतम् । † घोटकादि । ‡ चमरीसम्बन्धि ।

गमे सति पुनरुष्णतार्थं सोऽपि द्वितीयः पाकः स च वर्ज्जनीयः। अग्रावलेहितमुपभुक्ताग्रभागम्। सिद्धाः कृताः सन्तः इति। येषु सिद्धे सिद्धेऽप्युत्तरकालं प्रत्यक्षलवणप्रक्षेपः कृतस्ते ग्राह्याः।

## अथ ब्राह्मणपरीक्षा।

तत्र मनुः।

दूरादेव परीक्षेत ब्राह्मणं वेदपारगम्।
तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः॥
सहस्राणि सहस्राणामनृतं यत्र भुञ्जते।
एकस्तन्मात्रविप्रीतः सर्व्वानर्हति धर्म्मतः॥
ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च।
न हि हस्तावसृग्दिग्धौ* रुधिरेणैव शुध्यतः† ॥

दूरात्परीक्षा पितृपितामहाद्यभिजनाचारादिपरीक्षा प्रदाने इतरस्मिन्नपि प्रदाने अतिथिवत्पूज्य इत्यर्थः।

न ब्राह्मणं परीक्षेत दैवे कर्म्मणि धर्म्मवित्।
पित्र्ये कर्म्मणि सम्प्राप्ते परीक्षेत प्रयत्नतः॥

श्रुतवृत्तादिभिः परीक्षेत इत्यर्थः।

---

* रक्ताक्तौ। † प्रक्षालितौ भवतः।

## अथ पङ्क्तिपावनाः ।

तत्र मनुः ।

अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥
त्रिणाचिकेतः* पञ्चाग्निस्त्रिसुपर्णः† षडङ्गवित् ।
ब्राह्मदेयानुसन्तानो धर्म्मविज्ज्येष्ठसामगः‡ ॥
वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः ॥

सर्व्ववेदेष्वेकस्मिन्वा अग्र्या अध्यापकानां मध्ये तु मुख्याः एवं सर्व्वप्रवचनेषु वेदार्थनिर्व्वचनेषु । श्रोत्रियान्वयजा वेदाध्येतृकुलजाः । त्रिणाचिकेतः अध्वर्य्युवेदभागस्तद्व्रतं चैतदुभयं योऽधीते यश्च करोति सोऽपि तद्योगात्त्रिणाचिकेतः । पञ्चाग्निर्गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथाग्निमान् । त्रिसुपर्णः अध्वर्य्युवेदभागः तस्यार्थतो ग्रन्थतश्च अध्येता । षडङ्गवित् शिक्षाकल्पादीनामध्ययनतोऽर्थतश्च वेत्ता । ब्राह्मदेयानुसन्तानो

---

* त्रिणाचिकेतः अध्वर्य्युवेदभागः । तद्योगात् पुरुषोऽपि त्रिणाचिकेतः इति कुल्लूकभट्टः । † त्रिसुपर्णः बह्वृचां वेदभागः । तद्योगात् पुरुषोऽपि त्रिसुपर्णः । ‡ ब्राह्मदेयात्मसन्तानो ज्येष्ठसामग एव च इति मूले पाठः । ब्राह्मविवाहेनोढ़ा तस्या आत्मसन्तानः पुत्र इति कुल्लूकभट्टः । ज्येष्ठसामानि आरण्यके गीयन्ते तेषां गाता तां गायति इति ।

ब्राह्मविवाहदत्ता ब्राह्मदेया तत्सन्ततिस्तदनुसन्तानः ब्राह्मदेयैव या परम्परया भार्य्या तत्सन्ततिरिति ज्ञापनार्थमनुपदस्याङ्गम् । सततञ्जाता ज्येष्ठसामगः । अथवा ज्येष्ठसामच्छन्दगानां व्रतं सामानि च तद्योगेन ज्येष्ठसामगः । प्रवक्ता वेदार्थस्य व्याख्याता । सहस्रद इति मेधातिथिः । पूर्णशतवर्षः शतायुः ।

मत्स्यपुराणे ।

यश्च व्याकुरुते वाचां यश्च मीमांसतेऽध्वरम् ।
सामस्वरविधिज्ञश्च विज्ञेयाः पङ्क्तिपावनाः ॥

वायुपुराणे ।

यतिस्तु सर्व्वविप्राणां सर्व्वेषामग्रभुग्भवेत् ।
गृहस्थानां सहस्रेण वानप्रस्थशतेन च ।
ब्रह्मचारिसहस्रेण योगी एको विशिष्यते ॥

## अथानुकल्पाः ।

तत्र मनुः ।

एष वै प्रथमः कल्पः प्रदाने कव्यहव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥

विट्पतिर्जामाता बन्धुशब्देन शरीरबान्धवः स्नेहबन्धुश्च गृह्यन्ते ।

वशिष्ठः ।

शिष्यानपि गुणवतो भोजयेत् ।

## अथ वर्ज्याः ।

तत्र मनुः ।

न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः ।
नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम् ॥

याज्ञवल्क्यः ।

रोगहीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥
भृतकाध्यापकः क्लीवः कन्यादूष्यभिकस्ततः ।
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ॥
मातापित्रोर्गुरोस्त्यागी कुण्डाशी वृषलात्मजः ।
परपूर्व्वापतिस्तेनः कर्म्मदुष्टाश्च निन्दिताः ॥

रोगी दीर्घरोगी । पौनर्भवः पुनर्भूपुत्रः । अवकीर्णी ब्रह्मचार्य्येव स्खलितब्रह्मचर्य्यः । कुण्डगोलकौ परपुरुषोत्पन्नौ—जीवद्भर्त्तरि कुण्डः स्यान्मृते भर्त्तरि गोलक इति मनुः । श्यावदन्तकः स्वभावतः । भृतकाध्यापको मूल्यं गृहीत्वाध्यापकः मूल्यदानेनापि अध्यापयिता निषिद्ध एव सन्निरसन्निर्वा दोषैः । कन्यादूषकः कन्यादूषी । सोमविक्रयी सोमलताविक्रयी । परिविन्दकः—

दाराग्निहोत्रसंयोगं यः करोत्यग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥इति मनूक्तः।

कुण्डाशी कुण्डगोलकसम्बन्ध्यन्नभोजी कुण्डगोलकावभिधाय— यस्तयोरन्नमश्नाति स कुण्डाश्युच्यते द्विज इति मनुस्मरणात्। ब्रह्माण्डपुराणे त्वन्यथा ।

चतुःषष्टिपलैः शुद्धैः कुण्डं प्रस्थचतुष्टयम् ।
भवेत्तु यस्तु निगरेत्स कुण्डाशी पतत्यधः ॥

वृषलात्मजः वृषलो धर्म्महीनस्तस्यात्मजः अथवा वृषलः शूद्रः स आत्मजो यस्य स तादृशः। परपूर्व्वापतिः परपूर्व्वा पुनर्भूः। कर्म्म- दुष्टाः श्राद्धविरुद्धकारिणश्चकाराद्दुष्कर्म्म विरुद्धाः प्रजननादयः । मनुः ।

चिकित्सका देवलका मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥

पशुपालो वृत्त्यर्थम् । निराकृतिर्नास्तिकः । गणाभ्यन्तरो मठ- ब्राह्मणादिः ।

कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥

कुशीलवो नटः ।

अकारणपरित्यागी मातापित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥

## अथ ब्राह्मणनिमन्त्रणविधिस्तन्नियमाश्च ।

तत्र वराहपुराणे ।

वस्त्रशौचादि कर्त्तव्यं श्वः कर्त्तास्मीति जानता ।
स्थानोपलेपनं भूमिङ्कृत्वा विप्रान्निमन्त्रयेत् ।
दन्तकाष्ठञ्च विसृजेद्ब्रह्मचारी शुचिर्भवेत् ॥

वस्त्रशौचादिकमद्भिः कृत्वा श्राद्धभूमिं परिगृह्यतां दक्षिणाप्रवणादिगुणोपेतां कृत्वा रात्रौ विप्रान्निमन्त्रयेत् । ततश्च ब्राह्मणेभ्यो दन्तकाष्ठं विसृजेत् ।

निमन्त्रणात्प्राक्कर्त्तव्यमाह पैठीनसिः ।

श्वः श्राद्धङ्करिष्यामि इति सङ्कल्प्य ब्राह्मणान् सप्त पञ्च वा श्रोत्रियान्निमन्त्रयेतेति द्वौ विश्वेदेवार्थं त्रयः पित्रर्थमिति पञ्च चत्वारो वैश्वदेवार्थं त्रयः पित्रर्थमिति सप्त ।

न तु द्वौ विश्वेदेवस्थाने पञ्च पितृस्थाने इति समसंख्या किमिति नाङ्गीक्रियते इति चेन्नैवम् । दैवे युग्मानयुग्मान् यथाशक्ति पित्र्ये एकैकस्येति कात्यायनेन शक्तिसम्भवे एकैकादिक्रमेण पित्र्ये अयुग्मब्राह्मणवृद्धिरभिहिता । ततश्च समं स्यादश्रुतत्वादिति न्यायेन पित्राद्यष्टकं प्रत्येकं प्रत्येकमेकैकं वा त्रींस्त्रीन्वा निमन्त्रयेतेति नियतम् । तथाच पित्रेर पञ्चानां निमन्त्रणेऽपि पितामहे प्रपितामहोद्देशेन समभागो न प्रसज्येतेति पूर्व्वोक्त एव विभागः । अथवा सप्त पञ्चेति पितृब्राह्मणसंख्ये वा । यत्तु मनुनोक्तम् ।

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥ इति

तत्तु देशकालाद्यभावे विस्तरे क्रियमाणे कर्म्मवैगुण्यभयाद्विस्तर-निषेधपरम् ।

याज्ञवल्क्यः ।

मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम् ।

वशिष्ठः ।

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ॥
अन्नं पात्रे समुद्धृत्य सर्व्वस्य प्रकृतस्य तु ।
देवतायतने कृत्वा यथाविधि समाचरेत् ।
प्रास्येदन्नं तदग्नौ तु दद्याद्ब्राह्मणचारिणे ॥

देवलः ।

श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्व्वभुक्तजने गृहे ॥

यमः ।

जातिक्रियावबोधाद्यैर्गुणैर्युक्तानलोलुपान् ।
प्रार्थयीत प्रदोषान्ते भुक्तानशयितान्द्विजान् ॥

वेदार्थादेरवगतिरवबोधः । अकृतशयनक्रिया अशयिताः ।

प्रार्थनप्रकारमाह प्रचेताः ।

कृतापसव्यः पूर्व्वेद्युः पितॄन् पूर्व्वं निमन्त्रयेत् ।
भवद्भिः पितृकार्य्यं नः संपाद्यञ्च प्रसीदत ।

सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत् ॥

अत्र पूर्व्वं प्राधान्येन गौरवेणातियाचेन्न तु प्रथममित्यभिप्रायः । वैश्वदेविकब्राह्मणनिमन्त्रणस्य पार्थक्यात् सव्येन सव्यां संस्थितयज्ञोपवीतान्वितेनेति । तत्रैवं प्रयोगः । श्वो नः पितृकार्य्यं भविष्यतीति वा । तत्र विश्वेदेवस्थाने पितृस्थाने आहवनीयार्थे भवद्भिः च्रणः स्वीकर्त्तव्यः । प्रसीदत इति प्रणिपत्य निमन्त्रणं शूद्रकर्त्तृकश्राद्धे ।

दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ।
पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्व्वकम् ॥
निमन्त्रयीत पूर्व्वेद्युरिति स्मरणात् ।

मत्स्यपुराणे चरणग्रहणे विशेषः ।

दक्षिणं जानुमासाद्य* त्वं मयात्र निमन्त्रितः ।
एवं निमन्त्र्य नियमान् श्रावयेत्पैतृकान् बुधः ॥
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च† श्राद्धकर्म्मणि ॥

पूर्व्वेद्युः निमन्त्रणासम्भवे देवलः ।

असम्भवे परेद्युर्व्वा ब्राह्मणांस्तान्निमन्त्रयेत् ।

निमन्त्रणन्तु भोजनीयब्राह्मणगृहं गत्वा कर्त्तव्यम् ।

तथाचात्रिः ।

प्रथमेऽह्नि निवासस्थान् श्रोत्रियादीन्निमन्त्रयेत् ।

---

* आलभ्येति पाठान्तरम् । † मयात्र श्राद्धकर्म्मणि इति गौड़ीयग्रन्थे पाठः ।

निमन्त्रणं शिष्यादिभिरपि कार्य्यम् ।

तथाह यमः ।

स्वयं शिष्योऽथवा सुतः ।

प्रचेताः ।

सवर्णं प्रेरयेद्दातं द्विजानामुपमन्त्रणे ।

एषु पूर्व्वांश्रयणे* यमः ।

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥

ब्राह्मणशूद्रयोरेव निषेधात् क्षत्रियवैश्यकर्त्तृके ब्राह्मणेन निमन्त्रितेऽपि न दोषः । अतएव प्रचेतोवचने सवर्णं प्रेरयेदिति सम्भवाभिप्रायम् ।

अत्रिस्तु निमन्त्रितविप्रकर्त्तव्यमाह ।

ते तं तथेत्यविघ्नेन गतेयं रजनी यदि ।
यथाक्रमं† प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः ॥

ते निमन्त्रितास्तं निमन्त्रणकर्त्तारं यदीयं रात्रिरविघ्नेन गता तर्हि तथास्तु इत्युक्ता श्राद्धकालं प्रतीक्षेरन्नित्यर्थः ।

कात्यायनः ।

अनिन्द्येनामन्त्रितो नापक्रामेद्विधिवत्केतनं प्रतिगृह्य शक्तः सन्नापक्रामेत् ।

केतनमामन्त्रणम् । शक्त इत्युपादानादङ्गीकृत्य भोक्तुमसामर्थ्ये सति अतिक्रमे न दोष इत्युक्तो भवति ।

---

* पूर्व्वः पूर्व्वः श्रेयानिति पाठान्तरम् । † यथाश्रुतमिति पाठान्तरम् ।

मनुयमौ ।

केतनन्तु यथान्याय ब्राह्मणो हव्यकव्ययोः ।
कथञ्चिदप्यतिक्रामेत्पापः शूकरतां व्रजेत् ॥

निमन्त्रितब्राह्मणपरित्यागे यमनारायणौ ।

केतनं कारयित्वा तु योऽतिपातयते द्विजः ।

निवारयति दुर्म्मतिरिति नारायणपाठः ।

ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥

नारायणः ।

आमन्त्रितस्तु यः श्राद्धे कुर्य्यादन्यस्य भोजनम् ।
संवत्सरकृतं पुण्यं तस्य नश्यति दुर्म्मतेः ॥

अन्यत्र निमन्त्रितः सन्नन्यत्र यः प्रतिगृह्णाति तं प्रति देवलः ।

पूर्व्वं निमन्त्रितोऽन्येन कुर्य्यादन्यप्रतिग्रहम् ।
भुक्ताहारोऽथवा भुङ्क्ते सुकृतं तस्य नश्यति ॥

आमन्त्रित आहूतः सन् श्राद्धकालातिपातं न कुर्य्यात् ।

तथाच ब्रह्माण्डपुराणे ।

आमन्त्रितश्चिरं नैव कुर्य्याद्विप्रः कदाचन ।
देवतानां पितॄणाञ्च दातुरन्नस्य चैव हि ॥

## अथ श्राद्धदिने पूर्व्वाह्णकृत्यम् ।

तत्र प्रचेताः ।

श्राद्धभुक् प्रातरुत्थाय प्रकुर्य्याद्दन्तधावनम् ।

श्राद्धकर्त्ता न कुर्व्वीत दन्तानां धावनं बुधः ॥

यजमानकृत्यमाह देवलः ।

तथैव यन्त्रितो* दाता प्रातः स्नात्वा सहाम्बरः ।
आरभेत नवैः पात्रैरन्नारम्भञ्च बान्धवैः ॥

तथैव पूर्व्वोक्तप्रकारेण यन्त्रितो नियतः दाता श्राद्धकर्त्ता अन्नारम्भं पाकारम्भम् ।

पाकसंभृत्यनन्तरकर्त्तव्यमाह हारीतः ।

पूर्व्वेद्युः ब्राह्मणानामन्त्रयेदित्यधिकारे श्वोभूते दक्षिणां दिशं गत्वा दक्षिणप्रणतान् समूलान् दर्भानाहरेदपरिगृहीताश्चापः ।

उशना ।

गोमयोदकैर्भूमिभाजनभाण्डशौचं कुर्य्यात् ।

देवलः ।

तिला नव किरेत्तत्र सर्व्वतो बन्धयेदजान् ।
असुरोपहतं सर्व्वं तिलैः शुद्ध्यत्यजेन च ॥
ततोऽन्नं बहुसंस्कारैर्नैकव्यञ्जनभक्ष्यवत् ।
चोष्यपेयसमृद्धञ्च यथाशक्त्युपकल्पयेत् ॥
ततोऽनिवृत्ते मध्याह्ने क्लृप्तरोमनखान्द्विजान् ।
अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥
तैलमभ्यञ्जनञ्चैव स्नानीयञ्च पृथग्विधम् ।

* तथैवामन्त्रितोदाता इति गौड़ीयपुस्तके पाठः ।

पात्रैरौदुम्बरैर्दद्याद्वैश्वदैवत्यपूर्व्वकम् ॥

मध्याह्ने अनिवृत्ते मध्याह्नात्पूर्व्वं मध्याह्न इत्यर्थः । यथामार्गमुक्तविधिना दन्तधावनं प्रयच्छेत् । एतच्च पूर्व्वेद्युरात्रौ दन्तकाष्ठादाने वेदितव्यम्। अभ्यञ्जनं तैलापकर्षकद्रव्यम्। स्नानं स्नानोदकं स्नानीयम् । सुगन्धिपूर्णमुद्वर्त्तनाद्युपयोगि । औदुम्बरं ताम्रम् ।

## अथ श्राद्धदिनेऽपराह्णकृत्यम् ।

तत्र यमः ।

ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।

पाद्यमाचमनीयञ्च सम्प्रयच्छेद्यथाक्रमम् ॥

मार्गचङ्क्रमणजनितोपहतिशुद्ध्यर्थं पादप्रक्षालनोदकमाचमनीयमाचमनोदकम् । चङ्क्रमेण पृथगागमनक्रमेणैकसमयागमने निमन्त्रणक्रमेणेत्यर्थः ।

याज्ञवल्क्यः ।

अपराह्णे समभ्यर्च्च्य स्वागतेनागतान्तु तान् ।

स्वागतमिति प्रश्नरूपत्वात्प्रत्युत्तरं ब्राह्मणैर्दातव्यम् । एवमन्यत्रापि । ततो वैश्वदैविकं यज्ञोपवीतिना पैतृकं प्राचीनावीतिना कार्य्यम् ।

ब्रह्माण्डपुराणे ।

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।

प्रदद्यात्पार्व्वणश्राद्धे देवपूर्व्वं विधानतः ॥

कात्यायनः ।

दक्षिणं पातयेज्जानुं देवान् परिचरन्सदा ।
पातयेदितरं जानुं पितॄन्परिचरन्सदा ॥

बौधायनः ।

प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणास्तथा ॥

द्विगुणमध्यभङ्गेन द्विगुणीकृताः ।

सङ्कल्पान्तरं मत्स्यपुराणे ।

भवनस्याग्रतो भुवि ।
गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले ।

कर्त्तव्यः इत्यर्थः । गोमूत्रमुदकस्यापि प्रदर्शनार्थं तच्च गोमयसहितम् ।

शङ्खः ।

उदक्प्लवमुदीच्यां तद्दक्षिणां दक्षिणाप्लवम् ।
उत्तरे कृतसंयुक्तान् पूर्व्वाग्रान्विन्यसेत्कुशान् ।
दक्षिणे दक्षिणाग्रान्तु सतिलान्विन्यसेत्कुशान् ॥

तिलेषु विशेष आपस्तम्बेनोक्तः ।

अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा ।
ते वै श्राद्धे पवित्रास्तु तिलास्ते न तिलास्तिलाः ॥

ग्राम्यतिला न तिलकार्य्यकरा इत्यर्थः । अत आरण्यतिलेषु सत्सु न ग्राम्या ग्राह्याः ।

ब्रह्मनिरुक्ते ।

पाद्यञ्चैव तथैवार्घ्यं दैवे आदौ प्रयोजयेत् ।
शन्नो देवीति* मन्त्रेण पाद्यञ्चैव प्रदापयेत् ॥

शन्नो देवीति मन्त्रं पठित्वा पुरूरवामन्त्रसंज्ञका विश्वेदेवाः† इदं वः पाद्यमिति दद्यात्। एवं पित्रर्थं ब्राह्मणपादयोरपि शन्नो देवीति मन्त्रान्ते पितरमुकगोत्रामुकशर्म्मन् वसुरूप इदन्ते पाद्यमिति दद्यात् । एतच्चरणप्रक्षालनं स्वयमेव कार्य्यम् ।

तथाच यमः ।

पादप्रक्षालनं कुर्य्यात्स्वयमेव विनीतवत् ।

इति पादप्रक्षालनानन्तरं मण्डलाद्यग्रभागे आचान्तेषु ब्राह्मणेषु सत्सु ।

शतक्रतुराह ।

दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेत् ॥

लघुवासाः शुद्धवासाः ।

यमः ।

आसनं कुतपं दद्यादितरं वा पवित्रकम् । तथा आसनं स्पृशन् सव्येन पाणिना ब्राह्मणमुपसंगृह्य समाध्वमिति चोक्तोपवेशयेदिति ।

---

* शन्नो देवीरभीष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः । सामवेदिनान्तु आपोभवन्तुस्थाने शन्नो भवन्तु इति विशेषः । † पुरूरवा माद्रवसौ विश्वेदेवा इति मन्त्रः ।

ब्राह्मणमुपसंगृह्य दक्षिणहस्तेनालभ्य स्पृष्ट्वेत्यर्थः । तथाच आस्यतामिति यावद्ब्रूयात् आसनं संस्पृशन्नपि ।

उपवेशने मन्त्रमाह धर्म्मः ।

समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत् ।

दिङ्नियममाह याज्ञवल्क्यः ।

द्वौ दैवे प्राक्त्रयः पित्र्य उदगेकैकमेव वा ।

दैवे प्राङ्मुखावुपवेशनीयौ पित्र्ये उदङ्मुखा इत्यर्थः ।

यत्तु मैत्रायणीयपरिशिष्टे ।

दक्षिणाग्रे तु दर्भे प्राङ्मुखान् भोजयेदुदङ्मुखानित्येके इति ।

तत्प्राङ्मुखोपवेशनं मैत्रायणीयानामेव व्यवस्थितम् ।

ब्रह्मपुराणे ।

पृथक् पृथगासनेषु तान् प्राङ्मुखान् भोजयेदुदङ्मुखानित्येके इति ।

तत्प्राङ्मुखोपवेशनीयानामेव व्यवस्थितम् ।

ब्रह्मपुराणे ।

पृथक् पृथगासनेषु तिलतैलेन दीपकाः ।
अविच्छिन्नास्तथा देयास्ते तु रक्षासु वै द्विज ॥

आसनेषु आसनसन्निधौ ।

यमः ।

भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमनुभोजयेत् ॥

भिक्षुकोयतिः। उपविष्टेष्वनुप्राप्त इति वदता अत्यर्थं पूर्व्वमेव ब्राह्मणसम्प्रदानं न कर्त्तव्यमित्यर्थादुक्तं भवति उपविष्टब्राह्मणानुज्ञया तमतिथिं भोजयेत्।

ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत्।

इति मनुस्मरणात् शक्तित इत्युपादानाद्बहुषु अतिथिषु प्राप्तेषु एकं द्वौ वा स्वशक्त्यनुसारेण भोजयित्वेतरान्नमस्कारादिभिः प्रीणयित्वा प्रस्थापयेदित्युक्तं भवति।

यत्तु वृद्धशातातपवचनम्।

आतिथ्यरहिते श्राद्धे भुञ्जते ये बुधा द्विजाः।

वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते॥

इति तु तथोक्तकाले अतिथिलक्षणाभिप्रेतभिक्षुकादिष्वागतेष्वतिथिपूजाविहितविषयमेवावगन्तव्यम्। एवमासनोपविष्टेषु ब्राह्मणेषु सत्सु।

ब्रह्माण्डपुराणे।

आवङ्करिष्य इत्येवं पृच्छेद्विप्रान्समाहितः।

कुरुष्वेति स तैरुक्तो दद्याद्दर्भाञ्जलिन्ततः॥

कुर्य्याद्दर्भासनमित्यपि पाठः।

कात्यायनः।

सर्व्वप्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्व्वान्वेति।

अपहता* इति तिलान्विकिरेत्तदनन्तरं निगमः। तथा प्रोक्षयेदिति तिलविकिरणानन्तरं ततः पूर्व्वं वा नीविबन्धं

* अपहता सुरा रक्षांसि वेदिषद इति।

कुर्य्यात्। कटिप्रदेशे दर्भान्निक्षिपेत्तत्र दक्षिणवामयोर्यथासम्प्रदायं व्यवस्था।

याज्ञवल्क्यः।

पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि।
आवाहयेदनुज्ञातो विश्वेदेवा स इत्यृचा* ॥

आसनार्थं दर्भदाने विशेषः।

स्मृत्यन्तरे।

पितृकर्म्मणि वामे वै दैवे कर्म्मणि दक्षिणे।

विश्वेदेवस्थाने यवा ग्राह्या देवानान्तु यवा दर्भा इति काठकेऽभिधानात्। अत्र यवाक्षतयोर्विकल्पः† अक्षतानामपि स्मृत्यन्तरेऽभिधानात्।

कर्म्मविशेषे विभक्तिनियममाह श्लोकसङ्ग्रहकारः।

अर्घ्यासनयोः षष्ठी द्वितीयावाहने स्मृता।
अन्नदाने चतुर्थी स्याच्छेषे सम्बुद्धयः स्मृताः ॥

इति दर्भासनदानानन्तरं गद्यसङ्ग्रहकारः। ततः पुनरपोदत्त्वा निमन्त्रयेद्दैवे क्षणः क्रियतामिति। ततः ओं तथेति विप्रो ब्रूयात्। प्राप्नोतु भवानिति कर्त्ता पुनर्ब्रूयात्। प्राप्नवानिति विप्रः पुनर्ब्रूयात्। इति। निमन्त्रणश्चाङ्गुष्ठव्यतिरिक्तब्राह्मण-

---

* ओं विश्वेदेवास आगत शृणुताम इमं हवं एदं वर्हिर्निषीदत। ओं विश्वेदेवाः शृणुतेमं हवं येमे अन्तरीक्षे य उपद्यविष्ट्ये अग्निजिह्वा उतवातजत्रा आसाद्यास्मिन् वर्हिषमादतध्वम्।

† यद्यपि अक्षतास्तु यवाः प्रोक्ताः भ्रष्टाधाना भवन्ति ता इति कोषादक्षतोऽपि यवपर्य्यायः तथापि तण्डुलः अक्षतपदप्रयोगात्तमादाय विकल्पसङ्गतिः।

हस्तं गृहीत्वा कर्त्तव्यम्। निरङ्गुष्ठं गृहीत्वा तु विश्वान्देवान् समाह्वयेदिति ब्रह्माण्डपुराणस्मरणात्। निरङ्गुष्ठं गृहीत्वा निमन्त्र्य विश्वान्देवान् समाह्वयेदित्यर्थः।

यमः।

यवहस्तस्ततो देवान् विज्ञाप्यावाहनम्प्रति।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा॥
विश्वेदेवा शृणुतेति मन्त्रं जप्त्वा ततोऽक्षतान्।
ओषधय* इति मन्त्रेण विकिरेत्तु प्रदक्षिणम्॥

विश्वेदेवास आगत इत्यृचावाह्य ततोविश्वेदेवा शृणुतेमं हवमिति मन्त्रं जपित्वा ततः ओषधयः प्रमोदध्वमिति मन्त्रेण दक्षिणपादादिमस्तकान्तमक्षतानारोपयेदित्यर्थः। अक्षतग्रहणं पुष्पाणामपि प्रदर्शनार्थम्।

प्रचेताः।

पादप्रभृति मूर्द्धान्तं देवानां पुष्पपूजनम्। इति।

कर्म्मविशेषे विश्वेदेवानामानि बृहस्पतिना दर्शितानि।

इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः।
नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ।
पुरूरवाद्रवौ† चैव पार्व्वणे समुदाहृतौ।
उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः॥
अयमुच्चारणीयस्तैः श्लोकः श्राद्धसमन्वितैः।

---

* ओषधय सोमवदन्तः सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजानं पारयामसि।

† पुरूरवमाद्रवसाविति पाठान्तरम्।

आवाहनान्तरं याज्ञवल्क्यः ।

यवैरन्ववकीर्य्याथ भाजने सपवित्रके ।
शन्नो देव्या अपः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥

वैश्वदेवस्थाने अर्घ्यपात्रमेकं द्वे वा पितृस्थाने एकं त्रीणि वा षड्दैवत्ये षड् वा कुर्व्वीत ।

अर्घ्यपात्राण्याह कात्यायनः ।

सौवर्णराजतावुदुम्बरखड्गमणिमयानां पात्राणामन्यत-
मेषु वा निष्पाद्यन्ते पत्रपुटिकादिषु चेति ।

अनिषिद्धेष्विति शेषः । राजतं दैवे निषिद्धम् ।

मत्स्यपुराणे ।

शिवनेत्रोद्भवं यस्मात्ततस्तत् पितृवल्लभम् ।
अमङ्गलं सदा तेन देवकार्य्येषु वर्ज्जितम् ॥

चतुर्विंशतिमते ।

द्वे द्वे शलाके देवानां पात्रे क्षत्वा पयः क्षिपेत् ।
शन्नो देव्या यवोऽसीति यवानपि ततः क्षिपेत् ।
पुष्पधूपादिभिः पूजाङ्कृत्वा पात्रेषु मानवः ॥
पितृपात्रे विशेषोऽयं तिलोऽसीति तिलान् क्षिपेत् ।
तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्व्वणे ॥
एकोद्दिष्टे शलाकैकां निधायोदकमाहरेत् ।

शलाकाः साग्रकुशाः ।

योगियाज्ञवल्क्यः ।

पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत् ।

अनन्तर्गर्भितेनाग्रच्छिन्ने प्रादेशसम्मिते ॥

पवित्रे स्थो वैष्णवीर्वायुश्वाङ्मनसा पुनात्विति मन्त्रः ।

यज्ञपार्श्वः ।

ओषधीरन्तरे कृत्वा अङ्गुष्ठाङ्गुलिपर्व्वणा ।
छिन्द्यात्प्रादेशमात्रन्तु पवित्रं विष्णुदैवतम् ॥

एवमर्घ्यपात्रस्थापनानन्तरं याज्ञवल्क्यः ।

या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।

प्रत्यर्घ्यं दानमन्त्रावृत्तिः । एवमुदकप्रक्षेपेऽपि ।

अत्र विशेषमाह गार्ग्यः ।

दत्त्वा हस्ते पवित्रे तु कृत्वा पूजाञ्च पादतः ।
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥

ब्रह्मपुराणे ।

ततो वामेन हस्तेन गृहीत्वा चमसान् क्रमात् ।
पितृतीर्थेन तत्तोयं दक्षिणेन च पाणिना ॥

विश्वेदेवस्थाने देवतीर्थेन दद्यात्पितृस्थाने पितृतीर्थेन दद्यादिति विवेकः । ततश्च संस्रवांस्तत्पात्रे गृहीत्वा विश्वेभ्यो देवेभ्यः स्थानमसीति पात्रमुत्तानं निदधीत ।

तथाच याज्ञवल्क्यः ।

दत्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रङ्करोत्यधः ॥

पितृस्थाने न्युब्जत्वविधानाद्देवस्थाने उत्तानस्थापनमभिप्रेतं संस्रवा ब्राह्मणहस्तगलितार्घ्योदकानि ।

प्रचेताः ।

पादप्रभृति मूर्द्धान्तं देवानां पुष्पपूजनम् ।

शिरःप्रभृति पादान्तं नमो व इति पैतृके ॥

पुष्पग्रहणं तिलानामपि प्रदर्शनार्थम् ।

याज्ञवल्क्यः ।

दत्त्वोदकङ्गन्धमाल्यं धूपदानं सदीपकम् ।

प्रत्युपचारं हस्ते सतिलं दद्यात् ।

ब्रह्मपुराणे ।

श्वेतचन्दनकर्पूरकुङ्कुमानि शुभानि च ।

विलेपनार्थं दद्यात्तु यच्चान्यत्पितृवल्लभम् ॥

श्वेतचन्दनं हरिचन्दनम् ।

व्यासः ।

सपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।

धूपञ्च धूरसीत्युक्त्वा दीपो ज्योतिरिदञ्च ते ॥

गन्धदानं पवित्रसहित एव कुर्य्यात् ।

विलेपने तु विशेषमाह वृद्धशातातपः ।

पवित्रन्तु करे कृत्वा यः समालभते द्विजान् ।

राक्षसानां भवेच्छ्राद्धं निराशाः पितरो गताः ॥

समालम्भनमनुलेपनम् ।

देवलः ।

यज्ञोपवीतं विप्राणां स्कन्धान्नैवावतारयेत् ।

गन्धादिपूजासिद्ध्यर्थं दैवे पित्र्ये च कर्म्मणि ॥

ललाटे पौण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ।

पुण्ड्रं वर्त्तुलमित्यपरार्कप्रभृतयः । माल्यं शिखायां वा धार्य्यमित्याह ।

वृद्धमनुः ।

न नियुक्तः शिखावर्ज्जं माल्यं शिरसि वेष्टयेत् ।

नियुक्तः श्राद्धे उपविष्टः ।

शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धधूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥
जवादि कुसुमं भिण्टी रूपिका सकुरण्टिका ।
पुष्पाणि वर्ज्जनीयानि श्राद्धकर्म्मणि नित्यशः ॥

आदिशब्दाज्जलजव्यतिरिक्तपुष्पाणि गृह्यन्ते । रूपिकार्कपुष्पं पीतकुरण्टिका भिण्टी ।

उग्रगन्धीन्यगन्धीनि दुष्टानि च विवर्ज्जयेत् ।
चन्दनागुरुणी चोभे तथैवोशीरपद्मकम् ।
तुरुष्कं गुग्गुलं चैव घृताक्तं युगपद्दहेत् ।
घृतन्न केवलं दद्याद्दुष्टं वा तृणगुग्गुलम्* ॥

तुरुष्कं सिह्लकः तृणगुग्गुलः सर्ज्जरसः ।

विष्णुः ।

घृतेन दीपा दातव्यास्तिलतैलेन वा पुनः ॥

---

* घृतगुग्गुलमिति पाठान्तरम् ।

शौनकः ।

एतस्मिन् काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानम्।

एतस्मिन् काले अर्घ्यदानानन्तरम् ।

अत्रिः ।

युवं वस्त्राणि* इत्यनेन दद्याद्वासांसि शक्तितः† ।

शातातपः ।

युवासुवासा‡ इति वस्त्रं दद्यात्तदभावे यज्ञोपवीतकम्।

वायुपुराणे ।

लोके श्रेष्ठतरं सर्व्वमात्मनश्चापि यत्प्रियम् ।
सर्व्वं पितॄणां दातव्यं तदेवाक्षयमिच्छता ॥

वैश्वदेविकार्च्चनविधानानन्तरम् ।

याज्ञवल्क्यः ।

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ।
द्विगुणांस्तु कुशान्दत्त्वा उशन्तस्त्वेत्यृचा§ पितॄन् ॥
आवाह्य तदनुज्ञातः जपेदायान्तुन¶स्ततः ।
यवार्थास्तु तिलैः कार्य्याः कुर्य्यादर्घ्यादि पूर्व्ववत् ॥

---

* युवं वस्त्राणि पीवसा वसाथेयुवोरच्छिद्रामन्तवोहसर्गाः । अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे इति । † यवत इति पाठान्तरम् । ‡ युवा सुवासाः परिवीत आगात्स उश्रेयान् भवति जायमानः तं धीरासः कवय उन्नहन्ति साध्वीऽमनसा देवयन्त इति । § उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हविषे अत्तवे। ¶ आयान्तु नः पितरः सौम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ।

दत्त्वार्घं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥

न्युब्जमधोमुखम् ।

प्रचेताः ।

प्रथमे पितृपात्रे तु सर्व्वान् संभृत्य* संस्रवान् ।
पितृभ्यः स्थानमित्युक्ता कुर्य्यान्नूयामधोमुखम् ॥

कात्यायनः ।

एकस्मिन् पात्रे संस्रवान् समवनीय† पुत्रकामो मुखमनक्ति तथा कुशवत्यां भूमावधोमुखं कुर्य्यात्तस्योपरि च कुशानिति आसनप्रभृतिवस्त्रप्रदानपर्य्यन्तं पूर्व्वोक्तरीत्या कृत्वा भोजनभाजनस्थापनार्थं मण्डलानि कार्य्याणि ।

तथाच ब्रह्मपुराणे ।

मण्डलानि च कार्य्याणि नैवारैश्चूर्णकैः शुभैः ।
गोमयेन मृदा वापि प्रणीतेनापि भस्मना ॥

गौरमृत्तिकयापीति तृतीयपादे पाठान्तरम् ।

पाषाणचूर्णसंकीर्णमाहृतं तत्र वर्ज्जयेत् ।

---

* मिश्रीकृत्य । † अवनीय एकीकृत्य पुत्रकामः सन्मुखम् अनक्ति स्वमुखप्रतिबिम्बावलोकनं कुर्य्यादित्यर्थः । तथाच हेमाद्रिः ब्रह्मपुराणे तु तत्पात्रस्थितेष्वेव संस्रवजलेषु पुत्रकामस्य यजमानस्य स्वमुखप्रतिबिम्बावलोकनमुक्तम् । तेषु संस्रवपात्रेषु जलपूर्णेषु तत्र सः पुत्रकामीमुखं पश्येन्मन्त्रं पूर्व्वमुखोजपेत् । मन्त्रस्तु ये देवाः पितरोये च मानुषा ये गर्भ्येऽस्तु मरुत ये परास्तामय उद्धता उत ये निखातास्ते सर्व्वं इह मादयन्तां ।

प्रणीतेन मण्डलार्थमानीतेन तथाग्नौकरणार्थमग्निनिर्णयः।

तत्र मार्कण्डेयः।

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः।

एतच्च सर्व्वाधानपक्षे अर्द्धाधानपक्षे त्वौपासनाग्नावेव।

स्मार्त्तं कर्म्म विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही।
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु॥

इति स्मार्त्तकर्म्मणो* गृह्याग्नावेव नियमात्।

वायुपुराणे।

आहृत्य दक्षिणाग्निन्तु होमार्थं वै प्रयत्नतः।
अन्यर्थं लौकिके† वापि जुहुयात्कर्म्मसिद्धये॥

अन्यर्थमग्नौकरणहोमार्थं लौकिक आवसथ्यो गृह्याग्निरिति-कल्पतरुस्मृतिचन्द्रिकादिभिः लौकिकाग्निः श्रौतस्मार्त्ताग्नि-व्यतिरिक्तोऽभिहितः तच्चाभिधानं चिन्त्यम्।

अनाहिताग्निश्चौपसदेऽग्न्यभावे तथाप्सु‡वेति।

मार्कण्डेयेनौपसदे§ गृह्याग्नेरभावे अप्सु होमाभिधानात्। न लौकिकाग्निस्वीकरणमुचितम्।

मनुरपि।

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्। इति।

पाणौ होमं विधत्ते श्रौतगृह्याग्न्यभावश्चात्र न प्रागभावश्चात्र

---

* वैश्वदेवौपासनाग्नौकरणादिरूपस्य। † लौकिकमिति पाठान्तरम्। ‡ अग्न्यभावे द्विजोऽप्सु वेति हेमाद्रौ पाठः। § गृह्योक्तविधिना स्थापिताग्नौ।

ध्वंसाभावोऽत्यन्ताभावश्चेति गृहाश्रमस्वीकरणात्पूर्वं प्रागभावः आश्रमस्वीकरणानन्तरमग्नेः प्रमादादिनोत्सादे* आश्रमभङ्गे वा प्रध्वंसाभावात्तत्र च पुनः सन्धाने पुनराश्रमस्वीकरणे च तत्सद्भावाग्न्युत्पत्तिः नैष्ठिकस्य विवाहाभावात् अत्यन्ताभावः श्रौतस्मार्त्ताग्नौ प्रागभावे प्रध्वंसाभावे च श्राद्धसमये चाग्नि-सम्पादनस्याशक्यत्वात् पाण्यादिषु होमः ये लौकिकाग्नेरपि होमाधिकरणत्वमङ्गीकुर्व्वन्ति तेषां तु लौकिकाग्नेः सुसंपादत्वा-दग्न्यभाव एव नास्तीति तदभावे यः पाणिस्वीकरणपक्षस्तस्य न क्वाऽप्यवकाश इत्यग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति मन्वादिवचनानि निरर्थकानि भवेयुः। तस्माल्लौकिकाग्नि-रावसथ्यो गृह्याग्निरिति युक्तम्। अथवा श्रौतस्मार्त्तव्यतिरिक्त एवात्र लौकिकाग्निः स च विधुरादीन्† प्रत्यग्नौकरणहोमार्थं विधीयते। यत्तु तैत्तीरीयादिशाखायां यन्मे माता प्रलुलुभेत्या-दिभिः‡ मन्त्रैरिध्माधानाद्याज्यभागपूर्व्वमग्नौकरणमाम्नातम्। तत्रेध्माधानादेः पाणावनुपयुक्तत्वादग्निः प्राप्तः सच न श्रौतो

---

* नाशे। † भार्य्याविरहितादीनित्यर्थः।

‡ यन्मे माता प्रलुलुभे यच्च चारानुव्रतं।
तन्मे रेतः पिता वृङ्क्तामाभिरन्योऽवपद्यतां॥
यन्मे पितामही प्रलुलुभे यच्च चारानुव्रतं।
तन्मे रेतः पितामही वृङ्क्तामाभिरन्योऽवपद्यतां॥
यन्मे प्रपितामही प्रलुलुभे यच्च चारानुव्रतं।
तन्मे रेतः प्रपितामही वृङ्क्तामाभिरन्योऽवपद्यतां॥

न च स्मार्त्तः विधुराणामित्यग्न्याकाङ्क्षायां लौकिकाग्निरुपतिष्ठत इति तदुद्देशेन लौकिकाग्निविधानं युज्यते अयमत्र तात्पर्य्यार्थः। आहिताग्नेः सर्व्वाधाने दक्षिणाग्नावग्नौकरणहोमः अर्द्धाधानोपासन एवं च अनाहिताग्नेः स्मार्त्ताग्नौ विद्यमाने तत्रैवाभावे पाणौ वा अप्सु अग्नौकरणाधिकारे।

कात्यायनः।

तद्यद्यपां समीपे स्यात् श्राद्धे ज्ञेयोविधिस्तदे*ति।

उदकसमीपे श्राद्धकरणे अप्स्वेव इतरत्र पाणौ आभ्युदयिकश्राद्धेषु पिण्डपितृयज्ञातिदेशाभावाच्छिष्टाचारविरोधाच्चाग्निसद्भावेऽपि पाणावेवेति विवेकः। यच्चोक्तं धूर्त्तस्वामिना पिण्डपितृयज्ञो दक्षिणाग्नौ विहितः आपस्तम्बेन पिण्डपितृयज्ञातिदेशमन्तरेणैवाग्नौकरणोपदेशात् तद्धोमे दक्षिणाग्निर्न प्राप्तः उपदेशातिदेशयोरभावात् तस्मात् सर्व्वाधानपक्षे आपस्तम्बशाखिनां अग्नौकरणाभा[illegible] एवेति तदपि चिन्त्यम्।

कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नं [illegible]पितृयज्ञवदिति।

याज्ञवल्क्यादिभिः पिण्डपितृ[illegible]ज्ञहोमेतिकर्त्तव्यतातिदेशात् सर्व्वशाखासु च कर्म्मणः एकत्वेनाविरुद्धाङ्गोपसंहारस्य न्याय्यत्वादापस्तम्बशाखीयानामप्यतिदेशः सिद्धः इति दक्षिणाग्नेरतिदेशप्राप्तत्वादग्नौकरणं सर्व्वाधाने विद्यतएवेत्यलमतिप्रपञ्चेन। एवमुभयविधाग्न्यभावे पाणौ होमः।

---

* स यद्यपां समीपे स्याच्छ्राद्धे ज्ञेयोविधिस्तदेति हेमाद्रौ पाठः।

यत्तु जातूकर्णेनोक्तम् ।

अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे ।

अग्न्यभावः स्मृतस्तावद्यावद्भार्य्यां न विन्दति ॥

इति भार्य्यावेदनाभावे अग्न्यभाव इति । तदयमप्येकोऽभाव-इति प्रदर्शनार्थं नत्वयमभावनियमार्थं पूर्व्वोक्तरीत्या प्रकारान्त-रेणाप्यभावोपपत्तेः । किञ्च लब्धभार्य्यस्य दायविभागात् प्रागग्न्याहरणाभावपक्षेऽग्न्यभावसम्भवाद्यावद्गर्भाधानं न विन्द-तीति नियमार्थः । यदपि गृह्यपरिशिष्टेऽग्निसद्भावेऽपि क्वचन पाणावेव होमो विहितः ।

अन्वष्टक्यञ्च पूर्व्वेद्युर्मासि मास्यथ पार्व्वणम् ।

काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ।

चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।

पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपीति ।

अस्यार्थः अष्टकाश्राद्धेषु नवमीश्राद्धमन्वष्टक्यं सप्तम्यां क्रियमाणं पूर्व्वेद्युः । मासि मासि कृष्णपक्षे पञ्चमीप्रभृतिषु क्रियमाणं पार्व्वणमामश्राद्धम् । काम्यं तिथिनक्षत्रविशेषेषु विहितफल-कामनया क्रियमाणम् । अभ्युदये पुत्रोत्पत्त्यादिनिमित्तेषु विहितम् । अष्टम्याञ्च विहितमष्टकाश्राद्धमेकोद्दिष्टं सपिण्डी-करणम्* अत्र

अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु इति

न्यायेनाभ्युदयिके सपिण्डीकरणे च शब्दैरग्नौ होमस्यानभि-

* एकोद्दिष्टे अग्नौकरणाभावादत्र एकोद्दिष्टशब्देन सपिण्डीकरणमुक्तम् ।

हितत्वात्पाणावेव काम्ये अष्टम्याञ्च येषां गृह्यपरिशिष्टं तेषामेव पाणौ होमः। इतरेषान्तु मन्वादिवचनानुसारेणाभ्युदयिक-सपिण्डीकरणव्यतिरिक्तश्राद्धेष्वग्न्यभावे एव पाणौ होमः इति निर्णयः। यदा पाणिहोमः तदा पित्र्ये ब्राह्मणबहुत्वेऽपि प्रधानब्राह्मणहस्तएव नान्यत्र ।

तथाच कात्यायनः ।

पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निकः ।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥

हुतशेषमित्यर्थः। पित्र्यब्राह्मणहस्तएवेति नियमः ।

अतएव यमः ।

देवविप्रकरेऽनग्निः कृत्वाग्नौकरणं द्विज इति ।

अत्रापि शेषं देवपात्रे न निक्षिपेत् ।

तथाच वायुपुराणे ।

हुत्वा देवकरेऽनग्निः शेषं पित्र्ये निवेदयेत् ।
न हि स्मृताः शेषभाजो विश्वेदेवाः पुरागणैः ॥

अतः पित्र्यदेवकार्य्ययोर्विकल्पः ।

तथा ।

वैश्वदेवे यदेकस्मिन् भावयुग्मादयोद्विजाः ।
तदैकपाणौ होतव्यं स्याद्विधिर्विहितस्तदा ॥

एकस्मिन् श्राद्धे विश्वेदेवस्थाने द्वौ चत्वार इत्येवं प्रकारेणेत्यर्थः ।
यदा मातामहश्राद्धं न तन्त्रेण किन्तु पृथगेव तदा मातामह-श्राद्धे पङ्क्तिमूर्द्धन्यपाणावपि पृथग्घोमः ।

तथाच कात्यायनः ।

मातामहस्य भेदेऽपि कुर्य्यात्तत्रैव साग्निकः ।

इति मातामहस्थाने वैश्वदेविकपित्र्ये ब्राह्मणभेदेऽपि भेदपक्षेऽपि तत्रैव तत्प्रयुक्तपाणिहोमस्तत्रैव मातामहश्राद्धप्रयुक्तब्राह्मणहस्त एवाग्न्यभाव इत्यर्थः। युक्तञ्चैतत् अग्निस्थानीयस्य पाणेः पृथक्त्वात् होमो हस्तश्च होमाधिकरणं पृथगिति हविरुद्धरणमपि पृथगेव पाणौ हुतञ्च न पृथग्भोक्तव्यम् ।

यदाहुर्गृह्यकाराः ।

अन्नं पाणितले दत्तं पूर्व्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।
एकीकृत्यैव भोक्तव्यं पृथग्भावो न विद्यते ॥

## अथाग्नौकरणविधिः ।

तत्राश्वलायनः ।

उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौकरिष्ये करवै* करवाणीति प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्व्विति अथाग्नौ जुहोति यथोक्तं पुरस्तात्। अभ्यनुज्ञायां पाणिष्वेव वाग्निमुखा वै देवाः पाणिमुखाः पितरः ।

इति हि ब्राह्मणं यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशतीति करिष्य इत्यादि प्रश्नत्रये क्रियतामित्याद्युत्तरत्रये च यथासंख्यं

* अनुज्ञात्मनेपदम् ।

पृथगनियम इति कल्पतरौ। अयं नियमः सर्व्वेषामुत तच्छाखिनामेव न तावदाद्यः कल्पतरावेव याज्ञवल्क्यवचनव्याख्यानसमये अग्नौकरिष्ये इति पृच्छति। घृतप्लुतमन्नमादाय इत्यन्वय इत्यभिहितमग्नौकरिष्य* आदाय पृच्छत्यन्नं घृतप्लुतं कुरुष्वेत्यभ्यनुज्ञातः करिष्ये इति अस्य कुरुष्वेति प्रत्युत्तराभिधानान्नियमानुपपत्तेः। द्वितीये तु न विरोधः। यथोक्तं पुरस्तादिति। प्राचीनावीतीध्ममुपसमाधायेत्यादिनापदि पाणिष्वेवेत्यादि पाणौ होमपक्षे होमान्तरमाचान्तेषु† अन्यदन्नं ददातीत्यर्थः। एतदाचमनं पिण्डदानान्तराचमने नैमित्तिकम्। आचान्तेष्विति बहुवचनात्पितृस्थानमातामहस्थानस्थितयोः होमाधिकरणभूतयोर्यजमानस्य चाचमनप्राप्तिः। अन्यथा बहुवचनानुपपत्तिः यदा तन्त्रेण श्राद्धं तदा द्वयोरेवाचमनं न होमाधिकरणभूतस्य तस्य तत्रैव उत्तिष्ठत पितर इत्यादिभिर्यावन्नोत्थाप्यन्ते तावदासनादुत्थानस्य निषिद्धत्वाद्यजमानस्य न द्विराचमनम्।

विष्णुः।

आमश्राद्धेषु काम्येषु प्रथमपञ्चकेनाग्निं हुत्वा पशुश्राद्धेषु मध्यमं मध्यमोत्तमपञ्चकैरन्वष्टकासु च ततो ब्राह्मणानुज्ञातः पितॄनावाहयेदृपयं त्वसुरा इति द्वाभ्यां तिलैः यातुधानविसर्ज्जनं कृत्वा एत पितरः सर्व्वांस्तान-

---

* अग्नौकरिष्यन्नादायेति मू संहितायां पाठः। † विप्रेष्विति शेषः।

अमासेचन् एत पितर इत्यावाहनं कृत्वा कुशतिलवि-मिश्रेण गन्धोदकेन यास्तिष्ठन्त्यमृता वागिति यन्मे मातेति* च पाद्यं निवेद्य चैवापमर्घ्यं दत्त्वा निवेद्य चानु-लेपनं वस्त्रपुष्पालङ्कारधूपैः शक्त्या विप्रान् समभ्यर्च्या-दित्या वसव इति वीक्ष्याग्नौकरवाणीत्युक्त्वानुज्ञातश्च विप्रैः प्राग्वङ्गावाहुतित्रयं हुत्वा ये मामकाः पितरः एतद्वः पितरः अयं यज्ञः इति चर्व्वभिमन्त्रणङ्कृत्वा यथोपपन्नेषु पात्रेषु विशेषतो रजतमयेषु नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखो निवेदयेत् पित्रे पिता-महाय प्रपितामहाय गोत्राभ्यामुदङ्मुखेष्विति आमश्राद्धं लौगाक्षिगृह्यानुसारेण ज्योतिष्टोमाद्यारम्भे नान्दीमुख-श्राद्धं यन्मांसरहितं क्रियते तत्प्रथमपञ्चकेनेत्यादि-काठकतैत्तिरीयके चेयमेव सेति पञ्चदश चानुवाकाः पठ्यते तस्य प्रथमद्वितीयतृतीयपञ्चकैरुक्तस्थलेषु होमः। पशुश्राद्धं समाप्तं पशुश्राद्धं विधिवत्प्रतिपादयेदिति हारीतेन यत्सपिण्डीकरणश्राद्धं विहितं तदुच्यते

* मन्त्रास्तु यथा। यास्तिष्ठन्ति या धावन्त्यदुग्धाः परिसंस्रुषीः। अद्भिर्विश्वस्य धात्रीभि-रन्तरन्यान् पितॄन्दधे। अमृता वागमृता आपोऽग्निर्वाचोऽमृतं तत् त्रिवृदेकधाम। ताभि-र्मतृप्रत्तीभिः स्वधया मदध्वमिहास्मभ्यं वसीयोस्तु देवाः। यन्मे माता प्रलुलुभे यच्चचारानु-व्रतं। तन्मे रेतः पिता वृङ्नामाभिरन्योऽवपद्यतां। यन्मे पितामही प्रलुलुभे यच्चचारानु-व्रतं। तन्मे रेतः पितामहीवृङ्नामाभिरन्योऽवपद्यतां। यन्मे प्रपितामही प्रलुलुभे यच्च-चारानुव्रतं। तन्मे रेतः प्रपितामहीवृङ्नामाभिरन्योऽवपद्यतां।

आदित्यावसव इति मन्त्रेण ब्राह्मणान् वीक्ष्य अनुज्ञातश्च विप्रैरिति बहुवचनात् सर्व्वैरनुज्ञा दातव्या ।

तथाच मनुः ।

अग्नौकुर्य्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सहेति ।

शङ्खलिखितौ ।

धूपगन्धमाल्यैरलङ्कृत्य ब्राह्मणान् सघृतमन्नमनुज्ञाप्य दर्भैर्दक्षिणाग्रैरग्निं परिस्तीर्य्य जुहुयादग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति ।

बौधायनः ।

अथैतास्तिलमिश्रा आपः प्रतिग्राह्य गन्धैः माल्येन चालङ्कृत्याग्नौकरिष्यामीत्यनुज्ञातोऽग्निमुपसमाधाय सपरिस्तीर्य्य तिस्र आज्याहुतीर्जुहोति । सोमाय पितृमते स्वधा नमः । स्वाहा यमाङ्गिरस्वते पितृमते स्वधा नमः । स्वाहाग्नये कव्यवाहनाय स्विष्टिकृते स्वधा नमः । स्वाहेति तत् शेषेण अन्नमभिघार्य्य अन्नस्यैता एव तिस्रो जुहुयाद्वयसान् पिण्डान्दद्यात् । वयसां हि पितरः प्रतिमयाचरन्तीति विज्ञायते । अथेतरान्नं ब्राह्मणेभ्यो निवेद्य ब्राह्मणस्याङ्गुष्ठेनानखेनानुदिशति पृथिवी समस्तस्य इत्यादि वाक्यं पठित्वा बौधायन एवाह ।

तथाप्युदाहरन्ति ।

अग्नौकरणशेषेण यदन्नमभिघारयेत् ।

तस्मिंस्तु प्राशिते दद्यादन्नं यत्प्रकृतं भवेत् ॥ इति। तच्छेषेण हुताज्यशेषेण। वयसान् पिण्डान् दद्यादिति। अग्नौकरणानन्तरं पिण्डदानं विधाय तान् पिण्डान् पक्षिभ्यः काकेभ्यो दद्यात्। वयसां* प्रतिमया तद्रूपेण पितरो यतश्चर-न्तीत्यर्थः। अयञ्च समाचारः श्राद्धविषय†बौधायनीयानामेवेति कल्पतरौ। यत्राग्नौकरणानन्तरमेव पिण्डदानं तत्र अथेतरान्नं ब्राह्मणेभ्यो निवेद्येति वचनादग्नौकरणशेषं पितृपात्रे न दद्यात्। यत्र तदा‡ पिण्डदानाभावस्तत्राग्नौकरणशेषाभिघारितहविः-शेषं ब्राह्मणेभ्यो हस्ते दद्यादन्नञ्च§ ते भक्षयित्वा आचमनं कुर्य्युः प्राशनविधानाद्धस्तदानमर्थसिद्धं ततश्च प्रकृतमन्नं श्राद्धार्थं सम्पादितमन्नं दत्त्वान्न त्यागः कर्त्तव्यः। अयञ्च प्रकारः बौधा-यनीयानामेव। एवमनङ्गीकारे पूर्व्वापरवाक्यविरोधः प्रसज्येत।

ब्रह्मपुराणे।

ततोऽघृताक्तमन्नन्तु सोष्णमादाय साधितम्।
तेनाग्नौकरिष्ये इति प्रयतः प्रार्थयेद्द्विजान् ॥
ओं कुरुष्वेति च तैरुक्तो दक्षिणाग्निं समाश्रयेत्।
दक्षिणाग्रांश्चतुर्दिक्षु दर्भानास्तीर्य्य वाग्यतः।
दद्याच्च समिधस्तिस्रस्तस्मिन्प्रादेशमात्रिकाः।
पालाशाः समिदर्थे च नियोज्याः पितृकर्म्मणि ॥

---

* पक्षिणाम्। † श्राद्धविशेष इति पाठान्तरम्। ‡ दत्तञ्चेति पाठान्तरम्।
§ तदेति पाठान्तरम्।

घृताक्ताः समिधो हुत्वा दक्षिणाग्राः समन्त्रकाः ।
मेक्षणेन घृताक्तेन जुहुयादाहुतित्रयम् ॥

वायुपुराणे ।

दक्षिणतोऽग्नये नित्यं सोमायोत्तरतस्तथा ।
एतयोरन्तरे नित्यं जुहुयाद्वै विवस्वते* ॥
पलाशफल्गुन्यग्रोधप्लक्षाश्वत्थविकङ्कताः ।
उदुम्बरस्तथा विल्वश्चन्दनो यज्ञियाश्च ये† ॥
सरलो देवदारुश्च सालश्च खदिरस्तथा ।
समिदर्थं प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥

फल्गुः काकोदुम्बरिका ।

श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा ।
नीपो विभीतकश्चैव श्राद्धकर्म्मणि गर्हिताः ॥

गोभिलस्तु स्वाहाकारं प्रथमत एवाह मेक्षणोपघातं जुहुयात् स्वाहा सोमाय पितृमते इति । पूर्व्वं स्वाहाग्नये कव्यवाहनायेति द्वितीयमत ऊर्द्ध्वं प्राचीनावीतीति । अत ऊर्द्ध्वमिति वदता होम उपवीतित्वमुक्तम् । मेक्षणोपघातं मेक्षणेनैव आदाय जुहुयादित्यर्थः । आश्वलायनस्तु पिण्डपितृयज्ञप्रकरणे प्राचीनावीतित्वं विकल्पितमाह प्राचीनावीतीति इध्ममुपसमाधाय मेक्षणेनादायावदानसम्पदा जुहुयात् सोमाय पितृमते स्वधा नमः अग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाग्निपूर्व्वं

---

* वैश्वदेवत इति पाठान्तरम् । † न इति पाठान्तरम् ।

यज्ञोपवीतीति यदा स्वाहाकारतो मन्त्रस्तदाग्निपूर्व्वं जुहुयादुपवीती सन्नित्यर्थः। अयञ्च विकल्पः शिष्टाचारवशाद्व्यवस्थितः। प्राचीनावीतित्वपक्ष आश्वलायनानामितरेषान्तु स्वधास्वाहाकारादिविकल्पाः स्वस्वशाखानुसारेण व्यवस्थिताः। तथाच कात्यायनः।

स्वाहा स्वधा नमः सव्यमपसव्यं तथैव च।
आहुतीनान्तु या संख्या सावगम्या स्वसूत्रतः॥

एवं चतुरवदानपञ्चावदानेऽपि यः समर्थः स तु शाखान्तरोक्ताङ्गान्यप्युपदिष्टान्यतिदिष्टान्यप्यविरुद्धान्युपसंहृत्य कर्म्म करोति असमर्थश्चेत्स्वस्वगृह्योक्तमात्रमेव करोति तावतैव तस्य शास्त्रार्थसिद्धेरुक्तत्वात् स्वधर्म्मशास्त्रे आपस्तम्बः। उद्धियतामग्नौ च क्रियतामित्यामन्त्रयते काममुद्धियतां काममग्नौ च क्रियतामित्यभिसृष्ट*करे जुहुयाच्चेति। अभिसृष्टोऽनुज्ञातः स्वकृतगृह्यसूत्रे तु तेनैवानुहितमन्त्रविधिमुखेनार्थादाहुतीनां त्रयोदशसंख्या दर्शिताः। तथाच पिण्डपितृयज्ञाधिकारे स एवाह अध्वर्य्यूपवीती दक्षिणं जान्वाच्य मेक्षण उपस्तीर्य्य तेनावदायाभिघार्य्य सोमाय पितृमते स्वधा नम इति दक्षिणाग्नौ जुहोति यमाङ्गिरस्वते स्वधा नम इति द्वितीया-कव्यवाहनाय स्वधा नम इति तृतीयां मेक्षणेन तण्डुमग्नये — तूष्णीं मेक्षणमादधाति न यमाय जुहोतीत्येकलान् हुत्वा ॰।

र। पाठान्तरम्।

* अतिसृष्ट इति ॰

इति । तत्रैव आपस्तम्बेनाग्नौकरणहोमे निषिद्धाः । अन्यैश्चोपात्ताः याज्ञवल्क्यादिभिश्च पिण्डपितृयज्ञातिदेशः कृतः । हुत्वाग्नौ पितृयज्ञे वेदित्यादिभिर्वाक्यैः अतोगुणोपसंहारन्यायेन स्वगृह्योक्ता अग्नौकरणमन्त्राः । तथा पिण्डपितृयज्ञप्रकरणोक्ताश्च मन्त्रा अग्नौकरणे ग्राह्यास्तैत्तिरीयैः । तत्रातिदेशप्राप्तः पितृयज्ञहोम उपवीतः उपवीतित्वं धर्म्मः उपदिष्टमन्त्रहोमे तु प्राचीनावीतित्वं धर्म्मः पितृदेवताकत्वात् । अतएव स्वगृह्योक्तोपक्रम आपस्तम्बः । अपरपक्षे पित्र्याणि प्राचीनावीतिनापसव्यं दक्षिणतोऽपवर्गं इति । अत्राप्यन्यो विशेषो भाष्यार्थसङ्ग्रहकारेणोक्तः ।

आघारदार्व्वग्निमुखाज्यभाग-
प्रदक्षिणानुव्रजनेषु तद्वत् ।
आघारयोः स्विष्टकृतिप्रदिष्टं
यज्ञोपवीतं हि कपर्दिनः स्यादिति ॥

उक्तरीत्या प्रश्नपूर्व्वकमुद्धृत्याग्नेरुपसमिधमाज्यभागान्तं कृत्वा होमः कार्य्यः चरुमवदानधर्म्मेणादाय दर्व्यां निधाय यन्मे माता प्रलुलोभ चरति यास्तिष्ठन्ति द्वाभ्याममुष्मै स्वाहेत्यन्ताभ्यामाहुतिद्वयं जुहुयात् अमुष्मा इत्यत्र चतुर्थ्यन्तत्वेन पितृनामनिर्द्देशः । एवं यन्मे पितामही प्रलुलोभ चरति अन्तर्दधे पर्व्वतैरिति द्वाभ्यामृग्भ्याममुष्मै स्वाहेत्यन्ताभ्यामिति । अमुष्मा इति चतुर्थ्यन्तत्वेन पितामहस्य नामनिर्द्देशः । यन्मे प्रपितामही प्रलुलोभ चरति अन्तर्दधे ऋतुभिरिति द्वाभ्याममुष्मै स्वाहे-

त्यन्ताभ्यामाहुतिद्वयं जुहुयात्। एवं यन्मे मातामही प्रलुलोभ चरति अन्तर्दधे इति पूर्व्वोक्तमन्त्रद्वयेन च यथाक्रमं मातामहाय मातुः पितामहाय मातुः प्रपितामहाय चाहुतिद्वयं जुहुयात्। तत्रामुष्मा इत्यत्र मातामहायेत्याद्यूहः कर्त्तव्यः प्रथममन्त्रे यन्मे मातामही प्रलुलोभ तन्मे रेतो मातामही वृंक्तामिति* द्वितीये अन्तरन्यं मातामहादध† इति। तृतीये यन्मे मातुः पितामही प्रलुलोभ तन्मे रेतोमातुः पितामही वृंक्तामिति‡। चतुर्थे अन्तरन्यं मातुः पितामहादध§ इति पञ्चमे यन्मे मातुः प्रपितामही प्रलुलोभ तन्मे रेतो मातुः प्रपितामही वृंक्तामिति¶ षष्टे अन्तरन्यं मातुः प्रपितामहादध‖ इत्युक्तः।

तथाच गृह्यभाष्यार्थसङ्ग्रहकारः।

> अन्नहोमे** तथा स्पर्शे जलपिण्डादिदानके।
> यन्मे मातामहीत्यादि तत्रोदाहरणं भवेदिति॥

उदाहरणमूहः स्पर्शे एष ते ततो मधुमानित्यादि मन्त्रैः ब्राह्मणभोजनार्थमन्नस्पर्शे ये चेह पितर इत्यृचा एकाहुतीर्जुहोति एवमन्नहोमानन्तरं षड़ाज्याहुतीर्जुहुयात्। तत्र स्वाहा पित्र इति मन्त्रेण प्रथमाहुतिः। पित्रे स्वाहेति द्वितीया

---

* वृंक्तामित्यत्र वृञ्जामिति हेमाद्रौ पाठः। † मातामहादध इत्यत्र मातामहादृध इति हेमाद्रौ पाठः। ‡ वृंक्तामित्यत्र वृञ्जामिति हेमाद्रौ पाठः। § दृध इति हेमाद्रौ पाठः। ¶ वृञ्जामिति हेमाद्रौ पाठः। ‖ दृध इति हेमाद्रौ पाठः। ** अनुलोम- इति पाठान्तरम्।

एताभ्यामेव तृतीया चतुर्थी स्वधास्वाहेति पञ्चमी अग्नये कव्य-वाहनाय स्वाहेति षष्ठी ततोऽतिदेशप्राप्तपिण्डपितृयज्ञहोमः। ततः स्विष्टिकृतं हुत्वा सर्व्वस्मादन्नात्किञ्चिदादायोदीचीन-मुष्णमङ्गारसहितं भस्मापोह्य तूष्णीं जुहोति। तत उत्तर-मन्त्रमाग्नेयस्थालीपाकवत्कुर्य्यात्।

तथाच भाष्यार्थसङ्ग्रहकारः।

अग्नीन्धनादि प्रतिपाद्य कर्म्म
कृत्वाज्यभागान्तमथावदाय।
यन्मेति मन्त्रैः प्रतिमन्त्रमग्नौ
कार्य्यास्तथा सप्तभिरन्नहोमाः॥
स्वाहेति मन्त्रैरपि सर्पिषा स्युः
होमास्ततः स्विष्टिकृतन्तु हुत्वा।
भस्माप्यपोह्यं हविरन्नहोमे
लेपे तु दर्व्व्याश्च समञ्जनादि॥
शेषञ्च कृत्वा परिषेचनान्तं
पात्रेषु दद्याद्धुतशेषमन्नमिति।

अत्र सप्तभिरन्नहोमा इत्यनुहितमन्त्राभिप्रायः शिष्यबुद्धिपरी-क्षार्थमूहितमन्त्रसंख्यानभिधानं तथातिदेशप्राप्तपिण्डपितृयज्ञ-मन्त्रहोमानभिधानञ्च एतच्चाग्नौकरणं तैत्तिरीयाणामन्वाहा-र्य्यकश्राद्धे न दर्शश्राद्धमात्रे अन्वाहार्य्यकश्राद्धञ्च प्रमीतमाता-पितृकस्य।

तथाच कल्पतरौ।

परिशिष्टपरिशेषोऽग्निमती ह्यमावास्यायां पिण्ड-पितृयज्ञः पिण्डान्वाहार्य्यकञ्च कर्त्तव्यं तच्च प्रमीतमाता-पितृकस्य सपत्नीकपित्रादिदैवत्यमिति ।

तस्मादन्वाहार्य्यकश्राद्धे पूर्व्वोक्तमग्नौकरणं दर्शश्राद्धमात्रे त्वति-देशप्राप्तसोमाय पितृमते स्वाहानमः इत्यादि मन्त्रैरेवाग्नौ-करणं नोपदिष्टातिदिष्टात्मकमिति सिद्धम् ।

## अथ परिवेषणादिविधिः ।

भस्मापोहानन्तरं हस्तोदकं दत्त्वा पात्रप्रक्षालनं कुर्य्यात् तथा परिस्तरणादिकमपि दद्यात् ।

तदनन्तरं याज्ञवल्क्यः ।

हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथा लाभोपपन्नेषु रौप्येषु च विशेषतः ॥

एतच्च निषिद्धायसादिव्यतिरिक्तैर्विहितसुवर्णरजतादिपात्रैः स्वयं भार्य्या अन्यो वा शुचिः परिवेशनं कुर्य्यात् । पक्कान्नन्तु हस्तेनैव पक्कान्नाधिकारे न तु दर्व्या कदाचनेति निषेधात् ।

वायुपुराणे ।

नापवित्रेण हस्तेन नैकेन च विना कुशम् ।
नाप्यायसे नायसेन श्राद्धे तु परिवेशयेत् ॥

आयसपात्रे आयसेन दर्व्यादिना न दद्यादित्यर्थः ।

तथा ।

तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा ।

परिवेशनानन्तरम् याज्ञवल्क्यः ।

दत्त्वान्नं पृथिवीपात्रमिति पात्रानुमन्त्रणम् ।
कृत्वेदं विष्णुरित्यन्ते द्विजाङ्गुष्ठं निवेशयेत् ॥

इदं विष्णुरिति मन्त्रानन्तरं द्विजाङ्गुष्ठमात्रं निवेश्य विश्वेदेव-स्थाने कृतकुशोदकैरन्नत्यागङ्कृत्वा पितृस्थाने तिलोदककुशैः पृथगन्नत्यागं विधिना कुर्य्यात् ।

तदनन्तरं याज्ञवल्क्यः ।

सव्याहृतिकां गायत्रीं मधु वाता इतित्यृचम् ।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥
गायत्रीं त्रिः सकृज्जप्त्वा मधु वाता इतित्यृचम् ।
जप्त्वा मधु मधु मध्विति त्रिरुच्चार्य्य यथासुखम् ॥

जुषध्वमिति वचनानन्तरं ते ब्राह्मणा मौनिनो भूत्वा भुञ्जीर-न्नित्यर्थः ।

वशिष्ठः ।

उभयोः शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् ।
तदन्तरं प्रतीक्षन्ते ह्यसुरादुष्टचेतसः ॥
तस्मादशून्यं हस्तेन कुर्य्यादन्नमुपागतम् ।
भाजनन्तु समालभ्य तिष्ठेदापोषणा द्विजः ॥

उभयोः शाखयोः उभयोर्हस्तयोः मध्ये एकहस्तेन यदि मुक्तं पितृभ्यो दत्तमन्नं तदेवान्तरमवकाशे रक्षसां तस्मादशून्यं कुर्य्या-दित्यर्थः ।

भरद्वाजः ।

पितॄणामन्नमादाय बलिं यस्तु प्रयच्छति ।
स्तेयेन ब्राह्मणस्तेन स सर्व्वस्तेयकृद्भवेत् ॥

पितॄणामन्नं विश्वेदेवार्थं पित्र्यर्थं चान्नम् ।

याज्ञवल्क्यः ।

दत्तमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ।
आतृप्तेस्तु पवित्राणि जप्त्वा पूर्व्वजपन्तथा ॥

पवित्राणि पवमानप्रभृतीनि, अयं च जप उपवीतिना कार्य्यः

कृत्वापसव्यं कुर्व्वन्ति मुक्तापस्वाश्नतां जपम् ।

इति निगमस्मरणात् ।

जमदग्निरपि ।

अपसव्येन कर्त्तव्यं सर्व्वं श्राद्धं यथाविधि ।
सूक्तस्तोत्रजपं मुक्त्वा विप्राणान्तु विसर्ज्जनमिति ॥

ततश्च सव्याहृतिकगायत्री मधुवातेत्यादि* जपः कार्य्यः तथा

अन्नमादाय तृप्ताः स्थ शेषञ्चैवानुमन्त्य च ।
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ॥

अनग्नीकरणार्थं† गण्डूषार्थञ्च ।

सर्व्वमन्नमुपादाय सलिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डं दद्यात्तु पितृयज्ञवत्‡ ॥
मातामहानामप्येवं दद्यादाचमनं ततः ।

---

* मधु वाता ऋतायते मधु क्षरन्ति सिन्धवो माध्वीर्नः सन्त्वोषधीः मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः मधु द्यौरस्तु नः पिता मधुमान्नोवनस्पतिर्मधुमानस्तु सूर्य्यो माध्वीर्गावो भवन्तु नः । † नग्नत्वदोषपरिहारार्थम् । ‡ पिण्डपितृयज्ञवत् ।

स्वस्तिवाचं ततः कुर्य्यादक्षय्योदकमेव च ॥

दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।

दक्षिणादानमुपवीतिना कार्य्यम् ।

तथाच जमदग्निः ।

सर्व्वकर्म्मापसव्येन* दक्षिणादानवर्ज्जितम् ।

याज्ञवल्क्यः ।

वाच्यतामित्यनुज्ञातः प्रकृतिभ्यः स्वधोच्यताम् ।

ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ॥

विश्वेदेवाः सुप्रीयन्तां विप्रैश्चोक्त इदं जपेत् ।

दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥

श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति ।

इत्युक्त्वासौ प्रियवचः प्रणिपत्य विसर्ज्जयेत् ॥

वाजेवाज† इति प्रीतः पितृपूर्व्वं विसर्ज्जनम् ।

यस्मिंस्ते संस्रवाः पूर्व्वमर्घ्यपात्रे निपातिताः ॥

पितृपात्रं तदुत्तानङ्कृत्वा विप्रान्विसर्ज्जयेत् ।

मनुः ।

पिण्डनिर्व्वापणङ्केचित्पुरस्तादेव कुर्व्वते ।

ब्राह्मणभोजनात्प्रागर्चनानन्तरमग्नौकरणानन्तरं वा केचित्पिण्ड-दानं कुर्व्वत इत्यर्थः ।

---

* प्राचीनावीतिना । † वाजे वाजे वतवाजिनोनो धनेषु विप्रा अमृता ऋतज्ञाः अस्यमध्वः पिवत मादयध्वं तृप्तायात पथिभिर्द्देवयानैः ।

आश्वलायनः ।

भुक्तवत्स्वनाचान्तेषु पिण्डं निदध्यादाचान्तेष्विक इति ।

अत्र यथाशाखं व्यवस्था । जातूकर्ण्यः ।

व्याममात्रं* समुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।
यत्रोपस्पर्शनाद्वापि प्राप्नुवन्ति न बिन्दवः ॥

व्यासः ।

अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।

वायुपुराणे ।

सकृदेवास्तरेद्दर्भान् पिण्डार्थं दक्षिणामुखः ।
प्राग्दक्षिणाग्रान्नियतो दद्यात्पिण्डादनन्तरम् ॥

मरीचिः ।

आर्द्रामलकमात्रांस्तु पिण्डान् कुर्व्वीत पार्व्वणे ।
एकोद्दिष्टे विल्वमात्रं पिण्डमेकन्तु निर्व्वपेत् ॥
नवश्राद्धे स्थूलतरं तस्मादपि तु निर्व्वपेत् ।
तस्मादपि स्थूलतरमाशौचे प्रतिवासरम् ॥

विष्णुः ।

उच्छिष्टसन्निधौ दक्षिणाग्रेषु दर्भेषु पृथिवी दर्व्विरक्षितेत्येकं पिण्डं पित्रे निदध्यादन्तरिक्षं दर्व्विरक्षितेति द्वितीयं पितामहाय द्यौर्दर्व्विरक्षितेति तृतीयं प्रपितामहाय पितरः यत्र प्रेता इति वासोदेयं वीरान्नः†

* तिर्य्यक् प्रसारितयोर्भुजयोः सहोरसा यन्मानं सः व्यामः इति हेमाद्रिः ।

† पुत्रान् इत्यर्थः ।

पितरोधत्त इत्यन्नमत्र पितरोमादयध्वमिति दर्भमूले* करावधर्षणानन्तरम्। ऊर्जं वहन्तीत्यनेन† सोदकेना-प्रदक्षिणं पिण्डानां विकरणं सेचनङ्कृत्वार्घ्यं पुष्पधूपानु-लेपनान्नानि भक्ष्यभोज्यानि च निवेदयेदिति।

मनुः।

अपसव्यमग्नौ हुत्वा‡ सर्व्वमावृत्परिक्रमः।
अपसव्येन हस्तेन निर्व्वपेदुदकं भुवि॥
त्रींस्तु तस्माद्धविःशेषात्पिण्डान्कृत्वा समाहितः।
औदकेनैव विधिना निर्व्वपेद्दक्षिणामुखः॥
न्युप्य पिण्डांस्ततस्तांस्तु प्रयतो विधिपूर्व्वकम्।
तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्॥
आचम्योदक् परावृत्य त्रिरायम्य शनैरसून्।
षड्तूंश्च नमस्कुर्यात्पितॄनेव च मन्त्रवत्§॥

ऋतुनमस्कारो नमोवः पितरः इत्यादिभिः।

तथाच ब्रह्मपुराणे।

नीवीं विसृज्य च जपेन्नमोवः पितरस्त्विति।

मनुः।

उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः।
अवजिघ्रेच्च तान्पिण्डान् यथा न्युप्तान् समाहितः।

---

* अत्र पितरोमादयध्वं यथा भागमावृषायध्वमिति दर्भमूले इति मूलसंहितायां पाठः। † ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पत मे पितॄन्। ‡ अपसव्यमग्नौ कृत्वेति मनुसंहितायां पाठः। § मन्त्रविदिति मनुसंहितायां पाठः।

पिण्डेभ्यः स्वल्पिकान् ग्रासान् समादायानुपूर्व्वशः ।
तानेव विप्रानासीनान् विधिना पूर्व्वमर्च्चयेत् ।

तानेव विप्रानित्ययं पत्नी ब्राह्मणभोजनात् पूर्व्वमेव पिण्डदानाभिप्रायेण ।

कात्यायनः ।

एतद्व इति सूत्राणि प्रतिपिण्डं चयस्युत्तरे यजमानस्य लोमावेति ।

शङ्खः ।

दशां विवर्ज्जयेत्प्राज्ञो यद्यप्याहतवस्त्रजाम् ।

अत्र सर्व्वत्र यथाशाखं व्यवस्था । पुत्त्रार्थिनो मध्यमपिण्डप्रतिपत्तिराश्वलायनेनोक्ता पिण्डानां मध्यमं पत्नीं प्राशयेदिति ।

अत्र मन्त्रः ।

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।

यथेऽह पुरुषोमत इति । देवलः ।

ततः कर्म्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजोगौर्व्वा भक्षयेदप्सु वा क्षिपेत् ॥

एवं स्वगृह्योक्तविधानेन ब्राह्मणविसर्ज्जनान्तं कृत्वा पितृशेषं बन्धुभिः सह भुञ्जीत । आवश्यकोपवासे प्राप्ते पितृसेवितमाघ्रायोपवसेत् ।

तथाच श्रुतिः । अवघ्रेयमेव तन्नैवाप्राशितं नैव प्राशितमिति ।

शातातपः ।

श्राद्धं कृत्वा परश्राद्धे भुञ्जीरन्ये तु मोहिताः ।

पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ॥
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
दानम्प्रतिग्रहोहोमः श्राद्धभुक् त्वष्ट वर्ज्जयेत् ॥

यमः ।

दग्धक्वत्वः पिवेदापो गायत्र्या श्राद्धभुक् द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि ॥

एवम्प्रतिमासं दर्शपार्व्वणश्राद्धङ्कर्त्तव्यम् । एवम्प्रतिसांवत्सरिकादीन्यपि पार्व्वणश्राद्धानि कर्त्तव्यानि । तत्र मातापितृविषये यः पार्व्वणैकोद्दिष्टविकल्पः सस्य कुलानुसारेण व्यवस्थितो विज्ञेय इति विज्ञानेश्वरमते एतच्चोपपादितमस्माभिर्मिताक्षराटीकायां सुबोधिन्यामाचाराध्याये । यदा मातापितृभ्रात्राद्यनेकसांवत्सरिकाणां युगपत्सन्निपातस्तदा पूर्व्वं पितुः श्राद्धं ततो मातुस्ततश्चान्येषामपि प्रधानोपसर्ज्जनतरतमभावेन* सांवत्सरिकं कुर्य्यात् ।

यत्पुनर्भृगुणोक्तम् ।

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कुर्य्याच्छ्राद्धञ्चैव पृथक् पृथगिति ॥
पूर्व्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्य्यात्सन्निपाते त्वयं क्रम इति ॥

पूर्व्वकस्य मुख्यस्य द्वितीयस्य मुख्यापेक्षया जघन्यस्य तृतीयस्य जघन्यतरस्येत्यर्थः । अत्रायं क्रमः पितृब्राह्मणनिमन्त्रणा-

* प्रधानाप्रधानयोस्तारतम्येनेत्यर्थः ।

नन्तरं मातृब्राह्मणनिमन्त्रणं ततोऽन्यनिमन्त्रणं एवं पादप्रक्षालनादि विसर्ज्जनान्तं कुर्य्यात्। एतच्च पर्य्यायेण।नेकश्राद्धकरणे कुतपादिश्राद्धकालातिपातप्रसक्तौ द्रष्टव्यं* श्राद्धकालानतिपाते तु पृथक्पाकेन यथोक्तक्रमेण कर्म्म पृथक्कर्त्तव्यम्।

यत्तु प्रचेतसोक्तम्।

नैकः श्राद्धद्वयं कुर्य्यात्समानेऽहनि कुत्रचित्। इति तदेकस्मिन्नेव निमित्ते पुनः श्राद्धं न कर्त्तव्यमित्येवंपरं न तु निमित्तभेदेऽपि यदा भर्त्तुर्मरणतिथावेव सहगमनं पत्नी करोति तत्सांवत्सरिके लौगाक्षिणा विशेषो दर्शितः।

मृताहनि समासेन पिण्डनिर्व्वपनं पृथक्।
नवश्राद्धन्तु दम्पत्तोरन्वारोहण एव तु॥

अस्यार्थः। दम्पत्योरन्वारोहणे सहगमने निमित्ते मृततिथावेकाले पिण्डनिर्व्वपणं श्राद्धं समासेन सङ्क्षेपेण यथा द्विपितृकश्राद्धे एकस्मिन् पिण्डे द्वयोरुद्देशः एवमन्यत्रापि द्वावुद्दिश्यायुग्मब्राह्मणाः भोजयितव्याः पिण्डनिर्वपणमपि द्वावुद्दिश्य एवमेकदैव श्राद्धद्वयकरणात्समासः। अत्र वैश्वदेविकमपि तन्त्रेणैव पार्व्वणश्राद्धपक्षे मृताहनीति विशेषोपादानान्मृततिथिभेदे तु न समासेन श्राद्धं किन्तु पृथगेव मृताहनि समासेन पिण्डनिर्व्वपणं कुर्य्यादिति विधिबलादन्वारोहणे नैकतिथिमृतकयोः दम्पत्योः। सांवत्सरिकश्राद्धव्यतिरिक्तनवश्राद्धषोड़शश्राद्धसपिण्डीकरणगया-

* एतच्च प.र्यं पर्य्याये ए।नेकश्राद्धकरणे कुतपादिश्राद्धकालतिथावप्रसक्तौ द्रष्टव्यमिति पाठान्तरम्।

न्वष्टकादिश्राद्धेष्वप्यर्थाद्वचनान्तरवशाच्च पृथक् कर्त्तव्यतायां प्राप्तायां नवश्राद्धं पृथगिति केवलनवश्राद्धस्यैव पार्थक्यविधिः परिसंख्यया इतरश्राद्धेषु पृथक्त्वनिषेधात्सांवत्सरिकवदेव षोड़श-श्राद्धादिष्वपि समासेनैव अनुष्ठानं अमावास्यादिषु पृथङ्मातृ-श्राद्धप्राप्त्यभावादेव न पृथक्करणं किन्तु सहैव अयं विशेषः षोड़श-श्राद्धादिषु मातापित्रोः पृथक् पृथग्देवतात्वममावास्यादिषु तु पितृपिण्डेनैव सपत्नीकशब्दोच्चारणेन मातुरपि तृप्तिरिति दम्प-त्योरित्युपादानात् । एकचित्यारोहणाधिकारिसवर्णसापत्न्य-मात्रा मातृभ्यां मातृभिर्वान्वारोहणे कृते पतिपत्न्योर्मृततिथेरैकत्वे पूर्व्ववत्समासेन नवश्राद्धव्यतिरिक्तं सर्व्वं भवेत् । एकस्मिन्नाह-वनीयस्थानीयब्राह्मणे हित्राद्युद्देशस्तथैकस्मिन्नेव पिण्डेऽपि यथा त्रिपितृकस्य अस्यां यो जायते पुत्त्रः स मे पुत्त्रो भविष्यतीति समयं विधाय या विवाहिता ततः अनपत्याया एव तस्या-भर्त्तृमरणे नियोगेन देवरादिभ्यः पुत्त्रोत्पादनसमय उत्पाद्य-मानः पुत्त्र आवयोरपीत्यपि सङ्केते तत्रोत्पन्नः पुत्त्रस्त्रिपितृक-एको मातामहस्त्वपरः क्षेत्राधिपतिरन्यश्च वीजीति त्रयः पितरः । तस्यामावास्यादिश्राद्धेषु यथा त्रयोद्देशेनैकएव पिण्ड-स्तथा पित्राद्युद्देशेनाप्येक एव पिण्डो देय इत्यर्थः । यदि जनन्यन्वारोहण एवायं नियमस्तर्हि पित्रोरिति ब्रूयान्न दम्पत्योरिति तस्मात्पूर्व्वोक्त एव निर्णयः ।

यच्च स्मृत्यन्तरम् ।

एकचित्यां समारूढ़ौ दम्पती निधनङ्गतौ ।

पृथक् श्राद्धं तयोः कुर्य्यादोदनन्तु पृथक् पृथगिति ॥

तन्नवश्राद्धमात्रविषयम्। नवश्राद्धाङ्गपिण्डदानं तेषां पक्वान्नेनैव तेषां पिण्डार्थोदनोऽपि पृथगेवेत्यर्थः अथवा नवश्राद्धं भोज्यसद्भावे पक्वान्नेन यदा क्रियते तदौदनमपि पृथक् पृथगेव न तन्त्रेणेत्यर्थः। नवश्राद्धस्य पक्वान्नेन करणमङ्गिरोवचनेन द्योतितम्।

नवश्राद्धेषु यच्छिष्टं गृहे पर्य्युषितञ्च यत्।
दम्पत्योर्भुक्तशिष्टञ्च तन्न भुञ्जीत कर्हिचित् ॥ इति

यत्पुनर्भृगुणोक्तम्।

या समारोहणं कुर्य्याद्भर्त्तुश्चित्यां पतिव्रता।
तां मृताहनि सम्प्राप्ते पृथक्पिण्डे नियोजयेत् ॥
प्रत्यब्दञ्च नवश्राद्धं युगपत्तु समापयेदिति।

तद्भर्त्तुर्मृततिथिव्यतिरिक्तान्यतिथावन्वारोहणमृतविषयम्। नवश्राद्धन्तु युगपदित्यस्यायमर्थः। प्रथमं पितृनवश्राद्धोपविष्टस्य ब्राह्मणस्य पादप्रक्षालनं पश्चान्मातृनवश्राद्धोपविष्टस्येत्येवं क्रमेण विसर्ज्जनान्तङ्कृत्वा युगपच्छ्राद्धद्वयं समापयेदिति यदानैकस्यामेव तिथौ पूर्व्वदिनभागे भर्त्तुर्मरणमुत्तरदिनभागे पत्न्या अन्वारोहणेन मरणं तदापि समासेनैव पिण्डादिविधायकवाक्यबलान्मृततिथेरेकत्वाद्भर्त्तुः प्राधान्यात्तदर्द्धशरीरभूताया भार्य्याया अपि तदैव मृतप्राप्तत्वात् बहूनामनुग्रहो न्याय्य इति भिन्नदिने मरणरूपैकनिमित्तापेक्षया पूर्व्वोक्तानेकनिमित्तानुरोधस्य न्याय्यत्वात्। भर्त्तृमरणप्रभृत्येव दिनपरिगणनां कृत्वा

तिलोदकपिण्डदानाशौचैकादशाहादिकं कर्त्तव्यम् । एवञ्च यानि वाक्यानि भर्त्तृमरणानन्तरं चिरकालव्यवधानेऽन्वारोहणमृताया अपि भार्य्याया भर्त्तुर्मरणसमकालमेव मरणप्रतिपादकानि अर्थवादरूपाणि वाक्यानि चिन्तामणिरत्नावल्यादिषु प्रदर्शितानि तानि पूर्व्वोक्तविषये योज्यानि न तु मृताहनि समासेन पिण्डनिर्व्वपणमित्येतद्वचनात् श्राद्धाहवनीयार्थोपविष्ट एकस्मिन् ब्राह्मण एकस्मिन् पिण्डे द्वयोरुद्देशेन समासः सङ्क्षेप इति वक्तव्यं संक्षेपश्च ब्राह्मणभेदे पिण्डभेदेऽपि घटते । तद्यथा एकश्राद्धनियुक्त ब्राह्मणचरणप्रक्षालनानन्तरमितरश्राद्धनियुक्तब्राह्मणचरणप्रक्षालनमेवमासनादिकं दत्त्वा इतरचासनासनादिकमित्यासमाप्तेरेवं क्रियमाणेऽपि संक्षेपोपपत्तेरिति चेन्नैवम् । समासेन पिण्डनिर्व्वपणमिति पिण्डनिर्व्वपणेऽपि संक्षेपो दर्शितः । पूर्व्वपक्षोक्तरीत्या क्रियमाणे पिण्डस्य भिन्नत्वात्तत्र समासो न घटते । निरपेक्षश्च समासशब्द उपात्तः स च सर्व्वात्मना संक्षेपयोग्यसकलेतिकर्त्तव्यतासंक्षेपप्रतिपादयति बाधकाभावात् तस्मात्सर्व्वेतिकर्त्तव्यतानुस्यूतः संक्षेप एवाङ्गीकर्त्तव्यः तथाच द्विपितृकश्राद्धवदेव संक्षेपइति सिद्धम् ।

## अथ द्विपितृकश्राद्धम् ।

तत्र हारीतः ।

ना क्षेत्रं वीजं रोहति उभयदर्शनात्* उभयोरपत्यमिति

---

* उभयपददर्शनादिति पाठान्तरम् ।

तेषामुत्पादयितुः प्रथमः प्रवरो भवति द्वौ द्वौ पिण्डौ निर्व्वपेदथवैकपिण्डे द्वावनु कीर्त्तयेत् द्वितीये पुत्र-स्तृतीये पौत्रोऽपिनस्त्रीन्वाचक्षाणः आसप्तमादित्येक-इति ।

तेषां वीजिक्षेत्रिपितॄणां मध्ये उत्पादयितुर्वीजिनः प्रवरमार्षेयं प्रवरं निर्दिशेत्* ततः क्षेत्रिण इति द्विप्रवरता एतत्क्रमत्वं आर्षेयप्रवरोऽत्र निवापे पितृयज्ञे द्व्यामुष्यायणः पितृपितामह-प्रपितामहपिण्डेषु द्वौ द्वावनुकीर्त्तयेत्† द्वितीये द्वितीयपिण्डे पितामहपिण्डे पुत्रो द्व्यामुष्यायणस्य द्वावनुकीर्त्तयेन्न पितृ-पिण्डे द्वितीय इति प्रपितामहपिण्डस्याप्युपलक्षणमतो द्व्यामु-ष्यायणपुत्रः‡ प्रपितामहपिण्डेऽपि§ द्वावनुकीर्त्तयेत् । यदि द्व्यामुष्यायणपौत्रः श्राद्धकर्त्ता तदा कथमित्याकाङ्क्षायामिति पौत्रो द्व्यामुष्यायणस्य तृतीये प्रपितामहपिण्डे द्वावनुकीर्त्तयेन्न पितृपिण्डे नापि पितामहपिण्डे त्रीन्वाचक्षाणः पित्रादि-पिण्डाननुवदन्नपिनस्त्र द्वौ द्वावनुकीर्त्तयेत् । अतएव आसप्तम-पर्य्यन्तमित्यन्यमतं क्षेत्रिणः पूर्व्वमुद्देशः पश्चाद्वीजिन इति क्रमः ।

---

* प्रवरं निर्दिशेदिति बहुषु पुस्तकेषु दर्शनात् रक्षितं परन्तु प्रथमं निर्द्दिशेदिति पाठो युक्तः परमार्षेयं प्रवरं निर्द्दिशेदिति पाठान्तरम् । † वीजिरूपपित्रे तत्पितृरूपस्वपितामहाय तत्पितृरूपस्वप्रपितामहाय च एवं क्षेत्रिरूपपित्रे तत्पितृरूपस्वपितामहाय तत्पितृरूप-स्वप्रपितामहाय च एकमेकं पिण्डं दद्यात् । ‡ द्व्यामुष्यायणस्य पुत्र इत्यर्थः । § द्व्यामुष्यायण-रूपपितुः वीजिरूपपितृतत्पितृरूपस्वपितामहप्रपितामहाभ्याम् । एवं तस्य क्षेत्रिरूप-पितृतत्पितृरूपस्वपितामहप्रपितामहाभ्यामित्यर्थः ।

एतच्चाशौचप्रकरणेऽभिहितं पुत्रिकापुत्रो द्विविधः मातामहेन सम्बद्धो मातामहेन पित्रा च सम्बद्धश्चेति। तत्र मातामहेनैव सम्बद्धस्य श्राद्धक्रमः ।

मनुः ।

मातुः प्रथमतः पिण्डान्निर्व्वपेत्पुत्रिकासुतः ।
द्वितीयन्तु पितुस्तस्यास्तृतीयन्तु पितुः पितुरिति ॥

उभयसम्बद्धो वर्गद्वयस्यापि कुर्य्यात् ।

इत्याहोशना ।

मातामह्यन्तमात्रादि पैतृकं पितृपूर्व्वकम् ।
मातृतः पितृतो यस्मादधिकारोऽस्ति धर्म्मतः ॥

अत्र विशेषमाह ऋष्यशृङ्गः ।

यस्मादुभयसम्बद्धः पुत्रिकायाः सुतो ह्यसौ ।
पूर्व्वं मातामहश्राद्धं पश्चात्पैतृकमाचरेत् ॥

## अथ सङ्कल्पश्राद्धम् ।

तत्र व्यासः ।

त्यक्ताग्नेः पार्व्वणं नैव नैकोद्दिष्टं सपिण्डनम् ।
अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात्सङ्कल्प्य भोजयेत् ॥

अस्यार्थः । त्यक्ताग्नेर्नास्तिक्यादिनोपसृष्टाग्नेः पार्व्वणैकोद्दिष्टसपिण्डीकरणरूपश्राद्धकर्म्मणि नैवाधिकारः अत्यक्ताग्नेः पिण्डोक्तिः पिण्डसहितश्राद्धकर्त्तव्यतोक्तिः श्राद्धाधिकार इत्यर्थः । तस्मात् कारणात्त्यक्ताग्निः सङ्कल्प्य भोजयेत्सङ्कल्प्य श्राद्धं कुर्य्यादिति ।

सङ्कल्पश्राद्धविधिमाह स एव ।

सङ्कल्पश्च यदा कुर्य्यान्न कुर्य्यात्पात्रपूरणम् ।
नावाहनाग्नौकरणं पिण्डांश्चैव न दापयेत् ॥

पात्रपूरणमर्घ्यदानं विकरणदानमपि निषिद्धम् ।

स्मृत्यन्तरे ।

सङ्कल्पन्तु यदा श्राद्धं न कुर्य्यात्पात्रपूरणम् ।

विकरणञ्च न दातव्यमिति । अयञ्च अनुकल्पमुख्यश्राद्धकरण-शक्त्याद्यभावेऽपि वेदितव्यः ।

तथाच स्मरन्ति ।

श्राद्धानुकल्पं यः कुर्य्याज्जात्यवस्थाद्यपेक्षया ।
श्राद्धाङ्गांशेष्ववाप्नोति मुख्यश्राद्धफलं नर इति ॥

## अथैकोद्दिष्टश्राद्धम् ।

याज्ञवल्क्यः ।

एकोद्दिष्टं देवहीनमेकार्घैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥

अपसव्यवत् यत्पार्व्वणयज्ञोपवीतवत् कर्म्म प्राचीनावीतिना तत्कर्म्म कर्त्तव्यमित्यर्थः अक्षय्यस्थाने अक्षय्यमस्त्विति मन्त्रस्थाने उपतिष्ठतामिति मन्त्रः विप्रविसर्ज्जने वाजे वाजे इति मन्त्र-स्थाने विष्णुः । अथाशौचागमे सुस्नातः सुप्रक्षालितपाणिपाद-श्चाचान्तस्त्वेवं विधाने च ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्य-वस्त्रालङ्कारादिभिः पूजितान् यो भोजयेदेकवन्मन्त्रानुहैतैका-

द्दिष्टउच्छिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्व्वपे-द्भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु । प्रेतनामगोत्राभ्यां दत्त्वाक्षय्योदकेषु चतुरङ्गुलं पृथिवीस्तावदन्तरास्तावदधः खाता-वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात् । कर्षुसमीपे चाग्नित्रयमुप-साधाय परिस्तीर्य्य तत्रैकस्मिन्नाहुतित्रयं जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधानमो यमायाङ्गि-रसे स्वधानमः स्थानत्रये प्राग्वत्पिण्डनिर्व्वपनङ्कुर्य्यात्ततो दधि-मधुघृतमांसैः कर्षुत्रयं पूरयित्वैतत्त इति जपेत् एवं मृताहे प्रतिमासं कुर्य्यादिति । दत्त्वाक्षय्योदकेष्विति अक्षय्योदकानि दत्त्वा तेषु दत्तेषु सत्स्विति विभक्तिविपरिणामेनान्वयः ।

वाराहपुराणे ।

श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रियाः ।
गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः* ॥
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ।
पूजयिष्यामि भोगेन एवं विप्रं निमन्त्रयेत् ॥

द्वितीये दिन आसने च मनुनैवोक्तः ।

अत्रासने देवराजाभ्यनुज्ञातो विश्राम्यताम् ।
द्विजवर्य्यानुग्रहाय प्रसादये ॥

त्वासनं गृह्णे पूतं ज्ञानाग्निशुद्धने करेण विप्र इति ।

वृहस्पतिः ।

---

* पथ इति ल्यब्लोपे पञ्चमी पन्थानं प्राप्य इत्यर्थः ।

वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनायुधम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥

याज्ञवल्क्यवृद्धशातातपौ ।

मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् ।
प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनि ॥

एकादशेऽहनि इत्याशौचापगमनानन्तरदिवसोपलक्षणपरम् । अथाशौचापगम इति विष्णुस्मरणादिति कल्पतरौ । तदेतद्विचारासहम् । तथाहि आद्यमेकादशेऽहनि इत्यनेन आद्योद्देशेनैकादशाहकालोऽभिधीयते । एवञ्चैकादशाहशब्दस्याशौचानन्तरकालोपलक्षकत्वे न विधौ परः शब्दार्थ इति न्यायेन विरुद्ध्येत इति* चेन्नैवं वस्तुत उद्देश्यमाद्यशब्दमेव तस्य वचनान्तरेण प्राप्तत्वात् एकादशाहरूपकालस्याप्राप्तत्वेन सहि कालो-विधेयः । कालश्चानुपादेयत्वेनाविधेय इति कृत्वोद्देश्य इति काल उद्देश्य इति तत्र लक्षणास्वीकारे सिद्धे न विधौ परः

---

* अथ कालस्यानुपादेयत्वेन कालोद्देशेन कर्म्मविधानं न तु कर्म्मोद्देशेन कालविधानम् अतो न विधौ परः शब्दार्थ इति न्यायेनाविरोध इति चेन्नैवं वस्तुत उद्देश्यमाद्यश्राद्धमेव तस्य वचनान्तरेणाप्राप्तत्वात् एकादशाहरूपकालस्याप्राप्तत्वेन सहि कालोविधेयः कालश्चानुपादेयत्वेनाविधेय इति कृत्वा उद्देश्यमपि कालमुद्देश्यमिवाधेयमापाद्यश्राद्धं विधेयमिति कृत्वा वाक्यवृत्तिः परिसमाप्यते अतश्च कालएव वस्तुतोविधिपर्य्यवसानमिति तत्र लक्षणाङ्गीकारे इति क्वचित् पुस्तके पाठः । वस्तुतः पाठद्वयमपि असङ्गतम् । कालश्चानुपादेयत्वेनाविधेय इति कृत्वा उद्देश्यमपि कालमनुद्देश्यमिवाधारमापाद्य श्राद्धं विधेयमिति कृत्वा एवं भवितुमर्हति ।

शब्दार्थः इति न्यायविरोधः। अतः चत्वादीनामप्याद्यश्राद्ध-मेकादशेऽह्नि कर्त्तव्यम्।

यथा वृद्धवशिष्ठः।

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
चतुर्णामपि वर्णानां सूतकन्तु पृथक् पृथक्॥

शङ्खलीगाक्षी अपि।

आद्यश्राद्धमशुद्धोऽपि कुर्य्यादेकादशेऽहनि।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः॥ इति।

यत्तु मत्स्यपुराणे।

एकादशेऽहनि तथा विप्रानेकादशैव तु।
चत्वादिः सूतकान्तेषु भोजयेदयुतान्द्विजान्॥ इति।

तत्रैतस्य त्वयथं सूतकान्ते एकादशब्राह्मणभोजनोपेतं रुद्र-गणाख्यं कर्म्मान्तरं न तु षोड़शश्राद्धान्तर्भूतं तथा सति एका-दशश्राद्धान्येतानि षोड़शपराणीति संख्याधिक्यात् षोड़शश्राद्ध-विरोधः। तस्मादाद्यमेकादशेऽहनीति सर्व्ववर्णसाधारणमिति चतुरस्रम्। आहिताग्नेरेकादशाहश्राद्धविशेषमाह

कात्यायनः।

श्राद्धमग्निमतः कार्य्यन्दाहादेकादशेऽहनि।
ध्रुवाणि तु प्रकुर्व्वीत प्रमीताहनि सर्व्वदा।

ध्रुवाणि नैपक्षिकादूर्द्धानि।

जातूकर्णः।

ऊर्द्धं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत्।

अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मन: ॥

विहितप्रकारेण युद्वादिहतानां सद्य: शौचेऽप्याद्यमेकादशे-हनीत्याह

शङ्ख: ।

सद्य: शौचेऽपि दातव्य: प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥

षोड़शश्राद्धान्याह जातूकर्ण्य: ।

द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोड़श ॥

आद्यषाण्मासिकाब्दिकशब्द ऊनषाण्मासिकोनाब्दिकपर: ।

व्यासोऽपि ।

द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके ।
श्राद्धानि षोड़शैतानि सम्मतानि मनीषिभि: ।

द्वादशाहे क्रियमाणे न्यूनमासिकम् ।

यदाह गोभिल: ।

मरणद्वादशाहे स्यान्मास्यूनेवोनमासिकम् ।

ब्रह्मपुराणे षोड़शश्राद्धकाला: केचनान्यथोपदिष्टा: ।

नृणां वै त्यक्तदेहानां श्राद्धा: षोड़श सर्व्वदा ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासै: श्राद्धा द्वादशसंख्यया ।
कर्त्तव्या: श्रुतितस्तेषां तत्र विप्रांस्तु तर्पयेत् ॥ इति ।

अत्र चतुर्थाहादिश्राद्धान्तर्भावैरेकादशादिश्राद्धानां षोड़शसंख्या:

विहिताः न जनमासाद्यन्तर्भाविनेति क्वचित्कालान्यथाभावः ततः षोड़शश्राद्धेषु विकल्पः। अयञ्च विकल्पः शाखाभेदेन तद्‌भावे यथादेशं यथाकुलं वा व्यवस्थितो विज्ञेयः। मासेऽतीत-इत्यस्मिन्नर्थे तद्धितोत्पत्तौ मासिकशब्दनिष्पत्तिमङ्गीकृत्य प्रथम-मासे निवृत्ते द्वितीयमासे मृतदिवसे आद्यं मासिकम्। एवं द्वितीयेऽतीते तृतीये मासि मृतदिवसे द्वितीयमासिकमित्येवं क्रमेण द्वादशमासिकानि एकादशाहश्राद्धं न पृथगेवेति केचन मन्यन्ते तदनुपपन्नं द्वादशप्रतिमास्यानीत्युपक्रम्य श्राद्धान्येतानि षोड़शेति जातूकर्णोक्तषोड़शसंख्याविरोधात्। मृतेऽहनि तु कर्त्तव्यं प्रतिमासमित्यनेन चाद्यादिमासिकानामाद्यादिमास-एककालोविहितस्तेनापि विरोधः प्रसज्येत न नु त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरमिति यथा त्रैपक्षिकस्य त्रिपक्षा-नन्तरं कालस्तथाद्यादिमासिकानामाद्यादिमासानन्तरमेव कालोऽस्त्विति चेन्नैवम्। त्रैपक्षिकं भवेद्वृत्ते इत्यस्यायमर्थः। वृत्ते प्रवृत्ते न तु निवृत्त इति। अतएव कार्ष्णाजिनिः त्रैपक्षिकं त्रिपक्षे स्यान्मृताहेष्वितराणि च। अतो मासिक-शब्दस्तत्र भव इत्यस्मिन्नर्थे सामान्येन ये प्रत्यया विहितास्त-दन्ततस्तत्रापि ठक इकादेशे कृते मासिकमिति रूपं निष्पन्नम्। आद्यमासिके तद्विजमाहवनीयस्थानीयं कृत्वा कुर्य्यात्तदभावे अग्नौ जुहुयात्पक्षद्वयेऽपि पुनराद्यं कुर्य्यात्।

तदाह गोभिलः।

ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा।

पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥

प्राक्सूतकान्ते प्रेतार्थं ब्राह्मणान् भोजयेद्दश ।

ऊनमासिकादिषु कालनियममाह

गौतमः ।

एकद्वित्रिदिनैरूनैस्त्रिभागेनोन एव वा ।

श्राद्धान्यूनाब्दिकादीनि कुर्य्यादित्याह गौतमः ॥

कार्ष्णाजिनिः ।

ऊनान्यूनेषु मासेषु विषमाहे समेऽपि वा ।

अत्र विशेषमाह गर्गः ।

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।

ऊनश्राद्धं न कुर्व्वीत गृही पुत्त्रधनक्षयात् ॥

मरीचिः ।

त्रिपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने ।

चतुर्दश्यान्तु नोनानि कृत्तिकासु त्रिपुष्करे ॥

ंवत्सरादर्व्वाक् सपिण्डीकरणे षोडशश्राद्धान्यपकृष्य सपिण्डी-
रणं विधाय पुनस्तानि मासिकानि स्वस्वकालप्राप्तानि
र्य्यात् ।

यदाह गोभिलः ।

श्राद्धानि षोडशं दत्त्वा नैव कुर्य्यात्सपिण्डनम् ।

लौगाक्षिः ।

श्राद्धानि षोडशाद्यानि विदधीत सपिण्डनम् ।

यस्य संवत्सरादर्व्वाक् सपिण्डीकरणङ्कृतम् ॥

अङ्गिराः ।

मासिकं सोदकं कुम्भं देयं तस्यापि वत्सरम् ।*

अत्र विशेषमाह पैठीनसिः ।

सपिण्डीकरणादर्व्वाक्कुर्य्याच्छ्राद्धानि षोड़श ।
एकोद्दिष्टविधानेन कुर्य्यात्सर्व्वाणि तानि तु ॥
सपिण्डीकरणादूर्द्ध्वं यदा कुर्य्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्य्यात्तथा कुर्य्यात्स तान्यपि ॥

कात्यायनः ।

सपिण्डीकरणादूर्द्ध्वं न दद्यात्प्रतिमासिकम् ।
एकोद्दिष्टविधानेन दद्यादित्याह शौनकः ॥

यदा वृद्धौ प्राप्तायां श्राद्धार्थं षोड़शश्राद्धानि अपकृष्य सपिण्डीकरणं कृत्वा पुनः मासिकानि क्रियन्ते । तान्यपि वृद्धेः पुरस्तादेवापकृष्य कर्त्तव्यानि न तु स्वे स्वे काले ।

तथाच वात्स्यायनिः ।

सपिण्डीकरणादर्व्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

निषेधश्च कात्यायनेनोक्तः ।

निर्वृत्य वृद्धितन्त्रन्तु मासिकानि न तन्त्रयेत् ।
अयातयामं मरणं न भवेत्पुनरस्य तु ॥

वृद्धिनिमित्तं कर्म्म कृत्वा मासिकानि न कुर्य्यात् । तथाच

---

* मासिकं चोदकं कुम्भं देयं तस्यापि वत्सरमिति पाठान्तरम् ।

सत्ययातयामं नवं मरणं पुनर्भवेदित्यर्थः । यदि कुर्य्यात्तदा नूनं मरणं भवेदिति तात्पर्य्यम् । यदि अशौचादिना मासिके विघ्ने तदा तदनन्तरङ्कर्त्तव्यं न्यायसिद्धत्वात् । तत्राप्यसम्भवे उपरितनमासिकदिने कार्य्यम् ।

यदाह ऋष्यशृङ्गः ।

एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिंस्तिथौ तस्यां कुर्य्यादन्तरितञ्च तत्* ॥

अन्तरितं विघ्नेन तच्च तच्छब्देन अन्यमासस्वकालप्राप्तमुच्यते । एकादशाहादिकन्तु ज्येष्ठेनैव कर्त्तव्यम् ।

तथाच प्रचेताः ।

एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः ।
कुर्य्युर्नैकैकशः श्राद्धमाब्दिकन्तु पृथक् पृथक् ॥

आब्दिकन्तु पृथक् पृथगिति विभक्तविषयम् ।

## अथ नवश्राद्धानि ।

तत्राङ्गिराः ।

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव नवश्राद्धम्प्रकीर्त्तितम् ॥

बौधायनः ।

---

* मासेऽन्यस्मिंस्तिथौ तस्मिन्तदा दद्यात्प्रयत्नत इति ग्रन्थान्तरीयपाठः ।

मरणाद्विषमदिनेष्वेकैकं नवश्राद्धं कुर्य्यात् । आनवम-
माद्यन्तनवमं विच्छिद्य नैकादशेऽह्नि तत्कुर्य्यादिति ।
आनवममित्यादि अत्राऽभिविधौ नवममभिव्याप्य नवश्राद्धं
कुर्य्यात् नवमदिने कर्त्तव्यम् । नवश्राद्धं यद्यन्तरितं तर्हि
तदैकादशेऽह्नि कुर्य्यात् ।

एवञ्च पञ्चैवास्य मते नवश्राद्धानि ।

भविष्यपुराणे ।

नव सप्त विप्राणां राज्ञां नवश्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः ॥

शिवस्वामी ।

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।

आपस्तम्बः ।

षडित्याहुर्विभाषा तैत्तिरीयाणाम् ।

कण्वः ।

नवश्राद्धं मासिकञ्च यद्यदन्तरितं भवेत् ।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयम्प्रचक्ष्यते ॥

सातन्त्र्यं समानतन्त्रत्वमुत्तरनवश्राद्धदिन इति यावत् ।

## अथ सपिण्डीकरणम् ।

तत्र शौनकः ।

चत्वार्य्युदकपात्राण्येकं प्रेतस्य त्रीणि इतरेषां प्रथम-

पात्रम् त्रिषु पात्रेषु नियोजयेत्। समानी व आकूति*-रित्येवमेव प्रथमपिण्डं त्रिषु पिण्डेषु नियोजयेत्। मधुमतीभिः सङ्गच्छध्वमिति द्वाभ्यामेव† चतुर्थोऽनुज्ञापितो भवति इति प्रेते चिरस्मृते।

विष्णुः।

संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय ततः तत्प्रपितामहाय च ब्राह्मणान् भोजयेदग्नौकरणमावाहनं पात्रं कुर्य्यात्। संसृज्यन्तु त्वा पृथिवी समानीव इति प्रेतपात्रं पात्रत्रये निदध्यात्। कर्षूत्रयसन्निकर्षे तु योजयेत्। उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्य्यात् ब्राह्मणांश्च स्वाचान्तान् दत्तदक्षिणान् चानुव्रज्य विसर्ज्जयेत्। ततः प्रेतपिण्डपात्रं पाद्योदकवत् पिण्डत्रये निदध्यात्। कर्षूत्रयसन्निकर्षेऽप्येवमेव सपिण्डीकरणं मासिकार्थवद्द्वादशाहङ्कृत्वा त्रयोदशेऽह्नि वा कुर्य्यात्। मन्त्रवर्ज्जं हि शूद्राणां द्वादशेऽह्नि वत्सराभ्य-

---

* समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ॥ ऋ। १०म, सू १०१।४।

† सं गच्छध्वं सं वदध्वं सं वो मनांसि जानतां।
देवा भागं यथा पूर्व्वे सं जानाना उपासते ॥
समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषां।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥ १०म, सू १९१।२।३।

न्तरे यद्यप्यधिमासिको* भवेत्तदा मासिकार्थं दिनमेकं वर्द्धयेत् । इति ।

कर्षूत्रयसन्निकर्षेऽप्येवमिति । प्रेतैकोद्दिष्टसम्बन्धि कर्षूत्रयसहितान् पिण्डान् पित्रादिपिण्डेषु योजयेत् । मासिकार्थवदिति मासि भवानि श्राद्धानि मासिकानि तदर्थः प्रेताप्यायनादिसंयुक्तानि श्राद्धानि मासिकार्थवन्ति तान्याशौचापगमे द्वादशस्वहःसु कृत्वा त्रयोदशेऽह्नि सपिण्डीकरणं कुर्य्यादित्यर्थः । अत्रोनमासिकादीनि प्रथमतृतीयषष्ठद्वादशदिनेषु कर्त्तव्यानि । एवं षोड़शश्राद्धानि । अयञ्च पक्षो वृद्ध्यादिनिमित्तापकर्षे बोद्धव्यः । अतएव द्वादशाहं श्राद्धं कृत्वेति प्रदर्शनार्थं ततश्चापकर्षकालात्पूर्व्वकृतव्यतिरिक्तानि यावन्ति भवन्ति तत्संख्यकदिनेषु तावन्ति कृत्वोत्तरदिने सपिण्डीकरणं कर्त्तव्यम् ।

याज्ञवल्क्यः ।

गन्धोदकतिलैर्युक्तं कुर्य्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रम्प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्व्ववदाचरेत् ।
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥

शेषं ब्राह्मणनिमन्त्रणादि पूर्व्ववत् पार्व्वणवत् ।

विशिष्टं ब्राह्मणानां च निमन्त्रणादि च पूर्व्ववत् ।
एकोद्दिष्टं सपिण्डीकरणं व्युत्क्रमस्तेन तु विशेषः

---

* मलमासः ।

ब्रह्मपुराणे ।

मृते पितरि यस्याथ विद्यते च पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्व्वकाः ॥
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यश्च पूर्व्ववत् ।
मातर्य्यपि मृतायाञ्च विद्यते च पितामही ॥
प्रपितामही पूर्व्वन्तु कार्य्यन्तत्राप्ययं विधिः ।

सुमन्तुः ।

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने ।
पितृत्वमश्नुते प्रेत इति धर्म्मो व्यवस्थितः ॥

त्रयाणां पित्रादिपिण्डानां मध्ये एकेनापि पितृपिण्डेन प्रपितामहपिण्डेन वा पूर्व्वपूर्व्वं जीवति सपिण्डने कृते प्रेतः पितृत्वमाप्नोतीत्यर्थः ।

यत्तु मनुवचनम् ।

व्युत्क्रमाच्च प्रमीतानां नैव कार्य्या सपिण्डता । इति

तन्मातापितृभर्त्तृव्यतिरिक्तविषयम् ।

तथाच स्कान्दपुराणे ।

अक्रमेण मृतानां न सपिण्डीकृतिरिष्यते ।
यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः* ॥

---

* यदि माता पिता भर्त्ता च न अक्रमेण मृतः तदा अक्रमेण मृतानां न सपिण्डीकृतिरिष्यते । नेति यदि इत्यनेन सम्बन्धः अर्थात् अन्योव्युत्क्रमेण मृतः तदा एष विधिः सपिण्डनाभावविधिः स्मृत इत्यर्थः ।

एष विधिर्व्युत्क्रममृतौ न सपिण्डीकृतिरिष्यते इत्ययं विधिः। ब्रह्मपुराणवचनन्तु मृते पितरि इत्यादि पूर्व्वमेव दर्शितम्। पतिरपि पत्न्याः स्वमातृपितामह्यादिभिः सह सापिण्ड्यं करोति।

तथाच पैठीनसिः।

अपुत्रायां मृतायान्तु पतिः कुर्य्यात्सपिण्डताम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥

मात्रग्निप्रवेशे कृते पुत्रः पित्रादिभिरेव सह सापिण्ड्यङ्कुर्य्यात्।

तदाह यमः।

पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियः।
सा विवाहे यदैक्यं हि गता मन्त्राहुतिव्रतैः* ॥

पत्या चैकेन पतिमुख्येन तत्पित्रा तत्पितामहेन सह सपिण्डतामर्हतीत्यर्थः। अतो न तेनैव सापिण्ड्यं किन्तु त्रिभिः।

शातातपः।

मृता यानुगतानाथं सा तेन सहपिण्डतामर्हतीति।

ब्राह्मदैवार्षप्राजापत्यविवाहोढ़ायाः सुतः पितामह्यादिभिः मातुः सापिण्ड्यं कुर्य्यात्।

यथाह शङ्खः।

मातुः सपिण्डीकरणं कथं कार्य्यं भवेत्सुतैः।
पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम्॥

---

* सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैरिति पाठान्तरम्।

यमः ।

जीवत्पिता पितामह्या मातुः कुर्य्यात्सपिण्डनम् ।
प्रमीतपितृकः पित्रा पितामह्यापि वा सुतः ॥

मातुरग्निप्रवेशाभावेऽपि पित्रा पितामह्या वेति विकल्पः पितामह्या पितामह्यादिभिरित्यर्थः । एवं पित्रेत्यादिषु कर्त्तव्यम्* । आसुरराक्षसगान्धर्व्वपैशाचविवाहैरूढ़ासुतोमातामह्यादिभिस्तस्यां जीवन्त्यां मातुः पितामह्यादिभिस्तस्यामपि जीवन्त्यां मातुः प्रपितामह्यादिभिर्मातामहेन वा सपिण्डीकरणं कुर्य्यात् ।

यदाह शातातपः ।

तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् ।
आसुरादिविवाहेषु विन्नानां योषितां स्मृतम् ॥

तच्छ्वश्रूर्मातुः प्रपितामही ।

सुमन्तुः ।

पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।
माता मातामहे तद्वदित्याह भगवान् शिवः ॥

पुत्रिकायाः सुतोऽपि मातामहमातामह्यादिभिः कुर्य्यात् ॥

तथाच कात्यायनः ।

मातुः सपिण्डीकरणं पितामह्या सहोचितम् ।
यथोक्तेनैव कालेन पुत्रिकाया न चेत्सुतः ॥

---

* एवं पित्रेत्यादौ द्रष्टव्यमिति पाठान्तरम् ।

पुत्रिकापुत्रश्चेत्तु मातामह्यादिभिः कुर्य्यादित्यर्थः ।

बौधायनः ।

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरन्तस्यास्तृतीये च पितामहम् ॥

एवं येन केनापि मातुः सपिण्डनब्रह्मन्वष्टकादिश्राद्धेषु पितामह्यादिभिरेव पार्व्वणं कर्त्तव्यम् । आसुरादिविवाहेषु पुत्रिकाकरणे च मातामहगोत्रमेव ।

पितृगोत्रं समुत्सृज्य न कुर्य्याद्भर्त्तृगोत्रतः ।
जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलम् ॥

इति स्मरणात् । ब्राह्मादिविवाहेषु पुनर्भर्त्तृगोत्रमेव ।

सगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।
स्वामिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥

इति स्मरणात् । एतच्च सपिण्डीकरणं कालात्ययेऽपि पुत्रसद्भावे पुत्रेणैव कार्य्यम् ।

तदुक्तं वायुपुराणे ।

श्राद्धानि षोड़शं दत्त्वा कुर्य्यान्न तु सपिण्डनम् ।
प्रोषितावसिते पुत्रः कालादपि चिरादपि ॥

एतद्व्याख्यानमपरार्के प्रोषितावसिते प्रवासावसाने पुत्रोऽपि चिरादपि कालात् सपिण्डनं कुर्य्यात् । तत् षोड़शश्राद्धान्यदत्त्वा न कुर्य्यात् किन्तु दत्त्वेत्यर्थः । यदि तानि कनिष्ठभ्रात्रादिना दत्तानि तदा सपिण्डनमेव कुर्य्यादिति ।

कात्यायनः ।

पितामहः पितुः पश्चात्पञ्चत्वं* यदि गच्छति ।
पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोड़श ॥
नैतत्पौत्रेण कर्त्तव्यं पुत्त्रवांश्चेत्पितामहः ।
पितुः सपिण्डनङ्कृत्वा कुर्य्यान्मासानुमासिकम् ॥
असंस्कृतौ न संस्कार्य्यौ पूर्व्वौ पौत्त्रप्रपौत्त्रकैः ।
पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कुर्य्यादिति निश्चयः ॥

असंस्कृतौ दाहादिसपिण्डीकरणान्तैः कर्म्मभिः । पूर्व्वौ पितामहप्रपितामहौ। पापिष्ठं संस्काररहितत्वान्न पातित्येन चाण्डालादिहतेन वा । पापकर्म्मिणो न संसृजेरन् स्त्रियश्चाव्यभिचारिण्य† इति गौतमस्मरणात् न संसृजेरन्न सपिण्डीकुर्य्युः। असंस्कृतौ न संस्कार्य्याविव्येतच्च प्रत्यासन्ने सपिण्डीकरणकर्त्तरि सति पौत्रादिना न कर्त्तव्यमित्येतत्परम् । असति कुर्य्यादेवेत्यपरार्कः तत्रापि पितृसपिण्डीकरणानन्तरं न पितामहाद्यङ्कर्त्तव्यं पितुः प्राधान्यात्सन्निहितत्वात् ।

पापिष्ठमपि शुद्धेन शुद्धम्पापकृतापि वा ।
पितामहेन पितरं संस्कुर्य्यादिति निश्चयः ॥ इति

वचनाच्च यत्र च पितामहे प्रमीते पिता तदूर्द्ध्वदैहिकं कुर्व्वन्

* प्रेतत्वमिति क्वचित् पाठः । † अव्यभिचारिण्य इत्यपपाठः वस्तुतः व्यभिचारिणीरित्येव साधु । अतिचारिणीति क्वचित्पाठः ।

मध्ये मृतः तत्रापि पौत्रेण पितृसापिण्ड्यं कृत्वा पश्चात्पितामहस्य कुर्य्यात्पूर्व्वोक्तन्यायस्य तुल्यत्वात्।

अयं विशेषः। पितामहदशाहादिमध्ये एव पितृमरणे

प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत्॥

इति वचनाद्दशाहकृत्यविघ्नेऽपि पित्रोरूर्द्ध्वदैहिकानन्तरं पुनः संस्कारं कृत्वा सर्व्वमावर्त्तयेत्। व्यतीते दशाहादिके अशक्त्या-द्विवशात्पित्रानुज्ञातेन पितामहश्राद्धे पौत्रेणापक्रान्ते पित्राशौचं* वहन्नेव स्वकालेऽपि पितामहश्राद्धं कुर्य्यात्प्रक्रान्तत्वात्। कर्त्तुस्तात्कालिकी शुद्धिरिति वचनाच्च।

यतिविषये विशेषः शातातपेनोक्तः।

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्।
न कुर्य्यात्पार्व्वणादन्यद्ब्रह्मीभूताय भिक्षवे॥

ब्रह्मीभूतो यतिः।

उशना।

एकोद्दिष्टं न कुर्व्वीत यतीनाञ्चैव सर्व्वदा।
अहन्येकादशे प्राप्ते पार्व्वणन्तु विधीयते॥
सपिण्डीकरणं तेषां न कर्त्तव्यं सुतादिभिः।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते॥

एतत्सपिण्डीकरणमाहिताग्निना कर्त्रा द्वादशाहे कर्त्तव्यम्।

तथाच लघुहारीतः।

---

* पित्राद्यमिति क्वचित्पाठः।

यजमानोऽग्निमान्राजन् प्रेतश्चानग्निमान् भवेत् ।
द्वादशाहे भवेत्कार्य्यं सपिण्डीकरणं सुतैः ।
तत्र श्राद्धानि षोड़श दत्त्वा न तु कुर्य्यात्सपिण्डनम् ॥
इति वचनात् षोड़शश्राद्धानि अपकृष्य सपिण्डीकरणं कुर्य्यात् ।
यत्तु वचनम् ।

यस्य संवत्सरादर्व्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकं कुम्भं देयं तस्यापि वत्सरम् ॥ इति

तत् कल्पसूत्रकारोक्तं पुनरनुष्ठानविषयत्वेन योज्यम् । अयञ्च द्वादशाहपक्षो ब्राह्मणस्यैव तस्य तावताशौचनिवृत्तेः । नन्वाद्यं श्राद्धं यथैकादशेऽह्नि अशौचमध्ये क्रियते तद्वत्क्षत्रि-यादिः साग्निको द्वादशाहे सपिण्डीकरणं करोतु को विरोध-इति चेत् आद्ये चैकादशेऽहनि नियतत्वात् । सर्व्वेषां तत्र करणं सपिण्डीकरणं सपिण्डीकरणस्य च कालान्तरमप्य-स्तीति । द्वादशाहो ब्राह्मणविषयएवावतिष्ठते । तथा*ऽहिता-ग्निना ब्राह्मणेन कर्त्रा क्व च नैकादशेऽह्नि वा सपिण्डी-करणङ्कार्य्यम् ।

तदाह हारीतः ।

या तु पूर्व्वममावास्या मृताहाद्दशमाद्भवेत् ।
सपिण्डीकरणं तस्यां कुर्य्यादेव सुतोऽग्निमान् ॥

मृताहाद्यद्दशमाहस्तस्मात्परा यामावास्यैकादशाहस्तत्रेत्यर्थः ।

---

* तस्या इति पाठान्तरम् ।

आहिताग्निना क्षत्रियेण वैश्येन वा कर्त्राशौचानन्तरदर्शे सपिण्डीकरणं कर्त्तव्यम् ।

यदाह जाबालिः ।

सपिण्डीकरणं पूर्व्वं पूर्व्वदर्शेऽग्निमान् सुतः ।
परतो दशरात्रस्य पूर्णेऽब्दे तु तथापरः ॥

अस्यार्थः सपिण्डीकरणं कुर्य्यात् पूर्व्वदर्शे इत्यनेन दशदिनादर्व्वाक् यदा कदाचिदपि प्राप्तस्य दर्शस्य सपिण्डीकरणकालत्वे प्राप्ते सकाल उत्कृष्टो दशरात्रात्पर इति । परत्वञ्च दशरात्रसन्निहितानन्तरकाले आशौचानन्तरकालेऽप्यविरुद्धमिति जातेष्टिन्यायेनाशौचानन्तरकालीनदर्शे कर्त्तव्यम् । तथाच दशरात्रशब्दोऽप्याशौचानन्तरकालोपलक्षकः । ब्राह्मणादीनां सर्व्वेषामाहिताग्नीनां कर्त्तृणामाशौचान्तप्रथमदर्शयोर्मध्ये यः कालः सोऽपि सपिण्डीकरणकालः ।

तथाच कात्यायनः ।

एकादशाहं निर्व्वर्त्य पूर्व्वदर्शाद्यथाविधि ।
प्रकुर्व्वीताग्निमान्विप्रो मातापित्रोः सपिण्डनम् ॥

आशौचानन्तरं योदर्शः तन्मध्ये एकस्मिन्दिने सपिण्डीकरणं कुर्य्यादिति आहिताग्नेः पिण्डपितृयज्ञाधिकारिणो दर्शपिण्डपितृयज्ञार्थमयमुपदेशः । अतएव

प्रजापतिः ।

नासपिण्डाग्निमान्पुत्त्रः पितृयज्ञं समाचरेत् ।
सपार्व्वणं नाभ्युदयं कुर्व्वन्न लभते फलम् ॥

एवञ्च पूर्व्वोक्तरीत्या द्वादशाहकालो दर्शात्मककालोऽशौचान्त-प्रथमदर्शयोर्मध्यकालश्चेति त्रयः कालाः उक्ता भवन्ति। द्वादशाहस्तथाशौचान्तप्रथमदिवसयोर्मध्ये किमप्याह। तथाशौचानन्तरं प्रथमो दर्श इति। अनेनैवाभिप्रायेण कल्पतरावपि द्वादशाहो दशाहात्परकालीनाया अमावास्यायाः पूर्व्वं किमप्याह। दशाहात्परामावास्याव्यतीते यदा कर्त्ता नाहिताग्निः प्रेतश्चाहिताग्निः तदा

सुमन्तुराह।

प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानग्निर्यदा भवेत्।
सपिण्डीकरणं तस्य कुर्य्यात्पक्षे तृतीयके॥

यदा कर्त्ता प्रेतश्चाहिताग्निस्तदा पितृपक्ष एव। तस्य दाहादैकादशाहादिकस्य कर्त्तव्यत्वात्। साग्निकस्य पूर्व्वोक्तकाललोपे कथमित्याकाङ्क्षायाम्

गोभिलः।

द्वादशाहादिकालेषु प्रमादादननुष्ठितम्।
सपिण्डीकरणं कुर्य्यात्कालेषूत्तरभाविषु॥

अनाहिताग्नेस्तु द्वादशाहादयः सप्तपक्षाः भवन्ति।

तथा भविष्यपुराणे।

सपिण्डीकरणं कुर्य्याद्यजमानस्त्वनग्निमान्।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ॥
द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा।
एकादशेऽपि वा मासि मङ्गलं स्यादुपस्थितम्॥

षष्ठे वा मासीत्यन्वयः । यदा मङ्गलं द्वादशाद्युपस्थितं स्यात्ततः पूर्व्वमपि काल इत्यर्थः ।

व्यासः ।

आनन्त्यात्कुलधर्म्माणां स्त्रीपुंसां चायुषः* क्षयात् ।
अस्थितेस्तु शरीरस्य द्वादशाहः प्रशस्यते ॥

शूद्रविषये सपिण्डीकरणं कर्त्तव्यमित्यनुवृत्तौ ।

विष्णुः ।

मन्त्रवर्ज्जं हि शूद्राणां द्वादशेऽह्नि प्रकीर्त्तितम् । इति ।

अमावास्याश्राद्धकारिशूद्रविषयमेतदित्यपरार्के कल्पतरौ च । वचनबलादाशौचमध्ये एव कर्त्तव्यम् ।

## अथाभ्युदयिकश्राद्धम् ।

तत्र मत्स्यपुराणे ।

उत्सवानन्दसन्तानयज्ञोद्वाहादिमङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ।
ततो मातामहानाञ्च विश्वेदेवास्तथैव च ॥

अत्र कालनियममाह गार्ग्यः ।

मातुः श्राद्धन्तु पूर्व्वेद्युः कर्म्माहनि च पैतृकम् ।

---

* पुंसाञ्चैवायुषः क्षयादिति ग्रन्थान्तरीयपाठः ।

मातामहं चोत्तरेद्युः वृद्धौ श्राद्धत्रयं स्मृतम् ॥

दिनत्रयकरणासम्भवे वृद्धशातातपः ।

पृथग्दिने त्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे ।
श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवन्तु तान्त्रिकम् ॥

शातातपः ।

पूर्व्वाह्ने दैविकङ्कार्य्यमपराह्ने तु पैतृकम् ।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

प्रातरिति सति सम्भवे अन्यथा रात्र्यादौ पुत्रजन्मनि जात-कर्म्माङ्गभूतनान्दीमुखश्राद्धानुपपत्तेः ।

आश्वलायनगृह्यपरिशिष्टे ।

आभ्युदयिके युग्मा ब्राह्मणा अमूलदर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यात् । उदङ्मुखेभ्यो वा प्राङ्मुखो द्वौ दर्भौ पवित्र इति ।

कात्यायनः ।

आभ्युदयिके दक्षिणासुपचारः पितृमन्त्रवर्ज्जं जपन् ऋजवो दर्भा यवास्तिलार्थे* सम्पन्नमिति तृप्तिप्रश्नो दधिवदराक्षतमिश्राः पिण्डा नान्दीमुखान् पितॄन् आवाहयिष्ये इति पृच्छति च नान्दीमुखाः प्रीयन्ता-मक्षय्यस्थाने नान्दीमुखान् पितॄन्वाचयिष्ये इति पृच्छति† च नान्दीमुखाः पितरः पितामहाः प्रपिता-

---

* यवैस्तिलार्थ इति हेमाद्रौ पाठः । † पृच्छतीति पाठान्तरम् ।

महाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत युग्मानाग्नये-
दिति ।

अत्र नान्दीमुखाः पितर इति मातॄणां मातामहादीनामपि प्रदर्शनार्थम् । यत्तु ब्रह्मपुराणे चतुर्थादिलेपभाजां नान्दीमुखदेवतात्वमुक्तम् ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्त्तिताः ॥
तेभ्यः पूर्व्वतरा ये च प्रजावन्तः सुखैधिताः ।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥ इति ।

तज्जीवत्पित्रादित्रितीयस्य श्राद्धकर्त्तुर्वृद्धिश्राद्धे देवतात्वसिद्ध्यर्थं मत्स्यपुराणादिवचनेषु पित्रादीनां नान्दीमुखदेवतात्वमभिहितं ब्रह्मपुराणवचने तु लेपभाजामभिहितम् । अतः परस्परविरोधः परिहरणीयः । परिहारश्च पूर्व्वोक्तविषयभेदेन घटते नान्यथा । युक्तं चैतत्पित्रादीनां त्रयाणामपि विद्यमानत्वात् । चतुर्थादयः प्रजावन्तः चतुर्थादिसन्निहितत्वेन पित्रादित्रयाणां तद्विषयदुःखभाक्त्वेन सन्निहितमरणधर्म्मकत्वात् । ह्यश्रुमुखमिति । तत्र च विद्यमानपित्रादित्रयस्यापि वृद्धौ नान्दीमुखश्राद्धमवश्यमिति गम्यते न पार्व्वणादिश्राद्धम् । पितरि पितामहे च* जीवति नैव कुर्य्यादिति विष्णुना निषेधात् । एवं मात्रादिषु त्रिषु मातामहादिषु च त्रिद्यमानेषु वेदितव्यं

* चकारात्प्रपितामहसमुच्चयः ।

न्यायसाम्यात्। एवञ्च यत्कैश्चिदुक्तम्। पित्रादिषु विद्यमानेषु पितृवर्गनान्दीश्राद्धमेवं मातृश्राद्धादिष्वपीति तद्ब्रह्मपुराणापरिज्ञाननिबन्धनमित्युपेक्षणीयम्।

आश्वलायनः।

विश्वेदेवा इदं वो अर्घ्यं नान्दीमुखाः पितर इदं वो अर्घ्यमिति यथालिङ्गमर्घ्यदानं पाणौ होमो अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहा इति मधुवाता ऋतायत इति ऋचः स्थाने उपास्मै गायतेति पञ्चमधुमतीः श्रावयेदक्षन्नमीमदन्तेति* च षष्ठीं†मा-चान्तेषु भुक्ताशयान् गोमयेनोपलिप्य तेषु प्राचीनाग्रान् दर्भान् संस्तीर्य्य तेषु पृषदाज्यमिश्रेण भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यादिति।

भुक्ताशया भुक्तप्रदेशाः। भोजनशालाया वहिर्वा दद्यात्।

वृद्धशातातपः।

प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ नाम्ना सबाह्यतः।

बाह्यतः शालातोवहिः आश्वलायनेन प्रतिवर्गं द्वौ द्वौ पिण्डौ दर्शितौ।

ब्रह्मपुराणे तु।

मिश्रीकृत्वा तु चत्वारि पिण्डान् श्रीफलसन्निभान्।

---

* अक्षन्नमीमदन्तह्यवप्रिया अधूषत अस्तोषत: सुभानवो विप्रानविष्टयामतीयो यान्न-न्द्रतेहरी। † ऋचमिति शेषः।

इति चतुःसंख्या* । षट्पिण्डोपलक्षणार्थम् ।

चतुर्व्विंशतिमते ।

एकं नाम्ना परं तूष्णीं दद्यात्पिण्डान् पृथक् पृथक् ।

एकैकस्मै पृथक् द्वौ द्वौ पिण्डौ दद्यादेकं नामोच्चारणपूर्व्वकम् । अपरं तूष्णीमित्यर्थः ।

अर्घ्यदाने विशेषः कात्यायनेनोक्तः ।

गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं निवेदयेत् ।
नात्रापसव्यकरणं न पित्र्यतीर्थमिष्यते ।
पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ।
ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ॥
कृत्वार्घ्यं सम्प्रदातव्यं नैकस्यात्र प्रदीयते ।

ज्येष्ठोत्तरेति द्वयोर्द्वयोः ब्राह्मणयोर्हस्तौ मेलयित्वा तत्रापि ज्येष्ठस्य प्रथमोपवेशितस्य हस्तमुपरि कृत्वा अर्घ्यदानङ्कर्त्तव्यमित्यर्थः ।

कात्यायनः ।

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्म्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावेऽपि तत्क्रमात् ॥

पितुरभावे ज्येष्ठभ्रात्रादिकर्त्तृक्रमेणेत्यर्थः । आ उद्वहनात् विवाहपर्य्यन्तं जीवति पितरि पुत्त्रः स्वीयद्वितीयविवाहस्य संस्कारकर्म्मत्वाभावात् पितुरावश्यकत्वाभावेन तादृशविवाहेषु

---

* या चतुःसंख्या सा षट्पिण्डोपलक्षणार्था इति पाठान्तरम् ।

स्वपुत्रजातकर्म्मादिषु वा नान्दीमुखश्राद्धकर्त्ता तदापि पितृमातृभ्यः पितृपितृभ्यः पितृमातामहेभ्य एव दद्यात् ।

येभ्य एव पिता दद्यात्तेभ्यो दद्यात्तु पुत्रकः ।

इति नियमात् । केचनैवं वर्णयन्ति येभ्य एव पिता दद्यादित्यस्यायमभिप्रायः पिता स्वपित्रादिभ्यः स्वमातामहादिभ्यश्च यदा ददाति एवमसावपि स्वसम्बन्धिनामेव दद्यादिति एतदनुपपन्नम् । अत्र यच्छब्दनिर्द्देशो न स्वशब्दनिर्द्देशः येभ्य एवेत्यादिना पितृप्रतियोगिका एव गृह्यन्ते न स्वप्रतियोगिकाः तस्मात्पितृसम्बन्धिन एव मातामहादयो ग्राह्याः ।

तथा ।

तेभ्यः पूर्व्वतरा ये च प्रजावन्तः सुखैषिताः ।

ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥

इत्यस्मिन् प्रकरणे पूर्व्वदर्शितब्रह्मपुराणवचनाच्च वृद्धिश्राद्धे पिण्डदानं वैकल्पिकम्* ।

तथाच भविष्यपुराणे ।

पिण्डनिर्व्वपनं कुर्य्यान्न वा कुर्य्यान्नराधिप ।

वृद्धिश्राद्धे महाबाहो कुलधर्म्मादपेक्ष्य तु ॥

पिण्डनिर्व्वपणमित्युपलक्षणम् । अतो यत्कुले यावतीतिकर्त्तव्यता वृद्धिश्राद्धे तावत्येव कर्त्तव्या नाधिका इत्यर्थः ।

कात्यायनः ।

---

* वैकल्पितमिति पाठान्तरम् ।

कर्म्मादिषु च सर्व्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

कर्म्मादिषु नान्दीमुखादिषु प्रतिमासु च शुद्धासु लिखितासु वा पटादिषु ।

अपि चाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ।
कुड्यलग्नां वसोर्धारां सप्तधाराघृतेन तु ॥
कारयेत्पञ्चधारां वा नातिनीचां* न चोच्छ्रिताम् ॥
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।

आयुष्याणि आयुर्वृद्धिकराणि आ नो भद्राः क्रतव इत्यादि सूक्तानि† ।

तथाच ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥

---

* नातिनीचामिति मूलसंहितायां हेमाद्रौ च पाठः । † आ नो भद्राः क्रतवो यन्तु विश्वत इति वैश्वदेवं निविद्धानमैकाहिकं रूपसमृद्धम् बहुवा एतस्मिन्नहनि किञ्च किञ्च वारुणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत् प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपदन्तौ वै धिषणान्त एतदहरेतस्याह्नो रूपम् प्रयज्यवो मरुतो भ्राजदृष्टय इति मारुतं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपम् । जातवेदसे सुनवाम सोममिति जातवेदस्यां पुरस्तात् सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते । इमं स्तोममर्हते जातवेदस इति जातवेदस्यं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपमह्नो रूपम् । ऐतरेयारण्यके १ आं । ५ अं । ३ । कां ।

धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
आभ्योगन्धञ्च* पुष्पञ्च धूपं दीपं निवेदयेत् ॥

चतुर्व्विंशतिमते ।

आद्य आभ्युदयिकी† प्रामे देवतास्थापनं स्मृतम् ।
जातकर्म्मकुलश्रेणिर्लोकानां वृद्धिकारकम् ॥
तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।
इत्येता मातरः प्रोक्ताः पितृमातृस्वसाष्टमी ।
ब्रह्मान्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ॥

पूजयेदिति शेषः । पितृपक्षे पितृवर्गे तिस्रो मातृपितामही-प्रपितामह्यः, मातामहे तद्वर्गे तिस्रो मातामह्याद्याः पितृ-मातृस्वसाष्टमी पितृस्वसा सप्तमी मातृस्वसाष्टमीत्यर्थः । एता-मनुष्यमातरः ब्रह्माणी वैष्णवी माहेश्वरी रौद्री वाराही कौमारी चामुण्डेति सप्त देवमातरः । कात्यायनचतुर्व्विंशति-मतयोर्विकल्पः ।

कात्यायनः ।

गणशः क्रियमाणेषु पितृभ्यः‡ पूजनं सदा ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

अयमर्थः । यदा संस्कारादिक्रमः एकदोपनयनकाले जात-कर्म्मादीनि क्रियन्ते । एवमन्यत्रापि । यत्र यत्र सम्भूयानि

---

* आभ्योऽर्घ्यंगन्धपुष्पञ्च इति हेमाद्रौ पाठान्तरम् । † हेमाद्रौ चतुर्विंशतिमते, आभ्युदयिके सम्प्राप्ते देवतास्थापनं स्मृतम् । जातिधर्म्मकुलाम्नातं लोकानां वृद्धिकारकम् ॥ इति पाठः । ‡ मातृभ्यः पूजनं सकृदिति मूलसंहितायां शूलपाणिग्रन्थादौ पाठः ।

कर्म्माणि माङ्गल्यानि क्रियन्ते स कर्म्मगणस्तत्र सकृत्तन्त्रेण कुर्य्यात् । पृथगादिषु स्वस्वकाले पृथक् क्रियमाणेषु न तन्त्रेण किञ्चा*वृत्त्येति ।

## अथ जीवत्श्राद्धम् ।

तत्र ब्रह्मपुराणम् ।

देशकालधनश्रद्धाव्यवसायसमुच्छ्रिते ।
जीवते सति जीवाय दद्याच्छ्राद्धं स्वयं नरः ॥

समुच्छ्रिते युक्ते विहितपुण्यदेशेषु सत्सु श्रद्धायोगादिमांश्चेति जीवच्छ्राद्धं कुर्य्यादित्यर्थः ।

कृतोपवासः सुस्नातस्त्रयोदश्यां समाहितः ।

त्रयोदश्यां कृष्णत्रयोदश्याम् ।

कर्त्तारमथ भोक्तारं विष्णुं सर्व्वेश्वरं यजेत् ।

यजेत्पूजयेत् ।

स्थले जले चरे मूर्त्तौ कलशे पुष्करे रवौ ।

पुष्करे कमले ।

चन्द्राग्निगुरुविप्रेषु पितृमातृषु सर्व्वगम् ।
सदक्षिणाश्च सतिलास्तिस्रस्तु जलधेनवः ।
निवेदयेत् पितृभ्यश्च तदग्रे तु समाहितः ।

---

* किञ्चिति पाठान्तरम् ।

सोमाय पितृमते स्वधानम इति स्मरन्। अग्नये कव्यवाहनाय नम इति स्मरन्।

तयोर्मध्ये तु निःक्षिप्य विप्रान् पश्चोपवेशयेत्।

प्रथमामुत्तरतः द्वितीयां दक्षिणतः तृतीयां मध्ये निक्षिप्य इत्यर्थः।

आवाहनादिना पूर्व्वं विश्वेदेवान् प्रपूज्य च।
अहं वसुभ्यस्त्वा विप्र रुद्रेभ्यस्त्वामहं ततः॥
सूर्य्येभ्यस्त्वामहं विप्र भोजनीये तिलान्वदेत्।
आवाहनादिकं शेषं कुर्य्याच्च पितृकर्म्मवत्॥
सौमां धेनुं ततो दद्याद्वासवाय द्विजाय तु।
आग्नेय्यां वाथ रौद्राय याम्यां सूर्य्यद्विजातयः॥
विश्वेभ्यश्चाथ देवेभ्यस्तिलपात्रं निवेदयेत्।

वासवाय तद्देशेनोपवेशिताय। एवमुत्तरत्रापि।

स्वस्त्युदकमथाक्षय्यं जलं दत्त्वा च तान्द्विजान्।
विसर्ज्जयेत्स्मरन् विष्णुं देवमष्टाक्षरं विभुम्॥
ततः कामकुलेशानं निशि नारायणं स्मरेत्।
चतुर्द्दश्यां ततो गच्छेद्यथा प्राप्तां सरिद्वराम्॥

सरिद्गमनं प्रति वर्णविशेषस्य मार्गविशेषमाह।

पूर्व्वेण विप्रः सौम्येन राजा वैश्योऽपरेण च।

सौम्येनोत्तरेण अपरेण पश्चिमेन।

दक्षिणेन तथा शूद्रोमार्गेण विकिरेद्यवान्।
शस्त्राणि लोहखण्डानि निपतन्तु इति स्मरन्॥

दक्षिणाभिमुखो वह्निं ज्वालयेत्तत्र च स्वयम् ।
पश्चाग्निः कुशैर्ब्राह्मीङ्कृत्वा प्रतिकृतिं दहेत् ॥

ब्रह्मलोकसम्बन्धिनीं ब्राह्मीम् ।

कृत्वा श्माशानिकं होमं पूर्णाहुत्यन्तमेव हि ।
निरग्निमथवा भूमिं यमं रुद्रञ्च संस्मरेत् ॥
हुत्वा प्राधानिके स्थाने पश्चाद्दाहापयेच्च ताम् ।

श्माशानिकं होमं प्रत्यक्षशवदाहकाले क्रियमाणं कृत्वा प्राधानिके स्थाने प्रधानहोमस्थाने निरग्निभूमुद्देशेन ।

तथा ।

यमाद्युद्देशेन च हुत्वा तां प्रतिकृतिमन्यैर्दाहापयेत् ।
न तु दाहयेत् अपयेच्चापरैरग्नौमुद्गमिश्रं चरुं शुभम्* ॥
तिलतण्डुलमिश्रञ्च द्वितीयं सपवित्रकम् ।
पूरयेत्कर्षुकस्थात्र मधुक्षीरघृतोदकैः ।
तदुपान्ते ततो मुद्गैः पात्राणि त्रीणि पूरयेत् ॥
ओं पृथिव्यै नमस्तुभ्यमिति चैकं निवेदयेत् ।
ओं यमाय नमश्चेति द्वितीयं तदनन्तरम् ॥
ओं नमश्चाथ रुद्राय श्मशानपतये तथा ।
ततो दीप्तसमिद्धाग्निं भूमौ प्रकृतिदाहकम् ॥

निर्वापयेदित्यध्याहारः ।

---

* तत इति पाठान्तरम् ।

निर्व्वपणप्रकारमेवाह ।

ओं क्रव्यादवह्नितमायै भूम्यै नम इति स्मरन् ।
क्षीराक्तं जलकुम्भञ्च विकिरेत्तत्प्रशान्तये ॥
नाभिमात्रं ततस्तोयं प्रविश्य यमदिङ्मुखः ।
समभ्यो यमसंज्ञेभ्यो दद्यात्सप्त जलाञ्जलीन् ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वप्रहरणाय च ॥
स्वधाकारो नमस्कारः प्रणवैः सह सप्तधा ।

तत्रायं मन्त्रोच्चारक्रमः ।

यमाय स्वधा नम इति एवं धर्म्मराजायेत्यादिष्वपि ।

सप्तजलाञ्जलीन् सप्तधेत्युपक्रमोपसंहारवशात् केवलं स्वधादि-मन्त्रोच्चारणं न पुनरञ्जलिदानमपि तु पूर्व्वोक्तरीत्यैव ।

ओं नमस्ताय रुद्राय श्मशानपतये नमः ।

अनेन मन्त्रेण यत्कर्त्तव्यं तदाह ।

लाजोदकाभ्यां पूर्णन्तु कुम्भञ्च विकिरेद्भुवि ।

ततश्च ।

याम्योन्मुखेषु दर्भेषु प्रदद्यादवनेजनम् ।
स्वधेति शुक्रवाहाय रुद्रं नम इति स्मरन् ॥
अमुकामुकगोत्रैतत्तुभ्यमस्तु तिलोदकम् ।

अवनेजनं तिलोदकञ्च । तद्दानप्रकारमेव दर्शयति । स्वधेत्यादिना शुक्रवाहाय रुद्राय स्वधा नम इति रुद्रं संस्मरन् । अमुकगोत्रैतत्तिलोदकं तुभ्यमस्त्विति दद्यादित्यर्थः ।

प्रदद्यादश्मपिण्डांस्तु धर्म्मपुष्पसमन्वितान् ।
धूपो दीपो बलिर्गन्धः सर्व्वेषामस्तु बान्धवः ॥

धूपादिदानानन्तरं सर्व्वेषामक्षय्यमस्त्विति ब्रूयादित्यर्थः ।

दग्धपिण्डांस्ततो दत्त्वा विष्णोः सौम्यं मुखं स्मरन् ।
निखातञ्च तत्तोयं नाभिमात्रं प्रविश्य तु ॥
प्रक्षिपेत्पूर्णकुम्भे च जलमध्ये पृथक् पृथक् ।

पूर्णकुम्भ एकैकं पिण्डं निक्षिप्य जलमध्ये प्रक्षिपेदित्यर्थः ।

प्रदद्यात्पञ्चपञ्चाशत्कुम्भेनाथ जलाञ्जलीन् ।
द्वारोपान्ते स्थले वाथ क्षीरं तोयञ्च निक्षिपेत् ॥
जीवाय स्वाहि दुग्धञ्च पिबेदश्चाप्यनुस्मरन् ।

जीवाय स्वाहीत्यादिमन्त्रद्वयं पठन्नित्यर्थः ।

याम्योदक्कुशेषु दर्भेषु क्षिपेत्पश्चादुदङ्मुखः ।
अमावास्यायां कुर्य्यात्तु जीवच्छ्राद्धमतः परम् ।
घृतान्नमांसदधिभिः पूरयेत्कर्ण्णमात्रकम् ॥
कुर्य्याच्च मासिकं मासि सपिण्डीकरणं ततः ।
अशौचान्ते ततः सर्व्वमात्मनो वा परस्य तु ॥
कुर्य्यादस्थिरतां ज्ञात्वा मर्त्यारोग्यधनायुषाम् ।

अमावास्यायां कुर्य्यादित्यभिधाय पुनरप्यशौचान्त इत्यभिधानात् अमावास्यायां व्यतीतायामतः परमाशौचान्ते पर्णशवाशौचवत् त्रिरात्रान्ते श्राद्धादिकं कुर्य्यादित्यवगम्यते । एतदध्याहार-सापेक्षत्वादशौचान्त इत्यादिकस्योपसंहाररूपत्वेनानुवादतोप-पत्तेः । शुक्लपक्षे श्राद्धस्याप्रशस्तत्वात् कृष्णपक्षे च प्रशस्तत्वात्

तत्राप्यमावास्यायां प्रशस्ततरत्वेनामावास्यापूर्वदिनएवाशौच-मित्यमावास्यैवाशौचान्ते अतस्तत्रैव श्राद्धं कुर्य्यात् ।

इह मदनपारिजाते मदनक्षितिपालदानजलरूढ़े ।
स्तवकः सप्तम आसीदामोदाकृष्टपण्डितभ्रमरः ॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परा शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
वरं चित्ते तेषां मुकुरतलभूते स्थितिमियात्
इयं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति पण्डितपारिजातकभट्टारमल्लेत्यादि विरुदराजी-विराजमानस्य श्रीमदनपालस्य निबन्धे मदन-पारिजाताभिधेये सप्तमः स्तवकः ।

# अथाष्टमः स्तवकः ।

विभक्तानामेव पृथक् पृथक् श्राद्धाधिकारात्श्राद्धस्तवकानन्तरं दायविभागो निरूप्यते ।

तत्र नारदः ।

विभागोऽर्थस्य पित्र्यस्य* पुत्रैर्यत्र निरूप्यते† ।
दायभाग इति प्रोक्तस्तद्विवादपदम्बुधैः ॥

पित्र्यस्येति पितामहाद्युपलक्षणम् । तदिति विधेयविशेषणम् । चत्वारः काला विभागस्य जीवत्येव पितरि पितुर्यदा विभागइच्छा स तावदेकः‡ । निवृत्तरजस्कायां मातरि स्त्रीमुखानभिलाषिणि द्रव्यनिस्पृहे च पितरि पित्रनिच्छायामपि यदा पुत्रेच्छा सोऽन्यः । सरजस्कायामपि मातरि अनिच्छत्यपि पितरि तस्मिन् वृद्धे अधर्म्मवर्त्तिनि अचिकित्सितरोगग्रस्ते सति यदि पुत्रेच्छा सोऽन्यतरः । पितृमरणानन्तरमपर इति ।

तत्र प्रथमपक्षमाह याज्ञवल्क्यः ।

विभागञ्चेत्पिता कुर्य्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिनः ॥

ज्येष्ठादिविभागश्च मनुना दर्शितः ।

ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः ॥

---

* पैत्रसेति पाठान्तरम् । † प्रकल्पत इति पाठान्तरम् । ‡ काल इति पाठान्तरम् ।

अस्यार्थः। विभज्ये द्रव्ये विंशतितमो विभागः यच्च विभज्य-द्रव्ये श्रेष्ठं तज्ज्येष्ठाय दातव्यम्। मध्यमस्य चत्वारिंशत्तमो भागो मध्यमद्रव्यञ्च मध्यमाय। अशीतितमो भागो हीनञ्च द्रव्यं कनिष्ठाय दातव्यम्। ततोऽवशिष्टं द्रव्यं समं* विभज्य गृह्णी-यादिति। एवमन्यान्यपि विषमविभागप्रतिपादकानि गौत-मादिवचनानि बहूनि सन्ति तानि ग्रन्थविस्तरभयात्† नेह प्रदर्शितानि। एवं विषमविभागस्य शास्त्रसिद्धत्वेऽपि लोक-विरुद्धत्वादस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याहरेन्न तु‡ इति वचना-न्नायं त्रिभागक्रमो नानुष्ठेयः स्मर्य्यते।

यथा नियोगधर्म्मिण्यो§ नानुबन्ध्यावधोऽपि वा¶।
तथोद्धारविभागो हि‖ नैवं सम्प्रति वर्त्तते॥

यदि दैवात्पिता करोति विषमविभागस्तदा न निवर्त्तते इत्याह।

याज्ञवल्क्यः।

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः।

धर्म्यो यदि धर्म्मादनपेतस्तर्हि न निवर्त्तनीय इत्यर्थः। अध-र्म्यश्चेन्निवर्त्यते इत्युक्तं भवति।

---

* एकीकृत्येति पाठान्तरम्। † भूयस्त्वेति पाठान्तरम्। ‡ नाचरेन्नत्विति क्वचित् पाठः। § देवरादिना पुत्रोत्पादनकारिण्यः। ¶ यागार्थं गोवधः अतएवादिपुराणं—ऊढ़ायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्व्वीत भ्रातृजायां कमण्डलुम्॥ ‖ ऽपीति पाठान्तरम्।

तथाच नारदः ।

अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः । इति ।

यत्र च विषमविभागे लोकविद्वेषाभावस्तत्र विषमविभागो भवत्येव ।

यदाह नारदः ।

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पितेति ।

एतच्च स्वतन्त्रोपार्ज्जकपरम् ।

यदाह वशिष्ठः ।

येन चैषां स्वयमुपार्ज्जितं स्यात् स द्व्यंशमेव लभेत इति ।

एषां दायार्हपितृभ्रात्रादीनाम् ।

द्वितीयं पक्षमाह विभजेयुर्धनं सममित्यनुवृत्तौ नारदः ।

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते चापि रमणात्पितर्य्युपरतस्पृहे ॥

प्रत्तासु विवाहितासु, रमणं स्त्रीसम्भोगः । तदिच्छानिवृत्तौ सत्यामित्यर्थः । स्पृहा द्रव्यविषया ।

तृतीयपक्षमाह शङ्खः ।

अकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि रोगिणि चेति ।

अकाम इति । विपरीतचेतसि अधर्म्मवर्त्तिनि ।

चतुर्थपक्षमाह याज्ञवल्क्यः ।

विभजेरन् सुताः पित्रोरूर्द्ध्वं रिक्थमृणं समम् ।

पित्रोर्मातापित्रोरूर्द्ध्वं रिक्थं तदीयद्रव्यं तदीयऋणञ्च समं विभजेरन्नित्यर्थः। पितृमरणानन्तरं पातित्यादिदोषदुष्टे* वा पितरि जीवति यदा पुत्त्रा एव विभागकर्त्तारस्तदा विशेषमाह

स एव।

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः।
भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकम्॥

असंस्कृतानां विवाहान्तसंस्कारैरसंस्कृतानां भ्रातॄणां भगिनीनाञ्च विवाहान्तसंस्कारङ्कृत्वा पश्चाद्विभागः कर्त्तव्य इत्यर्थः। भगिन्यश्चेत्यादेरयं तात्पर्य्यार्थः। भगिनीनामसंस्कृतानां† विवाहङ्कृत्वा ताभ्यश्चतुर्थमंशं दद्यात्। कस्मान्निजादंशात्। अत्र सजातीयपुत्त्रस्य योऽंशश्चतुस्त्रिद्व्येकभागाः स्युरिति वक्ष्यमाणः सोऽंशो निजांशस्तस्मात्। अयञ्च विभागक्रमः ब्राह्मणस्यैका पत्नी तत्पुत्त्रोऽप्येक एवैका च कन्या तत्र पितृद्रव्यं द्विधा विभज्य तत्रै‡कमंशं चतुर्द्धा कृत्वा§ तुरीयांशं¶ कन्यकायै दत्त्वावशिष्टं पुत्त्रो गृह्णीयात्। यदा पुत्त्रौ द्वौ कन्या चैका तदा पित्र्यं द्रव्यं त्रेधा विभज्य तत्रैकमंशं चतुर्द्धा कृत्वा तुरीयांशं कन्यायै दत्त्वा अवशिष्टं द्वावपि पुत्त्रावर्द्धमर्द्धं गृह्णीतः। एवं पुत्त्र-

* युक्त इति पाठान्तरम्। † अविवाहितानामिति पाठान्तरम्। ‡ तन्मध्य इति पाठान्तरम्। § विभज्येति पाठान्तरम्। ¶ चतुर्थांशमिति पाठान्तरम्।

बहुत्वे कन्याबहुत्वे चोहनीयम्। यद्येकः पुत्त्रः द्वे च कन्ये तदा पितृधनं त्रेधा विभज्य तत्रैकमंशं* चतुर्धा कृत्वा एकैकं चतुर्थांशं द्वाभ्यां कन्याभ्यां दत्त्वावशिष्टमखिलं पुत्त्र एव गृह्णाति। एवमेव समानजातीयेषु भ्रातृषु भगिनीषु संख्या-वैषम्ये योजनीयम्। यदा जातिवैषम्यं संख्यासाम्यं वैषम्यं वा तदैवं द्रष्टव्यम्। तद्यथा ब्राह्मणस्य ब्राह्मण्यादिभार्या तत्र ब्राह्मणीपुत्त्रः कन्या च तथा क्षत्त्रियासुतः† कन्या च। तथा वैश्यायाः शूद्रायाश्चैवमष्टावपत्यानि तत्र चत्वार्यपत्यानि स्त्रियश्चत्वारः पुमांसश्चतुस्त्रिद्व्येकभागाः स्युरित्येकवचनेन ब्राह्मण्यपत्ययोरष्टावंशाः क्षत्त्रियापत्ययोः षट् वैश्यापत्ययोश्च-त्वारः शूद्रापत्ययोः द्वौ एवं विंशतिभागान् कृत्वा ब्राह्मणी-कन्यायै स्वजातिपुत्त्रविहितादंशचतुष्टयरूपान्निजाद्भागाच्चतुर्थ-मंशं दद्यात्। क्षत्त्रियकन्यायै स्वजातिपुत्रविहितादंशत्रय-रूपान्निजाद्भागाच्चतुर्थमंशं दद्यात्। वैश्यकन्यायै स्वजातिपुत्त्र-विहितादंशद्वयरूपान्निजाद्भागाच्चतुर्थमंशं दद्यात्। शूद्राकन्य-कायै स्वजातिपुत्त्रविहितात् एकांशरूपादेव निजाद्भागाच्चतुर्थ-मंशं दत्त्वा तत्तद्भागादवशिष्टं द्रव्यमेकीकृत्य ब्राह्मण्यादि-पुत्राश्च क्रमाच्चतुस्त्रिद्व्येकभागान् गृह्णीयुः भ्रातॄणां भगिनी-नान्तु वैषम्ये यावत्योव्यक्तयोभ्रात्रादीनां तावत अंशान् तत्त-ज्जात्यनुसाराच्चतुस्त्रिद्व्येकभागादिक्रमेण कल्पयित्वा कन्यकानां

---

* भागमिति पाठान्तरम्।　† पुत्र इति पाठान्तरम्।

स्वस्वजातिविहिताद्भागाच्चतुर्थमंशं दत्त्वावशिष्टं तत्तद्भाग-द्रव्यं सर्व्वैः पुनश्चतुरस्त्र्यादिक्रमेण विभज्य गृह्णीयुरित्येवं योजनीयम्। केचन एवं मन्यन्ते। पूर्व्वोक्तरीत्या चतुर्थमंशं कन्यकायै दत्त्वा तेनैव विवाहः कर्त्तव्यः न तु समुदितद्रव्येण विवाहङ्कृत्वा पुनरपि चतुर्थांशदानमिति तन्मेधातिथिमिताचराकारादीनामनभिमतत्वादुपेक्षणीयं अथवा देशाचारतो व्यवस्था। दायविभागकालस्तत्प्रसङ्गादागतश्चेत्येतदुभयं निरूपितं साम्प्रतं दायग्रहणस्य व्यवस्थां दर्शयितुं मुख्यगौणपुत्राः प्रदर्श्यन्ते।

तत्र याज्ञवल्क्यः।

औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमश्च* कृतः स्वयम्†।
दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः।

---

* कृत्रिमः स्यादिति पाठान्तरम्। † स्वयङ्कृत इति पाठान्तरम्।

पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परः परः॥
स्वजातीयेष्वयम्प्रोक्तस्तनयेषु यथाविधि।

सवर्णा धर्म्मविवाहोढ़ा धर्म्मपत्नी तस्यां जातः पुत्रः औरसः स च मुख्यः तथासुरादिविवाहोढ़ा सवर्णापुत्रेऽपि तथा अनुलोमविवाहितक्षत्रियादिस्त्रीषु ब्राह्मणादुत्पन्नो मूर्द्धावसिक्तोऽम्बष्ठो निषादापरपर्य्यायपारशवश्च वैश्यादिस्त्रियां* राजतः† उत्पन्नौ माहिष्योग्रौ च शूद्रायां वैश्यादुत्पन्नः करणश्चेत्येते औरसा एव। पुत्रिकैवपुत्रः पुत्रिकायाश्च पुत्र इत्युभयविधावपि पुत्रिकासुतस्तत्सम औरससमः। तथा द्व्यामुष्यायणोऽपि जनकस्यौरसएव। समानवर्णेन सगोत्रेण इतरेण सपिण्डेन देवरेण नियोगधर्म्मेणोत्पन्नः पुत्रः क्षेत्रजः। अनिश्चितपुरुषविशेषात्सवर्णाद्भर्त्तृगृहे प्रच्छन्न उत्पन्नो गूढ़जः। अनिश्चितपुरुषविशेषत्वं भर्त्तुरेव न स्त्रियाः। सवर्णत्वज्ञानं स्त्रीद्वारतया तत्स्वरूपस्यज्ञातत्वात्। यद्बलाद्रहसि पुरुषान्तरसम्भोगात् सापि वर्णविशेषं न जानाति। तत्र गूढ़जनाममात्रधारी न पूर्व्वोक्तगूढ़जवत् प्रशस्तः सवर्णात् कन्यकायां उत्पन्नः कानीनः। स मातामहसुतः यदि सा अविवाहिता पितृगृह एव तिष्ठति। यदि चेद्विवाहिता तदा स पुत्रो वोढ़ुरेव।

तथाच मनुः।

---

* वैश्यादिस्त्रिय इति पाठान्तरम्। † राज इति पाठान्तरम्।

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः।
कानीनं तं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्॥

तत्र वोढुरित्युपादानाद्विवाहिता चेत्तदा वोढुर्नो चेन्माता-महस्येत्येतदवगम्यते। क्षता अक्षता चेति द्विधा पुनर्भूः। तस्यां सवर्णादुत्पन्नः पौनर्भवः दत्तकोऽपि सवर्ण एव। यदाह मनुः।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः॥

सदृशं सवर्णं भर्त्तरि प्रोषिते मृते वा आपदि केवलं मातुरधिकारो दाने तथा मातरि मृतायामुन्मादादियुक्तायां वा आपदि केवलं पितुरधिकारः। अन्ययो*भयोरपि सहैव। आपदीत्यापच्छब्दोपादानादनापदि न देय इति गम्यते। अनापदि दत्ते दातुर्दोषो न प्रतिग्रहीतुः। एकः पुत्रो न देयो नापि प्रतिग्राह्य इत्याह वशिष्ठः।

नत्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति।

तथा ज्येष्ठोऽपि न देयः।
पुत्रप्रतिग्रहप्रकारमाह वशिष्ठः।

पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवे-

---

* तयोरपीति पाठान्तरम्।

शनस्य मध्ये व्याहृतिभिर्हुत्वादूरबान्धवं बन्धुसन्निकृष्ट-
मेव प्रतिगृह्णीयादिति ।

निवेशनस्य स्वगृहस्य । अत्यन्तदेशभाषाविप्रकृष्टस्य प्रतिषेधार्थ-मदूरबान्धवमित्युक्तम् । अयं विधिः क्रीतस्वयंदत्तकृत्रिमेष्वपि यथायोग्यं योज्यम् । एकपुत्रज्येष्ठपुत्रव्यतिरेकेण आपदि माता-पितृभ्यां पूर्व्वोक्तरीत्या प्रत्येकं वा यो विक्रीतः स सवर्णक्रीतः पुत्रः ।

यत्तु मनुनोक्तम् ।

स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽथवा । इति ।

तद्गुणैः कृत्वा सदृशोऽसदृशो वेत्येतत्परम् । न तु ब्राह्मणत्वादिवर्णैः मातापितृरहितः सवर्णो धनादिकप्रदर्शनेन । प्रलोभितः सन् पुत्त्रार्थिना पुत्त्रीकृतो यः स कृत्रिमः । माता-पितृभ्यां विहीनस्तत्परित्यक्तो वा अहं तव पुत्त्रो भवामीति प्राप्तः स्वयंदत्तोऽत्रापि सवर्ण इत्येव । सगर्भायां विवाहितायां तस्माद्गर्भाद्य उत्पन्नः स सहोढ़जः । यदि चेत्स गर्भः सवर्णजः मातापितृभ्यामुत्सृष्टः परित्यक्तः सवर्णे यो गृह्णाति पुत्रत्वेन सोऽपविद्धः । अत्र क्रमं दर्शयति पिण्डदोंऽशहरश्चेति । एते सवर्णा एव पुत्रा भवन्तीत्याह सजातीयेष्वयमिति एते क्षेत्रजादयो यद्यधिकवर्णादुत्पन्नास्तदापि तत्तन्नामधेयभाजो भवन्त्येव अपि तु सवर्णादुत्पन्ना इव प्रशस्ततरा न भवन्ति । सजातीयेष्वयं प्रोक्त इति सजातीयनियमात् । यदि हीनवर्णादुत्पन्नास्तदा प्रतिलोमजत्वेन निन्द्या एवेति विवेचनीयम् ।

कानीनगूढ़ोत्पन्नसहोढ़पौनर्भवानां सवर्णत्वं जनकद्वारेण न स्वरूपत: तेषां कुण्डगोलकत्वेन स्वतोवर्णजात्यन्तर्भावाभावात्। पुत्रिकाकरणानन्तरमौरसपुत्रोत्पत्तौ विशेषमाह

मनु:।

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते।
समस्तत्र विभाग: स्याज्ज्येष्ठता नास्ति हि स्त्रिया:॥

कात्यायन:।

उत्पन्ने चौरसे पुत्रे चतुर्थांशहरा: सुता:।
सवर्णा असवर्णास्ति* ग्रासाच्छादनभाजना:॥

सवर्णा: क्षेत्रजदत्तकक्रीतकृत्रिमस्वयंदत्तापविद्धा असवर्णा: कानीनगूढ़ोत्पन्नसहोढ़पौनर्भवा:।

यत्तु विष्णुवचनम्।

अप्रशस्तास्तु कानीनगूढ़ोत्पन्नसहोढ़जा:।
पौनर्भवस्तु नैवेति पितू† रिक्थांशभागिन:॥ इति

तदौरसे सति चतुर्थांशनिषेधपरं औरसाद्यभावे तु कानीनादीनामपि सकलपित्र्यधनग्रहणमस्त्येव पूर्व्वाभावे पर: पर: इति वचनादिति विज्ञानेश्वरमतम्। यथाचायमेव क्रमस्तथास्माभिरुपपादित: विज्ञानेश्वरटीकायां सुबोधिन्यां दायभागप्रकरणे। यस्त्वंशाधिकारी सन्नपि लोभाद्यभावात् स्वतोऽर्जनशक्तिसद्भावाद्वांशं न जिहृक्षति तं प्रत्याह।

---

* स्त्विति पाठान्तरम्। † पिण्डेति पाठान्तरम्।

याज्ञवल्क्यः ।

शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया ।

किञ्चिदसारमपि तस्मै दत्त्वा विभागः कर्त्तव्यः। एतच्च तत्पुत्रादीनां दायजिघृक्षा मा भूदित्येतदर्थम् ।

द्व्यामुष्यायणस्य विशेषमाह ।

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।

उभयोरप्यसौ रिक्थी पिण्डदाता च धर्म्मतः ॥

यदा वीजी स्वयमपुत्रो वीजदानसमयेऽत्रोत्पन्नमपत्यमावयो-रिति प्रतिज्ञां करोति तदैवोभयोर्वीजिक्षेत्रिणो रिक्थग्राही । समयाभावे तु क्षेत्रिण एव। विभागोत्तरकालमुत्पन्नपुत्रं प्रत्याह ।

मनुः ।

ऊर्द्ध्वं विभागाज्जातस्तु पितरमेव हरेद्धनम् ।

पितरमित्यत्रैकशेषः । अतएव मातापित्रोरिदं पित्र्यम् ।

तथाच ।

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्ज्जितम् ।

विभक्तजस्य तत्सर्व्वमनीशाः पूर्व्वजाः स्मृताः ॥

तथाच ।

संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ।

ये विभक्ताः सन्तः पुनः पित्रा सह संसृष्टाः तैः संसृष्टैः सह विभक्तजो विभजेदित्यर्थः। पितरि भ्रातरि वा मृते अस्पष्ट-गर्भायां मातरि भ्रातृपत्न्यां वा सत्यां अन्येषु भ्रातृषु विभक्तेषु

खलु तस्मादेव गर्भाद्विभागानन्तरसमुत्पन्नस्य पुत्रस्य कथं भागकल्पनेत्याकाङ्क्षायाम्

याज्ञवल्क्यः ।

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ।

तस्य विभागस्तद्विभागः । अत्र तच्छब्देन पूर्व्वोक्तरीत्या विभागानन्तरमुत्पन्नः परामृश्यते । तद्विभागो दृश्याद्वा दृश्यादेव वा शब्दोऽवधारणे कीदृशाद्दृश्यादायव्ययविशोधितात् । विभागानन्तरं प्रातिस्विकांशैः कृष्यादिषु क्रियमाणेषु यो लाभः स आयः । पितृकृतर्णापाकरणस्वकुटुम्बपोषणादिकं यदावश्यकं क्रियते स व्ययः । आयांशमध्ये परिगणय्य व्ययञ्चोद्धृत्य सर्व्वेभ्योऽंशिभ्यो यस्माद्यस्मादंशाद्यावद्यावदुचितं तावत्तावद्गृहीत्वा स्वभागसमङ्कृत्वा पूर्व्वोक्तरीत्या विभागानन्तरमुत्पन्नपुत्रस्य दद्यादित्यर्थः । स्पष्टगर्भायां मातरि भ्रातृपत्न्यां वा प्रसवानन्तरं विभागः कर्त्तव्यः ।

यदाह वशिष्ठः ।

अत्र भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रियस्तासामापुत्त्रलाभादिति ।

तासां स्पष्टगर्भाणां स्त्रीणामापुत्रलाभादाप्रसवात्प्रसवं प्रतीक्ष्य दायविभागो भवतीत्यर्थः । विभागानन्तरं* माता

---

* विभक्तानन्तरमिति पाठान्तरम् ।

पित्रा वा विभक्ताय पुत्रायालङ्करणादिके दीयमाने विभागानन्तरमुत्पन्नेन निषेधः कार्य्यः ।

तथाच योगीश्वरः ।

पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत् ।

विभागात्प्राक् पित्रा मात्रा वा यस्मै यद्दत्तं तत्तस्यैव समानन्यायत्वात् । अतएव एकस्मै दीयमानेऽन्येन निषेधोऽपि न कार्य्यः ।

## अथ विजातीयपुत्रविभागः ।

तत्र याज्ञवल्क्यः ।

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।

क्षत्रजास्त्रिद्व्येकभागाः स्युर्विड्जास्तु द्व्येकभागिनः ॥

वर्णशो वर्णे वर्णे ब्राह्मणक्षत्रियवैश्यशूद्रजातीयासु ब्राह्मणभार्य्यासूत्पन्ना ब्राह्मणपुत्राः क्रमेण चतुस्त्रिद्व्येकभागभाजो भवेयुः शूद्रापुत्रांशापेक्षया चत्वारो भागाः ब्राह्मणीपुत्रस्य तदपेक्षया चतुर्थांशन्यूनत्वात् क्षत्रियापुत्रस्य त्रयो भागाः वैश्यापुत्रस्यार्द्धन्यूनत्वात् द्वौ भागौ शूद्रापुत्रस्य एको भागः । क्षत्रजाः क्षत्रियवैश्यशूद्रजातीयासु स्वभार्य्यासूत्पन्नास्ते त्रिद्व्येकभागभाजः ब्राह्मणस्य ब्राह्मण्यां स्वभार्य्यायामुत्पन्नपुत्रापेक्षयैकस्यांशस्य न्यूनत्वात् क्षत्रियात् क्षत्रियायामुत्पन्नस्य त्रयो भागाः वैश्यायामुत्पन्नस्य द्वौ शूद्रायामुत्पन्नस्यैक । विड्जा वैश्यजा

वैश्यशूद्रजातीययोः स्वभार्य्ययोरुत्पन्नाः। अत्र बहुवचनं पुत्त्रबहुत्वापेक्षया न तु भार्य्यागतपतिबहुत्वापेक्षया ब्राह्मणस्य ब्राह्मण्यां स्वभार्य्यायामुत्पन्नपुत्त्रापेक्षयांशद्वयस्य न्यूनत्वाद्वैश्यायामुत्पन्नस्य द्वावंशौ शूद्रायामुत्पन्नस्यैकोऽंशः। अनेनैव प्रकारेण पुत्त्रगतसंख्यासाम्ये वैषम्ये च योजनीयम्। ब्राह्मणक्षत्त्रियादिजातीयायां* स्वस्वभार्य्यायामुत्पन्नपुत्त्राः प्रतिग्रहप्राप्तभूभागं† न लभन्ते‡।

तथाच निगमे।

न प्रतिग्रहभूर्देया क्षत्त्रियादिसुताय वै।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्॥

प्रतिग्रहग्रहणात् क्रयादिलब्धं लभन्ते।

तथा।

शूद्रां द्विजातिभिर्जातो न भूमेर्भागमर्हति।

द्विजातिमात्राच्छूद्रायामुत्पन्नाः प्रतिग्रहक्रयादिलब्धाया अपि भुवो भागं न लभन्त इत्यर्थः। यत्त शूद्रापुत्त्रस्यांशमात्रनिषेधकं वचनान्तरं

ब्राह्मणक्षत्त्रियविशां शूद्रापुत्त्रो न रिक्थभाक्।
यदेवास्य पिता दद्यात्तदेव हि§ धनम्भवेत्॥ इति।

तदपि जीवता पित्रा यदि शूद्रापुत्त्राय किमपि दत्तं तदा

---

* ब्राह्मणक्षत्त्रियादिजातीयासु स्वस्वभार्य्यासु इति पाठान्तरम्। † प्रतिग्रहप्राप्तभूरिति पाठान्तरम्। ‡ लभ्यत इति पाठान्तरम्। § तदेवास्येति पाठान्तरम्।

विभागकाले भ्रातृभिर्न दातव्योऽंश इत्येतत्परं पित्रा न दत्तेऽंशभाक्त्वमस्त्येव* । शूद्राद्दास्यामुत्पन्नस्य विशेषमाह

याज्ञवल्क्यः ।

जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत् ।
मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिकम् ।
अभ्रातृको हरेत्सर्व्वं दुहितॄणां सुतादृते ॥

कामतः पितुरिच्छयांशहरो भवेत् । यदि पिता अंशं ददाति तदांशोऽस्तीत्यर्थः । अर्द्धभागिकं विवाहितापुत्रास्तं स्वांशार्द्धभाजं कुर्य्युरित्यर्थः । अभ्रातृकः विवाहितापुत्ररूपभ्रातृरहितः सर्व्वं पितृधनं गृह्णीयाद्यदि परिणीता दुहितरस्तत्पुत्रा वा न सन्ति तत्सद्भावे त्वर्द्धांशभागेव दासीपुत्रः । शूद्रेणेति विशेषोपादानाद्द्विजातिभ्यो दास्यामुत्पन्नस्य न केनापि प्रकारेणांशः अपि तु ग्रासाच्छादनभाग् भवति स इति निर्णयः ।

## अथ पितामहधने पौत्रविभागः ।

तत्र याज्ञवल्क्यः ।

अनेकपितृकाणान्तु पितृतो भागकल्पना ।

अनेकेभ्यो भ्रातृभ्यस्तद्भार्य्यासूत्पन्ना अनेकपितृका भ्रातृजा इत्यर्थः । तेषां स्वस्वपितृद्वारेण पैतामहधनस्य भागकल्पना ।

* पित्रा दत्ते तु अंशभाक्त्वं नास्ति इत्यर्थः ।

अयमभिप्राय:। त्रयो भ्रातरस्तत्रैकस्यैक: पुत्रोऽपरस्य द्वावन्यस्य त्रय: पुत्रा: एवं षट् एते पितामहधनं षोढ़ा विभज्य न गृह्णीयु: अपि तु पितामहधनं भ्रातॄणां त्रेधा विभज्य यस्यैक: पुत्र: स स्वपित्रंशं लभते। यस्य द्वौ तावपि स्वपित्रंशं लभेते। एवमन्यत्रापि इति। पुत्त्रोत्पत्त्यनन्तरं केषुचिद्भ्रातृषु मृतेषु केषुचिद्विद्यमानेषु भ्रातॄणां भ्रातृपुत्राणामपि पूर्व्वोक्तरीत्या एव विभाग: भ्रातर: स्वांशं भ्रातृपुत्त्रा: स्वपित्रंशं लभन्त इत्यर्थ:। पितामहद्रव्येऽपि पित्रा सह विभागे विशेषमाह स एव।

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।
तत्र स्यात्सदृशं स्वाम्यं पितु: पुत्त्रस्य चोभयो:॥

भू: व्रीहियवादिका निबध्यत इति निबन्ध: एकस्यां पर्णवाटिकायामियन्ति पर्णानि भवन्ति एकस्यां क्रमुकवाटिकायामियन्ति क्रमुकफलानि भवन्तीति तद्ग्रामपारकोविदै: संख्यया पर्णभरकादिकं निबध्यत इति निबन्ध:। द्रव्यं प्रतिग्रहविजयव्यापारकृष्यादिभिरुपार्ज्जितं सुवर्णरजतादि। एतादृशि समस्ते पैतामहधने पितु: पुत्त्रस्य स्वाम्यं सममेव। अतो जीवति पितरि पितुरिच्छयैव विभाग:। पितुश्च द्वावंशौ पितृतो भागकल्पनेत्यादि नियमा न सन्तीत्यर्थ: शूद्राद्दास्यामुत्पन्नस्य पौत्रस्याप्येवमेव स्वाम्यं परन्तु विभागे विशेष: स च विशेषोऽनन्तरपुत्त्रविभागकरणान्तोक्तरीत्या वेदितव्य: न त्वनेकपितृकाणान्तु पितृतो भागकल्पनेत्यनेन पैतामह-

धनस्य पितृद्वारा भागक्लृप्तिर्न स्वरूपत इत्युक्तं* भूर्य्या पितामहोपात्ता इत्यन्तेन तु पितापुत्त्रयोः पैतामहधने सममेव स्वाम्यमित्युच्यते अतः पूर्व्वापरविरोधः इति चेन्नैवम् अनेकपितृकाणामित्येतत्पितरि मृते पुत्त्राणां पैतामहधनविभागविषयम्। एतच्च पितृतो भागकल्पनेत्यनेन पदेन द्योत्यते पितृद्वारा पौत्त्राणामेवांशसम्बन्धोऽवगम्यते। एतत्तु पितरि विद्यमाने न घटत इति तस्यापि जन्मनैव स्वत्वात् पितरि मृते तु मरणादेव तस्य तु स्वत्वनिवृत्तेः पौत्राणामेवांशसम्बन्धो घटत इति पितृमरणानन्तरं पौत्त्रादीनां पैतामहधनविभागप्रकारः अनेकपितृकाणामित्यनेन वचनेन नियम्यते। भूर्य्या पितामहोपात्तेत्येतत्तु पितापुत्रयोः विद्यमानयोः पौत्रापेक्षया पैतामहधनविषयम्। एतच्च पितुः पुत्रस्य चैव हीत्यनेन नांशेन द्योत्यते मृतस्य स्वाम्याभावादन्यतरमृतावपि तत्र स्यात्तदृशं साम्यं पितुः पुत्रस्य चैव हीत्यनुपपन्नं स्यात्। यदा त्रयो भ्रातरस्तत्रैकस्यैकः पुत्त्रः अन्यस्य द्वौ अपरस्य त्रयः तथाच सर्व्वेषु पितापुत्रेषु विद्यमानेषु पूर्व्वोक्तैव व्यवस्था यदा त्वेकपुत्त्रसन्ततौ पुत्त्राः पौत्त्राश्च जीवन्ति पुत्त्रान्तरसन्ततौ तु पुत्त्राः किन्तु पौत्रा एव तदा जीवतः पितुः पुत्त्राः भूर्य्या पितामहोपात्तेत्यनेन न्यायेन पैतामहधनं लभन्ते। यदग्रे पुत्त्रा मृताः पौत्त्रा एव वर्त्तन्ते तदा अग्रे पौत्त्रा एव स्वांशान् लभन्ते।

* इत्येके इति पाठान्तरम्।

अनेकपितृकाणान्तु पितृतो भागकल्पनेत्यनेन न्यायेन भूर्य्या पितामह्योपात्तेत्यनेन न्यायेन तेषां प्रमीतपितृकत्वाद्-यश्च विभागक्रमः पितामहे मृत एवास्मिन्विद्यमाने पिता-महेच्छया* पुत्रेच्छया विभागो भवति न पौत्रेच्छया पितरि विद्यमाने पित्रिच्छया वा क्वचन पुत्रेच्छया वा विभागो भवति इति विभागकालकथनप्रस्तावेऽभिहितत्वात् ।

## अथ मातुरंशक्लृप्तिः ।

तत्र याज्ञवल्क्यः ।

यदि कुर्य्यात्समानांशान् पत्न्यः कार्य्याः समांसिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

समशब्दो न्यूनाधिकभाव†रहितांशपरः । अथवा समशब्दोऽत्र चतुस्त्रिद्व्येकभागाः स्युरित्यत्र समानांशपरः शास्त्रोक्तसमत्वात् समव्यपदेशः । एवं स्थिते यदा पिता स्वेच्छया पुत्रान् सर्व्वान् समांशभाजः करोति तदा पत्न्योऽपि समांशिकाः कार्य्याः यदि ब्राह्मण्याद्युत्पन्नपुत्राणां सदृशा एवांशास्तदा तन्मातृणा-मपि सदृशा एव यदा तु मूर्द्धावसिक्तादिपुत्राणां यथाक्रमेण त्रिद्व्येकांशास्तदा तन्मातृणामपि स्वस्वपुत्रसमांशाः एवं प्राप्ता-पवादः न दत्तमित्यादि स्त्रीधनमलङ्कारादि यदि स्त्रीधनं दत्तं

* तस्मिन् विद्यमानेऽपि तदिच्छया इति पाठान्तरम् । † न्यूनाधिकत्वमित्यर्थः ।

तदा दत्ते त्वर्द्धं प्रकीर्त्तितमित्यधिवेदनप्रकरणोक्तप्रकारो विज्ञेयः स च प्रकारः दत्ते त्वर्द्धं प्रकीर्त्तितमिति अर्द्धशब्दोऽंशमात्रपरो न तु समविभक्तांशपरः। यावता धनेन स्वपुत्त्रांशान्न्यूनं भवति स्त्रीधनं तावद्धनं दत्त्वा पत्न्यंशोऽपि पुत्त्रांशसमः कर्त्तव्य इति नन्वेवं सति प्रकारान्तरेण स्त्रीधनमपि विभज्यतामित्युक्तं स्यात्तथाच स्त्रीधनस्याविभाज्यत्वप्रतिपादकवचनविरोध इति चेन्नैवम्। यत्र अपवादकं वचनमस्ति तत्र अपवादकबलात्सामान्येन स्त्रीधनस्याविभाज्यत्वप्रतिपादकवचनानां बाधः यत्रापवादो नास्ति तत्र न बाधः। अत्र च न दत्तं स्त्रीधनं यासामिति दत्ते त्वर्द्धं प्रकल्पयेदित्यनयोरार्थिकैकवाक्यत्वेनापवादकत्वं यदा तु पिता ज्येष्ठं वा श्रेष्ठभागेनेत्याद्युक्तप्रकारेण विषमभागं करोति तदा पत्नीनां श्रेष्ठादिभागा न सन्ति किन्तु श्रेष्ठादिभागोद्धारे कृते यदवशिष्टं समुदितद्रव्यं तस्मात्समानांशान् पत्न्यो लभन्ते तथा स्वकीयोद्धारञ्च।

तथाचापस्तम्बः।

परीभाण्डञ्च गृहालङ्कारो भार्य्याया इति गृहोपकरणम्। दृषदुदूखलमुषलसूर्पादि परीभाण्डमित्युच्यते।

पितरि मृते सति पुत्त्रैः क्रियमाणे विभागेऽपि मातुः समांश एव।

तथाच योगीश्वरः।

पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत्।

पितुरूर्द्ध्वं पितृमरणानन्तरमत्रापि न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा इति तथा दत्ते त्वर्द्धं प्रकल्पयेदित्येतद्वाक्यद्वयं योज्यं समानन्यायत्वात् प्रतिषेधाभावाच्च। एवमेव विज्ञानेश्वरधारेश्वरादीनामभिमतमथवा दत्ते त्वर्द्धं प्रकल्पयेदित्यत्रार्द्धशब्दः समविभागपरः अतश्च स्त्रीधने विद्यमाने पुत्रांशस्यार्द्धं दशनिष्करूपपुत्रांशस्यार्द्धं पञ्चनिष्कात्मकं दद्यादित्युक्तं भवति। भ्रातृभार्य्याणां योऽलङ्कारः सोऽविभाज्य एव तथा स्त्रिय एव यदा विभागाधिकारिण्यस्तदापि यस्यै यद्विभूषणं पूर्व्वं दत्तं तत्तदप्यविभाज्यमेव एतच्च अविभाज्यप्रकरणे व्यक्तं भविष्यति। यदा तु पितामहोपार्ज्जितं धनं पितापुत्रौ विभज्य गृह्णीतः तदा पितामहपत्नी सपुत्रा पूर्व्वोक्तरीत्या समांशं लभते मातात्प्यंशं समं हरेदित्युक्तत्वात् पितामहोपार्ज्जितद्रव्यत्वाच्च यदि पितामहपत्न्यऽपुत्रा तर्हि स्वालङ्कारं प्रीतिदत्तं लभते नांशम्। तथा पैतामहधनविभागे मातांशं न लभते किन्तु स्वाभरणादिकमेव।

यदि कुर्य्यात्समानंशान् पत्न्यः कार्य्याः समांशिकाः।

तथा।

पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत्। इति।

अनयोः केवलपितृप्रधानकस्वाम्योपेतधनविषयकत्वात् पितृप्रधानकत्वं स्वाम्योपेतत्वं चैवं ज्ञेयं यद्धनं पित्रा विभागलब्धं प्रतिग्रहादिभिर्व्वा तस्य तादृक्त्वमिति पितृधनत्वं पुत्रगामीत्युक्तं मातृधने को वाधिक्रियतामित्याकाङ्क्षायामाह

याज्ञवल्क्यः।

मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः।

मातृकृतर्णापाकरणानन्तरं यदवशिष्टं मातृधनं तद्दुहितरो विभज्य मातृधनं गृह्णीयुः। तत्रायं विशेषः। विवाहिताविवाहितदुहितृसद्भावे त्वविवाहिता एव गृह्णीयुः। अविवाहितानामभावे विवाहितदुहितृमध्ये या दरिद्रतरा दुहितरस्ता एव गृह्णीयुरिति।

तथाच गौतमः।

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति।

अप्रत्ता अविवाहिता अप्रतिष्ठिता दरिद्राः ताभ्य ऋते तद्वत् दुहितृभ्यो विना पुत्राभावे तदा दुहितृसन्तत्यभावे च अन्वयः अत्रादौ गृह्णीयाद्दुहिता ततस्तत्सन्ततिरित्ययमर्थः उत्तरत्र वक्ष्यते।

## अथानपत्यस्त्रीधनग्रहणाधिकारिणः।

तत्र याज्ञवल्क्यः।

अतीतायामप्रजसि बान्धवस्तदवाप्नुयात्*।
अप्रजस्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्॥

तत्स्त्रीधनमप्रजस्यपत्यरहितायां दुहितृदौहित्रपुत्रपौत्रक्रपा-

* बान्धवास्तदवाप्नुयुरिति पाठान्तरम्।

पत्यरहितायां स्त्रियां मृतायां बान्धवा भर्त्रादय आप्नुयुः। ब्राह्म दैवार्ष प्राजापत्य विवाहसंस्कृतायां भार्य्यायां मृतायां तद्धनं भर्त्ता गृह्णाति तदभावे ये भर्त्तृकुले प्रत्यासन्नतरास्ते गृह्णीयुः तदभावे ये पितृकुले प्रत्यासन्नास्त इति विवेकः। शेषेषु आसुर गान्धर्व्व राक्षस पैशाचेषु विवाहेषु भार्य्यात्वं प्राप्तायां मृतायां धनं मातापितरौ* गृह्णीतः प्रथमं माता तदभावे पिता तदभावे पितृकुलप्रत्यासन्ना बान्धवास्तदभावे भर्त्तृकुले प्रत्यासन्नास्ते गृह्णीयुः। सर्व्वेष्वपि विवाहेषु यदि सा प्रसूता तदा दुहितॄणां दुहितृदौहित्राणाम्। अत्र दुहितृशब्देन साक्षाद्दुहित्रभिधाने मातुर्दुहितरः शेषमित्यनेन पौनरुक्त्यं स्याद्दौहित्रीष्वप्यूढ़ानूढ़ासमवाये अनूढ़ा अप्रतिष्ठिताप्रतिष्ठितसमवाये अप्रतिष्ठितैव दौहित्रीणां भिन्नमातृकाणां विषमसंख्यकानां समवाये मातृद्वारा विभागस्तदाह गौतमः।

पितृमातृस्वस्ववर्गे भागविशेष इति।

दुहितॄणां दौहित्रीणाञ्च विद्यमानत्वे दौहित्रीणां प्रीत्या किमपि दातव्यं नांशदानम्।

तथाच मनुः।

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः।
मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्व्वकम्॥

---

* पितरौ इति पाठान्तरम्।

तासां दुहितृणां दुहितरः दौहित्रीणामभावे दौहित्राः यदाह नारदः ।

मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ।

मातुर्धनं दुहितर आप्नुयुः तदभावे दुहितॄणां दौहित्रीणां तदभावे तदन्वये ये जाता दौहित्रास्तेषामित्यर्थः । तदन्वय इति प्रथमाविभक्त्यन्तोऽपि पाठः । तथापि दौहित्रा एव गृह्णन्ति न दौहित्रीसन्ततिस्तस्या दौहित्रापेक्षया विप्रकृष्टत्वात् । दौहित्राणामप्यभावे मातुर्दुहितरः शेषभूणात्तास्य कृतेऽन्वयः । इत्यन्वयशब्दोपात्ताः पुत्रपौत्रादयः क्रमेण धनभाजः । अनेनैवाभिप्रायेण

मनुः ।

जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः ।

भजेरन्मातृकं ऋक्थं भगिन्यश्च सनाभयः ॥

या भगिन्यः साक्षात्स्वमातृदुहितरः तदभावे तद्दौहित्रपर्य्यन्ताः तदभावे सहोदराः । मृतायाः साक्षात्पुत्रा न सपत्नीपुत्राः तदभावे पौत्रा इत्यस्य वचनस्य तात्पर्य्यार्थः । समं सर्व्वे सहोदरा इत्यत्र सहोदरग्रहणं भिन्नोदरनिवृत्त्यर्थम् । स्वपुत्राभावे सपत्नीपुत्रादयः । यदा तु सापत्न्यदुहिता उत्तमजातीया सापत्नपुत्रस्य हीनजातीयस्तदोत्तमजातीया दुहितैव गृह्णाति तदभावे तादृग्विधदौहित्र एव ।

तथाच मनुः ।

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन ।

ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥

स्त्रीधनं कन्यका हरेदित्युक्तं स्वापित्र्या स्त्रीस्वापित्र्यैव कन्यका। ततश्च स्त्रीकन्यकाशब्दयोः प्रतियोगिशब्दत्वाभावात्सापत्नमाता सापत्नदुहिता इति च गम्यते। ब्राह्मणीत्युत्तमजातिप्रदर्शनार्थमतः शूद्रास्त्रीधनं ब्राह्मणीक्षत्रिया वैश्याकन्यका गृह्णाति। एवं वैश्यास्त्रीधनं ब्राह्मणी क्षत्रिया च क्षत्रियास्त्रीधनं ब्राह्मणीति। अत्रोत्तमजातीयाया एव सापत्नकन्यकाया धनग्रहणाभिधानाद्धीनजातीयसपत्नीदुहितॄणामुत्तमजातीय - सपत्नीपुत्रसद्भावे धनग्रहणं नास्तीति गम्यते। पुत्रपौत्राभावे भ्राता तदभावे तत्सुता इत्येवंक्रमेण भ्रात्रादयो धनभाजः। एतच्च स्त्रीधनं शुल्कव्यतिरिक्तमेव विभाज्यं शुल्कन्तु सोदरा एव गृह्णीयुः।

तथाच गौतमः।

भगिनीशुल्कं सोदर्य्याणामूर्द्धं मातुरिति।

दुहित्रादिषु पौत्रपर्य्यन्तेषु विद्यमानेष्वपि भगिनीशुल्कं सोदरा एव हरेयुरित्यर्थः। स्त्रीधनप्रसङ्गाद्वाग्दत्ताविषयं किञ्चिदुच्यते।

याज्ञवल्क्यः।

दत्त्वा कन्यां हरन्दण्ड्योव्ययं दद्याच्च सोदयम्।
मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम् ॥

वाचा कन्यां दत्त्वा तस्मिन्दोषाभावेऽपि तां हरन्* जाति-

---

* पिता हरन् इति पाठान्तरम्।

द्रव्यगुणाद्यनुसारेण दण्डनीयो राज्ञा वाग्दाननिमित्तं यद्वरेण तत्पित्रादिना व्ययीकृतं तत्सकलमपि सवृद्धिकं वराय देयम्* । वाग्दत्ता विवाहात्पूर्व्वं यदि मृता तदा यत्पूर्व्वदत्तमङ्गुरीयादि शुल्कं तावद्वर आददीत किन्तु्त्वा उभयव्ययं परिशोध्य उभयोरात्मनः कन्याप्रदातुश्च व्ययं परिशोध्य वाग्दानादिनिमित्तं तद्वर्गद्वयव्ययीकृतधनं तस्मादङ्गुरीयादिरूपकन्याधनाद्गृहीत्वावशिष्टं वर एवाददीत ।

यत्तु कन्यायै वाग्दानसमयात्पूर्व्वं प्रीत्या मातामहपित्रादिभिस्तस्या एव स्वत्वं कृत्वा† समर्पितं शिरोभूषणादि तद्ग्रहणे विशेषमाह

बौधायनः ।

रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः सदा‡ ।
तदभावे भवेन्मातुस्तदभावे भवेत्पितुरिति ॥

प्रसक्त्यानुप्रसक्त्यां स्त्रियां जीवन्त्यामपि किञ्चिदुच्यते ।

योगीश्वरः ।

दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ सम्प्रतिरोधके ।

---

* कन्यां वाचा दत्त्वा तुभ्यं दातुं प्रतिजाने इति प्रतिश्रुत्य तस्मिन् वरे दोषाभावे निर्द्दोषे सति तां कन्यामपहरन् अन्यस्मै ददज्जातिद्रव्यगुणाद्यनुसारेण जातिद्रव्यगुणादिविषयकापराधानुसारेण राज्ञा दण्डनीयः वाग्दाननिमित्तं यद्धनं वरेण व्ययीकृतं कन्यादिभ्यो दत्तं तत्सकलमपि तद्व्ययीकृतं धनसमुदायमपि तत्पित्रादिना कन्यापित्रादिना वृद्धिसहितं वराय प्रतिश्रुतवराय देयं दातव्यं इति वर्त्तुलार्थः । † तस्याएव स्वयं कृत्वेति क्वचित्पाठः ।
‡ स्वयमिति पाठान्तरम् ।

गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति ॥ इति ।
धर्म्मकार्य्येऽवश्यकर्त्तव्ये सम्प्रतिरोधके बन्दीग्रहणनिग्रहादौ । एषु द्रव्यान्तराभावे भर्त्ता स्त्रीधनं गृहीत्वा पुनस्तस्यै तद्धनं दातुं नार्हति अवश्यं दातव्यमिति नियमो नास्तीत्यर्थः । प्रकारान्तरेण दातव्य एव । भर्त्तुरेवोक्तस्थलेष्वनुज्ञानादन्येषां

जीवन्तीनान्तु तासां ये तद्धरेयुः स्वबान्धवाः ।
तान् शिष्याच्चौरदण्डेन धार्म्मिकः पृथिवीपतिः ॥

इति दण्डविधानात् । स्त्रीधनस्वरूपमप्याह याज्ञवल्क्यः ।

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यञ्च* स्त्रीधनं परिकीर्त्तितम् ।
बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च ॥

अध्यग्न्युपागतं विवाहकाले अग्निसमीपे मातुलादिभिर्दत्तम् । आधिवेदनिकम् ।

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकल्पयेत् ॥

इत्युक्तञ्च । यस्या उपरि विवाहः क्रियते† साधिविन्ना सा चासौ स्त्री च अधिविन्नस्त्री तस्यै अधिवेदननिमित्तं धनमाधिवेदनिकं तत्समं दद्याद्यावदधिवेदनाया अलङ्करणादि तावत्पूर्व्वस्त्रियै दद्यादित्यर्थः । अत्र विशेषमाह न दत्तं स्त्रीधनमित्यु-

* आधिवेदनिकञ्चैव इति जीमूतवाहनसम्मतः पाठः । † क्रत इति पाठान्तरम् ।

तदर्द्धमस्य चार्थौ विवृतौ मातुरंशकथनप्रस्तावे। आधिवेद-निकाद्यञ्च आद्यशब्देन कर्त्तनक्रयसंविभागपरिग्रहनिध्यधि-गमादिप्राप्तमुच्यते।

कात्यायनः।

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम्॥
यत्पुनर्लभते* नारी नीयमाना पितुर्गृहात्।
अध्यावाहनिकाद्यञ्च स्त्रीधनं तदुदाहृतम्†॥
प्रीत्या दत्तञ्च यत्किञ्चिच्छ्वश्वा वा श्वशुरेण वा‡।
पादवन्दनिकञ्चैव प्रीतिदत्तं तदुच्यते॥
ऊढ़या कन्यया वापि पत्युः पितृगृहेऽपि वा।
भ्रातुः सकाशात्पित्रोर्व्वा§ लब्धं सौदायिकं स्मृतम्॥
विवाहात्परतो यच्च लब्धं भर्त्तृकुले स्त्रिया।
अन्वाधेयन्तु तद्द्रव्यं लब्धं पितृकुलात्तथा॥ इति।

## अथ विभक्तस्य स्वर्यातस्य पुत्रपौत्ररहितस्य दायग्रहादिक्रमः¶।

तत्र याज्ञवल्क्यः।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।

---

* पत्युर्यल्लभते इति क्वचित् पाठः। † अध्यावाहनिकं नाम तत्स्त्रीधनमुदाहृतमिति जीमूतवाहनसम्मतः पाठः। ‡ पत्युः पतिगृहेऽपि वा इति पाठान्तरम्। § भर्त्तुः सकाशात् पित्रोर्व्वा इति जीमूतवाहनसम्मतः पाठः। ¶ दायग्रहणाधिकारिक्रम इति पाठान्तरम्।

तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः ॥
एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः ।
स्वर्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं क्रमः ।

पत्नी विवाहसंस्कृता एकवचनन्तु जात्यपेक्षयाह । ततश्च यदा सवर्णा असवर्णा वा ताः सर्व्वाश्चतुस्त्रिद्व्येकभागाः स्युरित्यनेन क्रमेण विभज्य धनं गृह्णन्ति । पत्न्यभावे दुहितरः ।

तथाच कात्यायनः ।

पत्नी भर्त्तुर्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढ़ा भवेत्तदा ॥

यद्यनूढ़ा भवेदिति विशेषोपादानात् ऊढ़ानूढ़ानां समवायेऽनूढ़ैव गृह्णाति तदभावे ऊढ़ा । ऊढ़ास्वपि दरिद्रा गृह्णाति तदभावे तु सम्पन्ना कन्या स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति गौतमवचनन्यायस्य पितृधनेऽपि समानत्वात् । दुहित्रभावे दौहित्रोऽपि धनभाक् ।

यदाह विष्णुः ।

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।
पूर्व्वेषान्तु स्वधाकारे पौत्रदौहित्रका मताः ॥

अयमर्थो याज्ञवल्क्येनापि दुहितरश्चैवेत्यत्र चकारेण द्योतितः । दौहित्रस्याभावे पितरौ धनभाजौ । माता च पिता च पितरौ अत्रैकशेषक्रमात् प्रतीतावपि विग्रहवाक्ये क्रमप्रतीतेर्विग्रहवाक्यक्रमः कर्त्तव्यो दायग्रहणेऽपि । ततश्च प्रथमं माता गृह्णाति तदभावे पिता । तच्च तथा पत्नी दुहितर इत्येतस्मिन्

समस्ते वाक्यसन्दर्भे च योऽयं क्रमः धनभागुत्तरोत्तर इति वाक्यशेषेऽभिहितः तत्सकलमपि तथैवेत्यस्माभिरुपपादितं मिताक्षराटीकायां सुबोधिन्यां व्यवहाराध्याये विस्तरभयान्नेह लिखितम्। पित्रभावे भ्रातरस्तत्रापि प्रथमं सहोदराः सहोदराणामेकमातृकत्वेन सन्निकर्षात्। सहोदराणामभावे भिन्नोदराः सन्निकर्षविशेषादेव धनग्रहणं स्मर्य्यते। अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति सपिण्डाद्योऽनन्तरः सन्निहितः प्रत्यासन्नः शरीरसम्बन्धेन तस्य प्रत्यासन्नस्य धनं सपिण्डस्य धनं भवेदित्यर्थः। उभयविधभ्रात्रभावे तत्सुता भ्रातृपुत्रास्तत्रापि प्रथमं सोदरभ्रातृपुत्रास्तदभावे भिन्नोदरभ्रातृपुत्राः। यदा* त्वेकस्मिन् भ्रातरि मृते तद्धनं पत्नी दुहितर इत्यनेन न्यायेन भ्रातृसम्बन्धित्वेन प्राप्तं प्राप्ते च तद्धनविभागात्पूर्व्वमेवैको भ्राता मृतस्तत्पुत्राः सन्ति तदा तत्पुत्राणां पितृतो भागकल्पनेत्यनेन न्यायेन पितृभागोऽस्त्येव। स्वपितुर्धनग्रहणाधिकारानन्तरं मृतत्वात् भ्रातृपुत्राभावे गोत्रजा धनभाजः गोत्रजा इत्यनेन पितामही पितामहः† पितामहपुत्रास्तत्पुत्राश्च तदभावे‡ प्रपितामह्यादयस्तेषामप्यभावे समानोदकाश्च गृह्यन्ते तत्रायं क्रमः। भ्रातृपुत्राभावे पितामही तस्या अभावे पितामहः यथा मात्रनन्तरमेव पितुरधिकारस्तथा पितामह्यनन्तरं

---

* यदा तु विभागात् पूर्व्वं एकोभ्राता मृत इति पाठान्तरम्। † प्रपितामहः प्रपितामहपुत्रा इति पाठान्तरम्। ‡ प्रपितामह्यादयः इति वा पाठः।

पितामहस्याधिकारः। पितुरभावे भ्रातॄणामिव पितामहस्याभावे पितृव्यास्तत्रापि सोदरभिन्नोदरव्यवस्था पूर्व्ववदेव साक्षात्पितामहीपुत्राः प्रथमं धनभाजस्तदभावे सापत्न्यपितामहीपुत्रास्तेषामप्यभावे भ्रातृपुत्रन्यायेन पितृव्यपुत्रास्तेषामभावे प्रपितामही तस्या अभावे प्रपितामहस्तदभावे प्रपितामहपुत्राः भ्रातृन्यायेनैव तदभावे तत्पुत्रा इत्येवं सप्तमपुरुषपर्य्यन्तं वेदितव्यम्। एवं सप्तमपुरुषाधिकसपिण्डाभावे समानोदकाः तत्रापि पूर्व्वोक्तरीत्या प्रत्यासत्तिविशेषो द्रष्टव्यः। गोत्रजानामभावे बन्धवो धनग्रहणाधिकारिणः। त्रिविधा हि बन्धवः आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति। यथोक्तम् वृद्धशातातपेन।

आत्मपितुः स्वसुः पुत्रा आत्ममातुः स्वसुः सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः॥
पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः।
पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः॥
मातुः पितुः स्वसुः पुत्रा मातुर्मातुः स्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥ इति।

तत्रापि प्रथममन्तरङ्गत्वात् पाठक्रमेणात्मबन्धवो धनभाजस्तदभावे तथैव पितृबन्धवस्तदभावे तथैव मातृबन्धव इति क्रमः। बन्धूनामप्यभावे आचार्य्यस्तदभावे शिष्यः।

तथाचापस्तम्बः।

पुत्राभावे यः प्रत्यासन्नसपिण्डस्तदभावे आचार्य्यस्तद-

भावेऽन्तेवासीति शिष्याभावे सब्रह्मचारी एकाचार्य्यो-पनीतोऽध्यापितो वा सब्रह्मचारिणामप्यभावे श्रोत्रिया-धनभाजः ।

यदाह गौतमः ।

श्रोत्रिया ब्राह्मणस्यानपत्यस्य ऋक्थं भजेरन्निति ।

एकशाखाध्यायी श्रोत्रियस्तस्याप्यभावे ब्राह्मणमात्रः समीपस्थो गृह्णाति ।

तथाच मनुः ।

सर्व्वेषामप्यभावे तु ब्राह्मणा ऋक्थभागिनः ।
त्रैविद्या शुचयो दान्तास्तथा धर्म्मो न हीयते ॥ इति ।

ब्राह्मणद्रव्यं कदाचिदपि राजा न गृह्णीयात् । यदाह नारदः ।

ब्राह्मणार्थञ्च तन्नाशे दायादश्चेन्न कश्चन ।
ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा ॥

मनुः ।

अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।

क्षत्रियादिधनं सब्रह्मचारिपर्य्यन्तानामभावेऽपि न ब्राह्मणो गृह्णीयादपि तु राजैव गृह्णीयात् ।

यदाह मनुः ।

इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृपः । इति ।

एवं पुत्रादिक्रमेण दायग्रहणप्रकारे सर्व्वत्र प्राप्ते क्वचिदपवाद-माह

याज्ञवल्क्यः ।

वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।
क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः ॥

ब्रह्मचारी नैष्ठिकोपकुर्व्वाणकः सच्छिष्यः अध्यात्मशास्त्रश्रवणमननाद्युपेतः धर्म्मभ्राता भ्रातृत्वेनाङ्गीकृतः । एकतीर्थी एकाश्रमी वानप्रस्थ एव स्वाश्रमनिकटवासी धर्म्मभ्राता चासावेकतीर्थी च धर्म्मभ्रात्रेकतीर्थी । अत्र क्रमशब्दः प्रतिलोमक्रमाभिप्रायः । वानप्रस्थस्य धनम्

अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा ।
अर्थस्य सञ्चयङ्कुर्य्यात्कृत*माश्वयुजि त्यजेत् ॥

इत्यनेन प्रकारेण यदुपार्ज्जितं तदन्नादिरूपं वस्तु धर्म्मभ्रात्रेकतीर्थी गृह्णाति । यतेर्धनं वस्त्रपुस्तकादि सच्छिष्यो गृह्णीयात् । नैष्ठिकब्रह्मचारिणो धनं वस्त्रादिकमाचार्य्यो गृह्णीयात् ।

## अथ संसृष्टिविभागः ।

तत्र याज्ञवल्क्यः ।

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् ।
असंसृष्ट्यपि वा दद्यात्संसृष्टो नान्यमातृजः ॥

---

* सञ्चितम् ।

पूर्वं विभक्तं पुनरपि मिश्रीकृतं धनं संसृष्टं संसृष्टमस्यास्तीति संसृष्टी तस्य मृतस्य पुत्रपौत्ररहितस्य धनं पत्न्यां विद्यमानायामपि अपरः संसृष्टी गृह्णीयात् । संसृष्टीत्येकवचनमविवक्षितमतः संसृष्टिनो वा विभज्य गृह्णीयुः तत्पत्न्याश्च पोषणं कुर्य्युः संसृष्टी च पितृभ्रातृपितृव्येष्वन्यतमेनैव नान्येन तदाह

बृहस्पतिः ।

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येनाथवा प्रीत्या स च संसृष्ट उच्यते ॥

यद्यविज्ञातगर्भायां मृतपत्न्यां* सत्यां संसृष्टिनस्तद्धनं विभज्य गृह्णन्ति पश्चादस्मादेव गर्भात्पुत्र उत्पद्यते तदा मृतसंसृष्टिधनं तत्पुत्रस्य दद्युः एवमुत्तरवाक्येऽपि विज्ञेयम् । सोदरस्य तु सोदरः संसृष्टिनोधनं संसृष्टिमात्रो न गृह्णाति अपि तु सोदर एव† गृह्णाति न भिन्नोदरः ।

अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् ।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः ॥

अन्योदर्य्यः सापत्नभ्राता यदि संसृष्टी तदा धनं गृह्णाति अन्योदर्य्यः सापत्नभ्राता योऽसंसृष्टी तदा धनं न गृह्णीयात् ।

अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् ।

असंसृष्ट्यपीत्यनेन वाक्येनैतदुक्तं भवति । सापत्नभ्रातुः

---

* मृतस्य पत्न्याम् । † सोदरस्यैकमातृजन्यस्य धनं सोदरएव गृह्णातीति पाठान्तरम् ।

संसृष्टित्वमेव धनग्रहणे हेतुरिति असंसृष्टीत्येतत्पदं काकाक्षिव-दुभयत्रान्वेति तत्रासंसृष्ट्यपि चादयात् संसृष्ट इत्येतदेकं वाक्यान्तरमसंसृष्ट्यपि विभक्तधनस्य पुनर्मिश्रीकरणरहितोऽपि संसृष्ट एकोदरः संसृष्टसोदरः संसृष्टिनो मृतस्य धनमाददीत अनेन चासंसृष्टस्यापि सोदरस्य धनग्रहणे सोदरत्वं हेतुरित्युक्तं भवति। अन्येत्यसंसृष्टपदं पूर्ववदुत्तरेणापि सम्बध्यते। ततश्च संसृष्टो नान्यमातृज इत्येतदपरं वाक्यम्। अस्मिन् वाक्ये संसृष्टशब्देन संसृष्ट्यभिधीयते न सोदरः संसृष्टः। संसृष्ट्यपि अन्यमातृजो भिन्नोदर एवं धनं गृह्णीयात्। तत्रैवकारो मनुवचनानुसारेणाध्याहृतः एतदुक्तं भवति यत्रासंसृष्ट्येकोदरः संसृष्टी च भिन्नोदरस्तत्र सोदरत्वहेतोर्विद्यमानत्वात्सोदरोऽप्यंशं लभते। संसृष्टित्वहेतोर्विद्यमानत्वात् भिन्नोदरोऽपि लभत इति।

मनुरपि।

विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि।
समस्तत्र विभागः स्याज्ज्यैष्ठं तत्र न विद्यते।
ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरम्॥

इत्यतोविषमविभागात्मकं कर्म्म नास्तीत्यर्थः। तथा

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥

येषां संसृष्टिभ्रातॄणां मध्येऽन्यतरो ज्येष्ठः कनिष्ठो मध्यमो वांशप्रदानतोंऽशप्रदानेन विभागसमये हीयेत स्वकीयांशात्-

च्युतो भवेत्। आश्रमान्तरस्वीकारेण पातित्यादिना वा उत म्रियते तस्य भागो न लुप्यते। अतएव तद्भागं पृथग्कृत्य स्थापयेन्न विभज्य गृह्णीयुरित्यर्थः। उद्धृतस्य विनियोगप्रकारमाह।

सोदर्य्या विभजेयुस्तं समेत्य सहिताः समम्।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः॥

इति वाक्यद्वये सोदर्य्या इति भ्रातर इति च पदद्वयोपादानात् सोदर्य्यशब्देनैकोदरा भ्रातृशब्देन च भिन्नोदरा अभिधीयन्ते अन्यथा वैयर्थ्यापत्तेः। भ्रातरो ये च संसृष्टा इत्यत्र संसृष्टपदोपादानात् तत्प्रतियोगीभूतसोदर्य्या विभजेयुरित्यत्र च संसृष्टपदानुपादानात्सोदर्य्या असंसृष्टा अपि गम्यते अतोऽस्य श्लोकस्यायमर्थः तमुद्धृतमंशं सोदर्य्याः सहोदरा असंसृष्टा अपि समेत्य देशान्तरगतास्तथा आगत्य सहिताः सम्भूय समं न्यूनाधिकभागरहितं यथा भवति तथा विभजेयुः। तथा भ्रातरो भिन्नोदराश्च समानजातीया ये च संसृष्टास्ते च तथा सनाभयः सहोदर्य्या भगिन्यश्च एते सोदर्य्यभ्रातृप्रभृतयो भगिन्यन्ताः सर्व्वे समं विभज्य गृह्णीयुरित्यर्थः। असमानजातीयानां भिन्नोदरसंसृष्टिभ्रातॄणान्तु चतुस्त्रिद्व्येकभागाः स्युरित्यनेन क्रमेण विभागः। समशब्दस्य भिन्नजातीयभ्रातृव्यतिरिक्तसमानजातीयभिन्नोदरभ्रातृजातीयभिन्नोदरभ्रातृविषयत्वेनापि चरितार्थत्वे चतुस्त्रिद्व्येकभागाः स्युरित्यस्य बाधकाभावात्।

शङ्खः ।

> भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा ।
> विभजेरन्धनन्तस्य शेषास्तु स्त्रीधनं विना ॥
> भरणं चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात् ।
> रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु च ॥

इतरासु शय्यामरक्षन्तीषु ।

बृहस्पतिः ।

> संसृष्टानान्तु यः कश्चिद्विद्याशौर्य्यादिनाधिकम् ।
> प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः ॥

द्व्यंशप्रदानं तादृगधिकधनप्राप्तौ वेदितव्यम् । अत्र चायं निष्कृष्टार्थः भिन्नोदरसंसृष्टिभ्रात्रभावे सोदराणां मध्ये यः संसृष्टी सोदरः स एव सोदरस्य संसृष्टिनोऽपुत्रस्य मृतस्य धनं गृह्णाति असंसृष्टसहोदरभ्रात्रभावे भिन्नोदराणां मध्ये यः संसृष्टः स एव तद्धनं गृह्णाति अत्रापि समानजातीयासमानजातीयभिन्नोदरभ्रातृषु चतुस्त्रिद्व्येकभागा इत्यनुसन्धेयम् । यदा सोदरा असोदराश्च संसृष्टिनस्तदा ते सर्व्वे गृह्णीयुः पूर्व्वोक्तरीत्या यद्यसंसृष्टाः सोदराः संसृष्टाश्च भिन्नोदरास्तथापि सोदरा असोदराश्च गृह्णीयुः यद्यसंसृष्टा भिन्नोदराः संसृष्टाश्च सोदरास्तदा सोदरा एव सोदरमध्ये केचन संसृष्टाः केचन असंसृष्टास्तदा संसृष्टत्वसोदरत्वरूपहेतुद्वयबलात्संसृष्टिन एव गृह्णीयुरिति सर्व्वत्र स्त्री स्वभरणं*† लभते । एकमातृजत्वभिन्नमातृ-

* धनं भरणञ्चेति पाठान्तरम् । † स्वाभरणमिति पाठान्तरम् ।

जत्वरूपविशेषेण भ्रातृषु येयं व्यवस्था दर्शिता सा पितृव्य-सापत्नपितृव्येष्वपि योज्या न्यायस्य समत्वादिति केचन। तदनुपपन्नं सोदरस्य तु सोदर इति विधायकं वाक्यं तथैव सोदरस्याप्यविवक्षाकारणं नास्तीति सोदरस्य पितृव्योपलक्षकत्वाभावात्तोक्ते त्वत्यन्तविरुद्धत्वाच्च वचनविरोधात् न्यायस्तत्र न प्रवर्त्तत इति सर्व्वमनवद्यम्।

## अथांशानर्हाः।

तत्र याज्ञवल्क्यः।

> क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जड़ः।
> अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः* ॥

तज्जः पतितादकृतप्रायश्चित्तादुत्पन्नः। पङ्गुः पादविकलः। उन्मत्तकः वातपित्तश्लेष्मसन्निपातग्रहावेशादुत्पन्नैरुन्मादैरप्रति-समाधेयतयाभिविष्टः। जड़ो विकलचित्तः इष्टानिष्टविचारणा-शक्त इत्यर्थः। अचिकित्स्यरोगः अप्रतिसमाधेयराजरोगादि-ग्रस्तः†। आद्यशब्देन पितृद्वेष्यादयो गृह्यन्ते।

तथा नारदः।

---

* पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जड़ः। अन्धोऽचिकित्स्यरोगार्त्ता भर्त्तव्यास्ते निरंशका इति जीमूतवाहनसम्मतः पाठः।

† राजरोगः राजयक्ष्मरोगः।

पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः ।
औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः ॥

वशिष्ठः ।

अनंशास्त्वाश्रमान्तरगताः ।

आश्रमान्तराणि नैष्ठिकब्रह्मचारिवानप्रस्थभिक्षुनामाश्रमाः ।

मनुः ।

अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः ॥

व्याध्यादिना निर्गतमिन्द्रियं यस्मात् स निरिन्द्रियः । एते अंशभाजो न भवन्ति भरणङ्कर्त्तव्यमेव ।

तथाच मनुः ।

सर्व्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥

सर्व्वेषामंशानर्हाणाम् अत्यन्तं यावज्जीवम् एतेषामनंशित्वं विभागात् पूर्व्वमप्रत्याख्येयदोषप्राप्तौ सत्याम् नतु विभक्तौ यदि विभागकाले दोषदुष्टो विभागोत्तरकालमौषधादिना विनिर्दुष्टः कृतप्रायश्चित्तो वा तदा विभक्तेषु सुतो जातः सवर्णायां विभागभागित्यनेन न्यायेन अंशप्राप्तिरस्त्येव पतितादिषु पुंलिङ्गमविवक्षितमुद्देश्यगतत्वात् । अतो मातृपत्नीदुहित्रादयोऽपि दुष्टा अनंशा एव क्लीवादय एवानंशा न तत्पुत्रादयो दोषरहिताः ।

तथाच याज्ञवल्क्यः ।

औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः।
सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्त्तृसात्कृताः* ॥
अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः।
निर्व्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥

क्लीवस्य क्षेत्रजएव पुत्रः इतरेषामौरसक्षेत्रजौ केवलौरसक्षेत्रजयोर्ग्रहणादितरपुत्राणामंशो नास्तीति गम्यते। औरससमत्वात्पुत्रिकापि प्राप्नोति साप्यौरसपदेनैवोपात्ता। दुहितरस्तु भर्त्तव्या विवाहपर्य्यन्तम्। एतेषां क्लीवादीनाम् अपुत्राः पत्न्यः साधुवृत्तयः सदाचारा भर्त्तव्याः। व्यभिचारिण्यस्तु निर्व्वास्याः।

तथा।

निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च।

निर्व्वास्याः परं प्रतिकूलानां पोषणं कर्त्तव्यं व्यभिचारदोषाभावात्।

## अथाविभाज्यम्।

तत्र याज्ञवल्क्यः।

पितृद्रव्याविरोधेन यदन्यत् स्वयमर्ज्जितम्।
मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत् ॥

---

* भर्त्तृसात्कृता यावत्सीमार्थे यावच्छब्दः अतएव विवाहपर्य्यन्तमिति स्वयं व्याख्यातम्। यावन्न भर्त्तृसात्कृता इति जीमूतवाहनसम्मतः पाठः।

क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

पितृद्रव्याविरोधेन पितृद्रव्याविनाशेन एतच्च मैत्रादिषु सर्व्वत्रानुषज्यते । मैत्रं मित्रसकाशाल्लब्धमौद्वाहिकं विवाहप्राप्तं पितृक्रमायातमन्यैरपहृतं पित्रादिना सामर्थ्याभावादनुद्धृतं यत्किञ्चिद्द्रव्यं पुत्रादीनां दायार्हाणां मध्ये इतरैस्तमेव साधयेत्यनुज्ञातः सन्नुद्धर्त्ता अनुद्धर्तृभ्यो दायादेभ्यस्तद्धनं न दद्यात् । स्वयमेवोद्धर्त्ता गृह्णीयात् । अन्यापहृतोद्धृतविषये तु विशेषमाह शङ्खः ।

पूर्व्वंनष्टान्तु यो भूमिमेकश्चेदुद्धरेत् क्रमात् ।
यथाभागं लभन्तेऽन्ये* दत्त्वांशन्तु तुरीयकम् ॥

चतुर्थभागमुद्धर्त्रे दत्त्वावशिष्टां भुवमुद्धर्त्तृसहिताः सर्व्वे विभज्य गृह्णीयुरित्यर्थः । अध्यापनवेदार्थव्याख्यानपारायणाध्ययनादिलब्धं विद्यालब्धं पितृद्रव्याविनाशेन लब्धं मैत्रादिधनस्याविभज्यत्वकथनात् । पितृद्रव्यविनाशेन लब्धमैत्रादिधनस्य विभज्यत्वमुक्तं भवति । अत्र वचनोपात्तमैत्रादिविद्यालब्धानां धनानामेव पितृद्रव्याविरोधेनेत्यत्र विशेषणम् । अतः पितृद्रव्यविरोधेनापि प्रतिग्रहलब्धं विभजनीयमेव तथाच शिष्टाचारो दृश्यते ।

नारदः ।

---

* भजन्त्यन्ये इति जीमूतवाहनसम्मतः पाठः ।

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन् ॥

कात्यायनः ।

परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या ।
तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥

मनुः ।

• अनुपघ्नं पितृद्रव्यं श्रमेण यदुपार्ज्जितम् ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

श्रमेण सेवायुद्धादिना ।

तथा ।

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमप्रचारञ्च न विभाज्यं प्रचक्षते ॥

वस्त्राणामविभाज्यत्वं धृतानामेव । पत्रं वाहनमश्वशिविकादि तदपि यद्यस्य नियमेनारोहणसाधनं तन्न विभाज्यम् अथवा पत्रशब्दोऽत्र लेख्यनिविष्टधनपरम् ।

तथाच बृहस्पतिः ।

ऋणमुद्धाह्य लेखितमिति ।

ऋणमुद्धाह्य दत्त्वा । अत्राविभाज्यमित्यनुवर्त्तते ।

कात्यायनः ।

धनं पत्रनिविष्टमिति ।

अत्रायमभिप्रायः यावत्पत्रनिविष्टं ऋणं नोद्ध्रियते तावदविभाज्यमिति अथवा

बृहस्पतिः ।

उक्तप्रकारो विज्ञेयः पत्ररूढ़ऋणे खलु ।
युक्त्या विभजनीयं तदन्यथानर्थकं भवेत् ॥
विक्रीय वस्त्राभरणं ऋणमुद्राख्य* लेखितम् ।
कृतान्नञ्चाकृतान्नेन परिवर्त्य विभाज्यते ॥ इति ।

अश्वादिबाहुल्ये तद्विक्रयोपजीविनां विभाज्यमेव । यदजाविकादि विषमत्वेनाविभाज्यम् तज्ज्येष्ठस्य ।

तथाच मनुः ।

अजाविकं सैकशफं† न जातु विषमं भजेत् ।
अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥

अलङ्कारोऽपि यो येन धृतः सोऽविभाज्यः ।

मनुः ।

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥

अत्र धृतत्वं नाम प्रीतिदानादिना प्रातिस्विकस्वत्वोत्पन्नत्वम् कृतान्नं तण्डुलमोदकादि तद्यथासम्भवं सर्व्वैर्मिलित्वा भोक्तव्यम् उदकं तदाधारः कूपादि एतदपि विषममेव न विभाज्यं किन्तु पर्य्यायेण भोक्तव्यम् । स्त्रियो दास्योऽवरुद्धाश्च तत्र विषमसंख्यादास्यः पर्य्यायेण कर्म्म कारयितव्याः समसंख्यका विभाज्याः अवरुद्धाः समा अपि न विभाज्याः ।

* ऋणमुद्राख्यमखपीति ग्रन्थान्तरीयः पाठः । † एकखुरविशिष्टमश्वादि ।

यदाह गौतमः ।

स्त्रीषु संयुक्तास्वविभाग इति ।

संयुक्तास्ववरुद्धासु योगक्षेमम् अलब्धस्य लाभो योगः अलब्धलाभहेतुभूतं श्रौतस्मार्त्ताग्निसाध्यम् इष्टं कर्म्म योगशब्देन लक्ष्यते । लब्धपरिरक्षणं क्षेमलक्षणं लब्धलक्षणकारणीभूतवहिर्वेदिदानतड़ागारामनिर्माणादि पूर्त्तं कर्म्म क्षेमशब्देन लक्ष्यते । एतदुभयं पैतृकमपि न विभाज्यम् । पितृद्रव्यविरोधोपार्ज्जितमपि न विभाज्यम् ।

क्षेमं पूर्त्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।

अविभाज्ये च ते प्रोक्ते शयनासनमेव च ॥ इति ।

लोकाक्षिस्मरणात् । योगक्षेमकारिणो मन्त्रिपुरोहितादयो योगक्षेमशब्देनोच्यन्ते इत्यन्ये । शस्त्रचामरच्छत्रोपानहप्रभृतय इत्यपरे । प्रचारो गृहारामादिप्रवेशनिर्गममार्गः । अस्मिन् प्रकरणे विषमत्वं नामांशदानापर्य्याप्तत्वं न त्र्येकद्व्यादिसंख्याभिः तद्यथा चत्वारः पुत्रास्त्रयोऽश्वाः तथाच अंशचतुष्टयापर्य्याप्तत्वाद्वैषम्यम् । यच्च वचनान्तरम् ।

अविभाज्यं सगोत्राणामासहस्रकुलादपि ।

याज्यं क्षेत्रञ्च पत्रञ्च* कृतान्नमुदकं स्त्रियः ॥

इति तद्ब्राह्मणजातेः क्षत्रियादिपुत्त्रविषयम् ।

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।

---

* वाहनमश्वादि ।

इति विशेषस्मरणात्। याज्यं याजनलब्धम्। शौर्य्यादिप्राप्तमविभाज्यमित्युक्तं तत्रापवादमाह।

व्यासः।

साधारणं समाश्रित्य यत्किञ्चिद्वाहनादिकम्*।
शौर्य्यादि नाप्नोति धनं भ्रातरस्तत्र भागिनः॥

साधारणं समुदितं द्रव्यमाश्रित्य।

याज्ञवल्क्यः।

सामान्यार्थसमुत्थाने विभागो विषमः स्मृतः।

समुदितार्थस्य कृषिवाणिज्यादिना सम्वर्द्धने† कृतेऽपि सर्व्वेषां सम एव विभागः। नार्जकस्य द्वौ भागावित्यर्थः।

## अथ सर्व्वविभागशेषः।

तत्र याज्ञवल्क्यः।

अन्योऽन्यापहृतं द्रव्यं विभक्ते यदि दृश्यते।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः॥

विभागानन्तरं अन्योन्यमपहृतं द्रव्यं ज्ञात्वा तत्समैरेवांशैर्विभजेरन् ज्येष्ठस्य विंश उद्धार इति विंशोद्धारक्रमेणेत्यर्थः।

---

* यत्किञ्चिद्वाहनायुधमिति जीमूतवाहनसम्मतः पाठः। † सम्वर्द्धितेऽपीति पाठान्तरम्।

तथा ।

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतुकैः ॥

विभागानन्तरं कालान्तरे विभागो न जात इत्यपलापे कृते ज्ञातिभिः पितृबन्धुभिर्मातृबन्धुभिर्मातुलादिभिरुक्तलक्षणैः साक्षिभिर्लिखितेन विभागपत्रेण च विभागस्य भावनानिर्णयो विज्ञेयः। तथा यौतुकैः पृथक्कृतगृहक्षेत्रैश्च विज्ञेयः। पृथक्कृष्यादिप्रवर्त्तनेन पृथक्पञ्चमहायज्ञाद्यनुष्ठानेन च विज्ञेय इत्यर्थः।

नारद ।

विभागधर्म्मसन्देहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात् ॥
भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते ।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक् ॥
साक्षित्वं प्रतिभाव्यञ्च दानग्रहणमेव च ।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः कथञ्चन ॥

तथा ।

यद्येकजाता बहवः पृथग्धर्म्माः पृथक्क्रियाः ।
पृथक्कर्म्मगुणोपेता न चेत्कार्य्येषु सम्मताः* ॥

* न चेत्कार्य्येषु सम्मता इति श्रीमूलवाक्यसम्मतः पाठः ।

स्वभागानपि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्य्युर्यथेष्टं तत्सर्व्वमीशास्ते स्वधनस्य वै ॥

बृहस्पतिः ।

विभक्ता अविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्व्वत्र दानाधमनविक्रये ॥

आधमनमाधीकरणं* एतच्च व्यवहारसौकर्य्याभिप्रायेण न पृथक्त्वभावाभिप्रायेण विभागेनैव पृथक्पृथक्त्वभावात् ।

इह मदनपारिजाते मदनक्षितिपालदानजलरुहे ।
स्तवकस्त्वष्टम आसीदामोदाकृष्टपण्डितभ्रमरः ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमियात्
इयं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति पण्डितपारिजातभट्टारमल्लेत्यादिबिरुदराजीविराजमान-
श्रीमदनपालस्य निबन्धे मदनपारिजाताभिधेये
अष्टमः स्तवकः ।

---

* बन्धकमिति यावत् ।

## नवमः स्तवकः।

अभिहिता वर्णाश्रमधर्म्माः। अथेदानीं तदुत्क्रमजनितदुरितापूर्व्वापहरणहेतुभूतः प्रायश्चित्तापरपर्य्यायो नैमित्तिकधर्म्मोऽभिधीयते। तत्र तावत् प्ररोचनार्थं पापकर्म्मफलादीनि प्रदर्श्यन्ते।

हारीतः।

अभक्ष्यभक्षणमभोज्यभोजनमपेयपानमयाज्ययाजनमसत्प्रतिग्रहः परदाराभिगमनं परद्रव्यापहरणं प्राणिहिंसा चेति शारीराणि। पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाचिकानि। परोपतापनं पराभिद्रोहः क्रोधो लोभो मोहोऽहङ्कारश्चेति मानसानि। तदेतान्यष्टादश नैरयाणि कर्म्माणि यस्मिन् यस्मिन्वयसि यः कर्म्माणि करोति शुभाशुभानि तस्मिन् तस्मिन्वयसि शारीरवाचिकमानसानि आप्नोति एवं ह्याह।

यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम्।
तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात्*॥
शरीरेण तु शारीरं वाङ्मयेन तु वाङ्मयम्।
मानसं मनसा चैव स्वकर्म्मफलमश्नुते॥

मनुः।



* स तत्फलमवाप्नुयादिति पाठान्तरम्।

चातुर्व्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्म्मस्त्वयानघ ।
कर्म्मणां फलनिर्वृत्तिं* शंस नस्तत्त्वतः पराम् ॥
स तानुवाच धर्म्मात्मा महर्षीन्मानवो भृगुः ।
अस्य सर्व्वस्य शृणुत कर्म्मयोगस्य निर्णयम् ॥
शुभाशुभफलं सर्व्वं† मनोवाग्देहसम्भवम् ।
कर्म्मजा गतयो नृणामुत्तमाधममध्यमाः ॥
तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः ।
दशलक्षणयुक्तस्य मनो विद्यात्प्रवर्त्तकम् ॥

त्रिविधस्योत्तममध्यमाधमरूपगतिभेदेन भिन्नस्य वाङ्मनःकायलक्षणाधिष्ठानभेदेनाधिष्ठानस्य वक्ष्यमाणपरद्रव्याभिधानरूपदशलक्षणोपेतस्य । एवंविधस्य देहिनो मनः प्रवर्त्तकं विद्या-द्दशलक्षणान्येवाह ।

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम्‡ ॥
पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
मानसं मनसा चैवमुपभुङ्क्ते शुभाशुभम् ।
वाचा वाचा कृतङ्कर्म्म कायेनैव च कायिकम् ॥

* निष्पत्तिमिति पाठान्तरम् । † कर्म्मेति पाठान्तरम् । ‡ त्रिविधं कर्म्म मानसमिति पाठान्तरम् ।

शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥

तथा।

येन यांस्तु गुणेनैषां संसारान् प्रतिपद्यते।
तान् समासेन वक्ष्यामि सर्व्वस्यास्य यथाक्रमम्॥
देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः।
तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः॥
त्रिविधा त्रिविधैषा तु* विज्ञेया गौणिकी गतिः।
अधमा मध्यमाग्र्या च† कर्म्मविद्याविशेषतः॥
स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः।‡
पशवश्च शृगालाश्च जघन्या तामसी गतिः॥
हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छा विगर्हिताः।
सिंहव्याघ्रवराहाश्च मध्यमा तामसी गतिः॥
चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः।
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः॥
झल्ला मल्ला नटाश्चैव पुरुषाश्च कुवृत्तयः§।
द्यूतपानप्रसक्ताश्च प्रथमा¶ राजसी गतिः॥
राजानः क्षत्रियाश्चैव राज्ञश्चैव|| पुरोहिताः।

---

* एषान्त्विति पाठान्तरम्। † अधमा मध्यमाग्र्याश्चेति पाठान्तरम्। ‡ सरीसृपा इति पाठान्तरम्। § शस्त्रवृत्तय इति मूलसंहितायां पाठः। ¶ जघन्येति मूलसंहितायां पाठः। || राज्ञाश्चैवेति पाठान्तरम्।

दानयुद्धप्रधानाश्च* मध्यमा राजसी गतिः ॥
गन्धर्व्वा गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरसः सर्व्वा राजसीषूत्तमा गतिः ॥
तापसा यतयो विप्रा ये च वैमानिका† गणाः ।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥
यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः ।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥

वेदवत्सरशब्दाभ्यां तदभिमानिन्यौ देवते लक्ष्येते ।

ब्रह्मा विश्वसृजो धर्म्मो महानव्यक्तमेव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥

महान् बुद्धिः । अव्यक्तं प्रकृतिः ।

एष सर्व्वः समुद्दिष्टस्त्रिप्रकारस्य कर्म्मणः ।
त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्व्वभौतिकः ॥
यादृशेन तु भावेन यद्यत्कर्म्म निषेवते ।
तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥ इति ।

## अथ नरकाः ।

शङ्खलिखितौ ।

कुम्भीपाक रौरव महारौरव कूटशाल्मलि शिलासङ्घात वज्रकण्टकशयनान्यसिपत्रवनान्ययस्तुण्डाः पक्षिणः

* वादयुद्धप्रधानाश्चेति मूलसंहितायां पाठः । † वैनायका इति पाठान्तरम् ।

पूयशोणितकर्द्दमाः केशकश्मलशैवालाः चारनद्यो ज्वलिताङ्गारकुण्डा*स्तप्तकरम्भबालुका निस्त्रिंशमुद्गरनिपाताः सूचिप्रतोदवेध्यः अल्पोदकाः साग्निगर्त्ताः प्रदीप्तायःपिण्डलोहकण्टकशयनानि नरकपञ्जराणि† कालसूत्राणि तीक्ष्णाग्राश्च शूलाः श्यावशबलौ वज्रदंष्ट्रिणौ तप्तोदका वैतरणी एतेषु पच्यन्ते पापकर्म्मिण इति ।

याज्ञवल्क्यः ।

प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः‡ ।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥
तामिस्रं लोहशङ्कुञ्च महारौरवशाल्मली§ ।
रौरवं कुड्मलं¶ पूतिमृत्तकं कालसूत्रकम् ॥
संघातं लोहितोदञ्च सविषं|| सम्प्रतापनम् ।
महानरककाकोलसञ्जीवननदीपथम्** ॥
अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च ।
असिपत्रवनं घोरं†† तपनञ्चैकविंशतिः ॥
महापातकजैर्घोरैरुपपातकजैस्तथा ।

---

* कुल्या इति पाठान्तरम् । † मकरपञ्जराणीति पाठान्तरम् । ‡ जना इति पाठान्तरम् । § महानिरयशाल्मलीति मूलसंहितायां पाठः । ¶ कुड्मलमिति पाठान्तरम् । || सविषमिति मूलसंहितायां पाठः । ** सञ्जीवनमहापथमिति मूलसंहितायां पाठः । †† चैवेति मूलसंहितायां पाठः । चारमिति पाठान्तरम् ।

अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः ॥

यमः ।

सुरापो ब्रह्महा गोघ्नः सुवर्णस्तेयकृन्नरः ।
पतितैः सह संयुक्तः कृतघ्नो गुरुतल्पगः ॥
एते पतन्ति सर्व्वेषु नरकेष्वनुपूर्व्वशः ।
महापातकसंयुक्ता युगं तिष्ठन्त्यधोमुखाः ॥
रौरवे कूटसाक्षी च यश्च मिथ्याभिशंसति ।
कुलग्राहे पक्षवादी स चाप्यत्र पतेन्नरः ॥

कुलविषयसन्देहे तु उभाभ्यां वादिभ्यान्तु कुलग्राहे कुलज्ञाने यः प्रमाणीकृतः कुलज्ञोऽपि सन् यः पक्षं वदति स पक्षवादी-त्युच्यते ।

रौद्रे तु ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः ।
सुवर्णस्तेयकृद्यस्तु गरदश्चाग्निदायकः ॥
क्षत्रियं यो नरो हन्यात् शूकरं व्रजति तु सः ।
राजपत्नीं राजपुत्रं हत्वा राजभटान्नरान् ॥
तालके पच्यते सद्यो वैश्यं हन्ति च यो नरः ।
न्यासापहर्त्ता कुमतिर्विषमो यश्च वृत्तिषु ॥
तप्तकुम्भे स्वसृगामी गोघ्नो राजभटाश्च ये ।
उत्तमाधमवर्णयो* विंपरीतप्रवर्त्तनं ॥

वृत्तिवैषम्यं। राजभटा राजबलात् परोपद्रवकारिणः ते च तप्तकुम्भे पतन्तीत्यर्थः ।

* उत्तमाधमधर्म्मयोरिति पाठान्तरम् ।

महाज्वाले दुहितरं स्नुषाङ्गत्वा च मातरम् ।
अजाविकः सौकरिकः स्तेनश्च क्रोधनो नरः ॥
रङ्गोपजीवी पशुहा शकुनी ग्रामयाजकः ।
अभक्ष्यभक्षो वान्ताशी विप्रो धर्म्मवहिष्कृतः ।
अगम्यगामी गरदो नरकं गरलं* व्रजेत् ॥

कौतूहलादिना पक्षिपोषकः शकुनी । भोजनार्थं स्वकुलगोत्रवक्ता वान्ताशीति ।

कल्पतरौ ।

वेदविक्रयिणो ये च केशविक्रयिणो नराः ।
वेदानां दूषका ये च समयानाञ्च दूषकाः ।

समयानां शास्त्राविरुद्धानाम् ।

दूषकाः धर्म्मशास्त्राणां हेतुवादकुतूहलाः ।
एते विहङ्गमे घोरे पच्यन्ते पापकारिणः ॥
सर्व्वविक्रयकर्त्तारो मित्राणां भेदकारकाः ।
निर्मर्य्यादाः क्रोधनाश्च कदर्य्यैश्वर्य्यसंयुताः ।
कोटरे विनिपात्यन्ते बन्धुभक्षाश्च वाणिजाः ॥

दानोपभोगशून्यधनवत्त्वं कदर्य्यैश्वर्य्यम् । बन्धुपीड़ाकरा बन्धुभक्षाः । वाणिजाः निषिद्धवणिक्कर्म्मकराः ।

विमुखः पतिते चौरे मर्य्यादां यश्च लङ्घति ।

---

* सबलमिति पाठान्तरम् ।

विमुख आचारशून्यः युद्धादिषु पराङ्मुखो वा पतितेऽपि युद्ध एव विमुखादिविषये मर्य्यादां यो लङ्घयतीत्यर्थः ।

शाखामृगघ्नो गोघ्नश्च कृमिभक्षं व्रजन्ति ते ।
एकाकी मिष्टमश्नाति वञ्चयित्वा सुहृत्सुतान् ।
दारभृत्यातिथींश्चैव तथा सम्बन्धिबान्धवान् ॥
उत्सन्नपितृदेवेभ्यः पशुघाती च यो वृथा ।
लालापे नरके घोरे दुर्गन्धे पच्यते* नरः ॥
मानकर्त्ता कुलालश्च स्वर्णकारश्चिकित्सकः ।
पतन्ति नरके घोरे कूटकर्त्ता विषाशने ॥

मानकर्त्रादीनां सर्व्वेषां कूटकर्त्तेति विशेषणम् ।

देवब्राह्मणविद्विष्टा गुरुं यश्चावमन्यते ।
अवाक्‌शिरः प्रपद्यन्ते रत्नं दूषयते च यः ॥
मांसं मद्यं सुरां लाक्षां गन्धान्वस्त्रं घृतं पयः ।
विक्रीणाति य एतानि स तु पूयवहं व्रजेत् ॥
आगारदाही† गरदो दुष्टः पापकृदेव च ।
पतन्ति रुधिरार्द्रेऽपि कृतघ्ना दाम्भिका नराः ॥
शूद्रहत्यान्तु यः कुर्य्यात्तथा यो‡ गुरुदूषकः ।
सीधुकृन्मधुकृद्दण्डी कर्म्मकारो निराकृतिः ॥

---

* पात्यत इति पाठान्तरम् । † आगारारामदाही चेति पाठान्तरम् । ‡ शिष्यो व- इति पाठान्तरम् ।

दण्डी निषिद्धदण्डग्राही कर्म्मकारः कर्म्मकाराधिष्ठाता, निरा-
कृतिरस्वाध्यायः ।

अतितीव्र*स्वण्डवृत्तिरुपघातपरः शठः ।
श्येनाजीवी कालहिकः पुत्त्रोपाध्याय एव च ॥

पुत्त्र उपाध्यायो यस्य स तादृशः ।

द्यूतसंव्यवहारी च प्राणिहिंसारताश्च ये ।
वैतरण्यां निपात्यन्ते ये च वा बन्धुघातकाः ॥

इत्येवमादीन्यन्यान्यपि वाक्यान्यनुसन्धेयानि ।

## अथ कर्म्मविपाकः ।

याज्ञवल्क्यः ।

महापातकजान् घोरान्नरकान्यान्ति† दारुणान् ।
कर्म्मक्षयात्प्रजायन्ते महापातकिनस्त्विह ॥
मृगाश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ।
खरपुक्कसवेणानां सुरापो नात्र संशयः ॥

पुक्कसः प्रतिलोमनिषादेन शूद्रां जातः । अम्बष्ठां वैदे-
हकेन जातो वेणः ।

कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ।
तृणगुल्मलतानाञ्च क्रमशो गुरुतल्पगः ॥

---

* अतितीक्ष्ण इति पाठान्तरम् । † प्राप्नोति पाठान्तरम् ।

ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः ।
हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः ।
यो येन संवसेत्तेषां स तल्लिङ्गोऽभिजायते ॥

एतच्चाकामकारे कामकारे अन्या अपि दुःखबहुलाः तिर्य्यग्योन्यादिषु सञ्चरन्ति ।

तथाच मनुः ।

श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् ।
चाण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति ॥

याज्ञवल्क्यः ।

अन्नहर्त्तामयावी स्यात् मूको वागपहारकः ।
धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।
तैलहृत्तैलपायी स्यात्पूतिवक्त्रस्तु सूचकः ॥
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ।
अरण्ये निर्जले देशे* भवति ब्रह्मराक्षसः† ॥
हीनजातौ प्रजायेत पररत्नापहारकः ।
पत्रशाकं‡ शिखी हृत्वा गन्धान् छुछुन्दरिः शुभान् ॥
मूषको धान्यहारी स्याद्यानमुष्ट्रः फलङ्कपिः ।
जलं प्लवः पयः काको गृहकारीत्युपस्करम् ॥
दधि§ दंशः पलं गृध्रो माङ्गोधाग्निं वकस्तथा ।

---

* निर्जने घोर इति मूलसंहितायां पाठः । † अरण्ये निर्जले देशे जायते ब्रह्मराक्षस इति पाठान्तरम् । ‡ पत्रशाकशिखी हृत्वा मूलसंहितायां पाठः शिखीति आर्षः शिखिनं वत्वमित्यर्थः । § मध्विति पाठान्तरम् ।

श्वित्री वस्त्रं सारसञ्च चिरी लवणहारकः ॥
प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्म्मणि ।
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥

शङ्खः ।

ब्रह्महा कुष्ठी तैजसापहारी मण्डली देवब्राह्मणक्रोशकः खलतिः गरदाग्निदावुन्मत्तौ गुरुप्रतिघ्नाहन्तापस्मारी गोघ्नश्चान्धः धर्म्मपत्नीं मुक्त्वा अन्यत्र प्रवृत्तः शब्दवेधी प्राणिविशेषः कुण्डाशी भगभक्तो देवब्राह्मणस्वापहारी पाण्डुरोमी न्यासापहारी काणः स्त्रीपण्योपजीवी पण्डः कौमारदारत्यागी दुर्भगः मिष्टैकाशी वातगुल्मी अभक्ष्य-भक्षको गण्डमाली ब्राह्मणीगामी निर्वीजी क्रूरकर्म्मा वामनो वस्त्रापहारी पतङ्गः शय्यापहारी क्षपणकः शङ्ख-शुक्त्यपहारी कपाली दीपापहारी कौशिको मित्रध्रुक् क्षयी मातापित्रोराक्रोशकः खण्डनकारक इति वृद्ध-गौतमः । अनृतवाक् मुहुर्मुहुः संलग्नवाक् जलो-दरी दारत्यागी कूटसाक्षी श्लीपदी उच्छूनजङ्घचरणो विवाहविघ्नकर्त्ता च्छिन्नोष्ठः अवगोरणकर्त्ता च्छिन्नहस्तो पितृघ्नो मातृघ्नो वा नेत्रविकलः स्नुषागामी वात-वृषणः स्थूलः चतुष्पथे मूत्रविसर्ज्जने मूत्रकृच्छ्री कन्या-दूषकः षण्डः ईर्षालुर्मशकः पित्रादिविवदमानोऽप-स्मारी न्यासापहारी अनपत्यो रत्नापहारी अत्यन्तद-रिद्रो विद्याविक्रयी पुरुषः मृगः वेदविक्रयी द्वीपी बहु-

याजको जलप्लवः अयाज्ययाजको वराहः अनिमन्त्रितभोजी वायसः मिष्टैकभोजी वानरः यत्र तत्राश्नन् मार्ज्जारः कक्षवनदाही खद्योतो दारिकाचार्यो मुखविगन्धः पर्य्युषितभोजी कृमिः अदत्तादायी बलीवर्द्दो मत्सरी भ्रमरोऽग्न्युत्सादी मण्डलकुष्ठी शूद्राचार्य्यः श्वपाको गोहर्त्ता सर्पः स्नेहापहारी क्षयी अन्नापहार्य्यजीर्णी ज्ञानापहारी मूकः चाण्डालीपुक्कसीगमने अजगरः प्रव्रजितागमने मरुपिशाचः शूद्रागमने दीर्घकीटः सवर्णाभिगामी दरिद्रो जलहारी मत्स्यः क्षीरहारी बलाकः वार्द्धुषिकोऽङ्गहीनः अविक्रय्यविक्रयी गृध्रो राजमहिषीगामी नपुंसको राजाक्रोशको गर्द्दभो गोगामी मण्डूकः अनध्यायेऽध्ययने शृगालः परद्रव्यापहारी परप्रेष्यो मत्स्यवधी गर्भवासीत्येके अनूर्द्ध्वगामिन इति।

अनूर्द्ध्वगामिनो नरकगामिन इत्यर्थः।

मनुः।

स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः।
एतेषामपि जन्तूनां भार्य्यात्वमुपयान्ति ताः॥ इति।

## अथ प्रायश्चित्तकर्त्तव्यतानिर्णयः।

गौतमः।

अथ खल्वयं पुरुषः पापकर्म्मणा लिप्यते। यथैतदया-

ज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनमिति तत्र प्रायश्चित्तं कुर्य्यान्न कुर्य्यादिति मीमांसान्ते न कुर्य्यादित्याहुः। नहि कर्म्म क्षीयत इति कुर्य्यादित्यपरं पुनस्तोमेनेष्ट्वा पुनः सवनमायान्तीति विज्ञायते। व्रात्यस्तोमेनेष्ट्वा तरति सर्व्वं पाप्मानं तरति ब्रह्महत्यायोऽश्वमेधेन यजते अग्निष्टुताभिशस्यमानं याजयेदिति च।

शिष्टस्याक्रिया विहितस्याकरणे नहि कर्म्म क्षीयत इति फलोपभोगमन्तरेणेत्यर्थः। कुर्य्यादित्यपरमिति सिद्धान्त इत्यर्थः। पुनस्तोमेनेत्यादि श्रुत्युक्तेन प्रायश्चित्तरूपेण पुनस्तोमेनेष्ट्वा पुनरपि सवनं प्रातर्मध्यन्दिनं सायं सवनसाध्यं कर्म्म आयान्ति तत् कर्म्मानुष्ठानयोग्या भवन्तीत्यर्थः।

याज्ञवल्क्यः।

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥
तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति॥

हारीतः।

यथा क्षारोपस्वेदक्षण्डनिर्णोदनप्रक्षालनादिभिर्वासांसि शुध्यन्ति एवं तपोयज्ञदानैः पापकृतः शुद्धिमुपयान्ति ध्मायमाना इवाग्नौ धातवो दोषेभ्यस्तस्मादिश्रम्भात्स्नेहाल्लोभात् प्रमादादशुभङ्कृत्वा सद्यः शौचं समा-

चरेत्* । न ह्यशुद्धानामयं लोको न पर इत्याचार्य्याः ।
एवं ह्याह ।

कर्म्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।
तदाभ्यासो हरत्येनं तस्मात्कल्याणमभ्यसेत् ॥ इति ।

पापनिर्णोदनं तुलाधिरोपणादिना तत्क्लेदनम् ।
अङ्गिराः ।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥
पापङ्कृत्वाभिमन्येत नाहमस्मीति पूरुषः ।
चिकीर्षन्नेव कल्याणं श्रद्दधानोऽनसूयकः ॥
वाङ्मनःकर्म्मसम्भूतं मन आविष्करोति यः ।
विकर्म्मणा तप्यमानः पापाद्विपरिमुच्यते ॥
उदयन्†नुद्यदादित्यस्तमः सर्व्वं व्यपोहति ।
तद्वत्कल्याणमातिष्ठन् सर्व्वं पापं व्यपोहति ॥

अत्र कल्याणशब्दः प्रायश्चित्तपरः ।

## अथ कामाकामकृतपापेषु प्रायश्चित्तकर्त्तव्यताविकल्पः ।

तत्र याज्ञवल्क्यः ।

प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्य्यस्तु वचनादिह जायते ॥

---

* आरभेदिति ग्रन्थान्तरीयः पाठः । † उद्गच्छन्निति शूलपाणिसम्मतः पाठः ।

अज्ञानकृतमेव ब्रह्महत्यादिपापं प्रायश्चित्तैर्वक्ष्यमाणलक्षणैरप-गच्छति। कामतो ज्ञानकृतमहापातकादि प्रायश्चित्तैर्नापैति। अपि तु प्रायश्चित्ते कृते वचनादिह लोके व्यवहार्य्यो भवती-त्यर्थः। एतच्च कामकृतमहापातकानां मरणान्तिकप्राय-श्चित्तव्यतिरिक्तविषयम्। मरणान्तिकप्रायश्चित्ते कृते इह लोके प्रयोजनाभावात् पारलौकिकमेव प्रयोजनं कल्पनीयम्। एतच्च पापापनोदनमेवेति मरणान्तिकैः पापमपगच्छतीति सिद्धम्। छागलेयोऽपि।

प्रायश्चित्तमकामानां कामावाप्तौ न विद्यते।
उपपातक एव स्यात्तथा चात्मोपघातने॥

अस्यार्थः। कामावाप्तौ ज्ञानपूर्व्वकपापे नरकभोगनिवारकं प्रायश्चित्तं न विद्यते। उपपातकात्महननयोस्तु ज्ञानपूर्व्व-कत्वेऽपि स्याद्विद्यत एवेति आत्महननार्थं विषभक्षणे कृते यदि जीवति तदा प्रायश्चित्तं विद्यते यदा मृतः तदा तद्वितस्तुना कर्त्तव्यमित्युभयथापि प्रायश्चित्तं विद्यते इति न विरोधः।

मनुः।

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः।
कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्॥
अकामतः कृतं पापं वेदाभ्यासेन शुध्यति।
कामतस्तु कृते मोहात्प्रायश्चित्तैः पृथक् पृथक्*॥

* पृथग्विधैरिति शूलपाणिसम्मतः पाठः।

इन्द्रो यतीन् शालावृकेभ्यः प्रायश्चित्त*मश्लीलवागभ्यवदत् स प्रजापतिमुपाधावत् तस्मायमुपहव्याख्यं प्रायच्छदित्यादि श्रुतिनिदर्शनम्। तस्मात्कामकारकृतेऽपि प्रायश्चित्तमस्तीत्यर्थः श्रुतेस्त्वयन्तात्पर्य्यार्थः शालावृकेभ्यः श्वविशेषेभ्यो यतीन् बुद्धिपूर्व्वकं खादयितुं प्रदत्तवते इन्द्राय प्रजापतिरुपहव्याख्यं कर्म्म प्रायश्चित्तत्वेन दत्तवान् तस्मात्कामकारकृतेऽपि प्रायश्चित्तमस्तीति।

हारीतः।

मनसा कल्पयति वाचा वदति कर्म्मणा करोतीति।
कामकृतमन्यश्नन्यनशनवदभिघातकं भवितव्यं तस्मादकामकृते प्रायश्चित्तं कामकृतेऽप्येके। इति।

देवलः।

यस्त्वादनभिसन्धाय पापकर्म्म सकृत्कृतम्।
तस्येयं निष्कृतिः प्रोक्ता धर्म्मविद्भिर्मनीषिभिः॥
विधिः प्राथमिकात्तस्माद्द्वितीये द्विगुणं स्मृतम्†।
तृतीये त्रिगुणं कृच्छ्रं चतुर्थे नास्ति निष्कृतिः॥
अभिसन्धिकृते पापे सकृदा नेह निष्कृतिः।
अपरे निष्कृतिं प्राहुरभिसन्धिकृतेऽपि च॥

---

* इन्द्रोयतीन् शालावृकेभ्यः प्रायच्छत् तमश्लीलवागिति शूलपाणिसम्मतः पाठः एवं क्वचित् पुस्तकेऽपि दृश्यते। † कृतमिति पाठान्तरम्।

अत्र कृच्छ्रमिति विहितप्रायश्चित्तोपलक्षणम्। चतुर्थे नास्ति निष्कृतिरित्यस्यायमर्थः। यथा अज्ञानात् द्वितीयवारकृते पापे द्विगुणं प्रायश्चित्तम्। तथा तृतीयवारे त्रिगुणम्। एवं चतुर्थवारे कृते पूर्व्वन्यायेन चतुर्गुणं प्रायश्चित्तेन निष्कृतिर्न अपितु अधिकेनैवेति केचन। अपरे तु चतुर्थे तु प्रायश्चित्तमेव नास्तीति वदन्ति। वयन्तु ब्रूमः। प्रथममभिसन्धिकृते महापातके द्वादशवार्षिकं द्वितीयवारे कृते द्वे तृतीयवारे कृते त्रीणि चतुर्थे चत्वारि इति द्वादशवार्षिकानि दश भवन्ति। एतेषामाचरणकालो विंशत्युत्तरशतं शरदो भवन्तीति। एतावतायुषोऽभावात् कर्त्तुमशक्यत्वेन प्रायश्चित्ताभावो न तु स्वरूपत एव प्रायश्चित्ताभाव इति। कासु च श्रुतिस्मृतिषु बुद्धिपूर्व्वकृते प्रायश्चित्तं नास्तीत्युक्तं कासु च विद्यत इति। तत्रेयं व्यवस्था। मरणान्तिकप्रायश्चित्तं सर्व्वत्र महापातकेषु विद्यत एव। कामात्तु द्विगुणं प्रोक्तमित्यादिवचनबलाद्द्वादशवार्षिकादिद्वैगुण्यादियुक्तप्रायश्चित्तमपि विद्यते। तेन प्रायश्चित्तेन च इह लोके व्यवहार्य्यत्वनित्यकर्म्मानुष्ठानरतिजनकपापशक्त्यपनयनं भवति। तथाच कर्म्मस्वधिकाराद्विहितकर्म्मणा प्रत्यवायाभावेन पापान्तरं नोत्पद्यते। अतः प्रायश्चित्तमस्तीति प्रायश्चित्तास्तित्वप्रतिपादकवचनानामभिप्रायः परलोके या नरकोपभोगहेतुभूता पापशक्तिस्तस्या अनपायत्वात् तच्छक्त्यपनायकप्रायश्चित्ताभावात्। प्रायश्चित्तं नास्तीति प्रायश्चित्ताभावप्रतिपादकवचनानामभिप्रायः।

## अथ कृच्छ्रादिलक्षणानि ।

तत्र पादकृच्छ्रमाह याज्ञवल्क्यः ।

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्त्तितः ॥

एकभक्तेन दिवैवोक्तकाले एककालकृतभोजनेन तथा रात्र्युक्तकाले सकृत्कृतभोजनेन नक्तेन दिवारात्रौ त्वप्रार्थितेन याचनभोजने*नायाचितेन परकीयान्नस्य स्वीयान्नस्य च याचनं न कुर्य्यात् ।

तथाच गौतमः ।

अथापरं त्र्यहं न कञ्चन याचेतेति न रात्रौ न दिवा भोजनमुपवासः केचन एवं चतुरहःसाध्यः पादकृच्छ्रः प्रकीर्त्तितः ।

एकभक्तादौ ग्राससंख्यानियमः पराशरेणोक्तः ।

सायन्तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्व्विंशतिर्व्वा याच्या परं निरशनं स्मृतम् ॥

सायं नक्ते प्रातरेकभक्ते ।

आपस्तम्बस्तु प्रकारान्तरेणाह ।

---

* बहुपुस्तकेषु दर्शनात् रचितः परन्तु असंलग्न एव ॥

सायं द्वाविंशतिः ग्रासाः प्रातः षड्विंशतिस्तथा* ।

चतुर्विंशतिर्वाऽयाच्याः† परं निरशनं स्मृतम्‡ ॥ इति ।

कुक्कुटाण्डप्रमाणाः स्युर्यथा चास्यं विशेत्सुखम् ॥ इति ।

अनयोश्च पक्षयोः शक्त्यपेक्षया विकल्प एवमुत्तरत्रापि शक्त्यपेक्षया विकल्पो विज्ञेयः । आपस्तम्बस्तु चतुर्धा प्राजापत्यं कृच्छ्रं विभज्य वर्णानुक्रमेण पादकृच्छ्रव्यवस्थामाह ।

त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् ।

सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥

प्रातःपादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ।

अयाचितन्तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम् ॥

प्रातःपादः एकभक्तत्रयं सायंपादो नक्तत्रयम् । अयाचितम् अयाचितत्रयं त्रिरात्रमुपवासत्रयं अयाचितपाद उपवासपादश्चेति पादद्वयं मिलित्वा अर्द्धकृच्छ्रः नक्तपादरहितमवशिष्टं पादत्रयं पादोनकृच्छ्रः ।

यदाह स एव ।

सायम्प्रातर्विनार्द्धं स्यात्पादोनं नक्तवर्ज्जितम् । इति ।

अर्द्धकृच्छ्रस्य प्रकारान्तरमप्याह स एव ।

सायम्प्रातस्तथैवैकं दिनद्वयमयाचितम् ।

दिनद्वयञ्च नाश्नीयात्कृच्छ्रार्द्धं तद्विधीयते ॥

---

* स्मृतेति पाठान्तरम् । † अयाचिते चतुर्विंशः इति शूलपाणिसम्मतः पाठः ।
‡ परे निरशनास्त्वय इति पाठान्तरम् ।

## अथ प्राजापत्यकृच्छ्रः ।

याज्ञवल्क्यः ।

यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ।

यथोक्तो दिनचतुष्टयात्मकः पादकृच्छ्रः स एवायमित्यनेन निर्दिश्यते । अयं पादकृच्छ्रो यथाकथञ्चित्त्रिगुणः प्राजापत्यो भवति । यथाकथञ्चिदित्यनेन चत्वारः पक्षाः उपात्ता एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैवायमित्येतरक्रमेणैकभक्तादीनामानुलोम्येन स्वस्थानवृद्धिरित्येकः । प्रातिलोम्येन स्वस्थानवृद्धिरिति द्वितीयः । दण्डकलितवदावृत्तिरिति तृतीयः । सर्व्वत्र जयादितश्चतुर्थः ।

तत्राद्यं पक्षमाह मनुः ।

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परञ्च नाश्नीयात्प्राजापत्यञ्चरन्नरः* ॥

अत्रैकभक्तादीनां स्वस्थान एवाभिवृद्धत्वात् स्वस्थानवृद्धिः ।

द्वितीयमाह वशिष्ठः ।

प्रातिलोम्यञ्चरेयुस्ताः कृच्छ्रं चान्द्रायणोत्तरम् ।

उपवासत्रयमयाचितत्रयं नक्तत्रयमेकभक्तत्रयमिति प्रातिलोम्यम् ।

तृतीयमपि स एवाह ।

---

* चरन् द्विज इति पाठान्तरम् ।

अहः प्रातरहर्नक्तमहरेकमयाचितम् ।
अहः पराकं तत्रैकमेवं चतुरहो परौ ॥

पराकशब्द उपवासपरः ।

तथा ।

अनुग्रहार्थं विप्राणां मनुर्धर्म्मभृतां वरः ।
बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह ॥ इति ।

चतुर्थं पञ्चमाह अङ्गिराः ।

तस्माच्छूद्रं समासाद्य यथा धर्म्मपथे स्थितम् ।
प्रायश्चित्तम्प्रदातव्यं जपहोमविवर्ज्जितम् ॥

जपाद्यधिकारवदुद्देश्येतिकर्त्तव्यताविशेषमाह गौतमः ।

अथातः कृच्छ्रान् व्याख्यास्यामो हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयात्*। अथापरं त्र्यहं नक्तं भुञ्जीताथापरं त्र्यहम् न कथञ्चन याचेताथापरं त्र्यहमुपवासी तिष्ठेदहनि रात्रावासीत क्षिप्रकामः सत्यं वदेदनार्य्यैर्न सम्भाषेत रौरवं यौधाजयं जपन्नित्यं प्रयुञ्जीतानुसवनमुदकोपस्पर्शमापो हिष्ठेति तिसृभिः†

* रात्रीर्नयेदिति शूलपाणिस्मार्त्तसम्मतः पाठः । † आपो हिष्ठामयोभुवस्ता न ऊर्ज्जे दधातन महेरणाय चक्षसे यो वः शिवतमो रसस्तस्य भाजयतेह न उशतीरिव मातरः तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ आपो जनयथा च नः ।

पवित्रवतीभिर्मार्ज्जयीत। हिरण्यवर्णाः शुचयः पावका‡ इत्यष्टाभिरथोदतर्पणम्। नमो ह्रमाय संह्रमाय धुन्वते तापसाय पुनर्व्वसवे नमो नमो मौञ्ज्यायौर्म्याय सुविन्दाय वसुविन्दाय वसुदे सर्व्वविन्दाय नमः। पराय सुपराय महापराय पारदाय पारप्लवे नमो रुद्राय पशुपतये महते देवाय त्र्यम्बकाय एकचरणायाधिपतये हराय सर्व्वेशानाय उग्राय वज्रिणेऽघृणिने कपर्द्दिने नमः। सूर्य्यायादित्याय नमो नीलग्रीवाय शितिकण्ठाय नमः। कृष्णाय पिङ्गलाय नमो ज्येष्ठाय श्रेष्ठायेन्द्राय हरिकेशाय ऊर्द्ध्वरेतसे नमः। सत्याय

---

‡ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भं दधिरे विरूपास्ता न आपः शᳫं स्योना भवन्तु (१)॥ यासाᳫं राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता न आपः शᳫं स्योना भवन्तु (२)॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति ॥ १ ॥ शुक्रास्ता न आपः शᳫं स्योना भवन्तु (३)॥ शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोप स्पृशत त्वचं मे। सर्व्वाᳫं अग्नीᳫं रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त (४)॥ यददः सम्प्रयतीरहावनदता हते। तस्मादा आ नद्यो नामस्थ तावो नामानि सिन्धवः (५)॥ यत्प्रेषिता वरुणेन ताः शीभᳫं समवल्गत ॥ २ ॥ तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थ न (६)॥ अपकामᳫं स्यन्दमाना अवीवरत वो हिकम्। इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हितम् (७)॥ एको देवो अप्यतिष्ठत् स्यन्दमाना यथावशम्। उदानिषुर्महीरिति तस्मादुदकमुच्यते (८)॥ कृष्णयजुः ५ अ।

पावकाय पावकवर्णाय कामाय कामरूपिणे नमो दीप्ताय दीप्तरूपिणे नमः। सौम्याय पुरुषाय नमः। सुमनः पुरुषाय मध्यमपुरुषोत्तमपुरुषाय ब्रह्मचारिणे नमः। चन्द्रललाटाय कृत्तिवाससे नमः। इति। तथा एतदेवादित्योपस्थानमेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वा एताभ्यो जुहुयात्। अग्नये स्वाहा सोमाय स्वाहा अग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतये अग्नये स्विष्टकृते इत्यन्ते ब्राह्मणभोजनमिति।

अस्यार्थः। हविष्यान् प्रातराशान् भुक्ता तिस्रो रात्रीर्नाश्नीयादिति प्रातराशानेकभक्तानिति्वैकभक्तदिनेषु तिसृष्वपि तिस्रो रात्रीर्नाश्नीयाद्रात्रिषु भोजनं न कुर्य्यात्। तिष्ठेदहनि रात्रावासीत क्षिप्रकाम इति यस्तु प्राजापत्यकृच्छ्रत्रयोपनोद्यात्पापात्क्षिप्रमेकेनैव कृच्छ्रेण विमुक्तो भविष्यामीत्येवं कामयते अयमहन्यवश्यकर्म्मा विरुद्धेषु कालेषु तिष्ठेद्रात्रावासीत तथा रौरवं*

---

२।   ।   १   ५   १।   ।।   ।   ।।
* रौरवम्। पुनानः सोमा३धारा२३४या। आपो वसानो अर्षस्यारत्नधायोनि-

३२   १ २   २   १।   ।।   २   १ २   २
मृतस्य सा२इदसाइ। ओहा३उवा। उत्सो देवो हिरा२३हाइ। ओहा३उवा।

१   २   ४५   ४
ण्यया। औ३होवा। ही५इ। डा।

यौधाजयं* सामजपं कुर्य्यात्। अनुसवनं सन्ध्यात्रय उपस्पर्शनं स्नानं त्रिसवनस्नानमित्यर्थः। हिरण्यवर्णादृत्यष्टाभिरपि मार्ज्जनमेव। एतच्च मार्ज्जनं कुर्य्यात्स्नानानन्तरमेव।

## अथोदकतर्पणम्।

तत्र मन्त्राः।

नमो ह्रमायेत्यादयः।

अत्र मन्त्रसन्दर्भस्यादावन्ते च नमःशब्दश्रवणान्मन्त्रादावन्ते च नमःशब्दो भवति तथा चैवं मन्त्रप्रयोगः। नमो ह्रमाय संह्रमाय धुन्वते तापसाय पुनर्व्वसवे नमः इति। एवं नमो मौञ्जग्रायेत्यारभ्य सर्व्वविन्दाय नमः इत्यन्तमेको मन्त्र एवमुत्तरत्रापि द्रष्टव्यम्। एवं त्रयोदशमन्त्रैस्तर्पणं कुर्य्यात्। ततश्च एतदेवादित्यस्योपस्थानं एतदेव मन्त्रजातमादित्योपस्थानम्। आदित्योपस्थानसाधनं कार्य्यकारणयोरभेदोपचारः तर्पणानन्तरमेतैरेव मन्त्रैरादित्योपस्थानं कुर्य्यादित्यर्थः। एता एव

---

३२ २ ४ ५ २ ३ ५ १ २
* यौधाजयम्। पुना३१। ना३ः सी। म। धारा२।३।४या। आपी३।
१ २ २ ३ ५ २। १२१ २। १
वसा२। न आ३।४।५। धा२।३।४। सी। आरात्मधाः। यो। नि। भ्रता२।
३ २ ३ ५ २ १ ३२ ३ ५
स्व सा३४५इ। दा२३४सी। उत्सा२ः। दाइवी२। हिरा३४५। ण्या२३४याः॥

सामवेदसंहिता [दशरात्रपर्व्व १ प्र. १अ. २।३ सा.]।

आज्याहुतयः अत्राप्यभेदोपचार एतैरेव मन्त्रैराज्यहोमः कर्त्तव्यः स च लौकिकाग्निं प्रतिष्ठाप्य एवं प्रतिदिनं कृत्वा द्वादश-रात्रस्यान्ते चरुं श्रपयित्वा एताभ्यो वक्ष्यमाणाग्न्यादिदेवताभ्यो जुहुयात । नव मन्त्राः स्वाहाकारान्ता भवन्ति ततश्च ब्राह्मण-भोजनमिति । एतच्च गौतमीयप्राजापत्यं याज्ञवल्क्योक्त-प्राजापत्यद्वयस्थाने द्रष्टव्यमितिकर्त्तव्यताबाहुल्यात् चिप्रकाम-इति विशेषोपादानाच्च ।

## अथातिकृच्छ्रः ।

मनुः ।

एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्व्ववत् ।
त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन्द्विजः ॥

त्रीणि त्र्यहाणि नव दिनानि पूर्व्ववत् । एकभक्तादिकाले तन्नियमयुक्तः सन्नित्यर्थः ।

याज्ञवल्क्यः ।

अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ।

अयमेव पूर्व्वोक्तप्राजापत्यधर्म्म एव । अयन्तु विशेषः । एक-भक्तनक्तायाचितदिनेषु पाणिपूरणमन्नं प्रसृतिपूरणमात्रमन्नं भुञ्जीत न तु पूर्व्वोक्तद्वाविंशत्यादिग्रासानिति अत्र च पाणि-पूरणमात्रमन्नमेव विधेयं न तु भोजनम् । अतो येषु दिनेषु प्राजापत्यभोजनं प्राप्तं तदनुवादेन पाणिपूरान्नता विधीयते

इति नोपवासदिनेषु पाणिपूरान्नभोजनप्राप्तिः। मनुयाज्ञवल्क्योक्तपाणिपूरणान्नग्रासयोः शक्त्यपेक्षो विकल्पः पापापेक्षो वा। अतिकृच्छ्रपादादिव्यवस्था प्राजापत्यवदेव।

## अथ कृच्छ्रातिकृच्छ्रः।

गौतमः।

> अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः इति द्वादशरात्रमुदकेनैव वर्त्तनं नान्नेन।

यमः।

> एकैकं पिण्डमश्नीयात्त्र्यहं कल्ये त्र्यहं निशि।
> अयाचितं त्र्यहं पिण्डं वायुभक्ष्यस्त्र्यहं परम्॥
> अतिकृच्छ्रं चरेदेतत्पवित्रं पापनाशनम्।
> चतुर्विंशतिरात्रन्तु नियतात्मा जितेन्द्रियः।
> कृच्छ्रातिकृच्छ्रं कुर्वीत एकस्थाने द्विजोत्तमः॥ इति।

कल्ये प्रातः एकभक्तकाल इति यावत्। एकस्थान इति वचनात् चतुर्व्विंशतिरात्रसाध्यमतिकृच्छ्रद्वयं कृच्छ्रातिकृच्छ्रात्मक एकः कृच्छ्रो भवतीत्यर्थः॥

याज्ञवल्क्यः।

> कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिः।

यमेन चतुर्विंशतिरात्रसाध्ये कृच्छ्रातिकृच्छ्रभोजनदिनेष्वेकैकग्रासविधानाद्दुग्धभोजनेऽपि पत्रपुटिकादिभिः ग्रासपरिमाणं

कृत्वा एकग्रासपर्य्याप्तं दुग्धमश्नीयादेवं कर्त्तुमशक्तश्चेत्कृच्छ्रप्रकृति-भूतप्राजापत्योक्तरीत्या द्वाविंशत्याद्यादिग्राससंख्यया उपात्तल-मितावत्। अथवा यावता प्राणधारी भवति तावद्ग्राह्यमनुक्त-द्रव्यपरिमाणेषु सर्व्वत्रैवं ग्राह्यं प्राणयात्रामात्रमिवेति गौतमा-द्युक्तपक्षेषु शक्त्यपेक्षया विकल्पः एवमुत्तरत्रापि द्रष्टव्यम्।

## अथ पराकः।

याज्ञवल्क्यः।

द्वादशाहोपवासेन पराकः परिकीर्त्तितः।

## अथ सौम्यकृच्छ्रः।

पिण्याकं शक्तवस्तक्रं चतुर्थेऽहनि भोजनम्।
वासो वै दक्षिणां दद्यात्सौम्योऽयङ्कृच्छ्र उच्यते॥

पिण्याकं निःसृततैलतिलपिण्डी आचामः ओदनस्रावः पिण्या-कादिकं प्राणयात्रोपयुक्तं ग्राह्यं। नाधिकम्*।

याज्ञवल्क्यः।

पिण्याकाचामतक्राम्बुशक्तूनां प्रतिवासरम्।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते॥

एतच्च षड्दिनसाध्यम्।

* नाधिक्यमिति पाठान्तरम्।

## अथ तुलापुरुषाख्यकृच्छ्रः ।

याज्ञवल्क्यः ।

एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाह्निकः ॥

एषां पिण्याकाचामतक्राम्बुशक्तूनां पञ्चानां प्रतीकं क्रमेण त्रिरात्रमभ्यासात्पञ्चदशाह्निकस्तुलापुरुषसंज्ञकः कृच्छ्रो भवति । यमस्त्वेकविंशतिरात्रसाध्यं तुलापुरुषमाह ।

आचाममथ पिण्याकं तक्रं चोदकशक्तवः* ।
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहं त्र्यहम् ।

वायुभक्षस्त्र्यहं द्व्यहमित्यपि पाठः ।

एकविंशतिरात्रसाध्यस्तु तुलापुरुष उच्यते । इति ।

हारीतः ।

अथान्वितनयोक्ततुलापुरुषस्य कल्पं व्याख्यास्यामः ।
अयाज्ययाजनङ्कृत्वा प्राश्य मूत्रपुरीषके ।
अप्रतिग्रह्यमादाय† याजयित्वा च निन्दितान् ॥
विनायकोपसृष्टस्य महाव्याधिक्षतस्य च ।
एतत्कृच्छ्रं‡ तुलापुरुषं महापातकनाशनम् ।
स्वर्गद्वारमिदं पुण्यं महादेवेन निर्म्मितम् ॥

---

* एतानित्यध्याहारेण प्रयुञ्जान इत्यस्यान्वयः । † नास्ति प्रतिग्रहो यस्य गवादि ।
‡ एकं कृच्छ्रमिति क्वचित् पुस्तके पाठः ।

आचाममथ पिण्याकं तक्रञ्चोदकशक्तुकान् ।
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्ष्यस्त्र्यहं परम् ॥
वाक्पाद्वैनरजोभि*र्हतानि निहतानि च ।
आचामस्तानि निर्हन्ति नवश्राद्धञ्च सूतकम् ॥
तैलञ्च दारुणं किञ्चित्क्लेशकीटहतञ्च यत् ।
प्राश्य मूत्रपुरीषञ्च ब्रह्महस्पृष्टमेव च ।
पिण्याकं तानि निर्हन्ति अस्थि भित्त्वा तु यत्स्थितम् ॥
आचामेषु च ये दोषाः स्नेहदोषाश्च ये क्वचित् ।
खरोष्ट्रमुखसंस्पृष्टं मद्यसंस्पृष्टमेव च ।
तक्रेण तानि निर्हन्ति यच्चान्यत्श्वावलेहितम्† ॥
कनकश्च‡ तिलागावो भूमिराच्छादनं स्त्रियः ।
सर्व्वं पुनाति धर्म्मात्मा गूढ़ञ्चोदकशक्तुभिः ॥

ब्रह्महत्यां भ्रूणहत्यां स्वर्णस्तेयं सुरापानं गुरुदाराभिगमनं कन्यादूषणं क्लीवाभिगमनं वायुभक्षः पुनाति तत् ।

गन्धोशीरमयौ कार्य्यौ पुरुषौ पलसम्मितौ ।
नदीमृत्तिकया वापि पुरुषौ द्वौ तु कारयेत् ॥

महापशुर्येन शरेण विद्धो
यद्वापि शस्त्रमुभयोर्लब्धलक्ष्यमिति वा पाठः ।

---

* चैलरजोभिरिति पाठान्तरम् । पाठद्वयमपि असंलग्नमेव परन्तु बहुषु पुस्तकेषु दर्शनात् रचितम् । † श्वावलीकितमिति पाठान्तरम् । ‡ कनकाश्वतिला इति क्वचित् पुस्तके पाठः ।

यच्चापि पशुभच्चयोर्लब्धलच्चं
तेनायसीं सुक्तां कारयित्वा
प्रादेशमात्रामुभयोत्क्रान्तशिक्याम् ॥
सौवर्णीं राजतीं वापि तुलां देवीन्तु कारयेत् ।
अपि चन्दनवृक्षस्य खदिरस्यापि कारयेत् ।
तस्यालाभे तुला कार्य्या तथा वाह्युपपद्यते ।

यः पुरुषः पिङ्गलो बभ्रुर्हलमुषलवज्रपाणिस्तं* महापुरुषं पिङ्गलं बभ्रुं हलमुषलवज्रपाणिं†मावाहयिष्यामि स्वागत एव हि नाग एहि कृष्णाजिन एहि स्वागतमनु स्वागतं भवति तुलापुरुषाय महादेवाय इदमर्घ्यमिदं पाद्यमिदमाचमनीयमिदमासनञ्च प्रसीद गन्धमाल्यधूपदीपं प्रतिग्टहाण यदेनो मम रुद्रः सुमना भव ।

अथ तुलामभिमन्त्रयेत् ।

ऋषिसत्यं देवसत्यं ब्रह्मसत्यं यत्सत्यं तेन सत्येन सत्यवादिनि ।
देशानां सम्पदं ब्रूहि कं देशं वर्द्धयिष्यसि ।
वीजानां सम्पदं ब्रूहि किं वीजं वर्द्धयिष्यसि ॥
राज्ञाञ्च सम्पदं ब्रूहि कं नृपं वर्द्धयिष्यसि ।
अस्माकं सम्पदं ब्रूहि किमस्माकं भविष्यसि ॥
यदा तु गुरुमात्मानमसकृत्तुलया धृतम् ।
परञ्चैव लघुं मन्ये तदा कर्म्म समाचरेत् ॥

---

* चक्रपाणिरिति क्वचित् पुस्तके पाठः । † चक्रपाणि इति क्वचित् पाठः ।

अग्नये पृथिव्यधिपतये स्वाहा सूर्य्याय दिवाधिपतये स्वाहा । सोमाय नक्षत्राधिपतये स्वाहा । कुवेराय यक्षाधिपतये स्वाहा । इन्द्राय देवाधिपतये स्वाहा ब्रह्मणे त्रैलोक्याधिपतये स्वाहा देव्यै भगाधिपतये स्वाहा शालकटङ्काय स्वाहा कुष्माण्ड-राजपुत्राय स्वाहा महाविनायकाय वक्रतुण्डाय गणानां पतये स्वाहा धर्म्माय स्वाहा अधर्म्माय स्वाहा तुलायै स्वाहा तुलापुरुषाय स्वाहा प्रजापतिदेवाय मरुद्भिः सदैव पुनराग-मनाय स्वाहा सकृच्चरित्वा शुचिकर्म्मणो भवन्ति द्विश्चरित्वा गणाधिपत्यमवाप्नोति त्रिः कृत्वा महादेवस्यार्द्धासनं प्राप्नोति । आषाढ्यां कार्त्तिक्यां फाल्गुन्यां पुष्ये वा नक्षत्रे एषां विहितो धर्म्म इति ।

यमः ।

अथातो भगवतस्तुलापुरुषस्य कल्पं व्याख्यास्यामः ।

अभक्ष्यभक्षणङ्कृत्वा विकर्म्मकरणन्तथा ।
प्रसूतानां द्विजातीनां सङ्कीर्णासु च योनिषु ॥

तथा निषिद्धयोनिषु* च प्रसूतानामुत्पादितापत्यानाम् ।

प्राश्य मूत्रपुरीषञ्च भोजयित्वा च निन्दितान् ।
अगम्यागमनङ्कृत्वा दूषयित्वा च कन्यकाम् ॥
विनायकोपसृष्टस्य महाव्याधिहतस्य च ।
पाप्मना च गृहीतस्य सिद्धिहीनस्य वा पुनः ।

---

* प्रतिलोमयोनिषु—इति पुस्तकान्तरे पाठः ।

स्वर्गमार्गावलम्बस्य न स्यादस्मात्किमप्यलम्* ॥

स्वर्गमार्गावलम्बस्य स्वर्गेच्छोः ।

इदं व्रतं दुराधर्षं महापातकनाशनम् ।
स्वर्गद्वारमिदं श्रेष्ठं महादेवप्रचोदितम् ॥
वाङ्मनोभ्याञ्च कायेन यानि पापानि देहिनः ।
आचामस्तानि निर्हन्ति नवश्राद्धञ्च सूतकम् ॥
तैलस्य दारुणं किञ्चित्केशपचिह्नतञ्च† यत् ।
पिण्याकस्तानि निर्हन्ति अस्थि भित्त्वा च वत्स्थितम् ॥

तैलस्य भक्ष्यमाणस्य तथाच निषिद्धदिने अभ्यङ्गादिषु योज्यमानस्य दारुणमलक्ष्मीकरं यत्पापं केशपचिह्नतं‡ केशपच्युपहतं अस्थि भित्त्वा स्थितं यत् पूर्व्वकृतं पापं दीर्घकालत्वाद्दृढं संस्थितं यदस्थि भित्त्वा स्थितमित्युच्यते ।

आहारेषु च ये दोषाः सर्पिर्दोषाश्च ये क्वचित् ।
तक्रेण तानि पूतानि श्वभिर्यच्चावलोकितम् ॥
कनकञ्च तिला गावो भूमिराच्छादनं स्त्रियः ।
सर्व्वं पुनाति धर्म्मात्मा तथैवोदककुम्भिः ॥

कनकादिप्रतिग्रहजनितं पापं पुनातीत्यर्थः ।

वाचा कृतङ्कर्म्मकृतं§ मनसा दुर्विचिन्तितम् ।
सर्व्वमेतत्त्रिरात्रेण पुनातीति न संशयः ॥

---

* निर्व्वेदोपहतस्य च इति क्वचित् पुस्तके पाठः । † केशपचह्नतं इति क्वचित्पाठः । ‡ केशपचह्नतं केशपचोपहतमिति क्वचित्पाठः । § कार्म्मणा च इति पाठान्तरम् ।

अयाज्ययाजनं चौर्य्यं* कन्यायामथ दूषणम्।
यच्च गोमैथुनात्पापं वायुं पीत्वा पुनाति तत्॥

आहाराग्रमपि जुहोति आचामादिको य आहारस्तस्याग्रं ग्रासचतुष्टयं कुक्कुटाण्डपरिमितग्रासानुमानेन ग्रासचतुष्टयं जुहोति। आहाराग्रमपि जुहोति इत्यपिशब्दोपादानात् आज्यहोमोऽपि गम्यते†। अग्नये पृथिव्यधिपतये स्वाहा सूर्य्याय दिवाधिपतये स्वाहा इन्द्राय सुराधिपतये स्वाहा यमाय प्रेताधिपतये स्वाहा वरुणाय पाशाधिपतये स्वाहा महासेनाय सेनाधिपतये‡ स्वाहा रुद्राय भूताधिपतये स्वाहा ब्रह्मणे लोकाधिपतये स्वाहा विष्णवे सर्व्वाधिपतये स्वाहा।

येन देवाः पवित्रेण
तुलापुरुषमारुह्य पुनरुद्धृताः।
तमहं पवित्रं§ पवित्रेण
तुलापुरुषमावाहयिष्यामि¶ स्वाहा॥

करालं पिङ्गलं बभ्रुं विश्वरूपमुमापतिम्।
यो हि वेदान्ततो जातस्त्वमतश्च महामतिः॥

अभ्भस्य पारे भुवनस्य मध्ये
नाकस्य पृष्ठे महता महिमानं महीयते।

---

* अयाज्ययाजनञ्चैव इति क्वचित्पाठः। † आज्यहोमोऽभिगम्यते इति क्वचित् पुस्तके पाठः। ‡ स्कन्दाय महासेनाधिपतये इति क्वचित्पाठः। § पवित्राणामिति क्वचित् पाठः। ¶ आवाहयामि इति क्वचित्पाठः।

अम्भस्य पारे अम्भसः पारे इत्यर्थः ।

उद्यति यो ब्रह्मासनं
स नयति धारयति पुरा पाति यः ॥

योभोजो ग्रहणजो मनुजो महाध्वजः । एकाक्षरं बहु याजमानं वर्णप्रधानं बहुधा विश्वरूपं प्राणान् विहितो*ऽभिहितो विश्वकर्म्मणे† नमो नमः इति स्वागतं भगवते‡ तुलापुरुषाय इदमासनमास्यतां भगवते । ततः पाद्यार्घ्याचमनमनुलेपनमाल्यधूपदीपनैवेद्यैश्चाभ्यर्च्य भगवन्तं सपत्नीकं सपार्षदं पशुपतिमभ्यर्च्चयेत् । सपार्षदं सगणम् । धूपमन्त्रश्च भवति ।

वनस्पतिरसो दिव्यं§ गन्धाढ्यो गन्ध उत्तमः ।
आहारः सर्व्वदेवानां धूपोऽयम्प्रतिगृह्यताम् ॥

सर्व्वत्रायं धूपमन्त्रः । अथ तुला भवति ।

महापशुर्येन शरेण विद्धो
यच्चापि शस्त्रमुभयोर्लब्धलक्षम् ।
तेनायसीं तुलां सुकृतां कारयित्वा
त्रिप्रादेशमात्रामुभयोर्जातशिक्याम् ॥

महापशुः महाजः यच्छस्त्रमुभयोर्लब्धलक्ष्यम् । उभयोराद्यन्ताभ्यां प्रहृतलक्षम् आद्यन्तयोस्तीक्ष्णं संविद्धमृगादिकम् । अथवा

* प्राणान्वित इति क्वचित्पाठः । † विश्वकर्म्मा तस्मै नमो नम इति पाठान्तरम् । ‡ भवते इति क्वचित्पाठः । § नित्यमिति क्वचित्पाठः, ग्रन्थान्तरे तु आहारस्थाने आग्नेय इति च दृश्यते ॥

उभयोः पार्श्वयोः प्रहृतलच्चं धाराद्वयेन प्रहृतलच्चं खड्गादिकं एवंविधेन लौहेन प्रादेशत्रयपरिमिता तुला कार्य्येत्यर्थः । उभयोर्जातशिक्यां पार्श्वद्वयकृतशिक्याम् ।

सौवर्णी राजती वापि तुलादेवी तुला स्मृता ।
अथ चन्दनवृक्षस्य खदिरस्यापि कारयेत् ॥
एतेषामप्यभावे तु तुला नान्योपपद्यते ।
प्रतिमा काञ्चनी कार्य्या एकैव स्वर्गसंज्ञिता ॥
उषीरस्य परा कार्य्या तथा नरकसंज्ञिता ।
नदीमृत्तिकया वापि प्रतिमे द्वे तु कारयेत् ।
विहितेसूपलिप्तेषु तत्र वीजानि स्थापयेत् ॥

विहिते न्यूनाधिक्यरहिते हारीतोक्तपलपरिमाणोपेत इति यावत् । सूपलिप्ते पृष्ठतः सुसंमृष्ट इति मानवरः । सूपलिप्ते पृष्ठतः सुसंस्कृते इति स्मृतिमञ्जर्य्याम् । पृष्ठभागे अवयवविभागो यथा न ज्ञायते तथा समीकृते कर्त्तव्य इति तात्पर्य्यार्थः । तत्र ततः स्थापनप्रदेशे वीजानि व्रीह्यादिवीजानि स्थापयेत् ।

अदितिस्तु तुला माता स्वयम्भुर्जनिता भव ।
त्वं हि सत्यञ्च धर्म्मश्च त्वयि लोकाः प्रतिष्ठिताः ।
सत्यं वद सत्यवादिनि सत्येन रमतां मनः ॥
शस्यानां सम्पदं ब्रूहि किं शस्यं वर्द्धयिष्यसि ।
वीजानां सम्पदं ब्रूहि किं वीजं वर्द्धयिष्यसि ॥
राज्ञाञ्च सम्पदं ब्रूहि कं नृपं वर्द्धयिष्यसि ।

अस्माकं सम्पदं ब्रूहि किमस्मान्वर्द्धयिष्यसि ॥
यदा तु गुरुमात्मानमसक्तत्तुलया धृतम् ।
परञ्च लाघवं मन्ये ततः कर्म्म समारभेत् ॥
एतेनैव विधानेन* ब्राह्मणस्य विधीयते ।
राजन्यवैश्ययोश्चैव काष्ठप्रतिकृते स्मृते ॥

परञ्च लाघवं मन्ये परशिक्यारोपितमन्वादि लघु यदा भवति इति स्मृतिमञ्जर्य्यां व्याख्यातम् । यदा तु गुरुमात्मानमित्यादेरयमर्थः । अत्रासक्तत्तुलया धृतमित्यभिधानात् तथा राजन्यवैश्ययोश्चैव काष्ठप्रतिकृते स्मृते इत्युक्तत्वात् गन्धादिप्रतिमाद्वयस्य उक्तत्वाच्च स्वप्रतिकृतिरूपं प्रत्येकं पलपरिमितं चन्दनादिप्रतिमाद्वयङ्कृत्वा पलपरिमितपाषाणादि एकस्मिन् शिक्ये निक्षिप्य द्वितीयशिक्ये स्वप्रतिकृतिद्वयमपि पृथक् पृथक् निक्षिप्य तोलयेदिति अतएवासक्तत्तोलनं भवति त्रिःप्रादेशमात्रतुलाविधिरपि प्रतिकृतितोलन एवोपपद्यते साक्षात्स्वरूपतोलने तस्यामपर्य्याप्तत्वात्तथा श्वेताश्वो गुरुदक्षिणा श्वेता गौः गुरुप्रसादो वा नमस्तुलापुरुषायेति यम इति यत्किञ्चिद्दत्त्वा गुरुराचार्य्यः प्रसादनीयः । सएव प्रसादो दक्षिणेत्यर्थः । अर्थादिसम्पादनासमर्थविषयमेतत् ।

अत्रानुष्ठानक्रमः । हारीतवचने तुलारोहणानन्तरं होममन्त्राः पठिताः यमेन तूपक्रम एव अतश्च होमे क्रमो

---

* एतेनैव तु कल्पेन इति पाठान्तरम् ।

विकल्पते । होमं कृत्वा उमामहेश्वरपूजां विधाय तुलाभि-मन्त्रणानन्तरं महेश्वरपुरःस्थितं प्रतिमाद्वयमादाय तुलां पृथक् पृथक् पूर्व्वोक्तविधिना आरोपयेत् । ततो वा होमः कर्त्तव्यः । स्मृतिद्वयेऽपि यदा तु गुरुमात्मानमित्युपक्रम्य ततः कर्म्म समारभेदित्युक्तत्वात्तुलारोहणानन्तरमेव आचाम पिण्याका-दिना* व्रतमाचरेत् । अत्र गुरुमित्युपलक्षणम् । साम्येऽपि कर्त्तव्यम् । तुला दिव्यप्रकरणे साम्येऽपि दोषयुक्तत्वाभिधानात् एतच्च दोषसन्देहे दोषनिश्चये तु दैवात् लघुत्वेऽपि प्रायश्चित्तं कर्त्तव्यमेव दोषसन्देहेऽपि लघुत्वे उत्तरत्र क्रियमाणं प्रायश्चित्तं न कर्त्तव्यमिति । आत्मानं लाघवं मन्ये ततः कर्म्म समा-रभेदिति हेतूपादानात् केवलपुण्योपार्ज्जनार्थं तुलापुरुषकृच्छ्र-करणे गुरुत्वे साम्ये लघुत्वे च कर्त्तव्यमेव विशिष्टस्यैव सुकृतो-त्पादनहेतुत्वात् हारीतेन योऽयमाषाढ्यादिकालो विहितः सोऽपि सुकृतार्थिन एव दुरितोपेतस्य निमित्तान्तरमेव कर्त्तव्यत्वात् ।

## अथ सान्तपनकृच्छ्रम् ।

याज्ञवल्क्यः ।

कुशोदकन्तु गोक्षीरं दधि मूत्रं सकृद्धृतम् ।
प्राश्यापरेद्युरुपवसेत्कृच्छ्रं सान्तपनं चरेत् ॥

इत्यपरार्कपाठः ।

---

* पिण्याकादिभक्षणादिना इति क्वचित् पुस्तके पाठः ।

मिताक्षरापाठस्तु ।

गोमूत्रं गोमयक्षीरं दधि सर्पिः कुशोदकम् । इति । गोमूत्रादीनि षड़प्येकीकृत्य पीत्वा आहारान्तररहितः सन् तिष्ठेत् परेद्युरुपवसेदिति दिनद्वयसाध्यकृच्छ्रः । याज्ञवल्क्येनोत्तरश्लोके गोमयादीनां षड्द्रव्येषु पृथक् पृथक् षट्सु दिनेषु प्राशनविधानात् । अत्र मिताक्षरायां मिलितानामेकदिन एव प्राशनं गम्यते ।

पराशरः ।

गोमूत्रं गोमयक्षीरं दधि सर्पिः कुशोदकम् ।
उद्दिष्टं पञ्चगव्यन्तु पवित्रं कायशोधनम्* ॥
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम् ।
पयः काञ्चनवर्णाया नीलायाश्च तथा दधि ॥
घृतञ्च कृष्णवर्णायाः सर्व्वं कापिलमेव वा ।
अलाभे सर्व्ववर्णानां पञ्चगव्येष्वयं विधिः ॥
गोमूत्रे माषकास्त्वष्टौ गोमयस्य तु षोड़श ।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः ।
गोमूत्रवद्घृतस्येष्टास्तदर्द्धन्तु कुशोदकम् ॥
गायत्र्यादाय गोमूत्रं गन्धद्वारेति† गोमयम् ।
आप्यायस्वेति‡ च क्षीरं दधिक्राव्णेति§ वै दधि ॥

---

* पापनाशनमिति क्वचित्पाठः । † गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्व्वभूतानां त्वामिहोपह्वये श्रियं । ‡ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यं भवावाजस्य सङ्गथे । § दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभिनो मुखाकरत् प्रण आयूंषि तारिषत् ।

तेजोऽसि शुक्रमस्याज्यं* देवस्य त्वा† कुशोदकम् ।
पञ्चगव्यसृचा पूतं होमयेदग्निसन्निधौ ॥
सप्तपत्रास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ।
एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ॥
इरावती‡ इदं विष्णु§र्मानस्तोकेन¶ शाश्वतीः|| ।
एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः ॥
प्रणवेन समालोड्य प्रणवेनाभिमन्त्रयेत् ।
प्रणवेन समुद्धृत्य पिबेत्तत्प्रणवेन तु ॥
मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत् ।
स्वर्णपात्रेण ताम्रेण ब्रह्मतीर्थेन वा पुनः ॥
यत्त्वगस्थिगतं पापं देहे तिष्ठति मानवे ।
ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम् ॥ इति ।

याज्ञवल्क्योक्तसान्तपनमेव ब्रह्मकूर्च्चं इति ब्रह्मकूर्चोपवास इत्यभिधीयते। विज्ञानेश्वरस्तु पूर्व्वेद्युरुपोष्य परेद्युरुक्तरीत्या पञ्चगव्यप्राशने ब्रह्मकूर्च्चं इति मन्यते ।

---

* तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि । † देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णो हस्ताभ्यां आददे इत्यादि । ‡ इरावती धेनुमती हि भूतं सूयवसिनीमनवे दशस्या। व्यस्कभ्नारोदसी विष्णवे ते दाधर्थ पृथिवीमभितोमयूखैः स्वाहा । § इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं । समूढ़मस्य पांशुरे स्वाहा । ¶ मानस्तोके तनये मान आयौ मनोगोषु मानो अश्वेषु रीरिषः वीरान्मानो रुद्रभामितोवधीर्हविष्मतः सदमित्वा हवामहे । || प्रजापते नत्वदेतान्यन्यो विश्वारूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु । अयममुष्य पितासावस्य पिता । वयं स्याम पतयो रयीणां स्वाहा । रुद्र यते क्रिविपरं नाम तस्मिन् हुतमस्यमेष्टमसि स्वाहा ।

मरीचिः ।

देवताः सम्प्रवक्ष्यामि आनुपूर्व्वेण यस्य याः ।
वरुणो देवता मूत्रे गोमये हव्यवाहनः ॥
सोमः क्षीरे दध्नि वायुर्घृते रविरुदाहृतः ।
गोमूत्रं ताम्रवर्णायाः श्वेतायास्त्वथ गोमयम् ॥
पयः काञ्चनवर्णायाः नीलायास्त्वथवा दधि ।
घृतं वै कृष्णवर्णायाः विभक्तं गव्यपञ्चकम्* ॥
उदकं सर्व्ववर्णस्य† तस्य वर्णं न गृह्यते ।
गोमूत्रस्य पलङ्गाह्यमङ्गुष्ठाग्रन्तु गोमयम् ॥
क्षीरस्य त्रिपलङ्गाह्यं पलमेकं कुशोदकम् ।
आपो हि ष्ठेति चालोड्य उद्यम्य प्रणवेन तु ॥

अग्नये स्वाहा सोमाय स्वाहा इदं सोमाय इरावती इदं विष्णुर्मानस्तोकैः गायत्र्या प्रजापते न त्वदेतान्यन्यो इत्याज्याहुतीरग्नौ जुहुयात् ।

नदीप्रस्रवणे तीरे रहस्ये निर्जने तथा ।
शुक्लवासाः पवित्रात्मा अहोरात्रोषितः पिबेत् ॥
पालाशेन तु पत्रेण विल्वपत्रेण‡ वा पिबेत् ।
तृतीयं ताम्रपात्रं वा ब्रह्मपात्राणि तानि वै ॥
प्रतिमासं पौर्णमास्याममावास्याञ्च वा पिबेत् ।

---

* वर्णगोचरं इति क्वचित् पाठः । † सर्व्ववर्णन्तु इति क्वचित् पाठः । ‡ पालाशेन तु पात्रेण विल्वपात्रेण इति क्वचित् पाठः ।

ब्रह्महा परदारी च ये चान्येऽस्थिगता मलाः ।
ब्रह्मकूर्चो दहेत्सर्वं यथाग्निस्तृणमेव तु ॥

अथापरं ब्रह्मकूर्चं

गोमूत्रभागस्तस्यार्द्धं शकृत्क्षीरस्य तु त्रयः ।
द्वौ च दध्नो घृतस्यैक एकस्तु कुशवारिण इति ।

जाबालिः ।

गोमूत्रं गोमयक्षीरं दधि सर्पिः कुशोदकम् ।
एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ।
कृच्छ्रः सान्तपनो नाम सर्वपापप्रणाशनः ॥ इति ।

एतच्च सप्ताहसाध्यम् ।

## अथ यतिसान्तपनम् ।

शङ्खः ।

एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम् ।

एतदेव मिश्रितं पञ्चगव्यं दिनत्रयं पिबेदित्यर्थः ।

## अथ महासान्तपनम् ।

याज्ञवल्क्यः ।

पृथक् सान्तपनद्रव्यैः षड़हः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥

गोमूत्र गोमय चीर दधि घृत कुशोदक सान्तपनद्रव्याणामेकै-कस्मिन् दिने वैकैकं पिबेत्। सप्तमदिन उपवासः। एतानि कुशोदकादिप्राशनानि आहारान्तरनिवर्त्तकानि। एवमुत्तर-त्रापि।

यमः।

त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत्।
त्र्यहं दधि त्र्यहं सर्पिस्त्र्यहक्षीरं ततः शुचिः।
महासान्तपनं ह्येतत्सर्व्वपापप्रणाशनम्॥

एतत्पञ्चदशाहसाध्यम्।

जाबालिः।

षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत्।
त्र्यहञ्चोपवसेदन्त्यं महासान्तपनं विदुः॥ इति।

षण्णां पूर्व्वोक्तगोमूत्रादीनामयमेकविंशतिरात्रसाध्यः।

## अथातिसान्तपनम्।

यमः।

एतान्येव तथा पेयान्येकैकन्तु द्व्यहं द्व्यहम्।
अतिसान्तपनं नाम श्वपाकमपि शोधयेत्॥ इति।

एतानि गोमूत्रादिकुशोदकान्तानि षड्द्रव्याणि। एतच्च द्वादशाहसाध्यम्।

## अथ पर्णकृच्छ्रः ।

याज्ञवल्क्यः ।

पर्णोडुम्बरराजीवविल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहाभ्यस्तैः पर्णकृच्छ्र उदाहृतः ॥

पर्णं पलाशः पर्णादि पत्राणां कुशानां चैकैकस्य क्वाथोदकमेकैकस्मिन्दिने पिबेत् । एष पञ्चदिनसाध्यः ।

जाबालिः ।

पलाशविल्वपद्मानां पर्णान्योडुम्बराणि च ।
अश्वत्थस्य च पर्णानि चाश्नी*दैकैकशस्तथा ॥
अहोरात्रोपवासश्च पर्णकृच्छ्र उदाहृतः ।

अयञ्च षड़हसाध्यः ।

विष्णुः ।

कुशपलाशोडुम्बरपद्मशङ्खपुष्पी वटब्रह्मसुवर्च्चलापत्रैः
क्वथितस्याम्भसः प्रत्यहं पानं पर्णकृच्छ्र इति ।

शङ्खपुष्पी लताविशेषः । ब्रह्मसुवर्च्चला ब्राह्मीविशेषः । कुशादीनां मध्ये अन्यतमं निक्षिप्य क्वाथः कर्त्तव्यः । अयञ्च सप्ताहसाध्यः ।

शङ्खलिखितौ ।

पद्म विल्व पलाशोडुम्बर कुशोदकान्येकैकमभ्यस्तानि

---

* अश्नीयादित्यर्थे अश्नेदित्यार्षप्रयोगः ।

पर्णकृच्छ्रः। समस्तान्येतानि त्रिरात्रेण प्रयुक्तानि पर्णकूर्च इति।

अत्रापि क्वाथ एव।

अभ्यासे विशेषमाह यमः।

एकैकं त्र्यहमश्नीयात्पर्णकृच्छ्रो विधीयते। इति।

एवं पञ्चदशाहसाध्योऽयं समस्तान्येतानीत्यादि।

पद्म विल्व पलाशोडुम्बरकुशोदकान्येतानि समस्तानि क्वाथयित्वा त्रिरात्रोपोषितः सन् पिबेत्। स पर्णकृच्छ्रः।

तथाच यमः।

एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः।
क्वाथयित्वा पिबेदद्भिः पर्णकृच्छ्रो विधीयते॥ इति।

## अथ फलादिकृच्छ्रः।

मार्कण्डेयः।

फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः।

शरीरयात्रामात्रप्रयुक्तफलानि मासं भक्षयेत्। तत्र सर्व्वव्रतसाधारणेतिकर्त्तव्यतापि कर्त्तव्या। तानि च फलानि कानीत्याकाङ्क्षायामाह।

स एव।

श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षै*रपरस्तथा।
मासेनामलकैरेवं श्रीकृच्छ्रश्चापरः स्मृतः॥

* पद्मञ्च अक्षा विभीतकरुद्राक्षाश्च तैः पद्माक्षैः।

पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ।
मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु ॥ इति ।

पत्रैः श्रीवृक्षादिपत्रैस्तत्कृच्छ्रः पुष्पकृच्छ्रः । मिताक्षरायान्तु पुष्पाण्यपि श्रीवृक्षादीनामेव मूलान्यपि तेषामेव ।

## अथ तप्तकृच्छ्रः ।

याज्ञवल्क्यः ।

तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥

दिनचतुष्टयसाध्यः कृच्छ्रः । मिताक्षरायान्तु अयन्तु महातप्तकृच्छ्रः । एभिरेव समस्तैः सोपवासैर्द्विरात्रैः सम्पाद्यः सान्तपनवत्तप्तकृच्छ्र इत्युक्तम् ।

मनुः ।

तप्तकृच्छ्रं चरन्* विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ॥

प्रतित्र्यहं जलादीन् प्रत्येकं त्र्यहं त्र्यहं पिबेदित्यर्थः । अयञ्च द्वादशरात्रसाध्यः । जलादिपरिमाणमाह

पराशरः ।

अपः† पिबेत्तु त्रिपलं द्विपलन्तु पिबेत्पयः ।
पलमेकं पिबेत्सर्पिस्त्रिरात्रञ्चोष्णमारुतम् ॥ इति ।

---

* हरन् इति क्वचित् पुस्तके पाठः । † अपामिति पाठान्तरम् ।

त्रिरात्रस्य पूरणमुष्णोदकवाष्पं पिबेदित्यर्थः। प्रकारान्तरेणाप्याह तप्तकृच्छ्रम्।

पराशरः।

षट्पलन्तु पिबेदम्भः त्रिपलन्तु पयः पिबेत्।
पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते॥

जलादिकमुष्णमेव ग्राह्यम्।

## अथ शीतकृच्छ्रः।

विष्णुः।

त्र्यहमुष्णाः पिबेदपस्त्र्यहमुष्णं पयः पिबेत्।
त्र्यहमुष्णं घृतम्पीत्वा नाश्नीयादेकवासरम्*॥

एष तप्तकृच्छ्रः। एष एव शीतैर्जलादिभिः शीतकृच्छ्रः अयं दिनदशसाध्यः†।

पराशरः।

त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत्।
त्र्यहं शीतं घृतम्पीत्वा वायुभक्षस्त्र्यहं परम्॥

द्वादशदिनसाध्य एषः।

---

* नाश्नीयाद्दिष तप्तकृच्छ्र इति क्वचित् पुस्तके पाठः। त्र्यहमुष्णं पिबेत् सर्पिर्नाश्नीयाद्दिष तप्तकृच्छ्र इति च क्वचित् पुस्तके पाठः। मूलसंहितायान्तु एवं पाठः—त्र्यहमुष्णाः पिबेदपस्त्र्यहमुष्णं घृतं त्र्यहमुष्णं पयस्त्र्यहञ्च नाश्नीयाद्दिष तप्तकृच्छ्रः। † एष एव शीतैः शीतकृच्छ्रः अयं दिनत्रयसाध्य इति क्वचित् पुस्तके पाठः।

## तथान्येऽपि कृच्छ्राः ।

शङ्खः ।

विषान्युदकसिद्धानि* मासमश्नीत संयतः ।
शक्तून्वा मोदकान्मासङ्कृच्छ्रो वारुण उच्यते ॥
विल्वैरामलकैर्वापि पद्मकैरथवा शुभैः ।
मासेन लोके श्रीकृच्छ्रः कथ्यते द्विजसत्तमैः ॥
गोपुरीषाद्यवान्नञ्च मासं नित्यं समाहितः ।
व्रतन्तु यावकं कुर्य्यात्सर्व्वपापापनुत्तये ॥

विष्णुः ।

उदकादिशक्तूनां मासाभ्यवहरणेनोदककृच्छ्रः । विषाभ्यवहरणे शीतकृच्छ्रः ।

उदकादीति उदकप्रधानानां शक्तूनाम् ।

जाबालः ।

अनश्नन् जलमध्यस्थस्त्वहोरात्रं जपन् बुधः ।
संवत्सरकृतं पापं जलकृच्छ्रो व्यपोहति ॥

जपो वारुणसूक्तानाम्† ।

---

* जलसिद्धम्रणालानि । † ओँ मोषु वरुण मृण्मयं गृहं राजन्नहं गमम् । मृड़ासु चत्र मृड़य । १ । यदेमि प्रस्फुरन्निव दृतिर्नंध्माती अद्रिव । मृड़ासु चत्र मृड़य । २ । क्रत्वः समहादीनता प्रतीपं जगमशुचे मृड़ासु चत्र मृड़य । ३ । अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् । मृड़ासु चत्र मृड़य । ४ । यत्किञ्चेदं वरुणदैव्येजनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्तीयत्तव धर्म्मायुयोऽपि म मानस्तस्मादेनसोदेवरीरिषः । ५ ।

योगियाज्ञवल्क्यः ।

वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाप्सु सूर्य्यदृक् ।
सहस्राष्टाधिकां जप्त्वा गायत्रीं जलसंस्थितः* ॥

द्वितीयदिने सूर्य्यं दृष्ट्वा अष्टोत्तरसहस्रं गायत्रीजपङ्कृत्वा† पारणं कुर्य्यादित्यर्थः । अयञ्च जलकृच्छ्रः ।

तथा ।

मासोपवासो विज्ञेयो दिनत्रिंशदुपोषणात् ।

तथा गोमूत्रकृच्छ्रः ।

आह्निश्चारयित्वा गां गोधूमान्यवमिश्रितान् ।
गोमयोत्थांस्तु संगृह्य पचेद्गोमूत्रयावकम् ॥ इति ।

## अथ चान्द्रायणम् ।

याज्ञवल्क्यः ।

तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान् ।

---

* जलसंज्ञक इति पाठान्तरम् । † आह शातातपः । तत्सवितुर्वरेण्यमिति ब्राह्मणस्य देवसवितरिति राजन्यस्य विश्वारूपाणीति वैश्यस्य इति प्रथमस्तवकीयत्रयोविंश संख्यकपत्रस्थलिपिः गायत्री तु ब्राह्मणस्य तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियोयोनः प्रचोदयादोमिति । क्षत्रियस्य—देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्योगन्धर्व्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु स्वाहा ॥ ९ ; १ ॥ वैश्यस्य तु—विश्वारूपाणि प्रतिमुञ्चते कविः प्र असावीत् भद्रं द्विपदे चतुःपदेविनाकं अख्यत् सवितावरेण्यः अनुप्रयाणं उषसः विराजति । ५।८१,२ ।

एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन् ।*

इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः ॥

तिथिवृद्धा प्रथमद्वितीयादिचन्द्रकलायुक्तप्रतिपद्द्वितीयादितिथिवृद्धा, चरेद्भक्षेत्, शुक्ले शुक्लपक्षे, त्रिषवणस्नानसमन्वितान् मयूराण्डप्रमाणान्, चान्द्रायणं ह्रासवृद्धिभ्यां चन्द्रस्यायनं चरणमिव चरणं यस्मिन् कर्म्मणि तच्चान्द्रायणं संज्ञायां दीर्घः। इदं यवमध्यचान्द्रायणं मध्ये ग्रासाधिक्येन तत्स्थूलत्वात्।

गौतमस्त्वन्यथा आह ।

अथातश्चान्द्रायणं तस्योक्तो विधिः कृच्छ्र इति ।

कृच्छ्रे यदुक्तं तिष्ठेदहनीत्यादि तत्सर्व्वमत्र भवतीत्यर्थः।

अत्र विशेषमाह सः ।

वपनं व्रतञ्चरेत्। व्रतं प्रायश्चित्तं तदर्थं यच्चान्द्रायणं तदा वपनम्भवति अभ्युदयार्थिनो न भवतीत्यर्थः। तथा श्वोभूतां पौर्णमासीमुपवसेत्पौर्णमासीमाश्रित्य चतुर्द्दश्यामित्यर्थः। आप्यायस्व† मन्ते पयांसि‡ नवो नव§ इत्ये-

---

* हरन्निति पाठान्तरम्। † आप्यायस्वसमेतु ते विश्वतः सोमवृष्ण्यं भवावाजस्य सङ्गथे। ११२ ‡ सन्तेपयांसि समुयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोमदिवि श्रवांस्युत्तमानिधिष्व ॥ ११३ ।

यजुर्वेदसंहिता माध्यन्दिनीयशाखा द्वादशोऽध्यायः ।

§ नवोनवोभवति जायमानोऽह्नां केतुरुषसामेत्यग्रं। भागं देवेभ्यो विदधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः । १०।८५, १९ ।

ताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणम् उपस्थानं चन्द्रमसो यद्देवा देवहेडनमिति* चतसृभिराज्यं जुहुयात् देवकृतस्येति† चान्ते समिद्भिरों भूर्भुवः स्व स्तपः सत्यं यशः श्रीरूर्गिड़ाजस्तेजः पुरुषोधर्म्मः शिव इत्येतै-र्ग्रासानुमन्त्रणं प्रतिमन्त्रं मनसा नमः स्वाहेति सर्व्वा-नेतैरेव ग्रासान् भुञ्जीत‡। आप्यायस्वेति इत्यादिभि-र्नवो नव इत्यन्तैस्त्रिभिर्मन्त्रैस्तर्पणं कृत्वा चन्द्रमस उप-स्थानं कृत्वा आज्यहोमं हविरनुमन्त्रणञ्च कुर्य्यात्। चन्द्रोपस्थाने मन्त्रा आप्यायस्वेत्यादयः। यद्देवा देवहेड़नमिति चत्वार आज्यहोमे प्रतिमन्त्रञ्च होमः देवकृतस्यैनसोऽवयजनमसीत्यादिकैका ऋक् समिद्भि-रिति बहुवचनात्। कपिञ्जलन्यायेन यद्यपि त्रित्वमेव

---

* यद्देवादेवहेड़नं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः॥ २०।१४। यदि दिवा यदि नक्तमेनांसि चकृमावयम्। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वं-हसः॥ १५। यदि जाग्रद्यदि स्वप्नएनांसि चकृमावयम्। सूर्य्यो मा तस्मादेनसो विश्वान्मु-ञ्चत्वंहसः। १६। यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यच्छूद्रे यदर्थे यदेनश्चकृमावयं यदेकस्याधि धर्म्मणि तस्यावयजनमसि॥ १७। † देवकृतस्यैनसोऽवयजनमसि। मनुष्य-कृतस्यैनसोऽवयजनमसि। पितृकृतस्यैनसोऽवयजनमसि। आत्मकृतस्यैनसोऽवयजनमसि। एनस एनसोऽवयजनमसि। यच्चाहमेनोविद्वांश्चकार यच्चाविद्वांस्तस्य सर्व्वस्यैनसोऽवयजनमसि। ८।१३। ‡ मूलगौतमसंहितायां अत्र विशेषो दृश्यते। ओं भूर्भुवः स्वस्तपः सत्यं यशः श्रीरूर्पं गिरौजस्तेजः पुरुषोधर्म्मः शिवः शिर इत्येतैः। मिताक्षरायान्तु, ओं भूर्भुवः स्वः महः जनः तपः सत्यं यशः श्रीः ऊर्कः इड़ोजः तेजः पुरुषः धर्म्मः शिवः एवं दृश्यते।

प्रतीयते तथापि यद्देवा देवहेड़नमिति चतसृभिरिति पूर्व्वमेव चतुःसंख्योपादानात् त्रित्वन्तादवगतं प्रकरणबलात्। अवगते च त्रित्वे देवकृतस्येत्यस्मिन्नृगात्मकवाक्ये अवान्तरवाक्यानां* षट्संख्याकत्वात्समिद्भिरिति बहुवचनं षट्सु† पर्य्यवस्यतीति वाक्यबलात् षड़ाहुतय: समिधो भवन्ति पिण्डकरणात्पूर्व्वं हविरनुमन्त्रणे आप्यायस्वेत्यादय:। पिण्डकरणानन्तरन्तु ओमित्येवमादय:। ओं भूर्भुव: स्वस्तप: सत्यं यश: श्री: ऊर्क् इड़ोजस्तेज: पुरुष: धर्म्म: शिव इत्येतैर्ग्रासानुमन्त्रणं‡ हविरनुमन्त्रणञ्च। अत्र मन्त्रान्ते मनसा नम: स्वाहेति युञ्जीत। तप:प्रभृति मन्त्राश्चतुर्थ्यन्ता: नम: स्वस्ति स्वाहेत्यादिसूत्रेण चतुर्थीविधानात्।

तथा ग्रासप्रमाणमास्याविकारेण चरुभैक्ष्यशक्तुकणयावकपिण्याकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि पौर्णमास्यां पञ्चदशग्रासान् भुक्त्वा§ एकैकापचयेनापरपक्षमश्नीयादमावास्यामुपोष्यैकैकोपचयेन पूर्व्वं पक्षं विपरीतमेकेषामेष चान्द्रायणो मास इति। ग्रास इति ग्रासप्रमाणमास्याविकारेणेति यदुक्तं तत्कुक्कुटाण्डपरिमितपञ्चदशादि-

---

* मनुष्यकृतस्येत्यादिकानाम्। † षट्के इति पाठान्तरम्। ‡ ग्रासानुमन्त्रा इति पाठान्तरम्। § भुक्तेति पाठान्तरम्।

ग्रासभोजनासमर्थबालादिविषयम्। एवमेव कुक्कुटाण्डामलकपरिमाणमपि शक्त्यपेक्षया योज्यम्। चतुर्दश्यामुपवासः पौर्णमास्यां पञ्चदशग्रासभोजनम् तत एकैकग्रासह्रासः। अमावास्यामुपवासः ततः पौर्णमासीपर्य्यन्तं पञ्चदशग्रासवृद्धिरिति त्रिंशद्दिनसाध्यं चान्द्रायणं योगीश्वराद्युक्तचान्द्रायणाद्यपेक्षया अन्यदेव एतच्च पिपीलिकामध्यम्। विपरीतकरणे तु यवमध्यं भवति ग्रासवृद्धौ ह्रासे च तिथिवृद्धिक्षयवशात्कदाचित् षोडशत्वङ्कदाचिच्चतुर्दशत्वमपि भवति। ग्रासस्तु चन्द्रोदये जाते ग्रसनीय उदयश्च कदाचिन्नक्तङ्कदाचिद्दिवेति तदनुसारेण कर्त्तव्यं ग्रासग्रसनम्।

तथाच हारीतः।

चान्द्रमसं चरुं श्रपयित्वा नवो नव इति हुत्वा ज्योत्स्नायां चरुशेषात् पिण्डान् सावित्र्याभिमन्त्रितान् प्राश्नीयादिति। ग्रासग्रसनसमये या तिथिस्तत्स्वरूपग्राससंख्योपादेया। ज्योत्स्नाशब्देन चन्द्रोदयो लक्ष्यते। तथा चार्द्धरात्रावपि भोजने कृते दोषो नास्ति।

शङ्खः।

आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्मृताः।
तथैवाहुतयस्तत्र शौचार्थञ्चैव मृत्तिका॥

मनुः।

एकैकं ह्रासयेत्पिण्डङ्कृष्णे शुक्ले च वर्द्धयेत्।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम्॥

त्रिषवणं सन्ध्यात्रयम् । तथा चान्द्रायणान्तराणि ।

याज्ञवल्क्यः ।

यथा कथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥

पिण्डानाञ्चत्वारिंशदधिकं शतद्वयं मासेनैवोपभुञ्जीत यथा-कथञ्चिदिति । अत्रायं क्रमः । दिने दिनेऽष्टौ ग्रासान् भुञ्जीत अथवा नक्तञ्चतुरो दिवा चतुर इति । अथैकस्मिन्दिने चतुरोऽपरस्मिन् द्वादश तत्रैकरात्रमुपोष्यापरस्मिन् षोड़श । यद्वा दिनद्वयमुपोष्य तृतीयदिने द्वात्रिंशदित्यादिप्रकाराणां* मध्ये शक्त्यपेक्षया भुञ्जीतेति । अत्र तिथ्यपेक्षया ग्रासनियमो नास्ति उपक्रमस्तु शुक्लकृष्णप्रतिपदोरन्यतरत्र एव कर्त्तव्यः । यस्तु नैरन्तर्य्येणैवंविधं चान्द्रायणानुष्ठानं करोति तस्य तिथिवृद्धिह्रासवशेन कदाचिद्द्वितीयादिष्वारम्भो भवति तत्र न दोषः । चन्द्रगत्यनुसारेण त्रिंशद्दिनात्मकसावनमासानुष्ठेयत्वादत्र चान्द्रायणशब्दो गौणः । तद्धर्म्मप्राप्त्यर्थः कौण्डपायिनां अग्निहोत्रशब्द इव अस्मिंश्चान्द्रायणे पूर्व्वक्रान्तमेकादश्युपवासादि न लुप्यते तिथिनियमेन ग्रासनियमाभावात् यत्र तु तिथिनियमेन ग्रासनियमस्तत्र पूर्व्वप्रक्रान्तमुपवासादिकमन्येन कारयेत् । एष्वेव प्रकारान्तरेण क्वचन मुनिना विशेषसंज्ञा दर्शिता ।

अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते ।

---

* प्रकरणान्तरमध्ये इति पाठान्तरम् ।

नियतात्मा हविष्यस्य यतिचान्द्रायणञ्चरन् ॥
चतुरः प्रातरश्नीयाद्विप्रः पिण्डान्समाहितः ।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं चरन् ॥
यथा कथञ्चित्पिण्डानां तिस्रोऽशीतिः समाहितः ।
मासेनाश्नन्हविष्यस्य चन्द्रस्येति सलोकताम् ॥ इति ।

यमस्तु माससध्ये नवतिग्रासग्रसनमाह ।

त्रींस्त्रीन् पिण्डान्समश्नीयान्नियतात्मा जितेन्द्रियः* ।
हविष्यान्नस्य वै मासं ऋषिचान्द्रायणं स्मृतम् ॥ इति ।

## अथ सोमायनम् ।

एतदपि चान्द्रायणधर्म्मकमेव । अथातश्चान्द्रायणमनुक्रमिष्याम इति हारीतेनेतिकर्त्तव्यतासहिता चान्द्रायणमभिधायैवमेव सोमायनमित्यादेशात् । तच्च कृष्णचतुर्थीमारभ्य शुक्लद्वादशीपर्य्यन्तमनुष्ठेयम् ।

तथाच हारीतः ।

चतुर्थीप्रभृति चतुस्तनेन चतूरात्रं त्रिस्तनेन त्रिरात्रं द्विस्तनेन द्विरात्रं एकस्तनेनैकरात्र†मेकस्तनप्रभृति पुनश्चतुस्तनान्तं या ते सोम चतुर्थी तनूस्तया नः पाहि तस्यै

---

* दृढव्रत इति पाठान्तरम् । † चतुर्थप्रभृति चतुस्तनेन त्रिरात्रं द्विस्तनेन द्विरात्रं एकस्तने द्विरात्रमेव इति क्वचित् पुस्तके पाठः ।

स्वाहा या ते सोम पञ्चमी षष्ठीत्येवं यथार्थास्तिथिहोमा एकमात्रा* एतेभ्यः पूतश्चन्द्रमसः सामान्यतां समानलोकतां सायुज्यञ्च गच्छतीति चतुस्त्रिद्यादिक्रमेण स्तनानां ह्रासात्। पुनरेकादिक्रमेण वृद्धेः कृष्णचतुर्थ्यारम्भदिनमिति गम्यते भिस्तनेन त्रिराचम् इत्यभिहितत्वान्मुख एव होहः इति प्रतीयते एतदनुपपन्नं साक्षान्न स्तनं तृप्तिसाधनमपि तु तन्निःसृतं पयः। अग्नौ होमोविहितः† होमश्च द्रव्यसाध्यः तच्च द्रव्यं कृतदुग्धपरित्यागेन कल्पमाज्यादिकं न युज्यते तस्माच्चतुस्तनादिस्थितं दुग्धं गृहीत्वा या ते सोमेत्यादिभिर्मन्त्रैः प्रतितिथिमेकैकामाहुतिं हुत्वा पयः पिबेत्। चान्द्रायणधर्मातिदेशाच्चन्द्रोदय एव पयःपानानां मन्त्रोहस्त्वेवं कर्त्तव्यः। या ते सोम पञ्चमी तनुस्तया नः पाहि तस्यै स्वाहा इति पञ्चम्यामेवं षष्ठ्यां षष्ठीपदप्रयोगः। उत्तरत्राप्यमावास्यापर्य्यन्तमेव‡ यदि तु पुनः प्रतिपदि प्रथमा तनूरित्येवं प्रयोगः। ततो द्वितीयादिषु द्वितीया तनूरित्यादि एतच्चतुर्विंशतिदिनसाध्यम्। यथार्थास्तिथिहोमा इत्युक्तत्वाच्चतुर्थीद्वादशीमध्ये यत्र तिथिक्षयो न भवेत् चतुर्विंशतिदिनानि भवन्ति तदैव कर्त्तव्यम्। एतत्सोमायनमशक्तविषयं शक्तविशेषे तु

* एकैकामाहुतिं हुत्वा इति पाठान्तरम्। † अभिहित इति पाठान्तरम्।

‡ एवमेव इति क्वचित्पाठः।

मार्कण्डेयः ।

गोक्षीरं सप्तरात्रन्तु पिबेत्स्तनचतुष्टयात् ।
स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् ।
स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग्भवेत् ॥ इति ।

## अथ यावकव्रतम् ।

शङ्खः ।

गोपुरीषाद्यवानद्य* मासं नित्यं† समाहितः ।
व्रतन्तु यावकं कुर्य्यात्सर्व्वपापापनुत्तये ॥

## अथाघमर्षणव्रतम् ।

मनुः ।

त्र्यहन्तूपवसेत्‡ युक्तः त्रिरह्नोऽभ्युपयन्नपः ।
मुच्यते पातकैः सर्व्वैस्त्रिर्जपित्वाघमर्षणम् ॥
यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः ।
तथाघमर्षणं सूक्तं§ सर्व्वपापप्रणोदनम्¶ ॥

---

* गोस्तु क्षीरयवानन्त्विति पाठान्तरम् । † स्नात्वेति पाठान्तरम् । ‡ उपवसन्निति पाठान्तरम् । § ऋतञ्चेति ऋक्‌त्रयस्याघमर्षण ऋषिः भाववृत्तो देवता अनुष्टुप्छन्दोऽश्वमेधावभृथे विनियोगः ।

ऋतञ्च सत्यञ्चाभीद्धात्तपसो अध्यजायत ततो रात्रिरजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरोऽजायत अहोरात्राणि विदधत् विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्वः ।

¶ सर्व्वपापापनोदनमिति पाठान्तरम् ।

अत्रैव विशेषमाह विष्णुः ।

प्रत्यहञ्च त्रिः त्रिषवणस्नानमाचरेत् । आर्द्रं नाश्नीयात् प्रतिस्नानमप्सु निमज्जेत् । मग्नश्च त्रिरघमर्षणं जपेत् । दिवा स्थितस्तिष्ठेद्रात्रावासीनः कर्म्मणोऽन्ते पयस्विनीं दद्यादिति ।

याज्ञवल्क्यः ।

अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ।
धर्म्मार्थं यश्चरेदेतच्चन्द्रस्येति सलोकताम् ।
कृच्छ्रकृद्धनकामस्तु* महतीं श्रियमश्नुते ॥

## अथ चान्द्रायणेतिकर्त्तव्यता ।

याज्ञवल्क्यः ।

कुर्य्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणन्तथा ।
पवित्राणि जपेत्पिण्डान्† गायत्र्या चाभिमन्त्रयेत् ॥

त्रिषवणस्नायी सन् कुर्य्यात् पवित्राणि अघमर्षणं देवकृतः शुद्धवत्यस्तरत् समा इत्यादिवशिष्ठादिप्रदर्शितानि ऋग्यजुःसामसु व्यवस्थितानि यथासंख्यं जपेदविरुद्धकालेषु पिण्डान् यथाशास्त्रं ग्रासान् गायत्र्याभिमन्त्रयेत् । ग्रासानुमन्त्रणे गौतमोक्तैरों भूरित्यादिमन्त्रैः सह गायत्र्या विकल्पः । एवं

---

* व्रतकामस्त्विति पाठान्तरम् । † नित्यमिति पाठान्तरम् ।

जपादिष्वप्येककार्य्याणां मन्त्राणां विकल्पः। भिन्नकार्य्याणां समुच्चय इति ज्ञातव्यम्।

मनुः।

महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम्।
अहिंसा सत्यमक्रोधमार्ज्जवञ्च समाचरेत्॥
त्रिरह्नस्त्रिर्निशायान्तु सवासा जलमाविशेत्।
स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित्॥
स्थानासनाभ्यां विहरन्नक्रोधश्च शयीत वा।
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्च्चकः॥
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः।
सर्व्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः॥ इति।

दिवा त्रिः रात्रौ त्रिरिति। यदेतत् षट्कस्नानं तच्छक्तविषयम्। एतन्न्यूनाधिकस्नानान्यपि शक्त्यपेक्षया योज्यानि। तप्तकृच्छ्रे तु सकृदेव स्नानम्। सकृत्स्नायी समाहित इति विशेषाभिधानात्।

जाबालः।

आरम्भे सर्व्वकृच्छ्राणां समाप्तौ च विशेषतः।
आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथक्॥
श्राद्धं कुर्य्याद्व्रतान्ते च गोहिरण्यान्न दक्षिणम्।
गृहे गृहे वसन् कुर्व्वन् ब्रह्मलोके महीयते।
स्त्रीणां होमो न दातव्यः पञ्चगव्यन्तथैव च॥

पराशरः।

स्त्री शूद्रः स तु शुद्ध्यर्थं प्राजापत्यं समाचरेत्।
पञ्चगव्यन्तु कुर्व्वीत स्नात्वा पीत्वा शुचिर्भवेत्॥

पञ्चगव्यस्य विहितप्रतिषिद्धत्वात् विकल्पः। जाबालेन शालाग्नौ होमं विधाय स्त्रीणां होमो न दातव्य इति निषेधात् गृह्याग्नावेव होमनिषेधः। अतश्च स्त्रीशूद्रयोरपि ब्राह्मणद्वारा लौकिकाग्नौ होमो भवत्येव।

अतएव धर्म्मविवृतौ।

उपवासो व्रतं होमस्तीर्थस्नानं जपादिकम्।
विप्रैः सम्पादितं यस्य सम्पूर्णं तस्य तत्फलमिति॥

यत्त्वत्रिवचनम्।

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत्।
उभौ तौ तु सदोषौ हि पूयाख्ये नरके वसेदिति॥

तत्प्रायश्चित्तानङ्गपञ्चगव्यप्राशने वेदितव्यम्।

वैशम्पायनः।

स्नानं द्विकालमेव स्यात्त्रिकालं वा द्विजन्मनः।

शङ्खः।

एकवासाश्चार्द्रवासा लघ्वाशी स्थण्डिलेशयः। इति।

हारीतः।

त्र्यवरं* शुद्धिमतीभिः स्नात्वाघमर्षणमन्तर्जले जपित्वा धौतमाहतं वासः परिधाय साम्ना सौम्येनादित्यमुपतिष्ठेतेति।

* एवमिति पाठान्तरम्।

षट्त्रिंशन्मते ।

जपहोमादिकं किञ्चित्कृच्छ्राणां सम्भवेन्न चेत् ।
सर्व्वव्याहृतिभिः कुर्य्याद्गायत्र्या प्रणवेन चेति ॥

यमः ।

एकवासाश्चरेद्भिक्षां स्नात्वा वासो न पीड़येत् ।
गायत्र्या दशसाहस्रमाह्निकं जप उच्यते ॥

बौधायनः ।

आहतं वासो वसीत सावित्रीं व्याहृतिञ्चैव जपेदष्टसहस्रकृत्वः ।

ओङ्कारमादितः कृत्वा रूपे रूपे तथान्ततः ।
भूमौ वीरासने युक्तः कुर्य्याज्जाप्यन्तु संयतः ॥
आसीनः शल्यविद्धो वा पिबेद्गव्यं पयः सकृत् ।
गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि ॥
दध्नोऽलाभे भवेत्तक्रं तक्राभावे तु यावकम् ।
एषामन्यतमं यत्तु उपपद्येत तत्पिबेत् ॥

शल्यविद्धो वेत्यत्र वाशब्दस्तूपमार्थः । शल्यविद्ध इव निश्चलः सन् शीतं पयः पिबेदित्यर्थः ।

यमः ।

अङ्गुल्याग्रस्थितं पिण्डं गायत्र्या चाभिमन्त्रितम् ।
प्राश्याचम्य पुनः कुर्य्यादन्यस्याप्यभिमन्त्रणम्* ॥

* चाभिमन्त्रण इति पाठान्तरम् ।

आपोशानकर्म्मानन्तरं पञ्चप्राणाहुतयोऽपि पञ्चभिर्ग्रासैः प्राणाय स्वाहेत्यादिमन्त्राभिमन्त्रितैर्भवन्ति। अत्रचौमित्यादिमन्त्राः समुच्चीयन्ते। यदि गायत्र्या पिण्डाभिमन्त्रणं तदा गायत्री प्राणाय स्वाहेत्यादयश्च। अथो भूरित्यादिभिस्तर्हि प्राणाय स्वाहेत्येवमादयश्च भवन्ति। यदा चत्वारस्त्रयो वा ग्रासास्तत्र बौधायनोक्तो विशेषः।

> अश्नीयात् प्राणायेति प्रथममपानायेति द्वितीयं व्यानायेति तृतीयं उदानायेति चतुर्थं समानायेति पञ्चमम्। यदा चत्वारस्तदा द्वाभ्यां प्रथमं यदा त्रय-स्तदा द्वाभ्यां पूर्व्वौ यदा द्वौ तदा द्वाभ्यामेवोत्तरमेकं सर्व्वैरिति।

अस्यार्थः। यदा चत्वारो ग्रासा भक्ष्यन्ते तदा प्रथम* द्वितीयाभ्यां† प्रथमं ग्रासं ग्रसेत्। तृतीयेन‡ द्वितीयम्। चतुर्थेन§ तृतीयम्। पञ्चमेन चतुर्थम् यदा त्रयस्तदा द्वितीय-चतुर्थाभ्यां द्वितीयम्। पञ्चमेन तृतीयम्। यदा द्वौ तदा प्रथमत आरभ्य त्रिभिः प्रथमम्। अन्तिमाभ्यां द्वाभ्यां द्वितीयम्। यदा त्वेकस्तदा सर्व्वैरेव तद्ग्रसेदिति।

---

* आद्येति पाठान्तरम्। † प्राणाय अपानाय इति द्वाभ्याम्। ‡ व्यानाय इति मन्त्रेण। § उदानाय इति मन्त्रेण। समानाय इति मन्त्रेण।

## अथ कृच्छ्रप्रत्याम्नायः ।

मन्वाद्युक्तद्वादशवार्षिकादिचरणं मुख्यं तदशक्तौ द्वादशदिनान्येकैकं प्राजापत्यम् । एवं गण्यमाने द्वादशवार्षिकप्राजापत्यानां षष्ट्यधिकं शतत्रयं भवति । तदशक्तौ तावत्यो धेनवः धेन्वसम्भवे तावन्निष्कदानं निष्कशब्देन धेनुमूल्यमप्यभिधीयते ।

तथाच स्मर्य्यते ।

प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्द्विजोत्तमः* ।
धेनोरभावे दातव्यं तुल्यं मूल्यं† न संशयः ॥ इति ।

तुल्यं सम्पूर्णं पूर्णमूल्यदानाशक्तौ निष्कार्द्धं निष्कपादं वा दद्यात् ।

यदाह ।

गवामभावे निष्कं स्यात्तदर्द्धं पादमेव वा इति ।

मूल्यदानाशक्तौ तावन्त उपवासा अत्राप्यशक्तावयुतगायत्रीजपः । इति कृच्छ्रप्रत्याम्नायः ।

तथाच पराशरः ।

कृच्छ्रोऽयुतञ्च गायत्र्या उपवासस्तथैव च ।
धेनुप्रदानं विप्रस्य‡ सममेतच्चतुष्टयम् ॥ इति ।

षट्त्रिंशन्मते ।

---

* पयस्विनीमिति ग्रन्थान्तरीयः पाठः । † तन्मूल्यं वा इति मिताक्षरायां पाठः ।
‡ विप्रायेति पाठान्तरम् ।

कृच्छ्रोऽयुतञ्च गायत्र्या द्वादशब्रह्मभोजनम्।
तिलहोमसहस्रञ्च सममेतच्चतुष्टयम्॥ इति।
धेनोर्निष्कस्तदर्द्धार्द्धं प्राणायामशतद्वयम्।
तिलहोमसहस्रञ्च वेदाध्ययनमेव च॥

वेदाध्ययनं संहितामात्रपारायणम्।

विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च। इति।

एते समानप्रत्याम्नायाः। महापातकेषु षष्ठ्यधिकं शतत्रयं भवति। शक्त्याद्यपेक्षया द्विगुणत्रिगुणादिकं कल्पनीयम्। महापातकापेक्षया पादोनम् अतिदिष्टेषु तत्समेषु अर्द्धं तत्र त्रैवार्षिकप्राजापत्यविषयभूतेषूपपातकेषु पादः। त्रैमासिक-प्रायश्चित्तविषयेषु उपपातकेषु सार्द्धसप्तप्राजापत्यानि मासिक-विषये तु सार्द्धप्राजापत्यद्वयं चान्द्रायणापर्नोद्येषूपपातकेषु प्राजापत्यत्रयम्।

तथाच धर्म्मवृत्तौ।

चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च।
मित्रविन्दापशुश्चैव कृच्छ्रत्रयमथापि वा॥
तिलहोमायुतञ्चैव पराकद्वयमेव च।
गायत्र्या लक्षमेकन्तु समान्याहुर्मनीषिणः॥ इति।

पिपीलिकामध्यादिचान्द्रायणासमर्थस्यानतिधनिनो धनद्वारा प्रायश्चित्तं चिकीर्षतः प्राजापत्यप्रत्याम्नाया अष्टौ भवन्ति।

तथाच चतुर्विंशतिमते।

अष्टौ चान्द्रायणे देया प्रत्याम्नायविधौ सदेति।

प्रत्याम्नायाधिक्यात्पूर्व्वोक्तविषयता कल्प्यते ॥

मासातिकृच्छ्रविषयभूतोपपातकेषु सार्द्धसप्तप्राजापत्यानि तथाच चतुर्विंशतिमते ।

प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् ।
पराके तप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथा ॥

इति द्वादशदिनसाध्योऽतिकृच्छ्रस्तस्य मासमाचरणे सार्द्धद्वयप्राजापत्याः कृच्छ्राः भवन्ति। एतच्चैकैकं ग्रासमश्नीयादिति मनूक्तातिकृच्छ्रे । याज्ञवल्क्योक्तपाणिपूरणान्नभोजनातिकृच्छ्रे तु प्राजापत्यद्वयमेवातिकृच्छ्रस्थले प्राजापत्ये एकभक्तत्रयेऽपि सायन्तनभोजनत्रयनिवृत्तावेकोपवासनिवृत्तिः* तथाहि एकस्मिन्दिवसे दिवा रात्रौ चेति द्विर्भोजनं तत्र भोजनत्रयनिवृत्तौ सार्द्धोपवासः प्राप्तः यद्यपि तथापि दिनत्रयेऽपि कथञ्चित्किञ्चिद्भुज्यते इत्येकोपवास एव परिकल्पनीयः एवं नक्तत्रयेष्वयाचितत्रयेऽपि एवमुपवासत्रयं दिनत्रयं शुद्धोपवासः इति षडुपवासाः प्राजापत्ये भवन्ति एवमन्यत्राप्यूहनीयम् । वृषभैकादशगोदानयुक्तत्रिरात्रोपवासात्मकगोवधव्रते तु सार्द्धैकादशप्राजापत्यकृच्छ्राः । पराकात्मकोपपातकव्रते प्राजापत्यत्रयं सार्द्धं प्राजापत्यद्वयं मासं पयोव्रते ।

तथाच षट्त्रिंशन्मते ।

पराकतप्तातिकृच्छ्रस्थाने कृच्छ्रत्रयञ्चरेत् ।
सान्तपनस्य चार्थ्यर्द्धमशक्तौ व्रतमाचरेत् ॥ इति ।

* निष्पत्तिरिति पाठान्तरम् ।

पराकाद्यशक्तौ प्राजापत्यत्रयं सान्तपनाशक्तौ सार्द्धप्राजापत्य-द्वयेरित्यर्थः । सर्व्वत्र शक्ताद्यपेक्षया द्विगुणत्रिगुणादिकङ्कर्त्तव्यं कल्पनीयम् ।

## अथ तीर्थयात्रास्नानम् ।

तत्र समूलत्वप्रदर्शनार्थमादित्यपुराणोक्तं किञ्चिल्लिख्यते ।

पाण्डवै राज्यलाभाय दुरितोपशमाय च ।
श्रीकृष्ण नारद व्यास श्रीकण्ठेन्द्राजलोमशैः ॥
मार्कण्डेय पुलस्त्याज सप्तर्षिप्रमुखैस्तथा ।
द्वादश द्वादशाब्दानि कृच्छ्राण्यादाय भक्तितः* ॥

तीर्थान्यकुर्व्वन्नित्यादि आदिपुराणे श्रूयते । कथेति स्मृतिसङ्ग्रह-स्मृत्यर्थसारादिभिरुक्तप्रकारोऽस्माभिरपि लिख्यते ।

तत्र सङ्कल्पपूर्व्वकं गङ्गायां षष्टियोजनायतस्य† भागीरथ्यां स्नानं षडब्दकृच्छ्रसममत्र एकैकस्य यात्रायोजनस्य वृद्धावर्द्ध-कृच्छ्रवृद्धिः कल्पनीया । षष्टियोजनागतस्य षडब्दलात् दशयोजनागतस्याब्दप्रायश्चित्तं भवति । एवं तृतीयांशाधिक क्रोशादागतस्य भागीरथ्यां विशुद्धस्नानेनैकः‡ कृच्छ्रो भवति । मध्ये चेत्पर्व्वतादिभिर्व्यवधानं भवति । पर्व्वताद्यभावे मार्गस्य

---

† शक्तित इति क्वचित् पुस्तके पाठः । ‡ षष्टियोजनागतस्य इति क्वचित् पाठः ।
§ विशुद्धस्नानेन इति पाठान्तरम् ।

दुर्गमत्वे च योजनागतस्य यत्नस्य गङ्गास्नानमेकः कृच्छ्रोभवति। असक्तस्य अर्द्धयोजनादागतस्य यत्नस्यापि मार्गस्य दुर्गत्वे च अर्द्ध-योजनादागतस्य त्वेवं कल्पनीयं पूर्व्वं सप्तमातृका राक्षसभयान्न-द्योजाताः। याते च भये पुनर्देवता अभूवंस्ततो नद्यः शुष्काः तेषु स्थानेषु भागीरथी समागता भवेत्तासु विष्णुगङ्गादिसप्त-मातृकानामासु* गङ्गासु स्नानं षष्टियोजनागतस्य षड़ब्दकृच्छ्र-तुल्यम्। प्रयागे वाराणस्यां गङ्गाद्वारे गङ्गासागरसङ्गमे च द्वि-गुणम्। यमुनायां विंशतियोजनागतस्य स्नानं द्व्यब्दकृच्छ्रसमम्। मथुरायां द्विगुणं सरस्वत्यां चत्वारिंशद्योजनागतस्य चतुरब्दसमं प्रभासे द्वारवत्याञ्च द्विगुणम्। यमुनासरस्वत्योर्यात्रा योजनवृद्धौ पादकृच्छ्रवृद्धिः ह्रासस्तु पूर्व्वरीत्या प्रकल्प्यः।† दृषद्वती शतद्रु विपाशा वितस्ता इरावती मरुद्वृधा मधुमती पयस्विनी घृतवती-त्यादिदेवनदीषु स्नानं त्रिंशत्कृच्छ्रसमं पञ्चदशयोजनादागतस्य चन्द्रभागा वेत्रवती सरयू गोमती देविका कौशिकी नित्यजला मन्दाकिनी सहस्रवक्त्रा‡ पौनःपूर्व्या पूर्णपुण्या बाहुदा गण्डकी वारुण्यादिदेवनदीषु स्नानं पञ्चदशयोजनादागतस्य पञ्चदश-कृच्छ्रसमम्। एतासु महानदीषु परस्परसङ्गमे योजनागतस्य कृच्छ्रत्रयं फलम्। समुद्रागतनदी महानदीति पूर्व्वोक्त-देवनदीनां सङ्गमे योजनागतस्य षट्कृच्छ्रफलमनुक्तस्थले यात्रा

---

* विष्णुगङ्गादिसप्तमातृकानामस्विति पाठान्तरम्। † कल्पनीय इति पाठान्तरम्। ‡ सिन्धुवक्रेति पाठान्तरम्।

योजनसंख्या विज्ञेया महानदेषु महानद्यर्द्धफलम्। शोण-
महानदेषु गङ्गार्द्धफलं गोदा महानदी सेतुरामेश्वरं पद्मनाभं
श्रीरङ्गं पुरुषोत्तमं कुरुक्षेत्रं नैमिषं वदरिकाश्रमं पुण्यारण्यं
केदारं श्रीशैलं महालयं रुद्रकोटिं पुष्करं नर्म्मदां आम्रातकेश्वरं
कुब्जाङ्गं प्रभासं कोकामुखं विजयेशं पुरीन्द्रं पञ्चनदं गोकर्णं
मथुरामयोध्यां द्वारवतीं गयां काञ्चीं शालग्रामं शम्भलग्राम-
मित्यादि मुक्तिक्षेत्राणि संसेव्य गङ्गासमं फलं लभेत्। चतु-
र्विंशतियोजनागतस्य नर्म्मदायां स्नानं चतुर्विंशतिकृच्छ्रफलं
कुब्जिकासङ्गमे द्विगुणं शुक्लतीर्थे चतुर्गुणम्। अष्टयोजनागतस्य
तस्यामष्टकृच्छ्रफलम्। तथा पयोष्ण्यामपि अत्र सङ्गमे* नदेषु
नद्यर्द्धफलं द्विगुणं षष्टियोजनागतस्य गोदावर्य्यां चान्द्रकृच्छ्रसमं
त्रिंशद्योजनागतस्य एकादशतीर्थेषु प्रतिलोमानुलोमस्नानं
षष्टिकृच्छ्रसमं वञ्जुकापसङ्गमे† द्विगुणं सप्तगोदावरे भीमेश्वरे
त्रिगुणं कुशतर्पणवञ्जुकायां‡ द्वादशयोजनागतस्य द्वादशकृच्छ्र-
समं प्रणीतायामष्टयोजनागतस्याष्टकृच्छ्रफलं पूर्णायां तदर्द्धं
कृष्णवेलायां योजनसंख्यया कृच्छ्रसंख्या तथा तुङ्गभद्रायामपि
पम्पासङ्गमे द्विगुणं हरिहरे त्रिगुणं भीमरथ्यायामपि योजन-
संख्यया कृच्छ्रसंख्या ककुद्मतीसङ्गमे योजनागतस्य पञ्चदश-

---

* गङ्गासङ्गमे द्विगुणमिति क्वचित् पाठः। † वञ्जुलासङ्गमे मूलपुस्तके दृश्यते। जम्बरासङ्गमे क्वचित् पाठः क्वचिच्च पञ्जुरासङ्गमे इति पाठः। ‡ जम्बरायामिति पाठान्तरम्।

दृष्ट्यागपि कृच्छ्रसमं कुत्सितनाम्नी नद्यः पापनद्यश्च वर्जिताः।
उपवाससहितं महानदीस्नानं पञ्चदशकृच्छ्रफलम्प्रसिद्धदेवता-
समीपे द्विगुणं तत्र स्नात्वा देवतादर्शने तु त्रिगुणं विन्ध्यदेशी-
यानां सेतुबन्धरामेश्वरे जाह्नव्यास्त्रिगुणफलम्। तथैव जाह्नवी-
केदारयोरपि दक्षिणदेशीयानां जाह्नव्याः षड्गुणं गङ्गादेशीयानां
सेतुबन्धरामेश्वरे षड्गुणं सर्व्वत्र भाग्यमेदपर्व्वतादिभिर्व्यवधाने
मार्गस्य दुर्गत्वे च उक्तयोजनसंख्यातो योजनसंख्याह्रासेन
कृच्छ्रादिफलानि कल्प्यानि प्रयासाधिक्यात्सर्व्वत्र वैष्णव माहे-
श्वर सौर शाक्तेयपीठेषु दर्शनेन योजनसंख्यया कृच्छ्रसंख्या
प्रख्यातेषु द्विगुणम्। तीर्थतीरस्थितस्यापि योजनपरिमितात्प्र-
देशादागमनमन्तरेणापि विधिवत्स्नात्वा धौतं वासः परिधाय
शिरोरुहेषु चार्द्रेषु सत्सु पुनः स्नातव्यम्। एवं द्वादशभिः
स्नानैरेकः कृच्छ्रो भवति। परानगन्ता* षोड़शांशफलं प्रसङ्ग-
गन्तार्द्धफलं लभते अनुसङ्गेन तीर्थं प्राप्य स्नानफलं लभते न
यात्राफलं पितृ पितामह भ्रातृ मातामह मातुल श्वशुर
श्यालक पोषकान्नदगुर्व्वाचार्य्योपाध्यायार्थं तेषां पत्न्यर्थं मातृ-
स्वसृ पितृस्वसृसखर्थञ्च स्नात्वा स्वयमष्टमांशं लभते साक्षात्पित्रोः
कुर्व्वन् पुत्रश्चतुर्थांशं लभते।

दम्पती च सपत्नी च मिथोऽर्द्धं लभते फलम्।

देवलः।

---

* परार्थगन्तुरिति क्वचित् पाठः।

अभिसङ्गम्य तीर्थानि पुण्यान्यायतनानि च ।
प्रमुच्यन्ते नरः पापाद्ब्राह्मणा ये तपस्विनः ॥
सर्व्वाः समुद्रगाः पुण्याः सर्व्वे पुण्या नगोत्तमाः ।
सर्व्वमायतनं पुण्यं सर्व्वे पुण्या वनाश्रयाः ॥ इति ।

## अथ सामान्येन पापनिष्कृतिहेतवः ।

तत्र गौतमबौधायनौ ।

तस्य निष्क्रयमाणानि* जपस्तपो होम उपवासो दानमुपनिषदो वेदान्ताः सर्व्वच्छन्दःसु संहिता मधून्यघमर्षणमथर्व्वशिरो† रुद्राः पुरुषसूक्तं राजनरौहिणे‡ सामनी बृहद्रथन्तरं पुरुषगतिः महानाम्नो महावैराजं महादिवा कीर्त्त्यं ज्येष्ठसाम्नामन्यतमद्वहिः पवमानं कुष्माण्डानि पावमान्यः सावित्री चेति पावनानि पयोव्रतता शाकफलभक्षता प्रसृतयावको हिरण्यप्राशनं घृतप्राशनं सोमपानमिति मेध्यानि । सर्व्वे शिलोच्चयाः सर्व्वाः स्रवन्त्यो ह्रदाः पुण्यास्तथा तीर्थान्यृषिनिवासा गोष्ठं परिस्कन्दा इति देशाः ब्रह्मचर्य्यं सत्यवचनं सवनेषूदकोपस्पर्शनमार्द्रवस्त्रता अधःशायिता अनाशक इति तपांसि हिरण्यं गौर्व्वासोऽश्वो भूमिस्तिलाघृतमन्न-

* निःक्रयणानि इति मूलगौतमसंहितायां पाठः । † अथर्व्वाङ्गिर इति क्वचित् पाठः ।
‡ निर्हरणहेतुरस्त्येव इति क्वचित् पाठः ।

मिति देयानि। संवत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेक

श्चतुर्विंशत्यहो द्वादशाहः षड़हस्त्र्यहोऽहोरात्र इति काला

एतान्येवानादेशे विकल्पेन क्रियेरन् गुरुषु गुरूणि

लघुषु लघूनि कृच्छ्रातिकृच्छ्रं चान्द्रायणमिति सर्व्वप्राय

श्चित्तमिति।

अस्यार्थस्तस्य पापस्य निष्क्रयमाणानि*संशोधनकारणानि जपा-

दीनामन्यतमस्यापि पापनिर्हरणहेतुत्वमस्त्येव प्रत्येकसमस्तत्वेन

निर्देशात् रहस्यब्राह्मणान्युपनिषदः बृहदारण्यकादयो वेदान्ता

उपनिषत्त्वेऽपि बृहदारण्यकादीनां पृथगुपादानमाधिक्य-

द्योतनार्थं सर्व्वशाखासु पदक्रमरहिता मन्त्रग्रन्थाः सर्व्वच्छन्दः

संहिता मधुवाता† इत्यादीनि यजूंषि मधूनि ऋतञ्च सत्यञ्च

इति सूक्तमघमर्षणं‡ अथर्व्वशिरः अथर्व्वैकदेशः प्रसिद्धः नमस्ते

रुद्रमन्यवे इत्यध्यायो रुद्राः § सहस्रशीर्षेत्यध्यायः पुरुष-

---

* निष्क्रयणानि इति मूलगौतमसंहितायां पाठः।

† मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। २७।

मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता। २८।

मधुमान्नो वनस्पतिर्मधुमान् अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः। २९।

‡ ओं ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्रिरजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरोऽजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयद्दिवञ्च पृथिवीं चान्तरीक्षमथो स्वः।

§ नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुत ते नमः। १।

या ते रुद्र शिवा तनूरघोरा पापकाशिनी।

तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि। २।

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् । ३ ।
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्व्वमिज्जगदयक्ष्मं सुमना असत् । ४ ।
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वान्जम्भयन्सर्व्वाश्च यातुधान्योऽधराचीः परासुव । ५ ।
असौ यस्ताम्रोऽअरुण उत बभ्रुः सुमङ्गलः ।
ये चैनं रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे । ६ ।
असौ योऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः । ७ ।
नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो येऽअस्य सत्वानोऽहं तेभ्योऽकरं नमः । ८ ।
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप । ९ ।
विज्यं धनुः कपर्दिनो विशल्यो बाणवान् २॥ उत ।
अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः । १० ।
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयाऽस्मान्विश्वतस्त्वम यक्ष्मया परिभुज ॥ ११ ।
परिते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारेऽअस्मन्निधेहि तम् ॥ १२ ।
अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे ।
निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव । १३ ।
नमस्ते आयुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने । १४ ।
मा नो महान्तमुत मा नोऽअर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः । १५ ।

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नोऽश्वेषु रीरिषः।

मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे। १६।

नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः। १७।

नमो बभ्लुशाय व्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमः सूतायाहन्त्यै वनानां पतये नमः। १८।

नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो भुवन्तये वरिवस्कृतायौषधीनां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः। १९।

नमः कृत्स्नायतया धावते सत्वानां पतये नमो नमः सहमानाय निव्याधिनऽआव्याधिनीनां पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमः। २०।

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निषङ्गिण ऽइषुधिमते तस्कराणां पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तं चरद्भ्यो विकृन्तानां पतये नमः। २१।

नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः। २२।

नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः। २३।

नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमः। २४।

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः। २५।

नमः सेनाभ्यः सेनानीभ्यश्च वो नमो नमो रथिभ्योऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽअर्भकेभ्यश्च वो नमः। २६।

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्टेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः । २७ ।

नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च । २८ ।

नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च । २९ ।

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च । ३० ।

नम आशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नादेयाय च द्वीप्याय च । ३१ ।

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च । ३२ ।

नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नम उर्वर्याय च खल्याय च । ३३ ।

नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च । ३४ ।

नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च । ३५ ।

नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च । ३६ ।

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च । ३७ ।

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च । ३८ ।

नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च । ३९ ।

नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय । ४० ।

नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च । ४१ ।

नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च । ४२ ।

नमः सिकत्याय च प्रवाह्याय च नमः किंशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च । ४३ ।

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च । ४४ ।

नमः शुष्क्याय च हरित्याय च नमः पांसव्याय च रजस्याय च नमो लोप्याय च चोलोप्याय च नम ऊर्व्याय च सूर्व्याय च । ४५ ।

नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानां हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः । ४६ ।

द्रापेऽअन्धसस्पते दरिद्र नीललोहित ।
आसां प्रजानामेषां पशूनां माभेर्मा रोङ्मो च नः किञ्चनाममत् । ४७ ।
इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामेऽअस्मिन्ननातुरम् । ४८ ।
या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ।
शिवा रुतस्य भेषजी तया नो मृड जीवसे । ४९ ।
परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढस्तोकाय तनयाय मृड । ५० ।
मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष ऽआयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि । ५१ ।

सूक्तं* राजनरोहिणे सामनी इन्द्रं नरोनेमधिता हिरण्याय

विकिरिद्र विलोहित नमस्तेऽअस्तु भगवः।
यास्ते सहस्रं हेतयोऽन्यमस्मन्निवपन्तु ताः। ५२।
सहस्राणि सहस्रशो बाह्वोस्तव हेतयः।
तासामीशानो भगवः पराचीना मुखा कृधि। ५३।
असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्।
तेषां सहस्रयोजनेऽव धन्वानि तन्मसि। ५४।
अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि। तेषां स०। ५५।
नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपश्रिताः। तेषां स०। ५६।
नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषां स०। ५७।
ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषां स०। ५८।
ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषां स०। ५९।
ये पथां पथि रक्षस ऐलबृदा आयुर्युधः। तेषां स०। ६०।
ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः। तेषां स०। ६१।
येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषां स०। ६२।
य ऽएतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे। तेषां स०। ६३।

नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्यो नमोऽअस्तु ते नोऽअवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः। ६४।

नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः। तेभ्यो दश—दध्मः। ६५।

नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः। तेभ्यो दश—दध्मः। ६६।

* सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं सर्वतः स्पृत्वा अत्यतिष्ठद्दशाङ्गुलम्। १।
पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति। २।

एतावानस्य महिमातो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । ३ ।
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि । ४ ।
ततो विराडजायत विराजोऽअधि पूरुषः ।
स जातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः । ५ ।
तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये । ६ ।
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत । ७ ।
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः । ८ ।
तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये । ९ ।
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्किं बाहू किमूरू पादाऽउच्यते । १० ।
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽअजायत । ११ ।
चन्द्रमा मनसो जातश्चक्षोः सूर्यो ऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत । १२ ।
नाभ्याम् आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां । २ । अथ कल्पयन् । १३ ।
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः । १४ ।
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् । १५ ।

इत्यस्यामृचि गीयेते* । बृहद्रथन्तरे त्वामिद्धिहवामहे अभि त्वा

यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः । १६ ।
अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे । १७
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय । १८ ।
प्रजापतिश्चरति गर्भेऽअन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा । १९ ।
यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्व्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये । २० ।
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे । २१ ।
श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं मऽइषाण सर्व्वलोकं मऽइषाण । २२ ।

* बहुषु पुस्तकेषु हिरण्याय इति पाठो दृश्यते परन्तु सामवेदे आरण्यगाने चतुर्थप्रपाठके हिरण्याय इत्यत्र हवन्ते इति दृश्यते यथा—

१ १ १ ३र२र ३ र
राजनं साम यथा—हुम् । ३ । हो । ३ । हु९ । ३ । ओहा । २ । औहोइ । २ ।
३र २र २ १ २ १ २र३४५ १र २१ १३ २र
औहोइ । इन्द्रं नरो । ने३मधि । ताहवन्ताइ । ३ । वयोहहत् । ३ । विश्वाश्ये
१ २ र २१र २१ २ ३४५ २१र १
विश्वकर्मणे । ३ । यत्पारिया: । युनज । ताइधियस्ता: । सत्यमोजः । ३ । रजः
२र१र २ १ २३४र५ २१ र २१ र
सुवः । ३ । शूरोतृषा । ता३श्रव । सश्वकामाइ । ३ । भद्र९सुधा । २ । भद्र९सुधि ।
१र १ र २र१र २१र २र३४५ २१
धमूर्जं । इषमूर्जं । २ । आगोमताइ । व्रजेभ । जातुवत्ना: । ३ । इहृद्याम्: । ३ ।

शूर नो नुम इत्यनयोर्गीतिः* पुरुषगतिः अहमस्मि प्रथमजा ऋतस्येत्यस्यां गीतं सामैवं† विदामघवन्निल्यस्यामृचि महानाम्नः‡ । पिवाससोममिन्द्रेत्यस्यां गीतं साम महावैराजं§ ।

---

२ १ २ १　　२ १ २　　२　　१र र रर रर२३१११
दिविदधे२हम् । २ । दिविदधे ३ । हाउवा । वागीडामुवीनृहहा२३४५: ॥

२ र　　१ २　　१ २　　१ २
रौहिणं साम यथा—हाउ । ३ । आइही । ३ । आईहिया । ३ । आमाउ । ३ ।
१ २　　१ २　　१　　१ र र　र —१　　१ र र
आयाम् । ३ । नामाः । ३ । किट् । २ । इन्द्रं नरोनेमधिताहवा२ताई । यत्पार्यायुन-
र —१　१र र र　　—१　　१र र　　र र —१　　१
जतेधिया२स्ताः । शूरोनृषातायवसश्चका२माइ । आगोमतिव्रजेभजातुवा२न्नाः । मना२३
१　१र　१　१　१　१र　१　१र　१　१　१
होई । माणा२३होइ । चनू२३होई । भीवा२३९होइ । धीपा२३होई । अता२३९होई ।
१र　१　१र　१　१　१　१र　१　१　१
भूता२३९होइ । पाना२३९होइ । चित्ता२३९होइ । धीता २३९होई । सुवा२३होई ।
१र　१　३　५र　३११११
व्योता२३इहोर । वा२३४ । औहोवा । ऊ२३४५ ॥

आरण्यकगाने चतुर्थप्रपाठके ।

* त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥

† अहमस्मि प्रथमजा ऋतस्य पूर्वन्देवेभ्योअमृतस्यनाम ।
योमाददातिसइदेवमाव दहमन्नमन्नमदन्तमद्मि ॥

‡ विदामघवन्विदागातुमनुश शिषोदिशः ।
शिक्षाशचीनाम्पतेपूर्व्वीणाम्पुरूवसो ॥

§ पिवाससोममिन्द्र मन्दतुत्वायन्तेसुषावहर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतोनार्वा ॥

विभ्राट् बृहत् पिबतु सौम्यम् मध्वित्यस्यां गीतं साममहादिवा कीर्त्यम्* आज्यदोहाख्यानि सामानि† ज्येष्ठसाम्ना-

---

* विभ्राड्बृहत्पिबतु सौम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो योऽअभिरक्षतित्मना प्रजाः पिपर्त्ति बहुधा विराजति ॥

† अग्निर्वैश्वानरोऽनुष्टुप् सोमः, गर्गांगिरानस्य

प्रथमेऽह्नि आर्भवे विनियोगः ।

१ २ १ र ३र ३ ५ १ र ३ १३ ५
ओहम् प्रसुन्वानार । यअन्धा२३४सा. । मार्त्तानवा२ । पटतहा२३४चाः ।
१ र ३२ ३ ५ १र ३२३ ५ १रर
अपश्वाना२म् । अराधा२३४साम् । हतामखा२म् । नहगा२३४वाः ॥ आभामिरा२ ।
३र२३ ५ १३ ३२ ३ ५ १ र ३२ ३ ५
त्वे अव्या२३४ता । भुजनपू२त् । नउणा२३४यी: । सरीज्मारी२ । नयांधा२३४णाम् ।
१र ३२ ३ ५ १र र ३२ ३ ५ १ ३२ ३
वरीनयी२ । निमासा२३४दाम् ॥ सवीरीदा२चसाधा२३४नाः । वियस्तस्ता२ । भरीदा-
५ १ ३र२३ ५ १रर ३२ ३ ५
२३४सायि । हविः पवा२यि । नेअव्या२३४ता । वेधानयो२ । निमासा२३४दाम् ।
२ १२
ए३ । ऋतम् ॥ ४

ईनिधनमाज्यदोहम् ।

अग्निर्वैश्वानरस्त्रिष्टुप् सोमः, द्वितीयेऽहनि मध्यन्दिनान्त्यम् ।

२१ र २१ २ ३५ २११ २ १ २३४र५
अयं९ सोमाः । इन्द्र तु।भ्यं९ सुन्वायि । तुभ्यम्पवा । ता३यितुवम् । असत्पाह्री ।
२१ २३र २३ ५ २१ २ १ २र३४र५
तुभ्यं९ ह्याम । चकृषे । त्वं ववृषायि । इन्दुमदा । या३युजि । याय सोमाम् ।
१ १र २१ २र३४र५ २१ २ १र २ ३४र५ २र१र
सई९रथो । नभुरि । षाडोयजी । महः पुरू । नो३सात । यायि वसूनो । आदों विश्वा ।
२१ २र३४र५ २१र २१र २र२४५ २१ र २१र
नहुषि । यानि जाता । सुवर्षा ताः । वनऊ । ध्वानवन्ता ॥ ग्रश्रीश्राज्ञों । नमाव३-

मन्यतमं उपस्मै गायते स्तोत्रं वहिः पवमानं* यद्देवा देवहेलन मित्यादीनि यजूंषि कुष्माण्डानि† । स्वादिष्टयाम-दिष्टयेत्यादि ऋचः पावमान्यः‡ गोमयमध्यस्थित यवसाधिता

---

२३४५ २१ २ १ २र३४र५ २र १र २ १ २३ ४५
ष्यवस्वा । अनभिशा । स्ता२ दिवि । या यथावीट् । आपो नमा । चू२सुम । तिर्भवानाः ।
२१र २१र २र ३४५
सहस्रापाः । पृतना । षाड्नयज्ञाः । ई२३४५ ॥ ५

त्रिणिधनमाज्यदोहम् ।

अग्निर्वैश्वानरस्त्रिष्टुप् सोमः तृतीयेऽहन्यार्भवाद्यम् ।

२१र र २ १ २३४ ५ २१ २ १ २र३४र
तिस्रो वाचाः । ई२रय । ति प्रवह्नीः । ऋतस्य धायि । तो२ब्रह्मा । णो मनीषाम् ।
२र १र २ १ २३४र५ २र१ २१ २र३४र५
गावो यन्तायि । गो२पतिम् । पृच्छमानाः । सोमं यतायि । मतयः । वावशानाः ।
२र १र २ १ २र३४र५ २र१ २१ २३४र५
सोमङ्गावो । धे२नवः । वावशानाः । सोमं विप्राः । मतिभिः । पृच्छमानाः ।
२र१ २१र २र३४र५ २र१र २१ २३ ४ ५
सोमः सुताः । ऋच्यते । पूयमानाः । सोमे अर्काः । त्रिष्टुभः । सान्नवन्तायि ।
२र१र २ १ २३४र५ २र१ २१र २३४५
एवानः सो । मा२परि । षिच्यमानाः । आपवस्वा । पू२यमा । नः सुवस्तो ।
२ १ र २ १ २र३४र २१व २ १ २र३४ ५ ५र
इन्द्रमावायि । आ२ब्वृह । तामदेना । वर्ड्या वा । चा२ञ्जन । या पुरन्धिम् । ए ।
१ २ ११११
आज्यदोहा२३४५म् ॥ ६

* उपस्मै गायता नरः पवमानायेन्दवे । अभिदेवां २॥ ऽइयक्षते ।

† यद्देवहेलनं इत्यादिमन्त्राः प्राङ्निर्दिष्टा (७४०पृष्ठे १२श पंक्तौ) अतोन पुनर्लिख्यन्ते ।

‡ स्वादिष्टया मदिष्टया पवस्व सोम धारया। इन्द्राय पातवे सुतः ।

यवागूः प्रसृतपावकः गोष्ठप्रसिद्धं परिस्कन्दा गोव्रजनमार्गाः सर्व्वप्रायश्चित्तं सर्व्वत्रादेशे अनादेशे च प्रायश्चित्तमित्यर्थः ।

विश्वामित्रः ।

उपपातकसंयुक्तास्तास्त्वादिष्वेषु चैव हि ।
प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया ॥
शक्तिजातिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं लघु ।
अनुबन्धादिकं दृष्ट्वा कल्प्यं सर्व्वं यथागमम् ॥
प्रकाश उक्तं यत्किञ्चिद्विंशद्भागो रहस्यके ।
त्रिंशद्भागः षष्टिभागः कल्प्यो जात्याद्यपेक्षया ॥

## अथ परिषत् ।

तत्र धर्म्मविवृत्तौ ।

क्षत्रियो ह्यथ वैश्यो वा शूद्रो वै न कथञ्चन ।
प्रायश्चित्तविधानं हि कुर्व्वीतेति विदुर्बुधाः ॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशतयुक्तानां पर्षत्त्वं नोपयुज्यते ॥
पातके च शतं पर्षत्सहस्रं महदादिषु ।
उपपातकेषु पञ्चाशत्स्वल्पेष्वल्पं तथाभवेत् ॥

बहुभिर्विद्वद्भिर्मिलित्वा विचार्य्य प्रायश्चित्तं विधेयम् इति । शतादिशब्दानां तात्पर्य्यार्थः ।

अतएव याज्ञवल्क्यः ।

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्म्मः स्यादेको वाध्यात्मवित्तमः ॥ इति ।

वेदधर्म्मशास्त्रज्ञाश्चत्वारो ब्राह्मणाः पर्षत् । ऋग्यजुःसामात्मिकास्तिस्रो विद्यास्तत्समूहस्त्रैविद्यं तेन च तदध्येतारस्त्रयो ब्राह्मणा लक्ष्यन्ते ते त्रयः पर्षदित्यर्थः अत्रापि धर्म्मशास्त्रज्ञत्वमनुवर्त्तते एवमुत्तरत्रापि आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मम् ।

अङ्गिराः ।

चतुर्व्विद्यं कल्पनीयमङ्गविद्धर्म्मपाठकः ।
त्रयश्चाश्रमिणो वृद्धाः पर्षदेषा दशावरा ॥
चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः ।
यथाक्रमं विनाप्यङ्गैश्चातुर्व्विद्यमिति स्मृतम् ॥
धर्म्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य तु ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी* भवेद्द्विजः ॥
शब्दे च्छन्दसि कल्पे च शिक्षायाञ्च सुनिश्चितः ।
ज्योतिषामयने चैव सनिरुक्ताङ्गविद्भवेत् ॥
वेदविद्याव्रतस्नातः सत्यसन्धो जितेन्द्रियः ।
अनेकधर्म्मशास्त्रज्ञः प्रोच्यते धर्म्मपाठकः ॥
ब्रह्मचर्य्याश्रमादूर्द्धं वृद्धा आश्रमिणस्त्रयः ।
वदेयुस्तस्य ते धर्म्मान् ये मया परिकीर्त्तिताः ॥

---

* वैकल्पीति क्वचित् पाठः ।

मनुस्तु ब्रह्मचर्य्यादीनां त्रयाणामाश्रमिणां परिषत्त्वमाह ।

त्रैविद्यो हेतुकस्तर्की* नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्व्वे पर्षदेषा भवेदिति† ॥

हेतुकोऽनुमानज्ञः तर्कोऽप्यस्ति इति तर्की संशये सत्येकस्मिन् कोटौ प्रामाणिकत्वारोपे कृते बाधकदर्शनात् प्रमाणेनात्र भवितव्यमिति यः प्रत्ययः स तर्कः स च वेदशास्त्राविरोधी ग्राह्यः ।

## अथ पर्षदुपस्थानम् ।

मनुः ।

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्व्वंकृतेन वा ।
न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥

दैवाद्दैववशात् इहजन्मकृतपापेन पूर्व्वजन्मकृतेन त्वयकुनखिश्यावदन्तत्वाद्यनुमितेन यथा कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रञ्चरेत् इति । वशिष्ठाद्युक्तप्रायश्चित्तं कुर्य्युः केवलं कुनखादिनिमित्तं न तु कुनखादिनिदानभूतस्वर्णस्तेयादिनिमित्तं तथा त्वयित्वेऽपि रोगनिमित्तनिदानादिरूपप्रायश्चित्तमेव न तु निदानभूतब्रह्महत्यादि प्रायश्चित्तम् । युक्तञ्चैतत् चरमफलविनाश्यं हि कर्म्म रोगादीनि च चरमफलानि विवृतञ्चैतत् मिताक्षराटीकायां सुबोधिन्यां प्रायश्चित्ताध्याये

---

* तर्क इति क्वचित् पाठः । † दशावरेति क्वचित् पाठः ।

अङ्गिराः ।

उपस्थितस्तु न्यायेन व्रतादेशनमर्हति ।
कृते निःसंशये पापे न भुञ्जीतानुपस्थितः ॥
भुञ्जानो वर्द्धयेत्पापमसत्यं पार्षदब्रुवन् ।
संशये न तु भोक्तव्यं यावत्कार्य्यस्य निष्कृतिः ॥
प्रमादश्च न कर्त्तव्यो यथैवासंशये तथा ।
कृत्वा पापं न गूहेत गूहमानस्य वर्द्धते ॥
बहुवा त्वल्पकं वापि कर्म्मविद्भ्यो निवेदयेत् ।
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ॥
मृदुरार्य्यवसम्पन्नः शुद्धिं याचेतमानवः ।
स चेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्रियो वापि वैश्यो वा पर्षदं ह्युपतिष्ठते ॥

क्षत्रियाद्युपादानं प्रदर्शनार्थम् ।

उपस्थाय ततः शीघ्रमार्त्तिमान्धरणीं* व्रजेत् ।
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत् ॥
ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम् ।
वृद्धाः पृच्छन्ति किङ्कार्य्यमुपविश्याग्रतः स्थितम् ॥
किन्ते कार्य्यं वदास्माभिः किं वा मृगयसे द्विज ।
तत्त्वतो ब्रूहि तत्त्वं सत्यं हि गतिरात्मनः ॥
अस्माकञ्चैव सर्व्वेषां सत्यमेव परं बलम् ।

---

* चरणौ इति क्वचित् पाठः । अन्यान्तरे तु धरणीं गत इति पाठः ।

यदि चेद्वचसे सत्यं नियतं प्राप्स्यसि शुभम् ॥
यद्यागतो ह्यसत्येन न त्वं शुध्यसि कर्हिचित् ।
एवं सर्व्वमनुज्ञातः सर्व्वं ब्रूयादशेषतः ॥ इति ।

न भुञ्जीतानुपस्थित इति पर्षदमनुपस्थितः संशये पर्षदुपस्थातुः स्वगतपापसन्देहे कार्य्यस्य निष्कृतिः पापस्य निश्चयः प्रमादश्च न कर्त्तव्यः पुनः पापं न कुर्य्यामित्यर्थः। अथवा दीर्घकालसन्देहानुवृत्तौ हविष्यभोजनादिना शरीररक्षणमप्रमादः। स न कर्त्तव्यः यथैवासंशये पापस्य निश्चये देशान्तरादिव्यवहितेषु विचरत्सु उपस्थानात् प्राग्यथा हविष्यभोजनादिना शरीररक्षणं क्रियते तथा संशयस्थलेऽपीत्यर्थः। परिषदग्रे विख्यापनाच्च दक्षिणादानानन्तरं कुर्य्यादित्याह।

पराशरः।

पापं प्रख्यापयेत्पापी दत्त्वा धेनुं तथा वृषम्। इति।

अत्र विशेषमाह विष्णुः।

पादव्रते वस्त्रदानङ्कृच्छ्रार्द्धे तिलकाञ्चनम्।
पादहीने तु गामेकां कृच्छ्रे गोमिथुनं स्मृतम् ॥ इति ॥

अनयैव दिशा शक्त्याद्यपेक्षया योज्यम्*।

यत्तु वचनम्।

विख्याप्य पापं वक्तृभ्यः किञ्चिद्दत्त्वा व्रतञ्चरेत्। इति।

तत्प्रकीर्णकविषयम्।

---

* शक्त्याद्यपेक्षया होमः इति क्वचित् पाठः।

## अथ प्रायश्चित्तनिर्णयः ।

अङ्गिराः ।

तेषां निवेदिते कार्य्ये उत्कार्य्यो हि स कार्य्यवान् ।
तस्मिन्नुत्कारिते विप्रे ये यथा धर्म्मपाठकाः ॥
ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम् ।
धर्म्मशास्त्रेषु यच्चोक्तं यच्च सानुग्रहं भवेत् ॥
विमृश्य परिषत्सर्व्वं प्रायश्चित्तं प्रकल्पयेत् ।
यथाकालं यथादेशं यच्च कार्य्यान्तरं भवेत् ॥
पर्षदः सम्मतश्चैव कारिणश्च बलाबलम् ।
सर्व्वेषां निश्चितं यच्च यच्च प्राणान्न पीड़येत् ॥

कार्य्यान्तरं वृद्धमातापितृशुश्रूषादि । यत्र प्राणपीड़ाकरव्यतिरिक्तप्रायश्चित्तान्तरमस्ति तत्र तत्र प्राणबाधाकरं न देयमित्यर्थः ।

देवलः ।

कृच्छ्राणां दापको* राजा निर्द्दिष्टा धर्म्मपाठकः ।
अपराधी प्रयोक्ता च रक्षिता कृच्छ्रपालकः ॥

राजा कृच्छ्राणां दापकः† धर्म्मपाठकः प्रायश्चित्तनिर्द्दिष्टा धर्म्मपाठकलक्षणं परिषल्लक्षणेऽभिहितम् । अपराधी अपकारी पापकारी कृच्छ्रप्रयोक्ता रक्षिता राजपुरुषः कृताकृतावेक्षणेन प्रायश्चित्तपरिपालकः ।

---

* दायक इति पाठान्तरम् ।　† दायक इति पाठान्तरम् ।

तथा ।

विचारस्तादृशः कार्य्यो यथा सर्व्वे सभासदः ।
एकवाक्यतया ब्रूयुः तथा श्रेयोऽधिगच्छति* ॥

वृद्धशातातपः ।

यद्विना धर्म्मशास्त्रेण प्रायश्चित्तं विधीयते ।
नैव शुद्धिमवाप्नोति प्रायश्चित्ते कृते तु सः ॥
अदृष्ट्वा† धर्म्मशास्त्राणि प्रायश्चित्तं वदन्ति ये ।
प्रायश्चित्ती भवेत्पूतस्तत्पापं पर्षदं व्रजेत्‡ ॥

अङ्गिराः ।

कृत्वा पूर्व्वमुदाहारं यथोक्तं धर्म्मकर्त्तृभिः§ ।
पश्चात्कार्य्यानुसारेण शक्त्या कुर्य्युरनुग्रहम्¶ ॥

धर्म्मकर्त्तृभिः धर्म्मशास्त्रकारैः कार्य्यानुसारेण ।

देवलः ।

एको नार्हति तत्कर्त्तुमनूचानोऽप्यनुग्रहम् ।
धर्म्मज्ञा बहवो विप्राः कर्त्तुमर्हन्त्यनुग्रहम् ॥
मोहाद्वा‖ यदि वा लोभाद्भयादज्ञानतोऽपि वा ।
कुर्व्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ॥
शरीरस्यात्यये कार्य्यः संयातो नियमो द्विजैः ।

---

* अधितिष्ठति इति पाठान्तरम् । † अज्ञात्वेति ग्रन्थान्तरे पठितम् । ‡ तेषु गच्छतीति पाठान्तरम् । § धर्म्मकर्म्मभिरिति पाठान्तरम् । धर्म्मवक्तृभिरिति ग्रन्थान्तरे पठितम् । ¶ कुर्व्वन्त्यनुग्रहमिति ग्रन्थान्तरे पठितम् । ‖ स्नेहाद्वा इति पाठान्तरम् ।

महता चोपरोधेन न सुस्थस्य* कदाचन ॥

कार्य्यः अनुग्रहः कार्य्यः इत्यर्थः। महानुरोधी महत्पापम्† ।

अङ्गिराः।

आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः।
जानन्तो न प्रयच्छन्ति ते तेषां समभागिनः‡ ॥
तस्मादार्त्तं समासाद्य ब्राह्मणन्तु विशेषतः।
जानद्भिर्धर्म्मपन्थानं न भाव्यन्तु पराङ्मुखैः ॥
अनर्च्चितैरनाहूतैरस्पृष्टैश्चैव संसदि।
प्रायश्चित्तं न दातव्यं जानद्भिरपि कल्पतः।
सर्व्वेषां लिखितं यच्च यच्च प्राणान्न हापयेत्§ ॥

लिखितं निश्चितम्।

आहूय श्रावयेदेकः पर्षदो यो नियोजितः।
शृणु भोस्त्वमिदं विप्रैर्यत्तु चादिश्यते व्रतम्।
तत्तु यत्नेन कर्त्तव्यमन्यथा तद्वृथा भवेत् ॥
यदा त्वया भवेच्चीर्णं व्रतं शुद्धिकरं महत्।
तदा कुर्य्यात्प्रयत्नेन शक्त्या विप्राभिपूजनम् ॥
ब्राह्मणो ब्राह्मणानान्तु क्षत्रियाणां पुरोहितः¶ ।
वैश्यानां याजकश्चैव प्रायश्चित्तं समादिशेत् ॥
अगुरुः क्षत्रियाणां यो वैश्यानां वाप्ययाजकः।

---

* न स्वस्थस्येति पाठान्तरम्। † महत्पापदिति क्वचित्पाठः। ‡ तेऽपि तद्दोषभागिन-इति ग्रन्थान्तरे पठितम्। § न पातयेदिति पाठान्तरम्। ¶ विशेषत इति क्वचित्पाठः।

प्रायश्चित्तं समादिश्य तत्कृच्छ्रं समाचरेत् ।
एवमुत्कृष्टवर्णेषु ब्राह्मणादिषु दर्शितम् ॥

अत्रोत्कृष्टत्वं द्विजातीनां वृत्तातिशययोगात् । निकृष्टत्वञ्च द्विजातिषु वृत्तराहित्यं तत्र ब्राह्मणमन्तरा कृत्वा व्रतमेषां समादिशेत् ।

निकृष्टानान्तु वक्ष्यामि प्रायश्चित्तमतःपरम् ।

प्रायश्चित्तं प्रायश्चित्तदानम् ।

न्यायतोमार्गमाणस्य क्षत्रियादेः प्रणामिनः ।
अन्तरा ब्राह्मणं कृत्वा व्रतमेषां समादिशेत् ।
तथा शूद्रं समासाद्य तदा धर्म्मपुरःसरम् ।
प्रायश्चित्तं प्रदातव्यं वेदमन्त्रविवर्ज्जितम् ॥

शङ्खलिखितौ ।

कृच्छ्राणि द्विजातीनामेव नावरस्य कामं धर्म्मेप्सोः प्रतिषेधः ।

साधारणो हि धर्म्मो नियमश्च अवरस्य शूद्रस्य वेदमन्त्रसहितस्य प्रायश्चित्तस्य निषेधः तद्रहितस्याभ्यनुज्ञा ।

सुमन्तुः ।

अथवा रागद्वेषादलभ्यमानेषु प्रायश्चित्तेषु यज्ञहवनाध्ययन ब्रह्मचर्य्यपरो भिक्षाशी दण्डी मेखली स्वयमेव संवत्सरेण महापातकादितत्परो व्यपोहति किल्बिषी न ब्राह्मणस्य पतनमिच्छन्त्याचार्य्याः ।

अस्यार्थः । रागादिवशात् पर्षदः सकाशात्प्रायश्चित्तमलभमानः

स्वयमेव यज्ञहोमाध्ययनादिनिष्ठो ब्राह्मणः संवत्सरेण इत्युपलक्षणं यावता कालेन यत्पापनिवृत्तिस्तावता महापातकादीनि व्यपोहेदिति* ।

शङ्खः ।

तस्करश्वापदाकीर्णे बहुव्यालमृगे वने ।
न व्रतं ब्राह्मणः कुर्य्यात्प्राणबाधाभयात्सदा ॥
शरीरं धर्म्मसर्व्वस्वं† रक्षणीयं प्रयत्नतः ।
शरीरात् स्रवते धर्म्मः पर्व्वतात्सलिलं यथा ॥ इति ।

## अथ व्रतस्य ग्रहणकालः तत्प्रकारश्च ।

व्रतग्रहणं व्रतानुष्ठानदिवसात्पूर्व्वदिने सायाह्ने कार्य्यम् ।

तथाच विष्णुः ।

सर्व्वपापेषु सर्व्वेषां व्रतानां विधिपूर्व्वकम् ।
ग्रहणं सम्प्रवक्ष्यामि प्रायश्चित्तं चिकीर्षताम् ॥
दिनान्ते नखलोमादीन् प्रवाप्य स्नानमाचरेत् ।
भस्म गोमय मृद्वारि पञ्चगव्यादि कल्पितैः ॥
मलापकर्षणं कार्य्यं वाह्यशौचोपसिद्धये ।
दन्तधावनपूर्व्वेण पञ्चगव्येन संयुतम् ॥
व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शने ।

---

* व्यपोहति इति पाठान्तरम् । † धर्म्मसंस्थानमिति पाठान्तरम् ।

आचम्यातः परं मौनी ध्यायन्दुष्कृतमात्मनः ।
मनःसन्तापनं तीव्रमुद्वहेच्छोकमन्ततः ॥ इति ।

वह्निर्ग्रामाद्बहिः ।

वशिष्ठः ।

कृच्छ्राणि व्रतरूपाणि श्मश्रुकेशादि वापयेत् ।
अक्षिरोमशिखावर्ज्जमिति ॥

व्रतरूपाणि प्रायश्चित्तरूपाणि यानि तत्रोक्तरीत्या वपनं केवल-पुण्यार्थिनो वपनं नास्तीत्यर्थः ।

बौधायनः ।

केश श्मश्रु नख रोम वपनं चान्द्रायणादिषु ।

एतदेव स्त्रियः केशवर्ज्जनमिति तत्र विशेषः ।

केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।
गोवधादिषु सर्व्वेषु छेदयेद*ङ्गुलित्रयम् ॥
सधवानाञ्च नारीणामलङ्काराय सर्व्वदा ।
केशसंधारणम्प्रोक्तं प्रायश्चित्ते द्विजोत्तमैः ॥

इत्यत्र सधवाशब्दोपादानाद्विधवानां वपनमस्त्येव अङ्गुलित्रय-परिमाणेन छेदः । यस्तु वपनं नेच्छति तं प्रति

हारीतः ।

राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशानां वपनङ्कृत्वा प्रायश्चित्तं समाचरेत् ॥

---

* वापयेदिति पाठान्तरम् । अङ्गुलित्रयमिति ग्रन्थान्तरे पठितञ्च ।

केशानां रक्षणार्थन्तु द्विगुणं व्रतमाचरेत् ।
द्विगुणे व्रत आचीर्णे दक्षिणा द्विगुणा भवेत् ॥

अत्र राजादयः उपलक्षणार्थाः यत्र राजादीनामप्येवं किमन्येषामित्यर्थः। एतच्च द्विगुणदक्षिणादानं महापातकादिव्यतिरिक्तस्थले वपनानिच्छोः ।

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तु*श्चावकीर्णिनः ॥

इति विशेषस्मरणात्। नेष्यते सर्व्वात्मना न विधीयते वापनमपि तु वापनाभावे तु द्विगुणव्रताद्याचरणे शुद्धिर्भवतीत्यर्थः। अतो महापातकगोवधावकीर्णप्रायश्चित्तेषु वपनमेव इतरेषु प्रायश्चित्तेषु वपनानिच्छोर्द्विगुणं व्रतं तथा दक्षिणा चेति विवेकः। अत्र सर्व्वत्र वर्णविशेषानुपादानेन वपनविधानात् सर्व्वेषामपि द्वादशरात्रादिसाध्यप्रायश्चित्ताधिकाराणां वपनं भवति। सर्व्वत्र कृच्छ्राणां व्रतरूपाणामित्यर्थः वपनविधायकवाक्येषु निरुपपदकृच्छ्रशब्दोपादानात् तस्य च प्राजापत्यपरत्वात्।

तथाच पैठीनसिः ।

द्वादशाहे तु सम्पूर्णे वपनमिति ।

सम्पूर्णवचनात् द्वादशाहन्यूने न भवति। यत्र च द्विरात्रत्रिरात्रादिसाध्यकृच्छ्राणामावृत्त्या द्वादशरात्रसमता तत्रापि

* गां हन्तुरिति ग्रन्थान्तरे पठितम्।

वपनमस्त्येव तत्र वपनमशिरोमशिखावर्ज्जं भवति अशिरोमशिखावर्ज्जमिति वशिष्ठेनाभिधानात् । यत्र तु मुण्डनमित्यादिपदैर्विशेषो विधीयते तत्र तथैव वपनं कार्य्यमिति निर्णयः । एतच्च व्रतमुपक्रान्तं परिसमापनीयमिति ।

तथा छागलेयः ।

पूर्व्वं व्रतं गृहीत्वा तु नाचरेत्काममोहितः ।
जीवन् भवति चाण्डालो मृतः श्वा चैव जायते ॥ इति ।

## अथ ब्रह्महत्यादिप्रायश्चित्तानि ।

तत्र प्रथमं किञ्चित्प्रकृतोपयोगित्वं विचार्यते ।

मनुः ।

शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रोपरुध्यते ।
द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते ॥
आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे ।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्म्मेण न नश्यति ॥

कालकारिते विप्लवे राजभावकालभावजनिते यज्ञदक्षिणानामपहारे सति तत्परित्राणे सङ्गरे दैवादापतितयुद्धे अभ्युपपत्तौ रक्षा धर्म्मेण अकूटशस्त्रेण अकूटप्रकारेण च ।

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥

वशिष्ठः।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।

क्षेत्रदारहरश्चैव* षड़ेते आततायिनः॥

अत्रायमभिप्रायः। आततायिनो गुर्व्वादयोऽपि हन्तव्याः किमुतान्य इति कैमुतिकन्यायेन गुर्व्वादिव्यतिरिक्ताततायिवधे दोषाभावः प्रतिपाद्यते न तु गुर्व्वादिहननं विधीयत इति। ब्राह्मणो न हन्तव्य इति ब्राह्मणजातिसाधारण्यक्तिहनननिषेधात्। अतएव

सुमन्तुः।

आततायिन्यदोषोऽन्यत्र गोब्राह्मणेभ्य इति।

अतो ब्राह्मणानां पूर्व्वोक्तस्थले आततायिब्राह्मणाद्युद्देशेन शस्त्रग्रहणं तत्त्रासजननार्थमात्मरक्षार्थञ्चेति विवेकः।

अथवा

आततायिनमायान्तं हन्यादेवाविचारयन्।

इत्यादिषु हननं न विधीयते हननस्य रागप्राप्तत्वात्। अपि तु दोषाभावः प्रतिपाद्यते। दोषाभावेऽपि न सर्व्वात्मना तथा सति अन्यत्र गोब्राह्मणेभ्य इत्यादि वचनविरोधात्। तस्मादेवं व्यवस्था दोषसद्भावप्रतिपादकवचनानि स्वरूपतो दोषं प्रतिपादयन्ति। दोषाभावप्रतिपादकानि तु अनाततायिब्राह्म-

* क्षेत्रदारापहारी च इति ग्रन्थान्तरे पठितम्।

षादिवशे यावान् दोषसद्भावस्तावान्न किन्तु ततो न्यून इति सम्पूर्णदोषाभावं प्रतिपादयन्तीति न विरोधः।

## अथ महापातकोद्देशः।

मनुः।

ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।
महान्ति पातकान्याहुः संयोगश्चैव तैः सह॥

च्यवनः।

ब्रह्महत्या सुरापानं गुरुतल्पं ब्राह्मणसुवर्णहरणं द्विजानां महापातकानि।

द्विजानामिति पदं शूद्रं प्रति सुरापानस्य पातकत्वव्युदासार्थमिति। सर्व्वसाधारण्येन महापातकान्यभिधाय असाधारण्येनाह स एव।

अदण्ड्यदण्डनं ब्रह्महत्या गुरुशय्यारोहणं युधि पलायनं क्षत्रियस्य मानतुलाऽनृतत्वं वैश्यानां मांसविक्रयो ब्रह्महत्या ब्राह्मणीगमनं कपिलापानं शूद्रस्य तत्सम्पर्कात्पञ्चममिति।

कपिलापानं कपिलादुग्धपानम्। एतानि पातयन्तीति पातकानि महच्छब्देन गुरुत्वं द्योत्यते।

## अथ ब्रह्महत्याप्रायश्चित्तम्।

याज्ञवल्क्यः।

शिरःकपाली ध्वजवान् भिक्षाशी कर्म्म वेदयन्।

ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ॥

साक्षाद्यो ब्राह्मणो ब्राह्मणं व्यापादयति स व्यापादितब्राह्मणशिरःकपालैकदेशेन तदभावे दैवान्मृतब्राह्मणशिरःकपालैकदेशेन हस्ते शिरःकपाली तथा कपालैकदेशं दण्डाग्रे आरोप्य तेन दण्डेन ध्वजवान् भिक्षाशी स्वकर्म्म प्रकाशयन् द्वादशाब्दानि व्रतञ्चरेत्।

शातातपः।

ब्राह्मणो ब्राह्मणङ्घातयित्वा तस्यैव शिरःकपालमादाय
तीर्थान्यनु सञ्चरेत्। इति।

मनुः।

ब्रह्महा द्वादशाब्दानि कुटीङ्कृत्वा वने वसेत्।
भिक्षाश्यात्मविशुद्ध्यर्थङ्कृत्वा शवशिरोध्वजम् ॥ इति।

एतदुभयं पाणिना ग्राह्यमाह

गौतमः।

खट्वाङ्गकपालपाणिरिति।

खट्वा चात्र शवनिर्हरणार्था तदङ्गमेव ध्वजशब्देन विवक्षितमित्यपरार्कः खट्वाशब्देन दण्डारोपितशिरः कपालात्मको ध्वजो गृह्यते न पुनः खट्वैकदेशः। महोक्षः खट्वाङ्गमित्यादि व्यवहारेषु तथैव प्रसिद्धेरिति विज्ञानेश्वरः। एतत्कपालधारणं चिह्नार्थं न तु भिक्षाद्यर्थमापस्तम्बेन भिक्षार्थं पात्रान्तरविधानात् लोहितकेन खण्डशरावेण ग्रामं भिक्षायै प्रविशेत्। इति।

वशिष्ठः।

समागाराण्यसङ्कल्पितानि चरेद्भैक्षमिति तत्र स्पष्टं लभ्यते नान्नेत्येवमचिन्तितानि इत्यर्थः ।

इयञ्च भिक्षा एककाल एव ।

तथाच स एव ।

एककालाहार इति ।

तच्च भैक्षं वर्णचतुष्टय एव तदाह

संवर्त्तः ।

चातुर्व्वर्ण्यञ्चरेद्भैक्ष्यं खट्वाङ्गी संयतः पुमान् ।

चातुर्व्वर्ण्येऽप्युत्तमवर्णगृहेषु भिक्षासम्भावे क्षत्रियादिगृहेषु भिक्षा न ग्राह्या । एतच्च भैक्षाशित्वं वन्यैर्जीवनाशक्तस्य ।

तथाच स एव ।

भिक्षायै प्रविशेद्ग्रामं वन्यैर्यदि न जीवति ।

मनुः ।

कृतवापनो वा निवसेद्ग्रामान्ते गोव्रजेऽपि वा ।
आश्रमे वृक्षमूले वा सर्व्वभूतहिते रतः ॥

कृतवापनो वेति विकल्पद्योतनार्थः ।

ब्रह्महा द्वादशाब्दानि वनेवासी* जटी ध्वजीति

संवर्त्तस्मरणात् ।

शङ्खः ।

स्थानवीरासनी मौनी मौञ्जीदण्डकमण्डलुः ।

---

* चीरवासा इति मिताक्षरायां पाठः ।

भिक्षाचार्य्येग्निकार्य्ये च कुष्माण्डीभिः सदा जपः ॥ इति ।
कुष्माण्डीमन्त्रैरग्निकार्य्यं कुर्य्यादित्यर्थः ।

गौतमः ।

खट्वाङ्गकपालपाणिर्द्वादश संवत्सरान् ब्रह्मचारी भिक्षायै ग्रामं प्रविशेत् । कर्म्माचक्षाणः पथोपक्रमेत् सन्दर्शनादार्य्यस्य स्थानासनाभ्यां विहरणसवनेषूदकोपस्पर्शी शुद्ध्येद्दिति ।

ब्रह्मचारिशब्देन वर्ज्जयेत् मधु मांस गन्ध माल्य दिवास्वप्नाञ्जनाभ्यञ्जनोपानच्छत्र काम क्रोध लोभ मोह हर्ष नृत्य गीत परिवादन भयानीत्यादीनि गृह्यन्ते । सवनेषूदकस्पर्शीत्यनेन स्नानविधानात् । तदङ्गभूतमन्त्रादीनामपि प्राप्तिस्तथा सन्ध्यापि कर्त्तव्या ।

अतएव दक्षः ।

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ।
यत्किञ्चित्कुरुते कर्म्म न तस्य फलभाग्भवेत् ॥

ननु द्विजातिकर्म्मभ्यो हानिः पतनमिति वचनात् सन्ध्याया अपि हानिर्भवत्विति चेत् नैवं द्विजातिकर्म्महानिवचनस्य व्रतचर्य्यानङ्गभूतद्विजातिकर्म्महानिविषयत्वेनाभ्युपपत्तेः । अन्यथा दक्षवचनस्य सर्व्वशब्दसङ्कोचापत्तेः सन्ध्यायाश्च शुद्धग्रापादनद्वारेण सर्व्वकर्म्माङ्गत्वमस्त्येव । एवमन्येऽपि धर्म्माः स्मृत्यन्तरोक्ता द्रष्टव्याः । तेषां धर्म्माणां यत्र विरोधस्तत्र विकल्पः यत्र च विरोधाभावस्तत्र च समुच्चय इति व्यवस्था । प्रति-

निमित्तं नैमित्तिकमावर्त्तत इति न्यायेन द्वित्रिब्राह्मणवधे प्रायश्चित्तमावृत्तं भवति। तथाच

मनुदेवलौ।

> विधेः प्राथमिकादस्माद्वितीये द्विगुणञ्चरेत्।
> तृतीये त्रिगुणम्प्रोक्तं चतुर्थे नास्ति निष्कृतिः॥

इत्यस्यायमभिप्रायः महापातकप्रायश्चित्तातिगुरुत्वात् चतुर्थ-प्रायश्चित्ताचरणे कालाभावः आयुषोऽल्पत्वेन तस्मात्प्रायश्चित्ता-भावो न स्वरूपतोऽभावः। अथवा चतुर्थे निष्कृत्यभाववचनं त्रासजननार्थम्। यतो निष्कृतिरेव नास्ति ततस्तादृक् पापं न कर्त्तव्यमिति। एवञ्च महापातकव्यतिरिक्तपापेषु चतुरा-वृत्त्यादिष्वपि प्रायश्चित्तङ्कर्त्तव्यमेव। एतच्च द्वादशवार्षिकव्रतम् अकामतो ब्राह्मणमात्रवधे।

तथाच भविष्यपुराणे।

> तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तमाः।
> प्रायश्चित्तन्तु वै कृत्वा विधिवद्द्वादशाब्दिकम्।
> प्राप्नोति शुद्धिं जीवन् वै स्वर्गञ्च स्वजनैः सह॥ इति।

एवं द्वादशवार्षिकादिप्रायश्चित्तं कुर्व्वन्नन्तरामृतस्तदा शुद्ध एव इत्याह

यमः।

> प्रायश्चित्ते व्यवसिते कर्त्ता यदि विपद्यते।
> विशुद्धस्तु तथैवासाविह लोके परत्र च॥ इति।

व्यवसिते कर्त्तुमुपक्रान्ते।

अङ्गिराः ।

यो यदर्थं चरेद्धर्ममसमाप्य मृते तु तम् ।

स तत्पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत् ॥ इति ।

यत्पुनरापस्तम्बेनोक्तम् ।

विप्रहा वने कुटीङ्कृत्वा वाग्यतः शवशिरोध्वजः शाली-
पत्र अधोनाभ्युपरिजानाच्छादयेदित्युपक्रम्य
गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतोत्तमात् ।
उच्छासाच्चरेन्नास्मिन् लोके प्रत्यासत्तिर्विपद्यते ॥ इति ।

तन्मातृपित्राचार्य्यादिविषयम् ।

तथैव भविष्यपुराणे ।

मातरं पितरं हत्वा सोदर्य्यं भ्रातरं तथा ।

गुरुं हत्वा श्रोत्रियं वा इत्युपक्रम्यास्यैव प्रायश्चित्तस्यैव विधानात् । शालिपत्रः शणसूत्रमयवस्त्रैकदेशः । उत्तमादुच्छासादामरणात् । अत्राशक्तस्य

शङ्खः ।

समाप्य द्वादश संवत्सरान् षट् त्रीन् सार्द्धं संवत्सरञ्च
व्रतान्यादिशेत् । तेषामन्ते गोसहस्रं तदर्द्धं तस्यार्द्ध-
मर्द्धञ्च दद्यात्सर्व्वेषां वर्णानामानुपूर्व्वेणेति ।

एतदेव व्रतमुत्तमादुच्छासाच्चरेदित्यत्रासमर्थस्य द्वादशवार्षिकव्रताचर्य्यानन्तरं गोसहस्रदानम् । तत्राप्यशक्तस्य षड्वार्षिकव्रतचर्य्यानन्तरं तदर्द्धं गोसहस्रार्द्धदानम् । अत्राशक्तस्य त्र्यब्दव्रतानन्तरं तस्यार्द्धं पञ्चशताद्यर्द्धम् । तत्राप्यशक्तस्य सार्द्ध-

संवत्सरव्रतचर्य्यानन्तरमर्द्धं गवां पञ्चविंशत्युत्तरशतमिति सर्व्व-वर्णानां शक्त्यनुसारेण क्रमेण द्वादशवार्षिकादिगोसहस्रादीनां समुच्चयो भवति। एतच्च पूर्व्वोक्तविषय एव कल्पनीयं प्राय-श्चित्तस्यातिगुरुत्वात्। ननु द्वादशवार्षिकादिव्रतचतुष्टयं गोसहस्रादिदानचतुष्टयसहितमभिधाय सर्व्वेषां वर्णानाम् आनुपूर्व्येण इत्यभिधानात् ब्राह्मणादिवर्णचतुष्टयक्रमेण व्रत-चतुष्टयविधानं किमिति न स्यान्नैतम्।

पर्षद्या ब्राह्मणानान्तु राज्ञां तद्द्विगुणा मता।
वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम्॥

तथा।

शूद्रो वा ब्राह्मणं हत्वा प्रायश्चित्तचतुष्टयम्। इति यथाक्रममङ्गिरोभविष्यपुराणवचनाभ्यां ब्राह्मणापेक्षया इतर-वर्णानामधिकप्रायश्चित्तविधानात् तस्मादस्मदुक्तैव व्यवस्था ज्यायसी च।

चतुर्विंशतिमते।

प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः।
पादोनं क्षत्रियः कुर्य्यादर्द्धं वैश्यः समाचरेत्।
शूद्रः समाचरेत्पादमशेषेष्वपि पापसु॥ इति।

तत्रातिलोम्यानुष्ठितचतुर्व्विधसाहसव्यतिरिक्तविषयमिति विज्ञा-नेश्वरः। ब्रह्मचर्य्याद्याश्रमिषु विशेषमाह

अङ्गिराः।

गृहस्थोक्तानि पापानि कुर्व्वन्त्याश्रमिणो यदि।

शौचवच्छोधनं कुर्य्युरर्व्वाग् ब्रह्मनिदर्शनात् ॥ इति ।
ब्रह्मनिदर्शनादर्व्वाक् ब्रह्मसाक्षात्कारादर्व्वाक् एवेति ।

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणन्तु वनस्थानां यतीनान्तु चतुर्गुणम् ॥

एतच्छौचवदित्यनेन ज्ञाप्यते । शोधनं प्रायश्चित्तम् । ब्रह्मचारिणः षोड़शवर्षादूर्द्धं द्वैगुण्यं ततः पूर्व्वं त्वर्द्धमेव । पादो बालेषु दातव्य इति स्मरणात् । आषोड़शाच्च बालः ।

ब्रह्महा द्वादशाब्दानीत्युक्तत्वात् साक्षाद्धन्तुरेव तत् प्रायश्चित्तम् । न तु तत्प्रयोजकादीनाम् । ननु यथा अन्यद्रव्यस्य स्वाम्याज्ञादिना अन्येन दीयमाने आज्ञादिकर्त्तुः स्वामिन एव फलं सम्पूर्णं न तु तथा साक्षाद्दातुस्तद्वदाज्ञादिना अन्येन हते सति आज्ञादिकर्त्तुरेव* हननफलं सम्पूर्णमस्त्विति चेत् मैवं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथाहि दानं सुकृतापूर्व्वोत्पादकं हननं दुरितापूर्व्वोत्पादकम् । स्वत्वत्यागपूर्व्वकं परस्वत्वापादनं दानं स्वत्वत्यागश्च स्वामित्यागादेव नास्वामित्यागात् । एवञ्चाज्ञाकारी ऋत्विगादिवत् कर्त्तैव न स्वामी अतो नाज्ञाकारिणस्तत्फलम् । ब्रह्मभ्रूणवृत्ते शुद्धिरित्यनेन सूत्रेण ब्राह्मणं हतवान् इत्यस्मिन्नर्थे क्विप्प्रत्ययो विहितः । साक्षाद्धननापेक्षया प्रयोजकादिरूपेण हननं प्राणवियोजने व्यवहितमिति । सन्निहितस्य साक्षाद्धन-

* हननाज्ञापयितुरेवेति पाठान्तरम् ।

नस्यैव परमदुरितापूर्व्वोत्पादकत्वमिति साचाद्धन्तुरेव सम्पूर्ण-फलमिति चतुरस्रम्। अनुग्राहकप्रयोजकादीनान्तु पापानु-सारेण प्रायश्चित्तं कल्प्यम्।

यदाह आपस्तम्बः।

प्रयोजयितानुमन्ता कर्त्ता चेति स्वर्गनरकफलेषु कर्म्मसु भागिनो* यो भूय आरभते तस्मिन् फलविशेष इति।

तत्र हन्तारमन्येभ्यः परिरचन् हन्यमानमुपरुन्धन् घातकस्य सहायकर्त्तानुग्राहकः स यत्पापप्रवृत्तमनुग्टह्लाति तत्पापात् प्रायश्चित्तं पादोनं कुर्य्यात्। प्रयोजकस्त्रिविधः यः प्रभुर्भृत्या-दिकं नीचं प्रस्थापयति अस्मच्छत्रुं व्यापादयेति स आज्ञा-पयिता। स्वयं†मसमर्थो नीच उच्चं स्वशत्रुव्यापादने प्रवर्त्तयति प्रार्थनादिना सोऽभ्यर्थयिता। यः पुनर्मोहादिना‡ त्वं शत्रु-स्तवमित्थं जहीति प्रेरयति स उपदेष्टा। अत्र पूर्व्वौ द्वावप्यनु-ग्राहकस्य पादोनत्वात्तदपेचया न्यूनमर्द्धं प्रायश्चित्तं लभेते। तृतीये उक्तार्द्धापेचया किञ्चिन्न्यूनमर्द्धं मध्ये पादोनं लभते। स्वतःप्रवृत्तं प्रत्युपदेशात् स्वतःप्रवृत्तस्य व्यापारमनुजानाति यः सोऽनुमन्ता सोऽर्द्धपादव्रतं कुर्य्यात्।

आक्रुष्टस्ताडितो वापि धनैर्व्वा विप्रयोजितः।
यमुद्दिश्य त्यजेत्प्राणान् तमाहुर्ब्रह्मघातकम्॥

---

* सर्व्वे स्वर्गनरकफलभोक्तारः इति ग्रन्थान्तरे पठति। † स्वयमेवेति पाठान्तरम्। ‡ मर्म्मोद्घाटनादिनेति पाठान्तरम्।

इत्यादिवचनोपात्तनिमित्तवान्निमित्ती तस्य पादं प्रायश्चित्तं तथाच ब्रह्महत्याप्रायश्चित्तपादं निमित्तिनो दर्शयति।

सुमन्तुः।

तिरस्कृतो यदा विप्रो हत्वात्मानं मृतो यदि।
निर्गुणः सहसा क्रोधाद्गृहक्षेत्रादिकारणात्॥
त्रिवार्षिकं व्रतं कुर्य्यात्प्रतिलोमां सरस्वतीम्।
गच्छेद्वापि विशुद्ध्यर्थं तत्पापस्येति निश्चितम्॥
अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि।
क्रोधाद्वै म्रियते यस्तु निर्निमित्तन्तु भर्त्सितः।
वत्सरत्रितयं कुर्य्यान्नरः कृच्छ्रं विशुद्धये॥

यत्तु तेनैवोक्तम्।

केशश्मश्रुनखादीनां कृत्वा तु वपनं वने।
ब्रह्मचर्य्यं चरन् विप्रो वर्षेणैकेन शुध्यति॥ इति।

तन्निमित्तिनोऽत्यन्तगुणवत्त्वे आत्मघातिनोऽत्यन्तनिर्गुणत्वेन वेदितव्यम्।

विष्णुः।

उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत्तु यः।
तस्मिन्मृते न दोषोऽस्ति द्वयोरुच्चारणे* कृते॥

द्वयोरात्मघातकाक्रोशकयोर्जनसमक्षमाक्रोशकस्यापराधो नास्ती-

---

* उच्छ्रावणे इति पाठान्तरम्।

त्युच्चैर्वाक्य उच्चारिते सतीत्यर्थः। यत्र त्वाक्रोशनादिकमन्तरेण परमुद्दिश्यात्मानं घातयति* तत्र दोषो नास्तीत्याह सुमन्तुः।

असम्बन्धेन यः कश्चिद्द्विजः प्राणान् परित्यजेत्।
तस्यैव तद्भवेत्पापं न तु यं परिकीर्त्तयेत्॥ इति।

पैठीनसिः।

हन्तानुमन्तोपदेष्टा तथा सम्प्रतिपादकः।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः॥
आश्रयः शस्त्रदाता च भक्तदाता विकर्म्मिणाम्।
युद्धोपदेशकश्चैव तद्विनाशप्रवर्त्तकः॥
उपेक्षः कार्य्ययुक्तस्य दोषवक्तानुमोदकः।
अनिषेद्धा क्षमो यस्तु सर्व्वे तत्कार्य्यकारिणः।
यथाशक्त्यनुरूपञ्च दण्डमेषां प्रकल्पयेत्॥

विष्णुपराशरबृहस्पत्यङ्गिरसः।

अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोड़शः†।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च॥
अर्व्वाग्द्वादशवर्षीयादशीतेरूर्द्धमेव च।
अर्द्धमेव भवेत्पुंसां तुरीयं तत्र योषिताम्॥
स्त्रीणामर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा।
पादो बालेषु दातव्यः सर्व्ववर्णेष्वयं विधिः॥ इति।

---

* हन्तीति पाठान्तरम्। † वाप्यूनाद्दषोड़श इति पाठान्तरम्।

एवञ्च यानि शङ्खादिवचनानि बालातुरस्य प्रायश्चित्ताभावप्रतिपादकानि तत्स्वरूपतः प्रायश्चित्ताभावप्रतिपादकानि तानि सम्पूर्णद्वादशवार्षिकाणि प्रायश्चित्ताभावप्रतिपादकानि प्रासङ्गिकमभिहितम्। प्रकृतमनुसरामः। एवं पूर्व्वोक्तप्रकारेण ब्रह्महत्याव्रतं द्वादशवार्षिकं कुर्व्वन् व्रतसमाप्तेः पूर्व्वमेव चौरव्याघ्रादिभिर्हन्यमानं ब्राह्मणं मोचयति। स्वशरीरमन्तरा* कृत्वा मोचयितुं प्रवृत्तः सन् तत्त्राणमन्तरेणापि स्वयं म्रियते तथापि शुद्धो भवेत्। यथा द्वादशसंख्याकगोरक्षणादपि तथा परकीयाश्वमेधाङ्गभूतावभृथस्नानकाले वक्ष्यमाणरीत्या स्नात्वा ब्रह्महत्यायाः शुद्धिमवाप्नोति।

यथा शङ्खः।

> द्वादशे वर्षे शुद्धिं प्राप्नोति अन्तरा ब्राह्मणं मोचयित्वा गवां वा द्वादशानां परित्राणात्सद्य एवावभृथस्नानाद्वा पूतो भवतीति।

मनुः।

> ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत्।
> मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च॥

अत्र यः सद्यः प्राणान् परित्यजेदित्यनेन ब्राह्मणाद्यर्थमरणम्। गोप्ता गोब्राह्मणस्य चेत्यनेन तद्रक्षणञ्च पृथगुपात्तम्। अतः स्वयं जीवनरक्षणे कृतेऽपि शुद्धः रक्षणमकुर्व्वन् वा स्वशक्त्यनु-

* अन्तरमिति पाठान्तरम्।

सारेण तदर्थं प्रवृत्तः सन् यदि मृतस्तदापि शुद्ध इति गम्यते। अवभृथस्नाने विशेषमाह स एव।

शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे।
स्वयमेवाऽवभृथे स्नात्वा हयमेधेन शुध्यति॥

अत्र भूमिदेवा ऋत्विजः। अभिषिक्तः क्षत्रियो यजमानो नरदेवः। तेषामन्योऽन्यसङ्गमे तत्समूहे स्वमेनः शिष्ट्वा क्षपयित्वा वा ब्रह्महा शुचिः। पूर्व्वोक्तगुणविशिष्टः अवभृथं गत्वा तत्र स्नात्वा शुद्धो भवतीत्यर्थः।

याज्ञवल्क्यः।

दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा।
दृष्ट्वा पथि निरातङ्कङ्कृत्वा वा ब्रह्महा शुचिः॥

पूर्व्वोक्तगुणविशिष्टं ब्राह्मणं गां वा पथि स्थितं दृष्ट्वा निरुजङ्कृत्वा अक्रान्तब्रह्महत्याप्रायश्चित्तान्तरा शुद्धो भवतीत्यर्थः। एतच्च द्वादशवार्षिक*मकामविषयम्। क्षत्रियस्य तु कामकारविषय-एव।

याज्ञवल्क्यः।

लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम्।
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम्॥

मन्त्राश्च वाजसनेयपरिपठिताः। लोमभ्यः स्वाहा त्वग्भ्यः स्वाहा लोहिताय स्वाहा मांसाय स्वाहा स्नायुभ्यः स्वाहा

* द्वादशाब्दिकमिति पाठान्तरम्।

मेदसे स्वाहा अस्थिभ्यः स्वाहा मज्जाभ्यः स्वाहा । एतैर्मन्त्रै-र्यथाक्रमं होमङ्कृत्वा हन्ता स्वशरीरं निवारमवाक्‌शिरा जुहुयात् । अत्र च लोमादीनां मन्त्रसामर्थ्याद्देवतात्वं तेषामेव च लोमप्रभृति वै तनुं जुहुयादिति वचनसामर्थ्यात् हविष्ट्वमपि इत्यपरार्कः । मिताक्षरायान्तु भ्रूणहननं वक्ष्यामो ब्राह्मणं हत्वा भ्रूणहा भवति अविज्ञातञ्च गर्भं अविज्ञाता हि गर्भाः पुमांसो भवन्ति । तस्मात्पुंस्कृत्याजुह्वत् इत्येतत् वशिष्ठवचनस्य आज्यभागं परित्यज्य तथाच वशिष्ट इत्युपक्रम्य भ्रूणहाग्निमुपसमाधाय जुहुयाल्लोमानि मृत्यो-र्जुहोमि लोमभिर्मृत्युं वाशय इति प्रथमं । त्वचं मृत्यो-र्जुहोमि त्वचा मृत्युं वाशय इति द्वितीयं । लोहितं मृत्योर्जु-होमि लोहितेन मृत्युं वाशय इति तृतीयं । मांसानि मृत्योर्जु-होमि मांसैर्मृत्युं वाशय इति चतुर्थं । मेदोमृत्योर्जुहोमि मेदसा मृत्युं वाशय इति पञ्चमीम् । स्नायूनि मृत्योर्जुहोमि स्नायुभिर्मृत्युं वाशय इति षष्ठीम् । अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं वाशय इति सप्तमीम् । मज्जानो मृत्युं जुहोमि मज्जाभिर्मृत्युं वाशय इत्यष्टमीमिति । अत्र त्वच्लोमप्रभृति तनुं जुहुयात् इति लोमादीनां लोमद्रव्यत्वावगमात् लोमभ्यः स्वाहेति सत्यपि चतुर्थीनिर्द्देशे होमादीनां न देवतात्वं कल्प्यते । अर्थप्रकाशनेनैव मन्त्राणां होमसाधनत्वोपपत्तेः किन्तु लोमभिर्मृत्युं वाशय इत्यादि वाशिष्ठमन्त्रपर्य्यालोचनया मृत्योरेव हविःसम्बन्धावगमात् देवतात्वं कल्प्यत इति । अत्र निबन्ध-

कारयोः परस्परविरोधः प्रतीयते स च विरोध इत्थं परिहरणीयः प्रायश्चित्तरूपे लोमादिहोमे वाजसनेयेऽन्ये मन्त्राः वाशिष्ठे। अतो मन्त्राणामेककार्य्ये विधानात् विकल्पः तत्र वाजसनेयमन्त्रग्रहणे मन्त्रेषु चतुर्थ्यन्तनिर्द्देशाल्लोमादीनामेव देवतात्वम्।

तथाच भट्टवार्त्तिकम्।

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते*।
देवतासङ्गतिस्तत्र दुर्ब्बलन्तु परं परम्॥

इति हविरपि इदं लोमादीनि। नन्वेकस्य हविष्ट्वं देवतात्वञ्च कथमिति चेन्नैवम्। लोमादीनि द्रव्याणीति हवींषि देवता तु तच्छब्दसमवायिनी द्रव्यदेवतयोरस्त्येव भेदः। यदा तु वाशिष्ठमन्त्रहोमे गृह्यन्ते तत्र तद्धितचतुर्थ्योरभावात् मन्त्रवर्णेन देवता मृग्यते तत्र लोमादि हविषा मृत्युसम्बन्धावगमात् मन्त्रप्रकाश्यमृत्योरेव देवतात्वमिति न विरोधः। अयञ्च होमो लौकिकाग्निं प्रतिष्ठाप्य तत्र कर्त्तव्यः पतिताग्नीनां प्रतिपत्त्यन्तरविधानात् शरीरविक्षेपे विशेषमाह

मनुः।

प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः।

इति काठकश्रुतिः। अनशनेन कर्षितोऽग्नीनारोहेदिति। पूर्व्वेद्युः कृतोपवासः कुर्य्यादित्यर्थः।

---

* मन्त्रवर्णे निषेव्यते इति पाठान्तरम्। मन्त्रलिङ्गेन चैव हि इति ग्रन्थान्तरीयपाठः।

भविष्यपुराणे।

हत्वा तु क्षत्त्रियो विप्रं गुणाढ्यमिह कामतः।
प्रायश्चित्तं चरेद्धीर विधिवत्कायशुद्धये॥
लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः।
प्राश्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः॥
यजेत वाश्वमेधेन क्षत्त्रियो विप्रघातकः।
प्रायश्चित्तत्रयं ह्येवं क्षत्त्रियस्य प्रकीर्त्तितम्॥ इति।

विदुषां प्रायश्चित्तार्थं लक्ष्यभावमापन्न इति जानतामिच्छयात्मनः न राजादिबलप्रेरितः क्षत्त्रियव्यतिरिक्तस्यापि भृगुपतनादिना मरणान्तिकं प्रायश्चित्तं भवत्येव यदाह

यमः।

यः कामतो महापापं नरः कुर्य्यात्कथञ्चन।
न तस्य शुद्धिर्निर्द्दिष्टा भृग्वग्निपतनादृते॥ इति।

अग्निपतनस्य क्षत्त्रियविषयत्वात् भृगुपतनमितरविषयं मरणान्तिकाशक्तस्य पर्षदा ब्राह्मणानामित्यनेन प्रकारेण तद्वर्णापेक्षयोक्तप्रायश्चित्तं द्विगुणं भवति अत्यन्तगुणवता निर्द्धनेन विदुषा हत्वा प्रमादान्निर्गुणे व्यापादिते पदक्रमरहितमन्त्रब्राह्मणात्मकवेदस्यारण्ये त्रिर्नियताहारपूर्व्वकपठनेन शुद्धिः। पूर्व्वोक्तहन्तृविषय एव हन्ता यदि वेदरहितस्तदा सरस्वतीं प्रतिस्रोतो गत्वा शुद्ध्यति।

तथाच मनुः।

[illegible] नियताहारस्त्रिर्व्वै वेदस्य संहिताम्।

याज्ञवल्क्यः ।

अरण्ये नियतो जप्त्वेति ।

भविष्यपुराणे ।

हन्ता यदा वेदहीनो धनेन च भवेद्गुह ।
न तद्वै कल्पयेत्तस्य प्रायश्चित्तं निबोध मे ।
हविष्यभुग्वानुसरेत्प्रतिस्रोतः सरस्वतीम् ॥

स्रोतः स्रोतः प्रतिस्रोतः धनवतो निर्गुणस्य हन्तुर्निर्गुणहनने।

मनुः ।

सर्व्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥ इति ।

जीवनपर्य्याप्तधनदानाशक्तः सोपस्करं गृहं वा दद्यात्। तत्राशक्तः सर्व्वस्वं दद्यात् । सर्व्वस्वपरिमाणमाह

अङ्गिराः ।

साशीतिपणसाहस्रादर्व्वं सर्व्वस्वमुच्यते ।
निर्धनो ब्रह्महा शुद्ध्येत्सुखाधिक्यान्नरेश्वर ॥ इति ।

भविष्यपुराणे ।

जातिमात्रं यदा हन्याद्ब्राह्मणं ब्राह्मणो गुह ।
वेदाभ्यासविहीनो वै धनवानग्निवर्ज्जितः ।
प्रायश्चित्तं तदा कुर्य्यादिदं पापविशुद्धये ॥
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ।
यद्वा पराशरोक्तेन प्रायश्चित्तेन शुध्यति ॥

पराशरोक्तं प्रायश्चित्तं यथा ।

चतुर्विद्योपपन्नन्तु विधिवद्ब्रह्मघातके ।
समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥
सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात्समाचरेत्* ।
वर्ज्जयित्वा विकर्म्मस्थान् छत्रोपानद्विवर्ज्जितः ॥
अहं दुष्कृतकर्म्मा वै महापातककारकः ।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ॥
गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च ।
तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥
एतत्प्रख्यापयेत्†दैनः पुण्यं गत्वा सेतुसागरम् ।
ब्रह्महापि विमु‡च्येत स्नात्वा तत्र महोदधौ ॥
ततः पूतोऽहं प्राप्य कृत्वा ब्राह्मणभोजनम् ।
दत्त्वा वस्त्रपवित्राणि पूतात्मा प्रविशेद्गृहम् ॥
विन्ध्यादुत्तरतो यस्य निवासः परिकीर्त्तितः ।
परं पुण्यं मतं§ यस्य सेतुबन्धस्य दर्शनम् ॥ इति ।

मनसा ब्राह्मणहननमध्यवसितस्य यदा स्वत एव जिघांसाया-मुपरतस्तदा वशिष्ठेनोक्तं

द्वादशरात्रद्वयं द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत् । इति ।

---

* समाहरेदिति पाठान्तरम् । † एतेषु ख्यापयेदिति पाठान्तरम् । एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरमिति मिताक्षरायां मूलसंहितायाञ्च पाठः । एतत् प्राख्याप्य यत्नेन पुण्यं गत्वा तु सागरमिति प्रायश्चित्तभागे पठितम् । ‡ विप्र इति पाठान्तरम् । § पराशर-मतमिति पाठान्तरम् ।

निर्गुणस्य हन्तुरप्रत्यानेयपुंस्त्वषण्डब्राह्मणज्ञानवधे षट्त्रिंशन्मतोक्तम् ।

षण्डन्तु ब्राह्मणं हत्वा शूद्रहत्याव्रतञ्चरेत् ।
चान्द्रायणं वा कुर्व्वीत पराकद्वयमेव च ॥ इति ।

अत्रैवाज्ञानपूर्व्वकत्वे

बृहस्पतिः ।

अरुणायाः सरस्वत्याः सङ्गमे लोकविश्रुते ।
शुध्येत्त्रिसवणस्नायी त्रिरात्रोपोषितो* द्विजः ॥ इति ।

एवमन्यत्रापि स्मृत्यन्तरोक्तानि प्रायश्चित्तानि न्यूनाधिकानि जातिशक्त्याद्यपेक्षया योजनीयानि । मूर्द्धाभिषिक्तस्य ब्राह्मणवधे ब्राह्मणादधिकं क्षत्रियान्न्यूनं सार्द्धद्वादशवार्षिकम् । अनयैव दिशा इतरानुलोमजातीनां स्वसन्निहितोत्तमापेक्षया अधिकं स्वसन्निहितनीचापेक्षया न्यूनमिति एवं परिकल्पनीयम् । यस्तु सोमयागं कुर्व्वन्तं ब्राह्मणं व्यापादयति तस्य यथर्द्धया ब्राह्मणानान्तु सा राज्ञां द्विगुणा भवेत् इत्यनेन न्यायेन यत् प्रायश्चित्तं प्राप्तं तद्द्विगुणं भवति । तथाच

याज्ञवल्क्यः ।

द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेदिति ।

सवनसम्पाद्यः सोमो यागः सवनशब्देनोच्यते तत्रस्थः सवनस्थः सोमयागं कुर्व्वाण इत्यर्थः । यच्च

---

* त्रिदिनोपोषित इति पाठान्तरम् ।

भविष्यपुराणवचनम्।

ब्राह्मणं यजमानञ्च हत्वा निष्कृतिमाचरेत्।
चरित्वा च द्वादशाब्दानि सेतुबन्धञ्च पश्यति॥ इति।

एतच्च गुर्व्वाचार्य्यादिरूपसोमयागकर्त्तृविषयम्।

यतस्तत्रैव।

निहत्य सुरशार्दूल हन्तुर्व्वै ब्राह्मणस्य तु।
अथवा गुरुविषयं प्रायश्चित्तमिदं शुभ।
वचनाद्देवशार्दूल तत्त्वतस्ते ब्रवीम्यहम्॥

इत्युपक्रम्य ब्राह्मणं यजमानञ्चेति पठितम्। तत्र द्वादशाब्दानीति बहुवचनं कपिञ्जलन्यायेन त्रित्वे पर्य्यवसितं युगपत्कामतोऽकामतो वा अनेकब्राह्मणवधे।

भविष्यपुराणे विशेषोऽभिहितः।

एककालं यदा हन्यात् युगपत्सुरनन्दन*।
निमित्तमेव†माश्रित्य हन्ति नैकेन‡ वा विभो॥
ब्राह्मणं ब्राह्मणो वीर ब्राह्मणान् सुबहूनपि।
निहत्य युगपद्वीर एवं प्राणान्तिकं चरेत्॥
किन्त्वत्र सुरशार्दूल विशेषं गदतः शृणु।
बुद्धिपूर्व्वाबुद्धिपूर्व्वं विकल्पं शृणु पुनश्च॥
अकामतो यदा हन्यात् ब्राह्मणान् सुरसत्तम।

---

* सुरसत्तम इति पाठान्तरम्। † एकमिति पाठान्तरम्। ‡ हन्त्यनेकेनेति पाठान्तरम्।

तदात्मानं दहेदग्नौ विधिना येन तं शृणु ॥
भूत्वा निष्कालको वीर वेष्टयित्वा तु वाससा ।
घृताक्तेन महाबाहो दत्त्वा सर्व्वसमेव हि ।
दत्त्वा पादौ करीषाग्नौ दहेदात्मानमात्मना ॥
उत्तमाङ्गञ्च विधिवद्दत्तस्य सुरसत्तम ।
एवमत्र महाबाहो निर्दोषः परिकीर्त्तितः ॥ इति ।

निष्कालकः कालान्तरानपेक्ष इति स्मृतिमञ्जर्य्यां निर्गतं कालं कृष्णवर्णात्मकं केशादि तस्मात् स निष्कालकः इत्यपरार्कादौ ।

## अथ ब्रह्महत्यासमानानां प्रायश्चित्तं तत्स्वरूपं विधीयते ।

याज्ञवल्क्यः ।

गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य विनाशनम् ॥

गुरूणामध्यधिक्षेपः पित्रादिगुरूणामुपर्य्युपरि आक्षेपः अनृतेन लोकविदितपतनीयपापशंसनम् ।

तथाच गौतमः ।

गुरोरनृताभिशंसनमतिपातकसमानीति ।

अत्र यद्यपि सामान्येनानृताभिशंसनमित्युक्तम् । तथापि प्रायश्चित्तस्य महत्त्वादनृताभिशंसनेऽपि महत्त्वं कल्पनीयम् ।

आपस्तम्बः ।

दोषं बुद्ध्वा न पूर्व्वः परेषां समाख्याता स्यादिति ।

अत्र प्रथमत एव दोषकथनं निषिद्धमिति प्रथमं मिथ्यागुरुविषये मिथ्याभिशंसनस्य ब्रह्महत्यासमं प्रायश्चित्तम्। सुहृद्वधः मित्रस्यापि ब्राह्मणस्यापि वधः। अधीतस्य च नाशनं अधीतवेदस्यासच्छास्त्रविनोदने-नालस्यादिना वा नाशनं विस्मरणम्। यत्तु* स्वाध्याय-त्यागस्योपपातकमध्ये परिगणनं स्वाध्यायाग्निसुतत्याग इति तच्छास्त्राभ्यासनिष्ठत्वेन कुटुम्बभोजन†व्यग्रतया वा परित्यागे द्रष्टव्यम्।

यत्तु मनुना सुरापानसमत्वमुक्तम्।

ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः।
गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्॥ इति।

तत् प्रायश्चित्तविकल्पार्थम्। एवमन्यत्रापि द्रष्टव्यम्।

तथा।

अनृतञ्च समुत्कर्षे राजगामि च पैशुनम्।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया॥

राजकुलादिषु चतुर्व्वेदएव चतुर्व्वेदाभिज्ञ इत्यभि‡भाषणादि समुत्कर्षेऽनृतं यत्र तु गुणवत्तायां स्पर्द्धायां सत्यां परीक्षको जानन्नपि समुत्कर्षविषयेऽनृतवादी सोऽपि ब्रह्महत्यासमं पापं प्राप्नोति।

विष्णुः।

---

* यत्वेति पाठान्तरम्। † भोजनेति पाठान्तरम्। ‡ इत्यतीति पाठान्तरम्।

शरणागतहननं ब्रह्महत्यासममिति ।

प्रचेताः ।

गोगर्भिणी स्त्रीगर्भिणी बालवधो ब्रह्महत्यासमानमिति ।

एवमन्यान्यपि वचनानि गवेषणीयानि । अत्र समत्वाभिधानात् शिष्टाचारबलेन पादोनं कल्प्यं क्षत्रियसमो ब्राह्मणः राजसमो मन्त्रीत्यादिषु समशब्दस्य किञ्चिन्न्यूने प्रयोगदर्शनात् अत्रापि जातिशक्तिवयोऽवस्थाद्यपेक्षया द्वादशवार्षिकादीनि यथायोग्यं योज्यानि ।

## अथ ब्रह्महत्याव्रतातिदेशः ।

याज्ञवल्क्यः ।

यागस्थक्षत्रविड्घाती चरेद्ब्रह्महनो व्रतम् ।
गर्भहा च यथावर्णं तथात्रेयीनिसूदकः ।

यागोऽत्र सोमयागः यः क्षत्रं निधाय स्वान्यायुधानि ब्राह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपवर्त्तत इति श्रुत्या सोमयागं प्रति क्षत्रियस्य सोमयागकर्त्तुर्ब्राह्मणत्वाभिधानात् ।

वशिष्ठोऽपि ।

सवनगतौ राजन्यवैश्याविति ।

सवनसम्पाद्यसोमयागेन* निदर्शयति†। दीक्षणीयाया ऊर्द्धमव-

* सवनसम्पाद्यसोमयागसेवेति पाठान्तरम् । † निर्द्दिशतीति पाठान्तरम् ।

अथाप्राक् सोमयागे वर्त्तमानयोः क्षत्रियवैश्ययोः हनने ब्रह्म-हत्याव्रतं चरेत् । यद्यपि न्यायतः किञ्चिन्न्यूनं प्रायश्चित्तं प्राप्तमतिदिष्टत्वात्तथापि सम्पूर्णमेव प्रायश्चित्तं कर्त्तव्यम् ।

आपस्तम्बेन ।

पूर्व्वयोर्वर्णयोः क्षत्रियवैश्ययोर्वेदाध्यायिनं हि प्रक्रम्य सवनन्तु क्षत्रविड्वधे द्वादशवार्षिकविधानात् ।

पूर्व्वयोर्व्वर्णयोः क्षत्रियवैश्ययोरिति तद्भाष्ये शूद्रादिजात्यपेक्षया न्यूनाधिककल्पा योज्याः । गर्भहा च यथावर्णमित्यादि । विवाहितासु सम्भूतं स्त्रीपुंव्यञ्जकैरनभिव्यक्तं गर्भं हत्वा यद्वर्णपुरुषवधे यत्प्रायश्चित्तं तद्वर्णगर्भवधे तत्प्रायश्चित्तञ्चरेत् । तथा च यद्वर्णात्रेयीवधस्तद्वर्णप्रायश्चित्तं कुर्य्यात् । तथाच मनुः ।

हत्वा गर्भमविज्ञातमिति ।

स्त्रीपुंनपुंसकाभिव्यक्तिविशेषज्ञाने तु यथालिङ्गं प्रायश्चित्तम् ।

अङ्गिराः ।

आहिताग्नेर्द्विजातस्य* हत्वा पत्नीमनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैव च ॥ इति ।

पराशरः ।

सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतञ्चरेत् । इति ।

आत्रेय्या अग्निहोत्रिण्याः सवनस्थायाश्च प्रत्येकं वधे ब्रह्महत्या-

* द्विजाग्र्यस्येति क्वचित् पाठः ।

व्रतातिदेशः । एतद्व्यतिरिक्तब्राह्मणस्त्रीवधेऽप्युपपातकप्रायश्चित्तम् । आतिदेशिकेषु प्रायश्चित्तस्यैवातिदेशो न पतितस्य अतः आपतति तत्र द्विजातिकर्म्मभ्यो हानिर्नास्तीति गम्यते । आत्रेयी अत्रिगोत्रजा अत्रिगोत्रविवाहिता ऋतुमती च । यदाह ।

विष्णुः ।

एतन्महाव्रतं ब्राह्मणं हत्वा द्वादश संवत्सरान् कुर्य्यात् ।
अत्रिगोत्रां वा नारीं मित्रञ्चेति ।

अत्र मित्रहनने सम्पूर्णद्वादशवार्षिकविधानं गुणवन्मित्रविषयम् । याज्ञवल्क्येन ब्रह्महत्यासमेष्वभिधानमगुणवद्विषयमिति विवेकः ।

यमः ।

जन्मप्रभृतिसंस्कारैः संस्कृता मन्त्रवच्च या ।
गर्भिणी त्वथवा या स्यात्तामात्रेयीं विदुर्बुधाः ॥ इति ।

संस्कारैः संस्कृता मन्त्रवच्चेति ब्रह्मवादिनीत्यर्थः ।

वशिष्ठः ।

रजस्वलामृतुस्नातामात्रेयीमाहुरत्र हि ।

एषामपत्यं भवतीति अत्र ह्येषामपत्यं* भवतीति व्युत्पत्ति-

---

* अत्रेत्येषामपत्यं भवतीति मूलसंहितायां पाठः अत्र ह्येकमपत्यं भवतीति क्वचिदाधुनिकग्रन्थे पठितं, अत्र ह्येष्यदपत्यं भवतीति क्वचित् क्वचिच्च अत्र ह्येषदम्पतिं भवतीति अत्र ह्येषदपत्यं भवतीति ।

प्रदर्शनं बन्ध्याव्युदासार्थमन्यथा निरर्थकं स्यादिति केचित्। व्युत्पत्तिमात्रप्रदर्शनपरमित्यपर इत्यपराके। गर्भहा च यथावर्ण-मित्युक्तं यथावर्णप्रायश्चित्ताशक्तं प्रत्याह

वशिष्ठः।

अनात्रेयीं राजन्यहिंसायां राजन्यां वैश्यहिंसायां वैश्यां शूद्रहिंसायां शूद्रां हत्वा संवत्सरमिति*।

अस्यार्थः। अनात्रेयीमित्यादिषु लिङ्गमविवक्षितं। अनात्रेय्य-विज्ञातब्राह्मणगर्भहनने राजन्यहिंसाप्रायश्चित्तञ्चरेत्। एव-मुत्तरत्रापि। शूद्रागर्भहनने तु ब्रह्महत्याव्रतं संवत्सरञ्चरेत् इति।

यस्तु ब्राह्मणादिहननार्थं कृतनिश्चयः शस्त्रादिना प्रहारं करोति ततश्च दैवादिप्रतिबन्धवशादसौ न मृतो न तु स्वीयम-शैथिल्यात्तत्रापि यस्मिन्वर्णे हते यत्प्रायश्चित्तं तदाचरेत्।

तथाच याज्ञवल्क्यः।

चरेद्व्रतमहत्वापि घातार्थञ्चेत्समाहितः†। इति।

अत्र यथावर्णमित्यनुवर्त्तते। अनेन ब्रह्महत्याप्रायश्चित्तमेवाति-दिश्यते। अतो द्वादशवार्षिकादीनि शक्त्याद्यपेक्षया योज्यानि। अत्रायं निर्णयः। यत्र समत्वाभिधानमतिदेशो वा प्रायश्चित्तस्य तत्र न्यायतः प्रायश्चित्तस्य किञ्चिन्न्यूनत्वेऽपि तत्र साक्षात्सम्पूर्ण-व्रतोपदेशः यथा वैष्णवे आत्रेयीविषये। तथा वापस्तम्बीये

---

* चात्रेयी। राजन्यहिंसायां वैश्यहिंसायां शूद्रं हत्वा संवत्सरमिति मूलसंहितायां पाठः। क्वचिच्च पुस्तके शूद्रं हत्वेति पाठो दृश्यते। † समागत इति पाठान्तरम्।

यागस्थक्षत्रियविड्वधविषये तत्र सम्पूर्णव्रतमेव यथा साक्षादुपदेशो नास्ति तत्र किञ्चिन्न्यूनं कल्प्यं यत्र ब्रह्महत्यादिसमत्वाभिधानं तत्र पातकिस्वरूपसाम्यमभिधीयते। यथा राजसमो मन्त्रीत्यत्रैश्वर्य्यापितराजस्वरूपसमता अतः किञ्चिन्न्यूनं पादोनं प्रायश्चित्तं समताभिधानञ्च तत्प्रायश्चित्तातिदेशार्थं यत्र साक्षात्प्रायश्चित्तस्यैवातिदेशस्तत्र स्वरूपसमता अत उपदिष्टापेक्षया अतिदिष्टान्न्यूनमेव कियन्न्यूनमित्याकाङ्क्षायां महापातकप्रायश्चित्तातिदेशस्थले अतिदिष्टस्यापि* महत्त्वात् साक्षाद्ब्रह्महननस्थल इवातिदिष्टस्थले यागस्थक्षत्रियादिहननेऽपि प्रवृत्तिसाम्यात्पादोनमेव कल्प्यम्† ।

यत्तु कर्म्मविपाके ब्रह्महत्यादिप्रायश्चित्तातिदेशात्तदर्द्धमिति कल्पयन्ति तत्पापस्योपभुक्तत्वेन स्वल्पावशिष्टत्वात् तस्मान्महापातकेष्वतिदिष्टेषु च पादोनं प्रायश्चित्तं कल्प्यं समे। अनेनैवाभिप्रायेण मिताक्षरायां अत एवोपदेशिभ्यो न्यूनत्वादातिदेशिकानां पादोनान्येव ब्रह्महत्याव्रतानि द्वादशवार्षिकादीनि भवन्ति। अपरार्केऽपि च वधकृतवतोऽकृतवतश्चैवमेव व्रतमुक्तं तेनान्ततः पादोनं कल्प्यमिति ।

चरेद्व्रतमहत्वापि घातार्थञ्चेत्समाहितः ।

इत्येतद्वचनव्याख्यानसमयेऽभिहितं, महापातकप्रकरणे स्मृतिमञ्जर्य्यामपि । आतिदेशिकेषु चातिदेशविधानादेवोपदेशिकेभ्यः

---

* निर्द्दिष्टस्यापीति पाठान्तरम् । † कल्पनीयमिति पाठान्तरम् ।

किञ्चिन्न्यूनता विज्ञेयेति । एतच्च समेष्वतिदिष्टेषु च पादोन-कल्पनम् । ब्रह्महत्यासमेषु तद्व्रतातिदेशेषु च ब्रह्महत्याया महापातकमध्ये गुरुतरपापत्वात् प्रथमं परिपठितत्वाच्च सुरा-पानादिसमेषु तद्व्रतातिदेशेषु च क्रमेणार्द्धपादोनञ्च कल्प-नीयम् । तथाहि समत्वेऽभिहिते पश्चात्प्रायश्चित्तमतिदेशेन प्राप्नोतीति द्वितीयाकाङ्क्षायां प्रायश्चित्तप्राप्तिः । साक्षाद्व्रताति-देशेषु तु प्रथमकक्षायामिव व्रतप्राप्तिरिति । साक्षाद्व्रतातिदेश-स्याधिकत्वात्तत्र पादोनं साम्यद्वारातिदेशप्राप्तौ व्यवहितत्वात्त-दर्द्धप्रायश्चित्तमिति युक्तं । अनेनैवाभिप्रायेण स्मृतिमञ्जर्य्याम-भिहितं समानञ्चातिदेशिकेभ्योऽपि न्यूनमिति अतएव मिता-क्षरायां यानि सुवर्णस्तेयसमत्वेन प्रतिपादितानि तेष्वप्यर्द्धमेव कार्य्यमिति अपरार्केऽपि सुवर्णस्तेयप्रकरणे तत्सामान्यार्द्धप्राय-श्चित्तानीति । येषाञ्च कौटसाक्ष्यादीनां ब्रह्महत्यासाम्यं सुरा-पानसाम्यञ्चाभिहितम् तत्राविकपक्षाश्रयणेन पादोनमेव कल्प्यमथवाशक्तिमतः पादोनं शक्तिरहितस्यार्द्धमिति कल्पनीयं इति स्मृतिकारनिर्णयः । तत्र न्यायेन त्वतिदेशे सम्पूर्णमेव प्राप्नोति अतिदेशस्याखण्डत्वात् ।

## अथ सुरापानप्रायश्चित्तम् ।

सुरा पैष्ट्येव तदाह मनुः ।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।

तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ इति।

यत्तु तेनोक्तम्।

गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
यथा चैका तथा सर्व्वा न पातव्या द्विजोत्तमैः ॥ इति।

तद्द्विजोत्तमानां ब्राह्मणानां गौड़ीमाध्व्योरपि पैष्टीसमत्वप्रतिपादनार्थं तत्र द्विजोत्तमग्रहणात् ब्राह्मणस्य सुरादिसकलमद्यनिषेध उत्पत्तिप्रभृत्यपि अतएव

वृहद्विष्णुः।

माधुक*मैक्षवं†सैरं‡ तालं खर्ज्जूरपानसम्।
मधूत्थञ्चैव माध्वीकमैरेयं नारिकेलजम् ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु। इति।

पुलस्त्यः।

पानसं द्राक्षमाधूकं खार्ज्जुरं तालमैक्षवम्।
मधूत्थं§ सैरमारिष्ट¶मैरेयं‖ नारिकेलजम् ॥
समानानि विजानीयान्मद्यान्येकादशैव तु।
द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम् ॥

मनुः।

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्।

---

* क्षौद्रजातं माधुकम्। † इक्षोः पक्वैरसैः सिद्धः सीधुरित्यैक्षवपर्य्यायः। ‡ सीरोऽर्कः तस्तदुद्भवं सैरम्। § पक्वौषधाम्बुसिद्धं यन्मद्यं तत्स्यादरिष्टकम्। ¶ माध्वीकष्टाङ्क माध्वीकमिति शूलपाणिसम्मतः पाठः। ‖ यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसव इदमेवमैरेयम्।

तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ इति ।

राजन्यवैश्ययोः सुरा निषिद्धा न गौड्यादिमद्यनिषेधः । तत्रापि ब्रह्मचारिणोऽस्यैव निषेधः । सामान्येन ब्रह्मचारिणो मध्वादिनिषेधात् ।

व्यासः ।

उभौ मध्वासवक्षीवौ उभौ चन्दनचर्च्चितौ ।
एकपर्य्यङ्कनिलयौ दृष्टौ मे केशवार्ज्जुनौ* ॥ इति ।

वृहद्याज्ञवल्क्यः ।

कामादपि च राजन्यो वैश्यो वापि कथञ्चन ।
मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते ॥ इति ।

सुरा उत्पत्तिप्रभृति† द्विजातिमात्रस्य निषिद्धा । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति स्मरणात् । तथा सुरापाननिषेधस्तु जात्याश्रय इति स्थितिरिति शूद्रस्य न सुरानिषेधो न मद्यनिषेधश्च इति स्वरूपनिरूपणम् ।

## अथ प्रायश्चित्तम् ।

तत्र मनुः ।

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।
तयास्य काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥

---

* उभौ मध्वासवक्षीवौ उभौ चन्दनरूषितौ । स्रग्विनौ वरवस्त्रौ च दिव्याभरणभूषितौ ॥ नैकरत्नविचित्रन्तु काञ्चनं महदासनं इत्यादि मूलमहाभारते पाठः । † जन्मप्रभृति ।

मोहाच्छास्त्रार्थापरिज्ञानात् न तु स्वरूपापरिज्ञानात्। अग्नि-
वर्णां क्वथिनापादिताग्निवर्णाम्।

याज्ञवल्क्यः।

सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम्।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छति॥

गोमूत्रमपि न बलीवर्दस्य* अपि तु स्त्रीव्यक्तेरेव घृतपयःसाह-
चर्य्यात् एतच्च सकृत्कामकारे। तथाच

अङ्गिराः।

सुरापानं सकृत्कृत्वा ह्यग्निवर्णां सुरां पिबेत्। इति।

बृहस्पतिः।

सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत्।
मुखे तया च निर्दग्धो† मृतः शुद्धिमवाप्नुयात्॥
गोमूत्रमग्निवर्णं वा पिबेत्सलिलमेव वा।
कुर्य्याद्दानशनं तावद्यावत्प्राणैर्विमुच्यते॥ इति।

यत्र मरणान्तिकप्रायश्चित्तानन्तरं शवशरीरं विद्यते तत्र मरणा-
देव पापस्यापगतत्वाद्दाहादिसंस्कारः सद्य एव भवति।

तथाच भविष्यपुराणे।

आयसे भाजने तप्तां ब्राह्मणो वारुणीं पिबेत्।
अग्निवर्णां पापहरां ततः पापात्प्रमुच्यते॥
जीवितस्यान्तकालेऽपि श्मशाने विहितो विधिरिति।

---

* वृषस्य। † मुखे सद्य विनिर्दग्ध इति शूलपाणिसम्मतः पाठः मुखेऽनया विनि-
र्दग्ध इति क्वचित् पाठः अनया सुरया इत्यर्थः।

कर्त्तव्य इति शेषः। श्मशाने विहितो विधिर्दाहादिः, शरीराभावेऽस्थिषु पलाशविधिना* वा संस्कारः कर्त्तव्यः। अत्र विशेषमाह

पैठीनसिः ।

सुराप आर्द्रवासा ह्यग्निवर्णां सुरां पिबेत् । इति ।

प्रचेताः ।

सुरापोऽग्निवर्णामायसेन पात्रेण ताम्रेण वा पिबेत् ।

अङ्गिराः ।

भृगुप्रपाते पतनं ज्वलनं वा समाविशेत् ।
महाप्रस्थानमातिष्ठेन् मुच्यते सर्व्वकिल्बिषात् ॥ इति ।

एतच्च मरणान्तिकं प्रायश्चित्तं पर्षदानादेष्टव्यमपि तु व्युत्पन्नश्चेत् स्वयमेव ज्ञात्वा कुर्य्यात्। अव्युत्पन्नश्चेत् प्रायश्चित्तस्वरूपं शिष्टेभ्यो ज्ञात्वा तदनुज्ञामन्तरेण स्वयमेव कुर्य्यात् ।

---

* पर्णनरदाहविधिना यथा आश्वलायनगृह्यपरिशिष्टं। अस्थिनाशे पलाशवृन्तानां त्रीणि षष्टिशतानि च। पुरुषप्रतिकृतिं कृत्वाऽशीत्यर्द्धन्तु शिरसि ग्रीवायां दश योजयेत्। उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा। बाहुभ्याञ्च शतं दद्यात् दद्यादङ्गुलिभिर्दश। द्वादशार्द्धं विषणयोरष्टार्द्धं शिश्नएव च। ऊरुभ्याञ्च शतं दद्याद्विशतं जानुजङ्घयोः। पादाङ्गुलीषु च दश एतत् प्रेतस्य लक्षणं। ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत्। आदिपुराणं। तदलाभे पलाशोत्थैः पत्रैः कार्य्यः पुमानपि। शतैस्त्रिभिस्तथा षष्ठ्या शरपत्रैर्विधानतः॥ तदलाभेऽस्थ्यलाभे। अत्र पलाशपत्रशरपत्रयोस्तुल्यत्वेनोपादानात् आश्वलायनसूत्रेऽपि प्रतिकृतौ शरपत्रस्य लाभः। अनाचाराद्योग्यत्वाच्च शरपत्रैः पुत्तलकं कृत्वा शिरःप्रभृतिषु पलाशपत्राणि देयानि ततोवेष्टनमूर्णासूत्रेण लेपनं यवपिष्टेनेति स्मार्त्तः।

तथाच मनुः ।

मतिपूर्व्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः । इति ।

एवं प्राणान्तिकेषु सर्व्वत्र ज्ञेयं बालादिषु पादो बालेषु दातव्य इत्यादि योज्यम् ।

यत्तु कुमारवचनम् ।

मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।
दोषस्त्वापञ्चमाद्वर्षादूर्द्ध्वं पित्रोः सुहृद्गुरोः ॥ इति ।

तत्स्वल्पदोषप्रदर्शनपरम् । जात्याश्रयेण निषेधस्य प्राग्दर्शितत्वात् ।

अतएव जातूकर्ण्यः ।

अनुपेतस्तु यो बालो मद्यं मोहात्पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्य्यान्माता भ्राता तथा पिता ॥ इति ।

सुरापानेषु षट् कृच्छ्राः कल्प्याः ।

यत्तु गौतमवचनम् ।

प्रागुपनयनात् कामचारवादभक्ष इति ।

तत्सुरादिव्यतिरिक्तपर्य्युषितादिविषयम् । अकामतः सुरापाने प्रायश्चित्तमाह ।

याज्ञवल्क्यः ।

वनेवासा जटी वापि ब्रह्महत्याव्रतञ्चरेत् ।
पिण्याकं वा कणान्वापि भक्षयेत्तु समा निशि* ॥

---

* भक्षयेत् त्रिसमा निशि इति मिताक्षरायां पाठः ।

वनेवासीग्रहणमितरधर्म्मोपलक्षणार्थम्। अत्र च शवशिरोध्वजतत्कपालधारणनिवृत्तिः। मनुना यत्सुरापानव्रत एव ध्वजीत्यभिहितं तत्पानमात्रेण* ध्वजीति विज्ञेयं। जटी वेति वाशब्दः पिण्याकादिभक्षणस्वरूपप्रायश्चित्तेन विकल्पार्थः स च विकल्पो व्यवस्थित एव व्यवस्था च विषयविभागादेव सेत्स्यति। गोवालावस्थिताः† केशा वालाश्छागादिलोमानि तन्निर्म्मितवस्त्रप्रावृतो वालवासा अतिदेशत्वेऽपि सम्पूर्णमेव प्रायश्चित्तम्भवति।

तथाच हारीतः।

द्वादशभिर्वर्षैर्महापातकिनः पूयन्त इति।

अथवा पिण्याकं तिलकल्कं कणान् तण्डुलकणानेव‡। आहारान्तरपरित्यागेन सकृत्प्राणयात्रामात्रमेव। समा वर्षत्रयं रात्रौ भक्षयेत्। द्वादशवार्षिकादिचरणं पिण्याकादिभक्षणञ्च जलबुद्ध्या सकृत्सुरां पीत्वा छर्द्दने कृते वेदितव्यं। यदाह।

व्यासः।

एतदेव व्रतं कुर्य्यान्मद्यपश्छर्द्दने कृते।

पञ्चगव्यञ्च तस्योक्तं प्रत्यहं कायशोधनम्॥ इति।

एतदेव ब्रह्महत्याव्रतमेव पिण्याकभक्षणेन संव्यवहार्य्यत्वमेव। न पारलौकिकनरकोपभोगनिवृत्तिरिति कल्पनीयम्। अल्प-

---

* तत्पात्रे इति पाठान्तरम्। † गोवालधिस्थिता इति पाठान्तरम्। ‡ कलान् वेति क्वचित् लवान् वेति पाठान्तरम्।

प्रायश्चित्तत्वादथवा द्वादशवार्षिकाशक्तं प्रत्युपदेशात्* स तु लोकद्वयेऽपि शुद्ध एव। अथवा अज्ञानतः पैष्टीं पीत्वा छर्दितस्य ब्राह्मणस्य द्वादशवार्षिकम्। तस्यैव पूर्ववदेव गौड़ीमाध्वीविषये पिण्याकादिभक्षणञ्च कल्पनीयं। गौड़ीमाध्वीज्ञानपूर्वकपाने द्विगुणम्। अभ्यासे वशिष्ठोक्तं

अभ्यासे तु सुराया अग्निवर्णां सुरां पिबेत्।

मरणात्पूतो भवतीति। अत्र सुराशब्दो गौड़ीमाध्वीपरः। साक्षात्सुरायाः सकृत्पानेऽपि मरणान्तिकस्योक्तत्वात्।

तथाच भविष्यपुराणे।

गौड़ीमाध्व्योस्तथाभ्यासे प्राणान्तिकमुदाहृतम्। इति।

केचित्तु याज्ञवल्क्यवचनमन्यथा पठन्ति। भक्षयेत्तु समां निशीत्येकवचनान्तत्वेन तत्पानवेन समानार्थम्।

कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि।

सुरापानापनुत्यर्थं वलवासा जटी ध्वजी॥ इति।

एतच्चाबुद्धिपूर्वं सुरायास्त्वरणमात्रसंयोगे द्रष्टव्यं प्रायश्चित्तस्याल्पत्वात् दोषोऽप्यल्प एव कल्पनीयः। अतएव पानशब्दोऽप्यत्र पानाविनाभूतवक्त्रादिसंयोगे† वर्त्तते। अत्रापि बालवृद्धादीनां पूर्ववदेवार्द्धं पादश्चेति कल्पनीयं। उपनीतानां बालानामर्द्धमनुपनीतानां पादः एवं विवाहिताविवाहितभेदेनापि स्त्रिया अपि उपनयनस्थानत्वात् विवाहस्य।

* उपदेश इति पाठान्तरम्। † पानाविनाभूतान्नादिसंयोगे इति पाठान्तरम् अविनाभूतं तद्विना अस्थायि।

बौधायनः ।

त्रैमासिकममत्या सुरापाने कृच्छ्राव्दपादं चरित्वा पुन-रुपनयनमिति ।

एतदनन्यसाध्यव्याध्युपशमार्थं पाने वेदितव्यं। अत्रैव विषये बार्हस्पत्यमपि ।

गौड़ीमाध्वी सुरां पैष्टीं पीत्वा विप्रः समाचरेत् ।
तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात् ॥ इति ।

यदा मद्यसंसृष्टशुष्करसमेवान्नं भक्षयति तदा मनूक्तं पुनरुप-नयनम् ।

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयोवर्णा द्विजातयः ॥ इति ।

पुनरुपनयनप्रकार आश्वलायनेनोक्तः

अथोपेतपूर्व्वस्य (२२) कृताकृतं केशवपनं मेधाजननं च (२३) अनिरुक्तं परिदानं (२४) कालश्च (२५) तत्सवितु-र्वृणीमह इति सावित्रीं (२६) इत्यादि ।

शुष्कसुराभाण्डोदकपाने

शातातपः ।

सुराभाण्डोदकपाने छर्दनं घृतप्राशनमहोरात्रोपवास-श्चेति ।

सरससुराभाण्डोदकपाने साक्षात्सुरावयवानां विद्यमानत्वात् पादोनं सुरापानप्रायश्चित्तं कल्प्यम्। अत्राप्यवयवाधिक्ये सम्पूर्णमेव शुष्कसुराभाण्डस्थपर्य्युषितोदकपाने

बौधायनः।

सुरापानस्य यो भाण्डे अपः पर्य्युषिताः पिबेत्।
शङ्खपुष्पीविपक्वन्तु क्षीरं स तु पिबेत्त्र्यहम्॥ इति।

मतिपूर्व्वकशुष्कमद्यभाण्डस्थितोदकस्य सकृत्पाने

विष्णुः।

अपः सुराभाजनस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेदिति।

पूर्व्वोक्तविषये*ऽकामतोऽभ्यासे

स एव।

अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा।
पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीशृतं पयः॥ इति।

अत्रैवाभ्यासे वृद्धयमः।

सुराभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः।
स द्वादशाहं क्षीरेण पिबेद्ब्राह्मीं सुवर्च्चनाम्॥ इति।

सोमयाजिनः सुरापमुखगन्धघ्राणे

मनुः।

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः।
प्राणानप्सु त्रिराचम्य घृतं प्राश्य विशुद्ध्यति॥

एतच्चाकामे कामे तु द्विगुणम् असोमयाजिनस्तु जातिभ्रंशकरोक्तं† प्रायश्चित्तं। पैष्टीगौड़ीमाध्वीव्यतिरिक्तमद्ये ज्ञानतो

---

* अत्रैवेति पाठान्तरम्। † जातिभ्रंशकपापोक्तं।

ब्राह्मणेन पीते तथा ब्रह्मक्षत्रविशामज्ञानतो रेतोविण्मूत्रपाने ।

याज्ञवल्क्यः ।

अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥

अत्र सुरा पैष्ट्यादित्रयव्यतिरिक्तमद्यं प्रायश्चित्तस्याल्पत्वात् । पुनरुपनयनञ्च तप्तकृच्छ्रपूर्व्वकम् ।

तथाच गौतमः ।

मद्यशब्दं न प्रयुङ्क्ते अमत्या मद्यपाने च । पयोघृतमुदकं वायुं प्रति त्र्यहं तप्तानि पिबेत् । स कृच्छ्रः । ततोऽस्य संस्कारः । मूत्रपुरीषकुणपरेतसां प्राशने चेति* ।

ज्ञानतस्तु वशिष्ठोक्तं द्रष्टव्यं† मत्या मद्यपाने त्वसुरायाः सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ घृतप्राशः पुनः संस्कारश्चेति सुरायाश्चाज्ञान इति एतच्च द्रव्यान्तरसंसृष्टायाः सुराया बलात्पाने तत्राप्यशक्तस्य वेदितव्यं । यच्च

आपस्तम्बेनोक्तम् ।

अभक्ष्याणामपेयानामलेह्यानाञ्च भक्षणे ।
रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथम्भवेत् ॥
यज्ञोडुम्बरविल्वानां पलाशस्य कुशस्य च ।
एतेषामुदकं पीत्वा षड्रात्रेण विशुध्यति ॥ इति ।

---

* अमत्या पाने पयोघृतमुदकं वायुं प्रति त्र्यहं तप्तानि स कृच्छ्रस्ततोऽस्य संस्कारः मूत्रपुरीषरेतसाञ्च प्राशने इति मूलगौतमसंहितायां पाठः । † कर्त्तव्यमिति पाठान्तरम् ।

तदज्ञानात्तालादिमद्यस्य सक्तत्पाने वेदितव्यम्। एवमन्यान्यप्युच्चावचप्रायश्चित्तानि* जातिशक्तिवयोऽनुबन्धज्ञानाज्ञानसकृदभ्यासात्यन्ताभ्यासबलात् कामकाराद्यपेक्षया† योज्यानि एतानि‡ गुरूणि गुरूणि लघुनि लघूनीति गौतमस्मरणात्। तिस्रो वर्णानुपूर्व्वेणेत्यनेन क्रमेण या द्विजातिभार्य्याः शूद्रापर्य्यन्तास्ताभिः सुरा न पातव्या यदि पिबेत्तदार्द्धं प्रायश्चित्तम्। तथाच मनुः।

पतत्यर्द्धं शरीरस्य§ यस्य भार्य्या सुरां पिबेत्।

ब्राह्मणस्य भार्य्यया शूद्रयापि मद्यमात्रं न पातव्यं ब्राह्मणस्य निषिद्धत्वात् यदि पिबति सा तदापातित्यं नास्ति निषेधस्य शूद्रवर्णविषयत्वाभावात् तत्संसर्गात् पत्युः ब्राह्मणस्यापि न पातित्यदोषः किन्त्वेनस्वी भवति गर्भे च दोषो जायते। प्रथमतः शूद्रावेदनं न सर्व्वसम्मतं तत्रापि पीतमद्यया सह संसर्ग इति स्वल्पोदोषोऽस्त्येव अतएवोपपातकमध्ये मद्यपस्त्रीनिषेधवचनमितिॖ परिगणितम्। एतत्सर्व्वमभिप्रेत्याह शङ्खः।

सुरालशुनपलाण्डुगृञ्जनमांसादीन्यभक्ष्याणि विवर्ज्जयेदाहारमयं हि शरीरं तन्मयत्वाद्ब्राह्मणः संकीर्त्तयेत्। मातुरशितपीतादिभि‖र्गर्भः सम्भवतीति।

---

* न्यूनाधिकप्रायश्चित्तानि। † बलात्कारापेक्षया इति क्वचित् पाठः। ‡ एतानि इत्यत्र एनसि इति क्वचित् पुस्तके पाठः। § पतत्यर्द्धंशरीरस्येति शूलपाणिसम्मतः पाठः। ¶ निषिद्धमितीति मूलसंहितायां क्वचित्पुस्तके च पठितम्। ‖ भोजनपानादिभिः।

## अथ सुरापानसमानानि ।

तत्र मनुः ।

ब्रह्मोज्झिता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः ।
गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट् ॥

गर्हितं पलाण्ड्वादि अन्नाद्यममेध्यादीनि स्मृतिमञ्जर्य्याम् । कल्पतरौ तु गर्हितं शास्त्राप्रतिषिद्धमपि लोके निन्दितम् । अन्नाद्यं लशुनादीनि । मतिपूर्व्वमनयोर्भक्षणे सुरापानसमत्वम्* ।

अतएव मनुः ।

छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेन्नरः ॥ इति ।

अमतिपूर्व्वत्वे तु प्रायश्चित्तान्तरं तेनैवाभिहितम् ।

अमत्यैतानि षड्जग्ध्वा कृच्छ्रं सान्तपनं चरेत् । इति ।

याज्ञवल्क्यः ।

निषिद्धभक्षणं जैह्म्यमुत्कर्षञ्च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि षट् ॥

जैह्म्यं कौटिल्यं तच्च गुरुविषयम् ।

देवलः ।

मृतां द्वितीयां यो भार्य्यां दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायान्तु सुरापानसमं हि तत् ॥ इति ।

---

* सुरापानसाम्यं ।

समत्वकथनं तत्प्रायश्चित्तातिदेशार्थम्। अतः अर्द्धं प्रायश्चित्तं भवति। व्रतातिदेशे तु पादोनं भवतीति प्राङ्निरूपितम्।

## अथ सुवर्णस्तेयप्रायश्चित्तम्।

याज्ञवल्क्यः।

ब्राह्मणः स्वर्णहारी तु राज्ञे मुषलमर्पयेत्।
स्वकर्म्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः॥

राजाभिषेकादिगुणयुक्तः क्षत्रियः। तेन मुषलेन हतो मरणान्मुक्तो वा शुद्ध एव अहनने राज्ञो दोषोऽस्त्येव।

अतएव मनुः।

अत ऊर्द्धं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम्।
सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु।
स्वकर्म्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति।
गृहीतमुषलो* राजा सकृद्धन्यात्तु तं स्वयम्।
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव वा॥
राजा स्तेनेन गन्तव्यो मुक्तकेशेन धावता।
आचक्षाणेन तत्स्तेयमेवंकर्म्मास्मि शाधि माम्॥
स्कन्धेनादाय मुषलं लगुडं वापि खादिरम्।
शक्तिं वोभयतस्तीक्ष्णामायसं दण्डमेव वा॥
शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते।

---

* गृहीत्वा मुषलमिति पाठान्तरम्।

अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्विषम् ॥ इति।

शाधि जहि। अश्मिः काष्ठकुद्दालः अश्मिः स्त्री काष्ठकुद्दाल इत्यमरः। शक्तिं वोभयतस्तीक्ष्णामित्यपि पाठः। ब्राह्मणोऽपि वधमर्हति वधेन शुध्यति स्तेनो ब्राह्मण इति तेनैवाभिधानात्। यत्तु ब्राह्मणो न हन्तव्य इति न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्वयं विधिरिति च निषेधवचनं तत्प्रायश्चित्तव्यतिरिक्तविषयं प्रायश्चित्तप्रकरण एव सुवर्णस्तेयकृद्विप्रइत्याद्यभिधानात्।

गौतमः।

अघ्नन्नेनस्वी राजेति।

संवर्त्तः।

ततो मुषलमादाय सकृद्धन्यात्तु स* स्वयम्।
यदि जीवति स स्तेनः सस्तेयाद्विप्रमुच्यते॥ इति।

शङ्खः।

सुवर्णस्तेनः प्रकीर्णकेश आर्द्रवासा आयसं मुषलमादाय इति।

ब्राह्मणः स्वर्णहारी तु राज्ञे मुषलमर्पयेत् इति सामान्येनाभिधानात् इदं मरणान्तिकप्रायश्चित्तं सार्व्ववर्णिकम्। अत्र सुवर्णशब्दः परिमाणविशेषविशिष्टहिरण्यद्रव्यवचनः। परिमाणमाह

---

* तमिति पाठान्तरम्।

याज्ञवल्क्यः ।

जालसूर्य्यमरीचिस्थं त्रसरेणुरजः स्मृतम् ।
तेऽष्टौ निष्कास्तु तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः षड्भि*र्यवोमध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोड़श ॥ इति ।

एवञ्च षोड़शमाषपरिमिते हेम्नि सुवर्णसंज्ञा पारिभाषिकी । परिमाणविशेषेण प्रायश्चित्तविशेषः ।

षट्त्रिंशन्मते ।

बालाग्रमात्रेऽपहृते प्राणायामं समाचरेत् ।
निष्कमात्रेऽपि च तथा प्राणायामत्रयं बुधः ॥
राजसर्षपमात्रेण प्राणायामचतुष्टयम् ।
गायत्र्यष्टसहस्रञ्च जपेत्पापविशुद्धये ॥
गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत् ।
यवमात्रे सुवर्णस्य प्रायश्चित्तं दिनद्वयम् ॥
सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तमः ।
कुर्य्यात्सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये ॥
अपहृत्य सुवर्णस्य माषमात्रं द्विजोत्तमः ।
गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति ॥
सुवर्णस्यापहरणे वत्सरं यावकी भवेत् ।

---

* गौरस्तु ते त्रयः षट् ते यवोमध्यस्तु ते त्रयः । कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोड़श ॥ इति मूलयाज्ञवल्क्यसंहितायां मिताक्षरायाञ्च पाठः ।

ऊर्द्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महत्याव्रतमिति* ॥

एतच्च संवत्सरयावकव्रतं किञ्चिन्न्यूनसुवर्णपरिमाणापहारे द्रष्टव्यम्। एतच्च सुवर्णस्तेयप्रायश्चित्तं हृतादेकादशगुणं द्रव्यं स्वामिने दत्त्वैव कार्य्यं। तथाच

लघुवशिष्ठः† ।

स्तेये ब्रह्मस्वभूते तु सुवर्णहरणे कृते ।
पश्चात्तेन दातव्यं तस्मै ह्येकादशाधिकम् ॥
ऋणसंशुद्धिभावाय ततश्चान्द्रायणत्रयम्।
संवत्सरेण कर्त्तव्यं विपुलां शुद्धिमिच्छता ॥

एकादशगुणं दानं सद्यस्ततः प्रायश्चित्तमिति विशेषः। तस्य ऋणसंशुद्धिरूपत्वात् चान्द्रायणत्रयम्। यवमध्यपिपीलिकामध्ययतिचान्द्रायणात्मकं संवत्सरेण कर्त्तव्यं चान्द्रायणत्रयाभ्यासेन संवत्सरं यावत्प्रायश्चित्तं कर्त्तव्यमित्यर्थः। एतच्च संवत्सरयावकव्रतेन विकल्प्यते। एकादशगुणदानासमर्थं प्रति स एवाह

अभावे काञ्चनस्य स्यात् व्रतमेतच्चतुर्गुणम्।
चरेद्यतात्मा निःसङ्गः पूर्णं वर्षचतुष्टयम् ॥
समाप्ते काञ्चनं गाश्च रजतं वापि शक्तितः।
देयमन्नं द्विजातिभ्यः शुभं पापोपशान्तये ॥

एतद्व्रतं चान्द्रायणत्रयं संवत्सरेण कर्त्तव्यमित्येतत् मरणान्तिकप्रायश्चित्तादर्व्वाचीनेषु स्तेयप्रायश्चित्तेष्वेकादशगुणदानासम-

---

* ब्रह्महव्रतमिति पाठान्तरम्। † लघुविष्णुरिति पाठान्तरम्।

र्थस्य चातुर्गुण्यावरणमनेन न्यायेन प्राप्तं। तत्र जातिशक्त्याद्यपेक्षया द्वैगुण्यादिकं कल्प्यम्। यदा राजा मुषलादिना हन्तुमसमर्थः शरीरशक्त्यभावात्तदा वशिष्ठोक्तं द्रष्टव्यम्।

स्तेनः प्रकीर्णकेशो राजानमभियाचेत ततस्तस्मै राजा औडुम्बरं शस्त्रं दद्यात् तेनात्मानं समापयेत्* मरणात्पूतो भवतीति विज्ञायत इति।

औडुम्बरं ताम्रमयं। क्षत्रियादिभिर्ब्राह्मणसुवर्णहरणे ब्राह्मणादिभिर्गुरुश्रोत्रियशागस्थविप्रसुवर्णहरणे च वशिष्ठोक्तमेव मरणान्तिकप्रायश्चित्तं निष्कालको घृताक्तो गोमयाग्निना पादप्रभृत्यात्मानं प्रमापयेत्। मरणात्पूतो भवतीति विज्ञायत इति। निष्कालकशब्दः पूर्व्वमेव व्याख्यातः। यस्तु रजतादि वस्त्वन्तरबुद्ध्या† वस्तुद्वयं वा सुवर्णमपहरति तदज्ञानापहृतमुच्यते। तत्र प्रायश्चित्तमाह

याज्ञवल्क्यः।

अनिवेद्य नृपे शुद्ध्येत्सुरापव्रतमाचरन्।
आत्मतुल्यं सुवर्णं च दद्याद्वा आत्मतुष्टिकृत्॥

राजन्यमकथयित्वैव द्वादशवार्षिकव्रतं सम्पूर्णमाचरेत्। आत्मतुल्यसुवर्णदानादि गुरुतरसमप्रायश्चित्तपाठात् सुरापव्रतमित्यनेन शवशिरोध्वजतत्कपालधारणनिरासः। यद्यपहर्त्तात्यन्तधनवान् तदात्मतुल्यसुवर्णदानम्। आत्मतुल्यसुवर्णाभावे विप्रस्य

---

* प्रमापयेदिति पाठान्तरम्। † द्रव्यान्तरबुद्ध्येति पाठान्तरम्।

यावज्जीवं कुटुम्बभरणक्षमत्वेन तुष्टिकरं धनं दद्यात् ।

यत्तु व्यासवचनम् ।

एतदेव व्रतं स्तेनः पादन्यूनं समाचरेत् । इति ।

नववार्षिकं तन्निर्गुणस्वामिकसुवर्णापहारे ।

यच्चाङ्गिरसोक्तम् ।

षड़ब्दं प्राचरेत् कृच्छ्रं यजेद्वा क्रतुना द्विजः ।
तीर्थानि वा भ्रमन् विद्वांस्ततः स्तेयाद्विमुच्यते ॥ इति ।

तन्निर्गुणस्वामिकस्य स्वग्रामकुटुम्बभरणार्थापहारे । क्रतुः स्वर्जिदादिरित्येवमादीन्यन्यान्यपि गुरुलघुप्रायश्चित्तानि विषयविशेषेषु शक्त्याद्यपेक्षया योज्यानि ।

तथाच भविष्यपुराणे ।

महापातकनिर्देशे तृतीयं स्तेयमुच्यते ।
ब्राह्मणद्रव्यविशेषात् प्रयोजनविशेषतः ॥
अनुबन्धविशेषाच्च प्रायश्चित्तं विधीयते ।
हृत्वा तु काञ्चनं विप्रो गुणिनो ब्राह्मणस्य तु ॥
स्वयञ्च निर्गुणो वीर चरेद्ब्रह्महनो व्रतम् ।
यदा तु निर्गुणं स्वामी क्षत्रियो वैश्य एव च ॥
हर्त्ता च ब्राह्मणो वीर तदापस्तम्बभाषितम् ।
क्षत्रियस्य सुरश्रेष्ठ गुणैर्हीनस्य यत्नतः* ॥
हृत्वा तु काञ्चनं विप्रः प्रायश्चित्तमिदञ्चरेत् ।

---

* कृत्स्नश इति पाठान्तरम् ।

चतुर्थकाले भुञ्जानस्त्रिकालं स्नानमाचरेत् ॥
स्थानासनाभ्यां विहरंस्त्रिभिर्वर्षैर्विमुच्यते ।
क्षत्रादीनां गुणवतामनल्पे*ऽपहृते गुह ॥
अल्पानुबन्धे च तथा एतदेव भवेद्विभो ।
श्रेष्ठविप्रसुवर्णन्तु प्रभूतमपहृत्य च ॥
स विशिष्टानुबन्धश्च ब्राह्मणो द्यूतवल्लभः ।
प्रायश्चित्तमिदं कुर्याद्वदतो मे निबोधय ॥
लोमहीनो घृताक्तश्च आत्मानं पावके क्षिपेत् ।
हृत्वा तु काञ्चनं वीर क्षत्रियो ब्राह्मणस्य तु ॥
सानुबन्धो ह्यनाथस्य दुरोदरपरो गुह ।
आत्मानं हननं† वीर शस्त्रेणोडुम्बरेण तु ॥
ततः शुद्धिमवाप्नोति दिष्टान्ते‡ प्राणवर्जितः ।
हृत्वा तु काञ्चनं वैश्यो गुणिनो ब्राह्मणस्य तु ॥
व्यसनी§ गुणहीनश्च सानुबन्धः सुराधिप ।
हृत्वा पार्श्वं केशदाम्ना तदात्मानं सुराधिप ॥
तद्वच्च त्यजति प्राणांस्ततः शुद्धिमवाप्नुयात् ।
चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥

तन्निर्यात्य गृहीतं स्वामिने दत्त्वात्मशुद्धये मरणान्तिकप्रायश्चित्तकरणयोग्यतायै ।

---

* अत्यल्पेऽपहृते इति पाठान्तरम् । † स हनेदिति पाठान्तरम् हनेदिति आर्षं स हनन इति क्वचित् पाठः । ‡ दृष्टान्ते इति क्वचित् पाठः । क्वचिच्च पुस्तके दिष्टार्थे इति पठितम् । § विमनीति क्वचित् पाठः ।

अमुमेवार्थमाह ।

निर्यात्येति वाक्यन्तु प्रवदन्ति मनीषिणः ।
तत्पूर्व्वञ्चैव योग्यस्य सूचकं नात्र संशयः ॥

तन्निर्यात्येति तु वाक्यमिति चरेत्सान्तपनमिति पूर्व्ववाक्यं । ततपूर्व्वं मरणान्तिकात् प्रायश्चित्तात्पूर्व्वं योग्यस्य भावपरोऽयं निर्द्देशः योग्यत्वसूचकमित्यर्थः । अपहृतद्रव्यं दत्त्वा सान्तपनाचरणानन्तरं मरणान्तिकप्रायश्चित्तं कुर्य्यादित्यर्थः ।

क्षत्रियस्य तु बालस्य ब्राह्मणो हरते यदि ।
पञ्चनिष्कप्रमाणन्तु सुवर्णं कैतवं प्रति ॥
कृष्णाजिनी जटी दण्डी मिताशी विजने वने ।
जपमानोऽर्कसूक्तञ्च* चरेद्ब्रह्महनव्रतम् ॥
क्षत्रियस्य गुणाढ्यस्य हृत्वा विप्रस्तु निर्गुणः ।
चतुर्थकाले भुञ्जानस्त्रिभिर्वर्षैर्विशुध्यति ॥
क्षत्रादयोऽपि गुणिनोऽप्यल्पमल्पानुबन्धि वै ।
हृत्वा चौर्य्यमनेनैव शुद्धेयुर्नात्र संशयः ॥
विप्रस्य गुणवान्विप्रो निर्गुणस्यापहृत्य तु ।
चतुर्थकाले भुञ्जानस्त्रिभिर्वर्षैर्व्यपोहति ॥
ब्राह्मणस्य गुणाढ्यस्य हृत्वा विप्रस्तु निर्गुणः ।
प्रभूतं सानुबन्धञ्च स शुध्येत कटाग्निना ॥

---

* चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेरित्यादि षड्चात्मकमृग्वेदीयमर्कसूक्तम् ।

गुणवान् ब्राह्मणो हत्वा चत्रियस्यागुणस्य च ।
चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥
एवमन्यान्यपि विभो प्रायश्चित्तानि भागशः ।
सुवर्णस्तेयविषये स्थापनीयानि पण्डितैः ॥ इति ।

चतुर्विंशतिमते ।

रूप्यं हत्वा द्विजो लोभाच्चरेच्चान्द्रायणं व्रतम् ।
गद्याणकदशादूर्द्धं* माशतात् द्विगुणञ्चरेत् ॥ इति ।
आसहस्रात्तु त्रिगुणमूर्द्धं हेमविधिः स्मृतः ।
सर्व्वेषां धातुलोहानां पराकन्तु समाचरेत् ॥
धान्यानां हरणे कृच्छ्रं तिलानां सैन्दवं स्मृतम् ।
रत्नानां हरणे विप्रश्चरेच्चान्द्रायणं व्रतम् ॥ इति ।

किञ्च तदधिकशास्त्रीयमासत्रये गद्याणकशब्दः प्रयुज्यते केचन कण्टकपरिमिते युञ्जते । रत्नहरणे चान्द्रायणं स्वल्पमूल्यविषयं चत्रियादिरत्नापहारविषयं वा उत्तमरत्नहरणस्य सुवर्णस्तेयसमत्वात् ।

## अथ सुवर्णस्तेयसमानानि ।

याज्ञवल्क्यः ।

अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा ।

---

* क्वचिदाधुनिकग्रन्थे गद्याणक इत्यस्य स्थाने बधान इति पठितम् निष्कापरपर्य्यायी-बधानं इति व्याख्यातञ्च ।

निक्षेपस्य च सर्व्वं हि सुवर्णस्तेयसम्मितम् ॥

अश्वादीनि ब्राह्मणसम्बन्धीनि । निक्षेपः सुवर्णव्यतिरिक्तस्य ।

## अथ गुरुतल्पप्रायश्चित्तम् ।

यमः ।

गुरुदाराभिगमनं कृत्वा मोहेन वै द्विजः ।
ज्वलन्तीमायसीं शय्यां संविशेद्गुरुतल्पगः ॥
सूर्म्मीं ज्वलन्तीमाश्लिष्य मृत्युना स विशुध्यति ।
अथवा शिश्नवृषणावुत्कृत्य प्रतिगृह्य च ॥
गुरोरभिमुखस्तिष्ठेत्पूतो भवति किल्बिषात् ।
नैर्ऋतीं वा दिशं गच्छेदानिपातादजिह्मगः ॥
प्राणत्यागाद्विशुध्येद्वै मनुः स्वायम्भुवोऽब्रवीत् ।

सूर्म्मीं कार्ष्णायसी स्त्रीप्रतिकृतिः। गुरोरभिमुखस्थितावपि प्राणत्यागेनैव शुद्धिः । अत्र गुरुर्निषेकक्रत्पिता । अतो द्विज-ग्रहणमुपलक्षणम् । सम्पूर्णगमनञ्च योनौ रेतःसेके सत्येव । अतस्ततोऽर्व्वाङ्निवृत्तौ न महापातकत्वं । एतच्च जननीमकामतः तत्सपत्नीं सवर्णामुत्तमवर्णाञ्च कामतो गच्छतः ।

तथाच षट्त्रिंशन्मते ।

पितुर्भार्य्याञ्च विज्ञाय सवर्णां योऽधिगच्छति ।
जननीं वाप्यविज्ञाय ना मृतः शुद्धिमाप्नुयात् ॥

जनन्यां कामकारे वक्ष्यति । अयःशय्यायां शयनं स्वकर्म्म विज्ञाप्य कुर्य्यात् ।

तथाच मनुः ।

गुरुतल्प्यभिभाष्यैनस्तल्पे स्वप्यादयोमये । इति ।

मृण्मयी वा स्त्रीप्रकृतिर्भवति ।

यथा वृद्धहारीतः ।

गुरुतल्पगो मृण्मयीमायसीं स्त्रियाः प्रतिकृतिमिति ।

अत्रापरो विशेषो वशिष्ठेनोक्तः

निष्कालको घृताभ्यक्तस्तप्तां शूर्मीं परिष्वजेत् । इति ।

उभयेच्छातः प्रवृत्तौ तप्तायःशयनस्वरूपं प्रायश्चित्तम् । स्वप्रोत्साहेन प्रवृत्तौ तु अथवा शिश्नवृषणावुत्कृत्य प्रतिगृह्य चेत्यादि प्रायश्चित्तं । अत्र विशेषमाह

मनुः ।

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।

नैर्ऋतिं दिशमातिष्ठेदानिपातादजिह्मगः ॥ इति ।

पृष्ठतोऽनीक्षमाणेनैव गमनं कर्त्तव्यं । आहतुः

शङ्खलिखितौ ।

क्षुरेण शिश्नवृषणावुत्कृत्यानवेक्षमाणो व्रजेदिति ।

वशिष्ठः ।

वृषणशिश्नावुत्कृत्याञ्जलावाधाय दक्षिणाभिमुखो गच्छेत् यथा गच्छेद्यत्रैव प्रतिहतस्तत्रैव तिष्ठेदाप्रलयादिति ।

पितृदारप्रोत्साहितस्य गुरुतल्पगमने मनूक्तयोर*न्यतरत् द्रष्टव्यम् ।

* ज्वलल्लौहप्रतिमालिङ्गनशिश्नवृषणच्छेदनरूपयोः ।

गुरुतल्प्याभिभाष्यैनस्तल्पे स्वप्यादयोमये ।

सूर्म्मीं ज्वलन्तीमाश्लिष्य मृत्युना स विशुध्यति ॥ इति ।

तप्तायःशयने स्वाप एकं सूर्म्म्यालिङ्गनमपरं । कामतो जननीगमने

वशिष्ठः ।

निष्कालको घृताक्तो गोमयाग्निना पादप्रभृत्यात्मानमवदाहयेत् । इति ।

अधिकदुःखोत्पादकत्वात् कामकारविषय एव युज्यते । अकामतोऽभ्यासेऽप्येतदेव । इदञ्च प्रायश्चित्तं मुख्यपुत्रस्यैव । क्षेत्रजादीनां पुत्रकार्य्यकरत्वमेव न मुख्यपुत्रत्वम् ।

अतएव मनुः ।

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।

पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ इति ।

एवं सापत्न्यमातृगमने यत्प्रायश्चित्तं तत्क्षेत्रजादीनाम्भवति । अकामतः सवर्णोत्तमवर्णपितृपत्नीगमने शङ्खोक्तं द्वादशवार्षिकम् ।

अधःशायी जटाधारी पर्णमूलफलाशनः ।

एककालं समश्नन्वै वर्षे तु द्वादशे गते ॥

रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।

व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे ॥ इति ।

अस्मिन्नेव विषये कामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तौ द्वादशवार्षिकम् । अकामतस्त्रैवार्षिकं । जनन्यान्तु कामतः प्रवृत्तस्य

रेतस्सेकात् प्राङ्निवृत्तौ द्वादशवार्षिकं। अकामतस्तु रेतस्सेकात् प्राङ्निवृत्तौ षड्वार्षिकं कल्प्यमिति। मिताचरायां ब्राह्मणीपुत्त्रस्य मतिपूर्व्वं शूद्रजातीयगुरुपत्नीगमने प्राजापत्यकृच्छ्रान् वर्षत्रयमाचरेत्। अमतिपूर्व्वं सवर्णव्यभिचारिणीगुरुपत्नीगमने पदक्रमरहितं संहितामात्रजपसहितं चान्द्रायणत्रयम्।

तत्र याज्ञवल्क्यः।

प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः।
चान्द्रायणं वा त्रीन् मासानभ्यस्य वेदसंहिताम् ॥ इति।

पूर्व्वोक्तविषये कामतः प्रवृत्तौ यथाक्रमेणोशनसोक्तं द्रष्टव्यम्। गुरुतल्पाभिगामी संवत्सरं ब्रह्महत्याव्रतं षण्मासान् तप्तकृच्छ्रञ्चरेदिति ब्राह्मणपुत्त्रस्य कामतः चत्रजातीयपितृपत्नीगमने नववार्षिकम्।

मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा।
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः॥

इति याज्ञवल्क्येन गुरुतल्पातिदेशात्। अत्रैव कामतोऽभ्यासे वशिष्ठोक्तं मरणान्तिकम्।

मत्वा गत्वा पुनर्भार्य्यां गुरोः चत्रसुतां* द्विजः।
अण्डाभ्यां रहितं लिङ्गमुत्कृत्य स मृतः शुचिः॥ इति।

ब्राह्मणीपुत्त्रस्य कामतो वैश्यायां पितृपत्न्यां गमने षड्वार्षिकम्।

---

* चत्रजातीयां।

तथाच पौलस्त्यः ।

ब्राह्मणीपुत्त्रस्य क्षत्त्रियायां नववार्षिकं वैश्यायां षड्-
वार्षिकं क्षत्त्रियापुत्त्रस्य वैश्यायां मातरि नववार्षिकं
शूद्रायान्तु षड्वार्षिकमेवमेव वैश्यापुत्त्रस्यापीति ।

एवमेव नववार्षिकमित्यर्थः । वैश्यायां कामतोऽभ्यासे लौगा-
क्ष्युक्तं मरणान्तिकम् ।

गुरोर्भार्य्यान्तु यो वैश्यां गत्वा गच्छेत्पुनः पुनः ।
लिङ्गाग्रं छेदयित्वा तु ततः शुध्येत किल्बिषात् ॥ इति ।

शूद्रायान्तु कामतोऽभ्यासे उपमन्यूक्तं द्वादशवार्षिकम् ।

पुनः शूद्रां गुरोर्गत्वा शुद्धेरद्विप्रः समाहितः ।
ब्रह्मचर्य्यमदुष्टात्मा स चरेद्द्वादशाब्दिकम् ॥ इति ।

ब्राह्मणीपुत्त्रस्य वा बुद्धिपूर्व्वं क्षत्त्रियायां पितृपत्न्यां गमने यमोक्तं
द्रष्टव्यम् ।

कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदाव्रती ।
स्थानासनाभ्यां विहरंस्त्रिरह्नोऽभ्युपपत्तयः ॥
अधःशायी त्रिभिर्वर्षैस्तदपोहेत पातकम् । इति ।

अत्रैवाभ्यासे जातूकर्ण्यः ।

गुरोः क्षत्त्रसुतां भार्य्यां पुनर्गत्वात्मकामतः ।
अण्डमात्रं समुत्कृत्य शुद्धेरज्जीवन् मृतोऽपि वा ॥ इति ।

वैश्यायान्तु अकामतो गमने

प्राजापत्यञ्चरेत्कृच्छ्रं समां वा गुरुतल्पगः । इति ।

याज्ञवल्क्योक्तं वर्षत्रयम् ।

प्राजापत्याचरणं कल्प्यं ।

वृद्धमनुरपि ।

अब्दत्रयमकामात्तु कृच्छ्रं नित्यं समाचरेत् । इति ।

अत्रैव कामतोऽभ्यासे हारीतोक्तं मरणान्तिकं ब्रह्मचर्य्यम् ।

अभ्यस्य विप्रो वैश्यायां गुरोरज्ञानमोहितः ।
षडङ्गं ब्रह्मचर्य्यञ्च स चरेद्यावदायुषम् ॥ इति ।

षडङ्गं वाक्पाण्युपस्थचक्षुःश्रोत्रघ्राणानि षडङ्गानि । अमतिपूर्व्वं शूद्रायां पितृपत्न्यां गमने मनूक्तं सुमन्तूक्तं वा ज्ञेयम् । मनुः ।

खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने ।
प्राजापत्यञ्चरेत्कृच्छ्रमब्दमेकं समाहितः ॥ इति ।

सुमन्तुः ।

अथवा गुरुदाराभिगामी संवत्सरं कण्टकिनीं शाखां परिष्वज्याधःशायी त्रिसवनी भैक्षाहारः पूतो भवतीति।

अत्रैवाभ्यासे पूर्व्वं मनूक्ताब्दकृच्छ्रमेव द्विगुणं कुर्य्यात् क्षत्रियया पितृपत्न्या प्रोत्साहितस्य कामतः प्रवृत्तस्य ब्राह्मणीपुत्रस्य रेतस्सेकात्प्राङ्निवृत्तौ मासत्रयं प्राजापत्यकरणम्* । अत्रैवोभयेच्छातः प्रवृत्तस्य मासत्रयमिति कृच्छ्रचरणम् । अत्रैव स्वयमेव प्रोत्साहनङ्कृत्वा प्रवृत्तस्य मासत्रयं कृच्छ्रातिकृच्छ्रानुष्ठानम् । अनेनैवाभिप्रायेण

* चरणमिति पाठान्तरम् ।

व्याघ्रः ।

कृच्छ्रञ्चैवातिकृच्छ्रञ्च तथा कृच्छ्रातिकृच्छ्रकम् ।

चरेन्मासत्रयं विप्रः क्षत्रियागमने गुरोः ॥ इति ।

पूर्व्वोक्तविषय एव तया प्रोत्साहितस्याकामतः प्रवृत्तस्य रेतः-सेकात्प्राङ्निवृत्तावतिकृच्छ्रः । तत्रैवोभयेच्छातः प्रवृत्तस्य तप्त-कृच्छ्रम् । अत्रैव स्वेन प्रोत्साहितायां प्रवृत्तस्य चान्द्रायणम् । अनेनैवाभिप्रायेण

कण्वः ।

चान्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैव च ।

सकृद्गत्वा गुरोर्भार्य्यामज्ञानात् क्षत्रियां द्विजः ॥ इति ।

वैश्यायां पितृपत्न्यां कामत उभयेच्छातः प्रवृत्तस्य रेतःसेकात् प्राङ्निवृत्तस्य ब्राह्मणीपुत्रस्य मासं तप्तकृच्छ्रः । अत्रैव स्वेन प्रोत्साहितायां प्रवृत्तस्य मासं पराकः । अत्रैव तया प्रोत्साहि-तस्य मासं सान्तपनकृच्छ्रः । अनेनैवाभिप्रायेण

कण्वः ।

तप्तकृच्छ्रं पराकञ्च तथा सान्तपनं गुरोः ।

भार्य्यां वैश्यां सकृद्गत्वा बुद्ध्या मासञ्चरेद्बुधः ॥ इति ।

अत्रैव कामतः प्रवृत्तस्य तया प्रोत्साहितस्य उभयेच्छातः प्रवृ-त्तस्य सप्तरात्रं स्वेन प्रोत्साहितायां प्रवृत्तस्य चाष्टरात्रम् । एतत्सर्व्वमभिप्रेत्याह

प्रजापतिः यमश्च ।

पञ्चरात्रन्तु नाश्नीयात्सप्ताष्टौ वा तथैव च ।

वैश्यां भार्य्यां गुरोर्गत्वा सकृदज्ञानतो द्विजः ॥ इति । शूद्रायां पितृपत्न्यां कामतः प्रवृत्तस्य तया प्रोत्साहितस्य रेतःसेकात्प्राङ्निवृत्तस्यातिकृच्छ्रः । अनैवोभयेच्छातः प्रवृत्तस्य च तप्तकृच्छ्रः स्वेन प्रोत्साहितायां प्रवृत्तस्य पराकः । एतदेवाभिसन्धायाह

जाबालिः ।

अतिकृच्छ्रं तप्तकृच्छ्रं पराकञ्च तथैव च ।
गुरोः शूद्रां सकृद्गत्वा बुद्ध्या विप्रः समाचरेत् ॥ इति । अनैवाकामतः प्रवृत्तस्य तया प्रोत्साहितस्य प्राजापत्यम् । उभयेच्छातः प्रवृत्तस्य सान्तपनं सप्तरात्रोपवासकम् । गुरोः शूद्रां सकृद्गत्वा स्वेन प्रोत्साहितायां प्रवृत्तस्य सप्तरात्रोपवासः । एतदभिप्रेत्याह

दीर्घतमाः ।

प्राजापत्यं सान्तपनं सप्तरात्रोपवासकम् ।
गुरोः शूद्रां सकृद्गत्वा चरेद्विप्रः समाहितः ॥ इति । ब्राह्मणीपुत्रस्य क्षत्रियागमने वैश्यागमने च प्रायश्चित्तं तदेव क्षत्रियापुत्रस्य वैश्यागमने शूद्रागमने च । अनन्तरत्वादिकान्तरितत्वाच्च ब्राह्मणीपुत्रस्य क्षत्रियागमने यत्प्रायश्चित्तं तदेव वैश्यापुत्रस्य शूद्रागमन इति द्रष्टव्यम् । यत्तु शृङ्ग्याह्निकतया विशेषो विहितस्तत्र स एव ग्राह्यः । एवमन्यान्यपि स्मृतिवचांसि अनुबन्धाद्यपेक्षया योज्यानि । एवंविधपापेषु प्रवृत्तानां स्त्रीणामपि महापातकिनीत्वाविशेषात् कामकृते मरणान्तिकम् ।

तथाच कात्यायनः।

एष दोषश्च शुद्धिश्च पतितानामुदाहृता।

स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः॥ इति।

याज्ञवल्क्योऽपि।

छित्वा लिङ्गं वधस्तस्य सकामाया स्त्रियास्तथा। इति।

अकामकृते तु द्वादशवार्षिकाद्यं स्त्रीणामर्द्धस्य विहितत्वात्। अयन्तु विशेषः। अरण्यादिस्थितिर्नास्ति गृह एव वास इति।

तथाच योगियाज्ञवल्क्यः।

पतितानामेष एव विधिः स्त्रीणां प्रकीर्त्तितः।

वासो गृहान्तिके देयमनुवासश्च रक्षणम्॥

इति रक्षणार्थमनुवासः कर्त्तव्य एव समीपवास इत्यर्थः।

मनुः।

एतदेव व्रतं कार्य्यं योषित्सु पतितास्वपि। इति।

एतदेव द्वादशवार्षिकमेव अनुलोमगमने निष्कृतिरुक्ता। प्रतिलोमगमने कामाकामभेदेन

संवर्त्तः।

शूद्रस्तु विप्रागमने गुरुतल्पव्रतञ्चरेत्।

अज्ञानाज्ज्ञानतो गत्वा प्राणान्तिकमिति स्थितिः॥इति।

वशिष्ठः।

शूद्रश्चेत् ब्राह्मणीमभिगच्छेत् वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाभ्यज्य नग्नां कृष्णखरमारोप्य महापथमनुसंव्राजयेत्।

पूता भवतीति विज्ञायत इति। तथा वैश्यश्चेद् ब्राह्मणी-मभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनङ्कारयित्वा नग्नां श्वेतखरमा-रोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते। एवं तु राजन्यायां वैश्यः शूद्रश्च राजन्यावैश्ययोरिति। वपनमित्यनेनैव भवतीति विज्ञायते। एवं प्राप्तेऽपि अनेन शिखावपनप्राप्तये शिरसीत्युक्तम्। यस्य तृणविशेषस्य उशीरं मूलं तानि वीरणानि। एतच्च वचनं स्मृतिमञ्जर्य्यामपरार्के च गुरुतल्पप्रकरणे लिखितम्। अत्रापरार्क एवं व्याख्यातं। महा-पथो राजमार्गः। पूता भवतीति प्रायश्चित्तस्य योग्या भवतीत्यर्थः इति विज्ञानेश्वरेण उपपातकेषु पारदार्य्यप्रकरणे लिखितम्। तेन च एवं व्याख्यातं पूता भवतीति वचनात् राजवीथीपरिव्राजनमेव दण्डरूपं प्रायश्चित्तान्तरनिरपेक्षं शुद्धिसाधनमिति दर्शयतीति। वयन्तु ब्रूमः महापातकस्थले कामतः प्रातिलोम्येन शूद्रादिषु प्रवृत्तायाः स्त्रिया महापथ-गमनं महाप्रस्थानमामरणादजिह्मगमनं। उपपातकेषु तु राजवीथीपरिव्राजनेनैव शुद्धिरिति।

## अथ गुरुतल्पसमानि।

मनुः।

रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च।
सख्युः पुत्त्रस्य च स्त्रीषु गुरुतल्पसमं विदुः॥

रेतःसेक इति विशेषोपादानाद्रेतःसेकाभावे गुरुतल्पाभावात् स्वल्पप्रायश्चित्तं कल्प्यम् ।

याज्ञवल्क्यः ।

सखिभार्य्याकुमारीषु स्वयोनीष्वन्त्यजासु च ।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥

स्वयोनिर्भगिनी अन्त्यजाश्चात्र चाण्डालाद्या न तु रजकाद्याः तत्र स्वल्पप्रायश्चित्तत्वात् । चाण्डालादयस्तु मध्यमा अङ्गिरसा दर्शिताः ।

चाण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधायोगवी चैव सप्तैतेऽन्त्यावसायिनः ॥ इति ।

सगोत्राग्रहणेनैव सुतस्त्रीप्राप्तौ पुनरुपादानमधिकदोषख्यापनार्थम्* ।

तथाच हारीतः ।

मातृदुहितृस्नुषागमनमित्यतिपातकानि ।
अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथञ्चन ॥ इति ।

विष्णुः ।

पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारसमम् । पितृमातृस्वसॄगमनञ्च श्रोत्रियर्त्विगुपाध्याय-

* अधिकदोषप्राप्त्यर्थमिति पाठान्तरम् ।

मित्रपत्न्यभिगमनञ्च। स्वसुः सख्युः स्वगोत्राया उत्तमवर्णाया अन्त्यजायाः कुमार्य्या रजस्वलायाः शरणागतायाः प्रव्रजिताया निक्षिप्तायाश्चेति।

अत्र यद्विशेषप्रायश्चित्तमभिहितं तत्र एतदेव इतरथा गुरुतल्पप्रायश्चित्तार्द्धं स्वाम्यविधानात्। गुरुतल्पसमेषु विष्णुना पितृमातृस्वस्रादिग्रहणमानुलोम्येन हीनजातीयपितृस्वस्रादिविषयम्। एवमन्यत्राप्यूहनीयम्।

## अथ गुरुतल्पातिदेशः।

नारदः।

मातुः पितृस्वसा श्वश्रूर्मातुलानी पितृस्वसा।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखिस्नुषा॥
दुहिताचार्य्यभार्य्या च सगोत्रा शरणागता।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते।
शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते॥

याज्ञवल्क्यः।

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्य्यतनयान्तथा॥
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि॥

अयमेव वधो दण्डार्थं प्रायश्चित्तार्थञ्च। गुरुतल्पसमेषु परिगणितानां गुरुतल्पातिदेशेषु परिगणनं प्रायश्चित्तविकल्पार्थम्। तच्च जातिशक्त्याद्यपेक्षया योज्यम्। योजना चेत्थं मिताक्षरायाम्। समेष्वेकरात्राद्दूर्द्धमकामतोऽभ्यासे षड्वार्षिकं अतिदिष्टेषु नववार्षिकम्। उभयत्र कामतोऽत्यन्ताभ्यासे मरणान्तिकमिति। एवमन्यत्राप्यूहनीयं गुरुपभुक्तासु साधारणस्त्रीषु गमने न गुरुतल्पदोषः।

तथाच व्याघ्रः।

जात्युक्तं पारदार्य्यञ्च कन्यादूषणमेव च।
साधारणस्त्रियो नास्ति गुरुतल्पत्वमेव च॥ इति।

अथ प्रसङ्गाच्चाण्डाल्यादिगमने विशेषोऽभिधीयते। तत्र चाण्डाल्यादिषु ज्ञानतः सकृद्गमने संवत्सरं कृच्छ्रचरणमज्ञानतो गमने चान्द्रायणद्वयम्।

तथाच यमः।

चाण्डालपुक्कशानान्तु भुक्त्वा गत्वा च योषिताम्।
कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयम्॥ इति।

भगिन्यादिष्वप्येवं विज्ञेयं, स्वयोनिष्वन्त्यजासु चेत्येकवाक्ये पाठात्। अत्रैव कामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तावाङ्गिरसोक्तं द्रष्टव्यम्।

पतितान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
मासोपवासं कुर्व्वीत चान्द्रायणमथापि वा॥ इति।

रेतःसेकादर्व्वाक् स्नुषादिगमनेऽप्येवमेव।

तथाच बृहद्यमः ।

चाण्डालीं पुक्कसीं म्लेच्छीं स्नुषाञ्च भगिनीं सखीम् ।
मातापित्रोः स्वसारञ्च निःक्षिप्तां शरणागताम् ॥
मातुलानीं प्रव्रजितां स्वगोत्रां नृपयोषिताम् ।
शिष्यभार्य्यां गुरोर्भार्य्यां गत्वा चान्द्रायणं चरेत् ॥ इति

चाण्डाल्यादिष्वकामतः प्रवृत्तस्य रेतःसेकात्पूर्व्वं निवृत्तौ संवर्त्तोक्तम् ।

भगिनीं मातुराप्ताञ्च स्वसारं वान्यमातृजाम् ।
एता गच्छन् स्त्रियो मोहात्तप्तकृच्छ्रं समाचरेत् ॥ इति ।

एकरात्रं चाण्डाल्यादिषु गमनाभ्यासे मनूक्तं त्रैवार्षिकम् ।

यत्करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
तद्भैक्ष्यभुग्जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ इति ।

अत्र वृषली चाण्डाली ।

तथाच स्मृत्यन्तरे ।

चाण्डाली रजकी वेश्या रजस्था या च कन्यका ।
सगोत्रेण च ऊढ़ा या वृषल्यः पञ्च कीर्त्तिताः ॥ इति ।

अज्ञानतश्चाण्डालीगमनाभ्यासे पतितप्रायश्चित्तं द्वादशवार्षिकं ज्ञानतोऽभ्यासे मरणान्तिकं कल्प्यम् । कल्पनाया मूलम् मनुवचनम् ।

चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥ इति ।

अज्ञानतः पतति एनस्वी भवति । अतस्तत्राभ्यासे द्वादश-

वार्षिकम् । ज्ञानात् साम्यं तज्जातीयत्वं प्राप्नोति अतस्तत्रा-भ्यासे मरणान्तिकमेवमुक्तं । एतच्च मरणान्तिकं बहुकाला-भ्यासविषयम् ।

## अथ महापातकसंसर्गिप्रायश्चित्तम् ।

मनुः ।

संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनात् यौनान्न तु यानासनाशनात् ॥

अयमर्थः । पतितेन सह यानशयनासनानि कुर्व्वन् संवत्सरेण पतति पतितो भवति याजनादिभिस्तु न च संवत्सरेण अपि तु सद्य एवेति ।

तथाच विष्णुः ।

आसंवत्सरात्पतितेन सहाचरन्पतति सह यानासनाभ्यां योनिस्रौतसम्बन्धात् सद्य एवेति ।

योनिः प्रजननं तद्युक्तेन पतितेन पतितया वा मैथुनयोग-इत्यर्थः । स्रौतसम्बन्धो याजनम् ।

बृहद्विष्णुः ।

संवत्सरेण पतति पतितेन सहाचरन् ।
एकयानभोजनासनशयनैर्यौनस्रौतमुख्यैस्तु* सम्बन्धैः सद्य एवेति ।

---

* स्रौवमुख्यैस्त्विति पाठान्तरम् ।

एकभोजनं एकपङ्क्तिभोजनम् । न त्वेकत्र* भोजनम् । तत्र देवलेन सद्यःपातित्यस्याभिहितत्वात् ।

याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् ।
कृत्वा सद्यः पतत्येव पतितेन न संशयः ॥ इति ।

मुख्यैर्मुखभवं मुख्यं अध्यापनम् । ननु यौनश्रौतमुख्यैरिति द्वन्द्वनिर्द्देशात् मिलितानामेव सद्यःपतनहेतुत्वमस्तु मैवं यः पतितैः सह यौनमौञ्जश्रौतानां सम्बन्धानामन्यतमसम्बन्धं कुर्य्यात् तस्याप्येतदेव प्रायश्चित्तमिति सुमन्तुना प्रत्येकाकरणैर्द्वादशवार्षिकाभिधानात् मौञ्जसम्बन्धोऽध्ययनमेकयानादीनाञ्चतुर्णां समुदितानामेव पतनहेतुत्वम् एकयानभोजनासनशयनैरितीतरेतरयोगनिर्द्देशात् ।

याज्ञवल्क्यः ।

एभिस्तु सम्पिवेत्† यो वै वत्सरं सोऽपि तत्समः ।
कन्यां समुद्वहेदेषां सोपवासामकिञ्चनाम् ॥

कन्यां पतितावस्थायामुत्पन्नाम् ।

वृद्धहारीतः ।

पतितस्य तु कुमारीं विवस्त्रामहोरात्रोपोषितां प्रातः शुद्धे‡नाहतेन वाससाच्छादितां नाहमेतेषां न ममैत इति त्रिस्त्रिरुक्तै§रभिदधानां तीर्थे स्वगृहे चोद्वहेदिति।

---

* त्वेकमन्नमिति पाठान्तरम् । † संविशेदिति पाठान्तरम् । ‡ शुक्लेनेति पाठान्तरम् । § उच्चैरिति पाठान्तरम् ।

वशिष्ठः।

पतितेनोत्पन्नः पतितो भवति अन्यत्र स्त्रियाः सा हि परगामिनी तामरिक्थामुपेयादिति।

अरिक्थां भूषणादिशून्यां संवत्सरेण पतितो भवतीति यद्यप्यतिदेशतः प्रायश्चित्तं प्राप्तं तथापि पूर्णमेव द्वादशवार्षिकं प्रायश्चित्तं कर्त्तव्यं महापातकित्वात्। अनेनैवाभिप्रायेण

मनुः।

यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतङ्कुर्य्यात्तत्संसर्गविशुद्धये॥

इत्यत्रापि जातिशक्त्याद्यपेक्षया तत्तत्संसर्गे तत्तत्प्रायश्चित्तानि गुरूणि लघूनि च योज्यानि। अकामतः संवत्सरान्यूनसंसर्गे

पराशरः।

संसर्गमाचरन्विप्रः पतितादिष्वकामतः।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा॥
मासार्द्धं मासमेकं वा मासत्रयमथापि वा।
अब्दार्द्धमब्दमेकं वा भवेदूर्द्धन्तु तत्समः॥
त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्।
चरेत् सान्तपनङ्कृच्छ्रं तृतीये पक्ष एव तु॥
चतुर्थे दशरात्रं स्यात्पराकं पञ्चमे ततः।
षष्ठे चान्द्रायणं कुर्य्यात्सप्तमे चैन्दवद्वयम्।
अष्टमे च तथा पक्षे षण्मासान्कृच्छ्रमाचरेत्॥ इति।

कामतः पतितसंसर्गे तु विशेषः।

पञ्चाहे तु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकम् ।
पराकस्त्वर्द्धमासे स्यान्मासञ्चान्द्रायणञ्चरेत्* ॥ इति ।
मासत्रये तु कुर्व्वीत कृच्छ्रं चान्द्रायणोत्तरम् ।
षाण्मासिके तु संसर्गे कृच्छ्रं कृच्छ्रार्द्धमाचरेत्† ॥
संसर्गे त्वाब्दिके कुर्य्यादब्दचान्द्रायणन्नरः । इति ।

संसर्गैस्त्वाब्दिक इति किञ्चिन्न्यूने आब्दिक इत्यर्थः । सम्पूर्णाब्दिकसंसर्गे मन्वादिभिर्द्दादशवार्षिकस्योक्तत्वात् ।

बृहस्पतिः ।

षाण्मासिके तु संसर्गे याजनाध्यापनादिना ।
एकत्रासनशय्यादिप्रायश्चित्तार्द्धमाचरेत् ॥ इति ।

अत्र याजनाध्यापनयोनैकपात्रभोजनैः षण्मासससंसर्गे प्रायश्चित्तार्द्धमुक्तम् । अस्यायं विषयः याजनं यत्राकामतोऽत्यन्तापदि पञ्चमहायज्ञादिप्रयोजनं। अध्यापनं पूर्व्ववदेव वेदाङ्गाध्यापनं योनिसम्बन्धो दुहितृभगिन्यादिव्यतिरिक्त एवं कल्पनायां मूलप्रकृष्टयाजनादिभिः सद्यःपातित्यकथनमेव । यत्र त्वनेकनिमित्तानुप्रवेशस्तत्र प्रतिनिमित्तं नैमित्तिकमावर्त्तत इति यावन्ति निमित्तानि तावन्ति नैमित्तिकानि भवन्ति ।

तद्यथा ।

पतितां गुरुभार्य्यां रजस्वलामभ्यक्तामभ्यक्तो कल्पां शरणागतां सगोत्राममावास्यायां दिवा जनसमक्षं

* स्मृतमिति पाठान्तरम् । † त्वब्दार्द्धमाचरेदिति पाठान्तरम् ।

आङ्गकृदुच्छिष्टः सङ्गत् संगच्छतीत्यादि यत्र यद्विना यन्निवर्त्तते तत्र प्रधानप्रायश्चित्तेनैव नान्तरीयकसिद्धानामपि निष्कृतिर्भवति । यथा ब्राह्मणहनने क्रियमाणे हननेच्छातः प्रवृत्तिः शस्त्राद्युद्यमनमित्यादीनि अत्र यद्यपि ब्रह्महादिषु मरणान्तिकमुपदिष्टं तथापि तत्संसर्गेषु तत्र स तस्यैव व्रतं कुर्य्यादिति ।

व्रतस्यैवातिदेशात् । मरणे तु व्रतशब्दं न वृद्धाः प्रयुञ्जते । एवमुपपातकादिसंसर्गेऽपि तत्तत्प्रायश्चित्तान्यतिदेष्टव्यानि । अत्रापि जातिशक्त्याद्यपेक्षया योज्यानि ।

इति महापातकप्रायश्चित्तानि ।

## अथोपपातकप्रायश्चित्तानि ।

अतिदिष्टान्यतिपातकानि इति पर्य्यायेण योज्यानि सामान्यानुपपातकानीति पर्य्यायः एतानि महापातकोपपातकमध्यस्थितानि । अतएव महापातकन्यूनानि उपपातकादधिकानि तस्मान्महापातकप्रायश्चित्तप्रकरण एव तत्समतदतिदिष्टप्रायश्चित्तान्यभिधायाधुनोपपातकप्रायश्चित्तं वक्तुं तत्स्वरूपमभिधीयते ।

तत्र याज्ञवल्क्यः ।

गोवधो व्रात्यता स्तेयमृणानाञ्चानपक्रिया ।
अनाहिताग्नितापण्यविक्रयः परिवेदनम् ॥

भृताद्ध्ययनादानं भृतकाध्यापनं तथा।
पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया॥
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः॥
धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम्।
पितृमातृसुतत्यागस्तडागारामविक्रयः॥
कन्यासंदूषणञ्चैव परिविन्दकयाजनम्।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्॥
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवनम्।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च॥
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम्।
हिंस्रयन्त्रविधानञ्च व्यसनान्यात्मविक्रयः॥
शूद्रप्रेष्यं* हीनसख्यं हीनवर्ण†निषेवनम्।
तथैवानाश्रमे वासः परान्नपरिपुष्टता॥
असच्छास्त्राभिगमनमाकरेऽप्यधिकारिता।
भार्य्याया विक्रयश्चैषामिकैकमुपपातकम्॥ इति

व्रात्यता सावित्रीपतितत्वं स्तेयं ब्राह्मणसुवर्णव्यतिरिक्तस्य चौर्य्यं सुवर्णस्तेयसमव्यतिरिक्तस्य च ऋणानाञ्चानपक्रिया। यज्ञप्रजोत्पादनस्वाध्यायाध्ययनानामकरणं सत्यधिकारे तथो-

---

* शूद्रप्रेष्यमित्यारभ्य परान्नपरिपुष्टता इत्यन्तं मूलयाज्ञवल्क्यसंहितायां नास्ति।

† हीनयोनीति पाठान्तरम्।

त्तमर्णाद्गृहीतस्य* सुवर्णादेरप्रदानमपि अधिकारि सत्यनाहिताग्नित्वं । अपण्यानां प्रतिषिद्धविक्रयाणां लवणादीनां विक्रयः । दाराग्निपरिग्रहयोग्यं ज्येष्ठमतिक्रम्य कनीयसो भ्रातुस्तत्स्वीकारः परिवेदनं । पणपूर्व्वाध्यापको भृतोभृतकश्च ततः स्वाध्यायनादानं शिष्यस्य तादृशाध्यापनं गुरोः गुरुतल्पतत्समव्यतिरिक्तं पारदार्य्यं ज्येष्ठस्य विवाहात्पूर्व्वमेव कनिष्ठे कृतविवाहे ज्येष्ठो विवाहरहितः परिवित्तिस्तस्य भावः पारिवित्त्यं धान्यवृद्ध्युपजीवनं निषिद्धवृद्ध्युपजीवनञ्च वार्द्धुष्यं लवणोत्पादकं लवणक्रिया एतच्च वानप्रस्थव्यतिरिक्तस्य तस्य लवणञ्च स्वयंकृतमिति मनुनोपदेशात् । अग्निहोत्रिण्यात्रेयीसवनस्य स्त्रीव्यतिरिक्तस्त्रीवधः । तथा सवनस्थव्यतिरिक्तक्षत्रियवैश्ययोः शूद्रस्य च प्रत्येकं वधः । अनिषिद्धविक्रयस्यापि पण्यस्य निन्दितार्थोपजीवनम् । अराजस्यापितार्थोपजीवनं । नास्ति दैवतन्नास्ति परलोक इति बुद्धिमान्नास्तिकः । ब्रह्मचारिणः स्त्रीसंसर्गव्रतलोपः ब्रह्महत्यादिप्रायश्चित्तस्य परित्यागः । सुतानामपत्यानां विक्रयः धान्यं व्रीह्यादि कुप्यं त्रपुसीसादि पशुर्गवादिः । गोवधो व्रात्यता स्तेयमित्यनेनैव धान्यादिस्तेयसिद्धौ पुनर्ग्रहणमधिकदोषत्वप्रख्यापनार्थम् । एवमन्यदपि पुनर्ग्रहणं व्याख्येयं । अयाज्यानां शूद्रपतितादीनां याजनं पित्रादीनामपतितानां त्यागो गृहान्निष्कासनमरक्षणं वा तडागारामविक्रयइति

* उत्तमवर्णादगृहीतस्य इति क्वचित् पाठः ।

धर्म्मविक्रयप्रदर्शनार्थम्। अङ्गुल्यादिना योनिविदारणं तद्दोषख्यापनं वा कन्यादूषणम्। कन्यासम्भोगे तु गुरुतल्पसमत्वं। कौटिल्यं गुरोरन्यत्र गुरौ तु कौटिल्यं सुरापानसमं। पुनर्व्रतलोपोपादानं शास्त्राविरुद्धशिष्टाद्दतविष्णुदर्शनात् पूर्व्वं ताम्बूलं न भक्षयामीति व्रतलोपस्यापि उपपातकप्राप्त्यर्थं। क्रियारम्भः पाकक्रियारम्भः। मद्यपाया अपि स्वकीयस्त्रिया उपभोगः स्वाध्यायाग्निसुतत्यागः* सच्छास्त्राभ्यासनिष्ठत्वेन कुटुम्बपोषणव्यग्रतया वा परित्यागः। अग्नीनां श्रौतानां स्मार्त्तानां सुतस्य जातकर्म्मादिसंस्काराकरणं। पाकादिप्रयोजनार्थमशुष्कद्रुमच्छेदः। स्त्रीहिंसौषधजीवनं भार्य्याविक्रयालङ्करणेन प्राणिवधेन वशीकरणाद्यौषधेन च जीवनं। तिलेक्षुप्रभृति यन्त्रं हिंस्रयन्त्रं मृगयादीन्यष्टादश व्यसनानि हीनसख्यं जातितो गुणतश्च हीनमैत्री अनूढसवर्णदारस्य केवलहीनवर्णोपयमः। तदेकभार्य्यत्वञ्च हीनयोनिनिषेवनं बाहुल्येन परान्नोपजीवनं परान्नपरिपुष्टता। असच्छास्त्रस्य वेदविरोधिनोऽभ्यासः एतेन† प्रत्येकमुपपातकानि।

## अथ गोवधप्रायश्चित्तमाह

याज्ञवल्क्यः।

पञ्चगव्यं पिबन् गोघ्नो मासमासीत संयतः।

---

* बहुषु पुस्तकेषु सच्छास्त्राभ्यासनिष्ठत्वेन इति पाठो दृश्यते अतोरक्षितः परन्तु उत्तरत्र वाकारनिर्द्देशात् असच्छास्त्राभ्यासनिष्ठत्वेन इत्येव पाठो युक्तः। † वेदविरुद्धस्येति पाठान्तरम्।

गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ॥
कृच्छ्रञ्चैवातिकृच्छ्रञ्च चरेद्वापि समाहितः ।
दद्यात्त्रिरात्रं चोपोष्य वृषभैका दशास्तु गाः ॥

अत्र व्रतचतुष्टयं विहितम् । आहारान्तरनिरपेक्षेण पञ्चगव्यं पिबन् रात्रौ गोशालायां शयानः प्रातस्ताः एव वनं गच्छन्तीरनुगच्छन्ननुतिष्ठन्तीरनुतिष्ठन् अन्यैरपि नियमैर्युक्तो मासमासीत ततोमासान्ते ब्राह्मणाय गां दत्त्वा शुद्ध्यतीत्येकं व्रतं। पञ्चगव्याहारव्यतिरेकेण पूर्व्वोक्तधर्म्मयुक्तो मासं प्राजापत्यं कृच्छ्रं चरेदिति द्वितीयं । तथैव प्राजापत्यस्थानेऽतिकृच्छ्रं मासं चरेदिति तृतीयं । त्रिरात्रोपवासं कृत्वा एकवृषभं दश गाश्च दद्यादिति चतुर्थं । अत्रेयं व्यवस्था अज्ञानतो जातिमात्रब्राह्मणसम्बन्धिमात्रगोवधे दद्यात्त्रिरात्रञ्चोपोष्य वृषभैकादशास्तु गा इत्येतत् । अज्ञानतः क्षत्रियसम्बन्धिगोमात्रव्यापादने

पञ्चगव्यं पिबन् गोघ्नो मासमासीत संयतः ।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ॥

इत्येतत् षड़ुपवासात्मकप्राजापत्यस्थाने । प्राजापत्यं प्रत्याम्नाया एका गौः एवञ्च मासं पञ्चगव्याशने पञ्चधेनवोभवन्ति । तदन्ते दीयमाना एका गौरिति षड़्धेनवस्ततश्च वृषभैकादश गोदानसहितत्रिरात्रोपवासापेक्षया मासं पञ्चगव्याशनं न्यूनमिति क्षत्रियगोहननविषयत्वं युक्तम् । एवमुत्तरत्रापि ज्ञेयं । अस्मिन्नेव विषये गां हत्वा तच्चर्म्मणा वृतो मासं गोष्ठेशयस्त्रिषवणस्नायी नित्यं पञ्चगव्याहार इति काश्यपोक्तं द्रष्टव्यं । यानि च विष्णु-

नोक्तानि त्रीणि व्रतानि

गोघ्नस्य पञ्चगव्येन मासमेकं पलत्रयम् ।

प्रत्यहं स्यात् पराको वा चान्द्रायणमथापि वा ॥

इत्येतान्यप्यस्मिन्नेव विषये योज्यानि । एवमन्यान्यपि मास-साध्यान्यत्रैव योज्यानि । अमत्या वैश्यसम्बन्धिगोमात्रव्यापादने मासमतिकृच्छ्रं कुर्य्यात् । यत्तु शङ्खेनोक्तं

गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत् सशिख-वपनं कृत्वा गोचर्म्मणा प्रावृतो गामनुगच्छेत् गोष्ठेशयो गाश्च दद्यादिति ।

एतदप्यस्मिन्नेव विषये अस्मिन् विषये पञ्चविंशतिरात्रं पञ्च-गव्याहारसमर्थः काश्यपोक्तं कुर्य्यात् ।

षष्ठे काले पयोभक्षो गच्छन्तीष्वनुगच्छेत् तासु सुखोप-विष्टासु नोपविशेन्नातिप्लवं गच्छेन्नातिविषमे नाव-तारयेन्नाल्पोदके प्लावयेदन्ते ब्राह्मणान् भोजयित्वा तिलधेनुं दद्यादिति ।

अत्र मासमित्यनुवर्त्तते षष्ठे काले तृतीयवासरे रात्रौ* । अत्रा-प्यशक्तः पैठीनस्युक्तं कुर्य्यात्

गोघ्नो मासं यवागूं प्रसृततण्डुलशृतं भुञ्जानो गोभ्यः प्रियं कुर्व्वन् शुद्ध्यतीति ।

---

* मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां । अहनि च तमस्विन्यां सार्द्धप्रहरयामान्त इति कात्यायनेन प्रत्यहं भोजनद्वयविधानात् षष्ठकालः उपवासद्वयानन्तरं रात्रौ भवति इत्याशयः ।

शूद्रस्वामिकगोव्यापादने मासं प्राजापत्यं कुर्य्यात् । यत्तु हद्ध-स्मृतिनोक्तं द्वादशरात्रं पञ्चगव्याहार इति

यच्च संवर्त्तोक्तं

शक्तुयावकभैक्षाशी पयोदधिघृतं सकृत् ।

एतानि क्रमशोऽश्नीयात् मासार्द्धन्तु समाहितः ।

ब्राह्मणान् भोजयित्वा तु गां दद्यादात्मशुद्धये ॥

इत्यादीन्यन्यान्यप्येतत्समानि शूद्रस्वामिकगोहननएव योज्या-नि । अथवा ब्राह्मणादिवर्णत्रयसम्बन्धिमृतकल्पगोहननविषये वा योज्यानि । एतच्च गोस्वामिनो द्रव्यादिना परितुष्टिं कृत्वा कार्य्यं । यदाह

मनुः ।

हिंस्याद्द्रव्यस्य द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा ।

स तस्योत्पादयेत्तुष्टिं राज्ञे दद्यात्तु तत्समम् ॥ इति ।

राज्ञे तत्समद्रव्यदानं दण्डः । यदा तु जातिमात्रेण ब्राह्मण-स्वामिकगोमात्रङ्कामतः प्रमापयति तदा कन्दमूलादिना शरीरयात्रां कुर्व्वन् वृषभैकादशगोदानसहितं त्रैमासिकं कुर्य्यात् । कामतस्त्वाष्टशक्षत्रियस्वामिकगोव्यापादने मासद्वयं चतुर्थकाले हविष्यभोजनं कुर्य्यात् । कामतस्त्वाष्टशवैश्यगोह-नने याज्ञवल्क्योक्तमासातिकृच्छ्रमेव द्विगुणं । कामतः शूद्र-गोव्यापादने मासं यवागूपानं कुर्य्यात् ।

तथाच मनुः ।

उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत् ।

अत्र यवशब्दो यवाग्वादिविकारपरः। एतच्छूद्रसम्बन्धि-गोहननविषयम्।

तथाच।

कृतवापो वसेद्गोष्ठे चर्म्मणा तेन संवृतः।
चतुर्थकालमश्नीयादक्षारलवणं मितं॥
गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः।
दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्द्धं रजः पिबेत्॥
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत्।
तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्॥
आसीनासु तथासीनो नियतो वीतमत्सरः।
आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः॥
पतितां पङ्कलग्नां वा सर्व्वप्राणैर्विमोचयेत्।
उष्णे वर्षति शीते वा मारुते वाति वा भृशम्॥
न कुर्व्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः।
आत्मनो यदिवान्येषां गृहे क्षेत्रेऽथवा खले॥
भक्षयन्तीं न कथयेत् पिबन्तञ्चैव वत्सकम्।

एतच्च कामतः क्षत्रियसम्बन्धिगोमात्रव्यापादने। वीरासनं भित्तिशय्यादावनिविष्टस्य यदुपविष्टस्यावस्थानं तदुच्यते।

तथा।

अनेन विधिना यस्तु गोघ्नो गामनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति॥
वृषभैकादशा गाश्च दद्यात् सुचरितव्रतः।

अविद्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेत् ॥

एतच्च ब्राह्मणसम्बन्धिगोमात्रव्यापादने । आहारान्तरानभिधानात् कन्दमूलादिना वर्त्तनमर्थात् सिद्धमथवा अनेन विधिनेत्यनेन पूर्व्वोक्तद्वैमासिकेतिकर्त्तव्यतातिदेशात् चतुर्थकालमश्नीयादक्षारलवणं इत्युक्तरीत्या शरीरयात्रावर्त्तनञ्चमहर्षभैकादशगोदानासमर्थः सर्व्वस्वदानं कुर्य्यात् । यदा तु ब्राह्मणसम्बन्धिनीं गां पुष्टितारुण्यादिगुणोपेतामकामतो व्यापादयति तदा अङ्गिरोक्तप्रकारेण त्रैमासिकं । पूर्व्वोक्तरीत्या क्षत्रियसम्बन्धिगोव्यापादने तेनैव साक्षादुक्तं द्वैमासिकञ्च कर्त्तव्यं । एवं वैश्यादिसम्बन्धिन्याहनने प्रायश्चित्ताधिक्यमूह्यम् ।

अङ्गिराः ।

उपपातकसंयुक्तो गोघ्नोमासं यवान् पिबेत् ।

अस्य च विषयः पूर्व्वोक्तपैठीनसिवाक्ये विशेषेण दर्शितः ।

तथा ।

अक्षारलवणान् भक्षान् षष्ठे काले मिताशनः ।
कृतवापो वसेद्गोष्ठे चर्म्मणा तेन संवृतः ॥
मासद्वयञ्च नियतो गोमूत्रस्नानसंयुतः ।
पादशौचक्रियाञ्चैव अद्भिः कुर्व्वीत केवलम् ॥
वृतवद्धारयेद्दण्डमजिनं मेखलां तथा ।
गाश्च वानुव्रजेद्युक्तोरजस्तासां पिबेत्तथा ॥
गोमतीञ्च जपेद्विद्यामोङ्कारं वेदमेव वा ।
वृषभैकादशागास्तु दद्यात् सुचरितव्रतः ।

अविद्यमाने तल्लिङ्गां तद्वर्णां वापि दापयेत् ॥ इति अविद्यमाने वृषभैकादशगोदानशक्त्यभावे तल्लिङ्गां प्रमापित-गोवय:सामर्थ्यादिचिह्निताम्। अस्मिन्वचने मासद्वयत्रयमित्य-भ्यूह्यं तच्च ब्राह्मणसम्बन्धितारुण्यादिगुणयुक्तगोव्यापादने गोम-तीविद्या यमेन दर्शिता।

गोमतीं कीर्त्तयिष्यामि सर्व्वपापप्रणाशिनीम्।
तान्तु मे गदतो विप्रा: शृणुध्वं सुसमाहिता: ॥
गाव: सुरभयो नित्यं गावो गुग्गुलगन्धिका:।
गाव: प्रतिष्ठा लोकानां* गाव: स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम्।
पावनं सर्व्वभूतानां रचन्ति† च वहन्ति च ॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि।
ऋषीणामग्निहोत्रेषु गावो होमे प्रयोजिता: ॥
सर्व्वेषामेव भूतानां‡ गाव: शरणमुत्तमम्।
गाव: परं पवित्रञ्च गावो मङ्गलमुत्तमम् ॥
गाव: स्वर्गस्य सोपानं गावो धन्या: सनातना:।
नमो गोभ्य: श्रीमतीभ्य: सौरभेयीभ्य एवच ॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनम:।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् ॥

---

* भूतानामिति पाठान्तरम्। † चरन्ति च हवींसि च इति ग्रन्थान्तरे पठितम्।
‡ पावनं सर्व्वभूतानामिति ग्रन्थान्तरे पठितम्।

एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति । इति ।

सवनस्थश्रोत्रियगोवधेऽज्ञानकृते

हारीत आह ।

गोघ्नस्तच्चर्म्मार्द्रवासाः परिधापयेदित्युपक्रम्य मानवीतिकर्त्तव्यतामभिधाय वृषभैकादश च गा दत्त्वा त्रयोदशे मासे पूतो भवतीति अस्मिन्नेव विषये गाश्चेद्द्यात् तस्याश्चर्म्मणा परिवेष्टितः षण्मासान् कृच्छ्रतप्तकृच्छ्रस्तिष्ठेत् वृषभवेहतौ दद्यादिति ।

वशिष्ठोक्तमपि योज्यं

तत्र यः पुङ्गवं हन्यात् स वृषभं दद्यात् यस्तु स्त्रीगवीं स वेहतमिति ।

स्मृतिमञ्जर्य्यां गर्भघातिनी गौर्वेहत्। पूर्व्वोक्तविषयएव कामकारे कात्यायनोक्तं त्रिवार्षिकं द्रष्टव्यम्।

गोघ्नस्तच्चर्म्मसम्वीतो वसेद्गोष्ठेऽथवा पुनः ।
गाश्चानुगच्छेत्सततं मौञ्जीवीरासनादिभिः ॥
वर्षशीतातपक्लेशवह्निपङ्कभयार्द्दिताम् ।
मोचयेत्सर्व्वयत्नेन पूतः स्याद्वत्सरैस्त्रिभिः ॥ इति ।

यत्तु यमेन मानवीतिकर्त्तव्यतासहितं मासद्वयव्रतं गोसहस्रदानमुक्तम्, यच्च गौतमेन त्रैवार्षिकं गोशतदानसहितमुक्तं, यत्तु कात्यायनोक्तं त्रैवार्षिकमिदं त्रितयमपि शिष्टात्यन्तदुर्गतब्राह्मणसम्बन्धिकर्म्माङ्गभूतबहुक्षीरकपिलात्वादिगुणोपेतबालवत्सदुर्भिक्षकुटुम्बाधारभूतसानुबन्धखड्गादि पीड़ातिशयप्रदप्रहार-

गोहनने हन्तुरतिदुःशीलस्य दानतपःसमुचितं प्रायश्चित्तमिति। स्मृतिमञ्जर्य्यां मिताक्षरायाञ्च एवमन्यान्यपि प्रायश्चित्तानि पूर्व्वोक्तानि जातिशक्तिगुणाद्यपेक्षया योज्यानि पूर्व्वोक्ताधिकप्रायश्चित्तविषयेषु पूर्व्वोक्तव्रतानि कृत्वा काष्ठादिसंताड़न* विशेषहननप्रयुक्त्या प्रायश्चित्तान्तराण्यपि कार्य्याणि। अनेनैवाभिप्रायेण

यमः।

काष्ठ†लोष्टाश्मभिर्गावः शस्त्रैर्वा निहता यदि।
प्रायश्चित्तं कथं तत्र शास्त्रे शास्त्रे विधीयते॥
काष्ठे सान्तपनं कुर्य्यात्प्राजापत्यञ्च लोष्टके।
तप्तकृच्छ्रन्तु पाषाणे शस्त्रे वाप्यतिकृच्छ्रकम्॥ इति।

तथा

अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम्।
हत्वा पूर्व्वविधानेन चरेदर्द्धव्रतं द्विजः॥
ब्राह्मणान् भोजयेत् शक्त्या दद्याद्धेमतिलांस्तथा। इति।

यस्मिन्नीरोगादिविषये यत्प्रायश्चित्तं विहितं तदर्द्धमित्यर्थः।

प्रचेताः।

एकवर्षे हते वत्से‡ कृच्छ्रपादो विधीयते।
अबुद्धिपूर्व्वे पुंसः स्याद्द्विपादस्तु द्विहायने॥
त्रिहायने त्रिपादः स्यात्प्राजापत्यमतः परम्। इति।

---

* साधनेति पाठान्तरम्। † काष्ठे काष्ठेन गोहनने एवं लोष्टादौ योज्यं। ‡ एकवर्षे गवि हत इति ग्रन्थान्तरे पठितम्।

गर्भग्रहणप्रभृतिपूर्णागर्भिणीगोवधे षट्त्रिंशन्मते विशेषः ।

पाद उत्पन्नमात्रे तु द्वौ पादौ दृढ़तां गते ।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥
अङ्गप्रत्यङ्गपूर्णे तु गर्भे चेतःसमन्विते ।
द्विगुणं गोव्रतं कुर्य्यादेषा गोघ्नस्य निष्कृतिः ॥

उत्पन्नमात्रे गर्भग्रहणमात्रे यत्र यत्कृच्छ्रमुद्दिष्टं तस्य चतुर्थांशः पादः यत्र यदुपदिष्टं तद्द्विगुणम् । एवमुत्तरत्रापि ।

आपस्तम्बः ।

एका चेद्बहुभिः काचिद्दैवाद्व्यापादिता क्वचित् ।
पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥ इति ।

एतच्चाकामकारे कामकारे तु द्विगुणं सम्पूर्णं प्रायश्चित्तं वा एवं द्वयोर्बहूनां व्यापादने अकामकारे पादद्वयं पादोनं क्रमेण कामकारे कृते तत्तद्द्विगुणं वेदितव्यम् । एकेनैव रोधादिना बहूनां गवां व्यापादने

सम्वर्त्तः ।

व्यापन्नानां बहूनान्तु गवाञ्च रोधनेऽपि वा ।
भिषङ्मिथ्योपचारे च द्विगुणं गोव्रतं चरेत् ॥

अतएव वचनाद्बहुव्यापादनेऽपि न प्रतिनिमित्तं नैमित्तिकावृत्तिः । किन्तु द्विगुणमेव भिषजा एकस्या अपि मिथ्योपचारव्यापादने द्विगुणं । भिषग्व्यतिरिक्तस्य तु

व्यासः ।

औषधं लवणञ्चैव पुण्यार्थमपि भोजनम् ।

अतिरिक्तं न दातव्यं कालेष्वल्पन्तु दापयेत् ॥
अतिरिक्तैर्विपत्तिश्चेत् कृच्छ्रपादो विधीयते ।

आपस्तम्बः ।

पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत्सर्व्वं निपातने ॥

इति पादव्रतादिकमयुक्तविषयं निमित्तकर्त्तृविषयञ्च । तथा ।

अतिदोहातिदाहाभ्यां नासिकाच्छेदने तथा ।
नदीपर्व्वतसंरोधे मृते पादोनमाचरेत् ॥ इति ।

पराशरः ।

अन्यनाङ्कनलक्ष्माभ्यां वाहने मोचनेऽपि वा ।
सायं सङ्गोपनार्थञ्च न दुष्येद्रोधबन्धनम् ॥

इति स्थिरचिह्नकरणमङ्कनन्तद्विपरीतं लक्ष्म ।

व्यासः ।

न नारिकेलैर्न च तालशाले-
र्न चापि मौञ्जैर्न च वद्धशृङ्खलैः ।
एतैस्तु गावो न च बन्धनीया
बद्धा तु तिष्ठेत्परशुं गृहीत्वा ॥

कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्ज्जिते ।
घण्टाभरणदोषेण विपत्तिर्यत्र गोर्भवेत् ॥
कृच्छ्रार्द्धन्तु भवेत्तत्र भूषणार्थन्तु तत्स्मृतम् ।
अतिदोहातिदमनं सङ्घाते चैव योजने ॥

बद्धा शृङ्खलपाशैश्च मृते पादोनमाचरेत् ।
जलौघपल्वले मग्ना मेघविद्युद्धतापि वा ॥
श्वभ्रे वा पतिताकस्माच्छ्वापदेनापि भक्षिता ।
प्राजापत्यं चरेत्कृच्छ्रं गोस्वामी व्रतमुत्तमम् ॥

यदा गोस्वामिनोपरोधेन मृता तदा गोस्वामिनो यदा गोपालदोषेण तदा तस्य ।

शीतवाताहता तु* स्यादुद्बन्धनमृतापि वा ।
शून्यागारे† उपेक्षायां प्राजापत्यं विनिर्दिशेत् ॥ इति ।

कार्य्यान्तरानुसन्धानवैयग्र्याभावे सत्युपेक्षायामेतत् प्रायश्चित्तं कार्य्यान्तरव्यग्रतया लघ्वं ।

तथाच विष्णुः ।

श्वभ्रप्रपातसर्पाद्यैर्मृते कृच्छ्रार्द्धमाचरेत् । इति ।

क्वचिद्दोषाभावोऽपि प्रतिपादितः संवर्त्तेन ।

यन्त्रणे गोचिकित्सार्थे मूढगर्भविमोचने ।
यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यते‡ ॥ इति ।

तथा ।

दाहच्छेदशिराच्छेदप्रयोगैरुपकुर्व्वताम्§ ।

---

* हता वा स्यादिति क्वचित् पाठः । † शून्यागाराद्युपेक्षायामिति ग्रन्थान्तरे पठितम् । ‡ यन्त्रणे गोचिकित्सायां मूढगर्भविमोचने । यत्ने कृते विपत्तिः स्यात्प्रायश्चित्तं न विद्यते ॥ इति ग्रन्थान्तरे पठितम् । § दाहच्छेदशिराभेदप्रयत्नैरुपकुर्व्वतामिति ग्रन्थान्तरे पठितम् । क्वचित्तु पुस्तके दाहच्छेदशिराभेद इति पाठः ।

द्विजानां गोहितार्थाय प्रायश्चित्तं न विद्यते ॥
औषधं स्नेहमाहारं ददङ्गोब्राह्मणे द्विजः ।
दीयमाने विपन्नश्चेन्न स पापेन लिप्यते ॥

पराशरः ।

ग्रामघाते शरौघेन वेश्मभङ्गान्निपातने ।
अतिवृष्टिहतानाञ्च प्रायश्चित्तं न विद्यते ॥
कूपखाते च धर्म्मार्थे गृहदाहे च ये मृताः ।
ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते ॥

एतच्च बन्धनरहितस्य पशोर्मरणे बद्धस्य मरणे त्वापस्तम्बोक्तं द्रष्टव्यं ।

कान्तारेष्वथ दुर्गेषु गृहदाहेऽवटेषु* च ।
यदि तत्र विपत्तिः स्यात्पाद एको विधीयते ॥ इति ।

अवटो गर्त्तः ।

यमः ।

निशि बन्धनिरुद्धेषु व्याघ्रसर्पहतेषु च ।
अग्निविद्युद्विपन्नेषु† प्रायश्चित्तं न विद्यते ॥
अस्थिभङ्गं गवां कृत्वा कटिभङ्गं तथैव च ।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते ॥

अस्थिभङ्गादिप्रयुक्तास्त्वस्त्येव ।

आपस्तम्बः ।

---

* खलेषु च क्वचित् पाठः । † अग्निविद्युन्निपातेषु इति क्वचित् पाठः ।

अस्थिभङ्गं गवां कृत्वा लाङ्गूलच्छेदनं तथा।

पाटने दन्तशृङ्गानां* मासार्द्धन्तु यवान् पिबेत्॥ इति।

तत्रापस्तम्बः प्रत्यङ्गिराः।

शृङ्गभङ्गेऽस्थिभङ्गे च चर्म्मनिर्मोचने तथा।

दशरात्रं पिबेद्यज्ञं सुस्थापि यदि गौर्भवेत्॥ इति।

वर्ज्जं क्षीरदधिघृतानि।

अङ्गिराः।

अङ्गुष्ठमात्रस्थौल्येन बाहुमात्रप्रमाणतः।

सार्द्रश्च सपलाशश्च दण्ड इत्यभिधीयते॥

तस्मादूर्द्धप्रहारेण यदि गां विनिपातयेत्।

द्विगुणन्तु चरेत्तत्र प्रायश्चित्तमिति स्थितिः॥ इति।

पूर्व्वोक्तानि उपपातकप्रायश्चित्तानि वक्ष्यमाणानि चोपपातकादिप्रायश्चित्तानि च क्षत्रियादीनां ब्राह्मणापेक्षया पादोनार्द्धादीनि भवन्ति।

अतएव वृद्धविष्णुः।

विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्।

वैश्येऽर्द्धं पाद एकस्तु शूद्रजातिषु शस्यते॥

यच्चाङ्गिरसोक्तम्।

पर्षद्वा ब्राह्मणानान्तु सा राज्ञां द्विगुणा मता। इति।

तन्महापातकविषयमिति प्रागभिहितम् अनुग्राहकादीनां

---

* कर्णशृङ्गानामिति ग्रन्थान्तरे पठितम्।

पादोनादि स्त्रीबालवृद्धादीनां त्वर्द्धं । अनुपनीतबालस्य पादः । अनयैव दिशा स्मृत्यन्तरोक्तगुरुलघुप्रायश्चित्तानि शक्त्याद्यपेक्षया अनुग्राहकप्रयोजकाद्यपेक्षया व्यवस्थापनीयानि । पुरुषं प्रति वपनविषये विशेषो दर्शितः ।

पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।
त्रिपादे तु शिखावर्जं सशिखन्तु निपातने ॥ इति ।

स्त्रियं प्रति पराशरः ।

वपनं नैव नारीणां नानुव्रज्याजपादिकम् ।
न गोष्ठे शयनं तासां न च दध्याद्गवाजिनम् ॥
सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।
सर्व्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम् ॥ इति ।

विधवायास्तु मुण्डनमस्त्येव इति प्राङ्निरूपितम् ।
अथ व्रात्याद्युपपातकेषु पूर्व्वोक्तातिदेशः क्वचन विशेषप्रायश्चित्तं चाभिधीयते । तत्र शृङ्गग्राहितया स्वल्पमधिकं वा प्रायश्चित्तं विहितं तत्र तदेव ग्राह्यम् ।

तत्र ऋष्यशृङ्गः ।

प्रायश्चित्तेन शुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वापि मासेन पराकेणाथवा पुनः ॥

याज्ञवल्क्यः ।

उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वाथ मासेन पराकेणाथवा पुनः ॥

एवं पूर्व्वोक्तगोवधप्रायश्चित्तेन चान्द्रायणेन मासं पयोव्रतेन

धराकेन च। अकामकारैः शक्त्यपेक्षया व्रतचतुष्टयं योजनीयम्। कामकारे तु मनूक्तं त्रैमासिकं। व्रात्यतायां

यमः।

सावित्री पतिता यस्य दश वर्षाणि पञ्च च।
सशिखं वपनं कृत्वा व्रतं कुर्य्यात्समाहितः॥
एकविंशतिरात्रञ्च पिबेत् प्रसृतियावकम्।
हविष्यं भोजयेच्चैव ब्राह्मणान् सप्त पञ्च च॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्।

मनुः।

येषां द्विजानां सावित्री नालोच्येत यथाविधि।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥

उपनेत्राद्यभावेन कालातिक्रमे यान्यस्य मानवयाज्ञवल्कीयानि शक्त्यपेक्षया द्रष्टव्यानि अनापद्यतिक्रमे गोवधप्रकरणप्रदर्शितं मनूक्तं त्रैमासिकमनापदि उक्तकालातिक्रमे वशिष्ठोक्तं द्रष्टव्यं पतितसावित्रीक उद्दालकव्रतञ्चरेत् द्वौ मासौ यावकेन वर्त्तये-न्मासं पयसा पञ्चमामिक्षयाष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधायावभृथं गच्छेद्व्रात्यस्तो-मेन वा यजेतेति। उद्दालकव्रतस्वरूपमेव दर्शयति। द्वौ मासा-वित्यादिना यत्र* पित्रादयोऽप्यनुपनीतास्तत्र विशेषमाह।

आपस्तम्बः।

---

* यस्य इति क्वचित् पुस्तके पठितम्।

अतिक्रान्ते तु सावित्र्याः काल ऋतुत्रैविद्यकं ब्रह्मचर्य्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्यः। अथ यस्य पितृपितामहौ इत्यनुपनीतौ स्यातां ते ब्रह्महसंस्तुतास्तेषां गमनं भोजनं विवाहमपि वर्ज्जयेत्तेषामिच्छतां प्रायश्चित्तं यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सर अथोपनयनं तत उदकोपस्पर्शनं प्रतिपुरुषं संख्याय संवत्सरान् यावन्तोऽनुपनीताः स्युः सप्तभिः पावमानीभिर्यदन्ति तत्र दूरक इत्येताभिर्यजुःपवित्रेण सामपवित्रेणाङ्गिरसेत्यपि वा व्याहृतिरेवासौ ध्याप्यः अथ यस्य प्रपितामहादीनां न स्मर्य्यते उपनयनं ते श्मशानसंस्तुतास्तेषामभ्यागमनं भोजनं विवाहमिति वर्ज्जयेत् तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्य्यञ्चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेधीपदर्शनं नाध्यापनं ततोनिवर्त्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे तत ऊर्द्ध्वं प्रकृतिवदिति।

अयमर्थः। विप्रादीनां षोड़शद्वाविंशतिचतुर्विंशतिवर्षात्मके सावित्र्युपनयनस्य काले अतिक्रान्ते ऋतुं मासद्वयं यावत् त्रैविद्यकं ब्रह्मचर्य्यं वेदत्रयसम्बन्धि भैक्षाशनगुरुशुश्रूषणादिकं चरेत्। वेदत्रयार्थमृतुत्रयं ब्रह्मचर्य्यं चरेदित्यर्थः। अथ ऋतुत्रयं ब्रह्मचर्य्यानन्तरमुपनयनं कार्य्यं तत्र उपनयनानन्तरं संवत्सरं यावदुदकोपस्पर्शनं प्रत्यहं प्रायश्चित्तरूपं स्नानं कुर्य्यात् अथाध्यापनीयः। एतदुद्दालकव्रताशक्तस्य यस्य व्रात्यस्य पितृ-

पितामहावप्युपनयनरहितौ स्यातां ते त्रयोऽपि ब्रह्मह-संस्तुताः ब्रह्मशब्दवाच्याः तेषां गमनं तान् प्रति संस्कार्य्यार्थिं गमनं तत्सम्बन्धि भोजनादि वर्ज्जयेत् । तेषां शुद्धिमिच्छता-मिदं वक्ष्यमाणं प्रायश्चित्तं । ऋतुं ऋतोः स्थाने संवत्सरः ततश्च प्रतिपुरुषं वत्सरत्रितयं ब्रह्मचर्य्यं कार्य्यम् । अथोपनयनं ततो यावन्तोऽनुपनीताः पुरुषास्तत्संख्यया यदि द्वावनुपनीतौ तर्हि द्वौ वत्सरौ यदि त्रयस्तदा त्रीणि प्रत्यहं स्नानं कुर्य्यात् केचन संवत्सरमुदकोपस्पर्शनमिति व्याचक्षते । तत्र मन्त्राः । यदस्ति यच्च दूरके भयं विन्दन्तसामिहोद्यताभिः सप्तभिः पावमानीभिर्ऋग्भिर्मार्ज्जनमघमर्षणञ्च यथाशक्ति कुर्य्यात् येन देवाः पवित्रेण इति यज्ञेऽर्व्वाचामिति पुरुषानामुपनयनाभावः ते सर्व्वे श्मशानसादृश्या अशुचय इत्यर्थः । ते आगते समुत्थानं भोजनादि च यद्यपि न कुर्य्यात् तेषां स्वयमेवं शुद्धिमिच्छतां प्रायश्चित्तं द्वादशवर्षाणीत्यादि स्पष्टार्थं । उदकोपस्पर्शनमपि पुरुषसंख्यावत्सरानभिव्याप्यसंवत्सरं सोदकसंस्पर्शनं तत्र मन्त्राः पूर्व्वोक्ता एव ततोऽध्यापनं नास्ति किन्तु गृहस्थाश्रमस्वी-कार उपदिष्टगार्हस्थ्यात्पुरुषात् सन्ततिर्वर्त्तते तस्मादुत्पन्न-स्योपनयनसंस्काराप्रथमातिक्रमे यथा अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्य्यमिति तत्तद्भवति तत ऊर्द्धं प्रकृतिवदुपपन्नस्यातिक्रान्ते सावित्रीकालोपनयनवदिति ।

अथ स्तेये धान्यादिद्रव्यविशेषापहारे सामान्यप्रायश्चित्ता-पवादकत्वेन प्रायश्चित्तान्तरमाह ।

मनुः ।

धान्यान्नधनचौर्य्याणि* कृत्वा कामाद्द्विजोत्तमः ।
स्वजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ॥

धनं सुवर्णादन्यत् सारद्रव्यं द्विजोत्तमो विप्रस्तस्य स्वजातिर्विप्र एव, एतच्च ब्राह्मणपरिगृहीतधान्याद्यपहर्त्तुर्ब्राह्मणस्यैव। क्षत्रियादीनां स्वस्वजातीयसम्बन्धिधान्याद्यपहरणे यथोक्तक्रमेण पादोनमर्द्धं पादश्चेति कल्प्यं ब्राह्मणेन क्षत्रियादिपरिगृहीतधान्याद्यपहारे षाण्मासिकं मनूक्तत्रैमासिकगोवधव्रतं चान्द्रायणञ्च कल्पनीयं क्षत्रियेण वैश्यादिधान्यापहारे षाण्मासिकं त्रैमासिकञ्च वैश्येन शूद्रपरिगृहीतापहारे त्रैमासिकमिति कल्प्यं इदञ्च कामकृते अकामकृते तु शक्त्याद्यपेक्षयार्द्धं त्रैमासिकगोवधव्रतं वा परिकल्पनीयं। धान्यं दशभ्यः कुम्भेभ्यो हरतोऽप्यधिकं वध इति दशकुम्भाधिकहरणे याज्ञवल्क्येन वधदर्शनाद्दशकुम्भपरिमितधान्यहरणे एतत् प्रायश्चित्तं वेदितव्यं। धान्यसाहचर्य्यादन्नस्य तण्डुलादेरप्येवमेव दशकुम्भपरिमितधान्यमूल्यलभ्ये रजतादिधनेऽप्येवमेव। कुम्भश्च पञ्चसहस्रपलपरिमाणः। अल्पसाराणां त्रपुसीसादीनां हरणे

मनुः ।

द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मनः ।
चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्या स्वशुद्धये† ॥ इति ।

---

* चौर्य्यादि इति क्वचित् पठितम्। क्वचित् पुस्तके मूलमनुसंहितायाञ्च।

† तन्निर्यात्यात्मशुद्धये इति पठितम्।

एतच्च पञ्चविंशतिपणमूल्यलभ्यत्रपुसीसाद्यपहारे ।

तथा ।

भोज्यभोज्यापहरणे यानशय्यासनस्य च ।
पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥

एककालभोजनपर्य्याप्तभक्ष्यभोज्यापहारे एतद्विवारभोजनपर्य्याप्त-हरणे तु पैठीनस्युक्तं त्रिरात्रं भक्ष्यभोज्यान्नस्योदरपूरणमात्रस्य हरणे त्रिरात्रमेकरात्रं वा पञ्चगव्याहारश्चेति एकरात्रं पञ्चग-व्याहारस्य पूर्व्वोक्तविषयः । भक्ष्यादिसाहचर्य्याद्यानादीनां अपि तावन्मूल्यलभ्यानामेव हरणे एकरात्रादिकं एकरात्रभो-जनपर्य्याप्तभक्ष्यादित्रिगुणमूल्यलभ्यतृणकाष्ठादिहरणे त्रिरात्रं । अनेनैवाभिप्रायेण

मनुः ।

तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुड़स्य च ।
चेलचर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ॥

तथा द्वादशगुणभक्ष्यमूल्यमणिमुक्ताद्यपहारे स एव ।

मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ।
अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता ॥

भक्ष्यादित्रिगुणमूल्यकार्पासादिहरणेऽपि

स एव ।

कार्पासकीटजीर्णानां द्विखुरैकखुरस्य च* ।

---

* द्विशफैकशफस्य चेति मूलमनुसंहितायां पाठः ।

पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहं पयः ॥ इति ।
एवमन्यत्रापि योजनीयम् ।

तथा ।

मनुष्याणाञ्च हरणे स्त्रीणां क्षेत्रगृहस्य च ।
कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणेन तु ॥

एतच्च क्षत्रियादिमनुष्यापहारे ।

निरपेक्ष्यस्यापहरणे नराश्वरजतस्य च ।
भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम् ॥

इत्यत्र ब्राह्मणसम्बन्धि मनुष्याद्यपहरणस्य सुवर्णस्तेयसमत्वेनोक्तत्वात् वापीकूपजलानाञ्च इत्यत्र कूपवापीभ्यां जलं विशेषणं घटादिजलव्यावृत्त्यर्थं, तेन सजलवापीकूपापहारे प्रायश्चित्तमिदमित्यपरार्के सार्द्धशतद्वयपललभ्यजलापहार इदञ्चान्द्रायणं नियम्यत इति मिताक्षरायां, एतच्च प्रायश्चित्तजातमपहृतं* स्वामिनि दत्त्वैव कर्त्तव्यम् ।

यदाह विष्णुः ।

दत्त्वैवापहृतं द्रव्यं स्वामिने व्रतमाचरेत् । इति ।
स्त्रीबालादिषु पूर्व्वोक्तरीत्या कल्प्यम् । ऋणानाञ्चानपक्रियेत्यत्र गोवधप्रायश्चित्तानि यथाशक्ति योज्यानि । अनाहिताग्नितायां तत्र वत्सरादूर्द्ध्वं आपदि शक्त्यपेक्षया याज्ञवल्क्योक्तव्रत-

---

* इदञ्च स्तेयप्रायश्चित्तं अपहृतद्रव्यदानोत्तरकालमेव द्रष्टव्यमिति मूलमिताक्षरायां पाठः । क्वचिच्च पुस्तके एतच्च प्रायश्चित्तकदम्बं वस्तुजातपरहृतमिति पठितम् ।

चतुष्टयं योज्यम्। अनापदि तु वत्सरादूर्द्ध्वमेव मनूक्तत्रैमासिकम्। असंपूर्णसंवत्सरे

कार्ष्णाजिनिराह।

काले त्वाधाय कर्म्माणि कुर्य्याद्विप्रो विधानतः।
तदकुर्व्वन्ननशनं चान्द्रायणमथापि वा॥

आवसथ्याधानेऽपि स एव।

कृतदारो गृहे ज्येष्ठो यो न दद्याद्धुताशनम्।
चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वा॥ इति।

वर्षातिक्रमे चान्द्रायणं मासातिक्रमे त्वहमुपवासः। श्रौतस्मार्त्ताग्न्याधानाभाव इदं प्रायश्चित्तं गृहीतस्य नास्तिक्यादिवशात्परित्यागे धर्म्मकृत्यादिषु विशेषोऽभिहितः।

व्याघ्रपादः।

मासद्वयन्तु यो वह्निं त्यजेदेवं समाचरेत्।
नास्तिक्यात् कृच्छ्रमेकन्तु होमद्रव्यं ददाति च॥ इति।

तथा।

योऽग्निं त्यजति नास्तिक्यात्प्राजापत्यं चरेद्द्विजः।
अन्यत्र पुनराधानमुपदिष्टं मनीषिभिः॥ इति।

मासचतुष्टयमभिव्याप्याग्निपरित्यागे त्वतिकृच्छ्रः।

तथा स एव।

चतुष्टये तु संपूर्णे मासानान्तु हुताशनम्।
त्यक्त्वा तु कृच्छ्रं कुर्व्वीत ततः पापात्प्रमुच्यते॥

षण्मासपर्य्यन्तं पराकः अत ऊर्द्धमब्दपर्य्यन्तं पयोव्रतम्।

यथाहोशना ।

षण्मासंस्त्यजते यो वै पराकं स समाचरेत् ।
ऊर्द्ध्वं पर्य्यात्रतं कुर्य्यान्मासमेकं समाहितः ॥
वर्षपर्य्यन्तमेवाहुर्मुनयः संशितव्रताः ।

संवत्सरादूर्द्ध्वन्तु स्कन्दपुराणे ।

ऊर्द्ध्वं संवत्सरादग्निं यस्त्यजेत्ययसौ व्रतम् ।
द्वैमासिकं ततः कुर्य्यात्त्रैमासिकमथापि वा ॥

कालाल्पत्वमहत्त्वापेक्षया विकल्पः । प्रमादान्मासमग्निपरित्यागेऽपि

स्कन्दपुराणे ।

हुताशनं हि यो विप्रः प्रमादात्त्यजति प्रभो ।
उपवासं तथा कुर्य्यात्प्राजापत्यमथापि वा ॥

प्राणायामशतं त्रिरात्रपरित्यागे ।

कूर्मपुराणे ।

षष्टिरात्रं त्यजेदग्निं प्रमादात् शृणु मे विभो ।
उपवासं तथा कुर्य्यात्प्राजापत्यमथापि वा ॥

तथेत्यनेन तत्र त्रिरात्रं परामृश्यते, मासद्वयपरित्यागे त्रिरात्रं अत ऊर्द्ध्वं संवत्सरपर्य्यन्तं मासप्राजापत्यं अत ऊर्द्ध्वं कालबहुत्वे प्रायश्चित्तबहुत्वम् ।

तथाच भारद्वाजस्थ्यं ।

प्राणायामशतमात्रिरात्रादुपवासः स्यादाविंशतिरात्रादत ऊर्द्ध्वं मासः षष्टिरात्रात्तिस्रोरात्रीरुपवसेत् अत

ऊर्द्ध्वं माससंवत्सरात्प्राजापत्यञ्चरेत् । अत ऊर्द्ध्वं काल-बहुत्वे दोषबहुत्वमिति । उपवासश्च त्रिंशद्रात्रादित्यपि पाठः ।

आलस्येन परित्यागे स्मृत्यन्तरे ।

आलस्येन यदा वह्निं द्वादशाहं त्यजेत्प्रभो ।
निरान्नमुपवासञ्च चरेत्पापविशुद्धये* ॥

भारद्वाजगृह्ये द्वादशाऽहातिक्रमे त्र्यहमुपवासः मासातिक्रमे द्वादशाहमुपवासः संवत्सरातिक्रमे मासोपवासः पयोभक्षणं वा कुष्माण्डीभिर्होमः क्रमेणोभयञ्चेति उपवासासमर्थस्य मासं पयोभक्षणं संवत्सरानन्तरमधिककालातिक्रमे उभयं तच्च गृह्याग्निविषयम् ।

हारीतः ।

संवत्सरोत्पन्नेऽग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्यात् द्विवर्षोत्पन्ने चान्द्रायणं सोमायनञ्च कुर्य्यात्त्रिवर्षोत्पन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यात् । इति ।

शङ्खः ।

अभ्युत्सादी संवत्सरं प्राजापत्यं चरेद्गाञ्च दद्यादिति ।

एतदकामतः श्रौताग्न्युत्सादे कामतस्तु मनूक्तं ।

अग्निहोत्रपरिदध्याग्नीन्† ब्राह्मणः कामकारकः‡ ।

---

* विमुक्तये इति क्वचित्पाठः । † अग्निहोत्रपविध्याग्निमिति क्वचित्पठितम् ।
‡ कामकारत इति क्वचित्पाठः ।

चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् ॥

मासमग्नीनपरिहृत्येत्यन्वयः । क्वचनालस्यादिना मासपरित्यागे प्रथममासे कृच्छ्रत्रयं । ततो मासमकृत्वा कृच्छ्रमहैति एवमादयो गुरुलघुकल्पाः शक्त्याद्यपेक्षया व्यवस्थापनीयाः । एवं प्रायश्चित्तानन्तरं प्राप्तस्थानेषु* पुनराधानं कृत्वा नित्यकर्म्म कुर्य्यात् प्रायश्चित्तञ्च होमद्रव्यञ्च दत्त्वा तथाच भारद्वाजगृह्ये।

यावत्कालमहोमी स्यात्तावद्द्रव्यमशेषतः ।

तद्दानञ्चैव विप्रेभ्यो यथा होमस्तथैव च ॥

तथा पण्यविक्रये† यत्र स्मृतिषु प्रायश्चित्तं नोक्तं तत्र द्रव्यानुबन्धाद्यपेक्षया अनापदि मानवं त्रैमासिकं गोवधे याज्ञवल्क्योक्तव्रतचतुष्टयं योजनीयं ।

क्वचन विशेषो हारीतेनोक्तः ।

गुड़तिलपुष्पमूलपक्वान्नविक्रये सोमायनं लाक्षा लवणं मधुमांसतैलक्षीरदधिघृततक्रगन्धचामरचर्म्मरक्तवाससामिक्ततमविक्रये चान्द्रायणं ।

तथा ।

ऊर्णाकेशरिधेनु‡वेश्मशस्त्रविक्रये च भक्ष्यमांसस्नायुस्थिशृङ्गनखशुक्तिविक्रये तप्तकृच्छ्रः हिङ्गुगुग्गुलुहरितालमनःशिलाजतुगैरिकक्षारलवणमणिमुक्ताप्रवालवैणव - वेणुमृण्मयेषु च आरामतड़ागोदपानपुष्करिणीषु कृत-

---

* प्राप्तस्थले इति क्वचित्पाठः । † अथापण्यविक्रये क्वचित्पाठः । ‡ यथा ऊर्णाकेशकेशरिपुंधेनु इति पाठान्तरम् ।

विक्रयेषु त्रिषवणं स्नाय्यधःशायी चतुर्थकालाहारी दश-सहस्रं जपन् संवत्सरेण पूतो भवतीति हीनमानोन्मान-सङ्कीर्णविक्रये* चेति ।

दशसहस्रं जपन् गायत्रीमिति† शेषः । मज्जर्थ्यान्तु प्रायश्चित्त-करणात् गोमतीजपयुक्तम् । संवत्सरव्रतमेव हीनमानादि-विक्रयेऽपि सङ्कीर्णं मिश्रितमेकतमविषय‡ इति सर्व्वशेषः ।

शङ्खलिखितौ ।

अविक्रयणीयानि तिलतैल दधि क्षौद्रलवण द्राक्षामद्य मांस घृतान्न स्त्रीपुरुष हस्त्यश्व गोवृष गन्धरस क्षौम कृष्णाजिन सोमोदकनीलीविक्रयात् पतति ब्राह्मणः तत्र प्रायश्चित्तमकामकृते कामकृतेऽप्येकेऽपतितौ ह्यात्मानमुद्ध-रेत्संवत्सरं तप्तकृच्छ्रं समाचरेत् । कृत्वा पुनः§ त्रिरपो-ऽभ्युपेयात् त्रिरेकार्द्रवासा गोष्ठे मौनी वीरासनमासीत रात्रौ दिवा तिष्ठेत् युक्तोऽग्निकार्य्यपरः सावित्रीं सवानुगांश्च जपेत् । स्वयमभ्युपगम्य कुशचीरवासा मौञ्जी मेखली दण्डपवित्रपाणिर्हविष्यं ग्रासयेच्चरन् भैक्ष्यमदुष्टं वाचो ब्रुवन्नश्नीयात् द्वादशरात्रं चोपवासो ब्राह्मणतर्पणञ्च गवाह्निकमित्येवं व्यवहार्य्योऽन्यथा

* विषये इति क्वचित्पाठः । † गोमतीमिति शेष इति क्वचित् पठितम् । ‡ विक्रय इति क्वचित्पाठः । § कृतवापनः इति क्वचित् पुस्तके पाठः । ¶ स च त्वानुगामिति पाठान्तरम् ।

पतितः शिष्टैरसम्भाष्य इति विष्णुः। मांसलवणलाक्षा-
क्षारविक्रयी चान्द्रायणं कुर्य्यात्तच्च भूयश्चोपनयेदिति।
चतुर्विंशतिमते।

सुरायाः विक्रयं कृत्वा चरेत्सौम्यचतुष्टयम्।
लाक्षालवणमांसानां चरेच्चान्द्रायणं त्रयम्॥
मध्वाज्यतैलसोमानां चरेच्चान्द्रायणद्वयम्।
पयःपायसपूपानां चरेच्चान्द्रायणत्रयम्*॥
दध्नश्चेक्षुरसस्यैव गुड़खण्डादिविक्रये।
सर्व्वेषां स्नेहपक्वानां पराकन्तु समाचरेत्॥
कदली नारिकेलञ्च नारङ्गवीजपूरकम्।
एतेषां पादकृच्छ्रः स्याज्जम्बीरादेस्तथैव च॥
कस्तूरिकादिगन्धानां विक्रये कृच्छ्रमाचरेत्।
कर्पूरादेस्तदर्द्धं स्याद्दिनं हिङ्ग्वादिविक्रये॥
तिलानां विक्रयं कृत्वा प्राजापत्यं समाचरेत्।
धर्म्मार्थं कृमिजातांश्च यत्नार्थं विक्रयं नयेत्॥
रक्तपीतादिवस्त्राणि कृष्णादीनि तथैव च।
विक्रये त्र्यहमेतेषां गर्गस्य वचनं यथा॥
गोविक्रयं नरः कृत्वा लाभार्थं धनमोहितः।
प्राजापत्यं प्रकुर्व्वीत पूतानां द्विगुणं† चरेत्॥
खराश्वाश्वतरीणाञ्च वराहाणाञ्च विक्रये।

* चान्द्रायणव्रतमिति क्वचित्पठितम्। † गजानामैन्दवं स्मृतमिति पाठान्तरम्।

परार्कं तच्च कुर्व्वीत सुतानां द्विगुणञ्चरेत् ॥
नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम् ।
द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः ॥
चान्द्रायणं प्रकुर्व्वीत एकाहं वेदविक्रये ।
अज्ञानात्तु परार्कं स्यात् स्मृतीनां कृच्छ्रमाचरेत् ॥
इतिहासपुराणानां चरेत्सान्तपनं द्विजः ।
रहस्यपञ्चरात्राणां कृच्छ्रमेव समाचरेत् ॥

अङ्गादिविक्रये एकाह इत्यनुवर्त्तते। एवमन्यान्यपि गुरुलघु-वृद्धिप्रायश्चित्तान्यन्विष्य कामाकामजातिशक्त्याद्यपेक्षया यो-ज्यानि ।

## अथ परिवेदनपारिवित्त्ये च ।

तत्र वशिष्ठः ।

परिवित्तिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विंशित्ताञ्चैवो-पयच्छेदिति ।

परिवेत्तानुजोऽनूढ़े ज्येष्ठे दारपरिग्रहात् । परिवित्तिस्तु तज्ज्या-यान् इत्यमरकोषे । असौ परिवित्तिर्ज्येष्ठस्तं परित्यज्य प्राजा-पत्यं चरित्वा निर्विंशेत् उद्वहेत्कामित्याकाङ्क्षायामाह, ताञ्चै-वोपयच्छेदिति तामेव स्वेन पूर्व्वपरिणीतामेव ।

तथा ।

परिविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निर्विशेत् तामेवोपयच्छेतेति ।

परिविदानः परिवेत्ता कनीयान् तस्मै ज्येष्ठाय स्वोढां दत्त्वा इयं त्वदीयेत्युपचारार्थमेव दत्त्वा ब्रह्मचार्य्याहृतं भैक्ष्यवन्निवेद्य कृच्छ्रातिकृच्छ्रौ कृत्वा पुनस्तामेव तेनानुज्ञातामुद्वहेदित्यर्थः । एतच्च देशान्तरव्यवस्थिते ज्येष्ठे सति कृतविवाहे इति भ्रान्त्या कनीयसि कृतविवाहे निर्गुणे वा ज्येष्ठे द्रष्टव्यं प्रायश्चित्तस्याल्पत्वात् । ज्येष्ठे गुणवति कनीयसः पित्राद्यनुज्ञामन्तरेण कामतः करणे हारीताद्युक्तं द्रष्टव्यं ।

ज्येष्ठेऽनिर्विष्टे कनीयान् निर्विशमानः* परिवेत्ता परिवित्तिर्ज्येष्ठः परिवेदनीया कन्या परिदायी दाता परियष्टा याजकः सर्व्वे ते पतिताः । संवत्सरं प्राजापत्येन कृच्छ्रेण वा पावयेयुरिति ।

अत्रापि परिवेत्त्रादीनां सर्व्वेषां कामतः प्रवृत्तौ प्रत्येकं संवत्सरं कृच्छ्रेण ते शुध्येरन् अज्ञानतः प्रवृत्तौ तु याज्ञवल्क्योक्तगोवधव्रतचतुष्टयं जातिशक्त्याद्यपेक्षया योजनीयम् । अत्रैव विशेषमाह यमः ।

द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्रमेव च ।
अतिकृच्छ्रञ्चरेद्दाता होता चान्द्रायणञ्चरेत् ॥ इति ।
ज्येष्ठायां यद्यनूढायां कन्यायामुह्यते तु या ।

---

* निर्विशन्निति ग्रन्थान्तरे पठितम् ।

सा चाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृता ॥

अत्र प्रायश्चित्तमाह वशिष्ठः ।

अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विशेत् ताञ्चैवोपयच्छेत दिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विशेत् ताञ्चैवोपयच्छेत दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निर्विशेदिति केचिन्नैवं पठन्ति दिधिषूपतिः कृच्छ्रं चान्द्रायणं द्वादशरात्रं चरित्वा निर्विशेत् ताञ्चैवोपयच्छेत अग्रेदिधिषूपतिः कृच्छ्रातिकृच्छ्राविति । एवञ्च प्रायश्चित्तविकल्पः ।

प्रथमपाठेऽयमर्थः । अग्रेदिधिषूपतिः कनिष्ठायाः पतिस्ताम्परित्यज्य प्राजापत्यञ्चरित्वा निर्विशेत् उद्वहेत । कामित्याकाङ्क्षायां ताञ्चैवेति तां स्वेन पूर्व्वपरिणीतां । दिधिषूपतिर्ज्येष्ठायाः पतिः तां तथा कनिष्ठापतये तस्मै पूर्व्ववद्दत्त्वा कृच्छ्रातिकृच्छ्रौ चरित्वा पुनः पूर्व्वपरिणीतामेव उद्वहेत् । द्वितीयपाठेऽयमर्थः । तस्मै दिधिषूपतये दत्त्वा पुनः स्वोढ़ान्तामेवाग्रेदिधिषूपतिरुद्वहेत् । अत्रानुक्तस्थले कन्यायाः प्रौढ़ाया अर्द्धं अप्रौढ़ायाः पाद इति विकल्पश्च । प्रायश्चित्तानन्तरन्तु ज्येष्ठानुक्रमेणैव पूर्व्ववरायैव पूर्व्वदत्तां कन्यां दत्त्वा विवाहसंस्कारः कार्य्यः । यत्र च सोदरकनिष्ठभ्रात्रा सोदरज्येष्ठकन्या प्रथमं विवाहिता ततो ज्येष्ठभ्रात्रा कनीयसी विवाहिता अथवा ज्येष्ठभ्राता प्रथमं कनीयसी कनिष्ठेन पश्चाज्ज्येष्ठा तत्र परित्याग एव परिवित्तिपरिवेत्तृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मण-

तर्पणञ्च तां पुनर्भुवमित्याचक्षते न भूयश्चैनामभिगच्छेदिति सुमन्तुस्मरणान्नाभिगच्छेत् न प्राप्नुयात् परित्यजेदिति यावत्। अस्य वचनस्य विषयान्तरापेक्षया अयमेव विषयो ज्यायान्। के च कनिष्ठः परिवेत्ता स्वोढ़ां कन्यां ज्येष्ठाय दद्यात् ज्येष्ठोऽपि कनिष्ठविवाहितामेवोद्वहेत्। एवमग्रेदिधिष्वादिष्वप्युक्तव्युत्क्रमविवाहेन संस्कारस्यानिष्पन्नत्वादिति कथयन्ति तच्चिन्त्यं अत्यन्तलोकविद्विष्टत्वात्।

अथ भृतकस्याध्यापनादेव* तत्र ब्राह्मीसुवर्चलां† पिबेदित्यनुवृत्तौ

विष्णुः।

भृतकाध्यापनं कृत्वा भृतकाध्यापितस्तथा।
अनुयोगप्रदानेन त्रीन् पक्षान्नियतः पिबेत्॥

अनुयोगः यशसे धनाय वा सम्यगधीयानस्य त्वया न सम्यगधीयते इत्याक्षेपः।

तथाच स्मर्य्यते।

दत्त्वानुयोगानध्येतुः पतितान्मनुरब्रवीत्। इति।

इदमपि प्रायश्चित्तं सामान्यगोवधप्रायश्चित्तैः शक्त्याद्यपेक्षया विकल्पितम्।

अथ महापातक तत्सम तदतिदिष्ट व्यतिरिक्त पारदार्य्ये ऋतुकाले कामकारेण जातिमात्रब्राह्मणीगमने वार्षिकं ब्रह्म-

---

* भृतकाध्यापनादेरिति पाठान्तरम्। † ब्रह्म सुवर्चलामिति पाठान्तरम्।

हत्याप्रायश्चित्तम् । तथाच वार्षिकप्राकृतब्रह्मचर्य्यानुवृत्तौ

गौतमः ।

उपपातके चैवमिति ऋतुकाले अग्निहोत्रसाधनत्वादि-गुणयुक्तब्राह्मणीगमने वर्षद्वयं ब्रह्महत्याव्रतं तादृग्विध-श्रोत्रियपत्नीगमने त्रैवार्षिकं यदाह

सएव ।

द्वे परदारे त्रीणि श्रोत्रियस्य द्रव्यलाभे चोत्सर्गो यथा-स्थानं वा गमयेदिति ।

द्वे वर्षे तया दत्तं द्रव्यमुत्स्रष्टव्यं तदीयं द्रव्यं तत्र वा गमयितव्य-मित्यर्थः । अथवा श्रोत्रियपत्न्यां गुणवत्यां वैश्यायां गमने वार्षिकं तादृश्यामेव क्षत्रियायां द्विवार्षिकं तादृश्यामेव ब्राह्मण्यां त्रैवार्षिकमिति कल्प्यम् ।

तथाच शङ्खः ।

वैश्यायामवकीर्णो संवत्सरं ब्रह्मचर्य्यं त्रिषवणं वानु-तिष्ठेत् क्षत्रियायां द्वे वर्षे त्रीणि ब्राह्मण्यां वैश्यावच्च शूद्रायां ब्राह्मणपरिणीतायामिति ।

अत्र ब्रह्मचर्य्यं द्वादशवार्षिकव्रतं वैश्यवदित्यतिदेशात् पादोनं वार्षिकं षाण्मासिकं वा कल्प्यं । एतच्च ब्राह्मणस्यैव एतद्दिगव-लम्बनेन क्षत्रियस्य क्षत्रियादिस्त्रीषु पूर्व्वोक्तगुणशालिनीषु गमने क्रमेण द्विवार्षिक त्रिवार्षिक षाण्मासिकानि । एवं वैश्यस्य वैश्याशूद्रागमने वार्षिकं षाण्मासिकं कल्प्यं । शूद्रस्य शूद्रपत्न्यां परभार्य्यायां षाण्मासिकं ।

यद्वापस्तम्बेनोक्तं ।

सवर्णायामनन्यपूर्व्वायां सकृत् सन्निपाते पादः पततीत्युपदिशन्त्येवमभ्यासे पादः पादश्चतुर्थे सर्व्वमिति ।

एतच्चाग्निहोत्रादिसाधनत्वादिगुणशालिन्यां श्रोत्रियपत्नीगमने वेदितव्यं अनन्यपूर्व्वायामिति विशेषोपादानादेकत्रैव गमनाभ्यासे द्वितीयवारादिगमनेऽनन्यपूर्व्वकत्वरूपप्रथमोपभोगाभावात् । नूतनान्यपूर्व्विकाभ्यासइत्र न प्रत्यभ्यासं पादपादाधिक्यमपि तु प्रतिगमनं पादपादन्यूनं कल्प्यं । एतदखिलमपि कामकारे । अकामकारे तु पूर्व्वोक्तविषयेषु पूर्व्वोक्तप्रायश्चित्तान्येवार्द्धतया योज्यानि । ऋतुकाले कामतो जातिमात्रब्राह्मण्यामव्यभिचारिण्यां गमने मनूक्तं त्रैमासिकं, तथा क्षत्रियागमने मनूक्तमेव द्वैमासिकं । तथा वैश्यागमने चान्द्रायणम् । एवं वैश्यस्य शूद्रागमने चान्द्रायणं मासिकयावकव्रतं एतच्च ब्राह्मणस्य । क्षत्रियस्य क्षत्रियादिस्त्रीगमने द्वैमासिकं चान्द्रायणं मासिकयावकव्रतं वैश्यागमने त्रैमासिकं चान्द्रायणं मासिकयावकव्रतञ्च क्रमेणैवं वैश्यस्य वैश्याशूद्रा*गमने चान्द्रायणं मासिकयावकव्रतञ्च । शूद्रस्य शूद्रा†गमने मासिकयावकव्रतञ्च । कामतस्तु ब्राह्मणस्य ब्राह्मण्यादिद्विजातिस्त्रीगमने क्रमेण याज्ञवल्क्योक्तं वृषभैकादशगोदानं मासं पञ्चगव्याशनं मासं प्राजापत्याचरणं च

* वैश्याशूद्र्योरिति पाठान्तरम् । † शूद्रीति पाठान्तरम् ।

द्रष्टव्यं। क्षत्रियस्य क्षत्रियादिद्विजातिस्त्रीगमने क्रमेण मासं पञ्चगव्याशनं मासं प्राजापत्यं*। वैश्यस्य वैश्यागमने प्राजापत्यम्। शूद्रागमने तु

संवर्त्तः।

शूद्रान्तु ब्राह्मणो गत्वा मासं मासार्द्धमेव वा।

गोमूत्रयावकाहारस्तिष्ठेत् पापविमोचकः॥ इति।

कामतोमासं अकामतोऽर्द्धं क्षत्रियादीनामपि शूद्रागमने पूर्व्वोक्तं मासार्द्धमेव।

यत्तु स्मृत्यन्तरम्।

ब्राह्मणश्चेदप्रेचापूर्व्वकं ब्राह्मणदारानभिगच्छेत् निवृत्तधर्म्मकर्म्मणः कृच्छ्रः अनिवृत्तधर्म्मकर्म्मणोऽतिकृच्छ्र इति।

तद्ब्राह्मणपत्न्यां शूद्रायामप्रेचापूर्व्वकमबुद्धिपूर्व्वकं। निवृत्तधर्म्मकर्म्मणो दुष्टाचारस्य द्विस्त्रिर्व्यभिचारितब्राह्मणस्त्रीविषयञ्च कामकारे तु द्विगुणं एतच्च सकृद्गमने वारचतुष्टयं व्यभिचरितायामकामतो गमने शङ्खोक्तं द्रष्टव्यं।

शूद्रायां सचेलस्नात उदकुम्भं दद्यात् ब्राह्मणाय वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत्। क्षत्रियायां त्रिरात्रोपोषितो यवाढ़कं दद्यात्। ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यादिति।

चतुर्थी स्वैरिणी प्रोक्ता पञ्चकी† बन्धकी मता।

---

* प्राजापत्याचरणमिति पाठान्तरम्। † पञ्चमी इति पाठान्तरम्।

इति स्मरणात् चतुर्थे व्यभिचारे जाते स्वैरिणीत्युच्यते ।

षट्त्रिंशन्मते ।

ब्राह्मणीं बन्धकीं गत्वा कुञ्चिन्दद्यात्*द्विजातये ।
राजन्यान्तु धनुर्दद्याद्वैश्यां गत्वा तु चैलकम् ॥
अष्टमुष्टिर्भवेत्कुञ्चिः ।

अत्रैव यमः ।

ब्राह्मणो ब्राह्मणीं गत्वा द्विजे दद्यान्मृगाजिनम् ।
चत्त्रियायां धनुर्दद्याद्वैश्यायामायसीं शिलाम् ॥
शूद्रां गतेन विप्रेण उदकुम्भः प्रदीयते ।
त्रिरात्रोपोषितः† स्नात्वा दद्यात्सम्मार्ज्जनीं तथा ॥

अत्र शक्तविषये त्रिरात्रोपवाससहितानि मृगाजिनादिदानानि।

अत्राशक्तस्य ।

दिवसोपोषितो वा स्याद्दद्याद्विप्राय भोजनम् ।

इति षट्त्रिंशन्मतोक्तोपवाससहितानि दानानि । अत्राप्यशक्तस्य दानमात्रमिति व्यवस्था । एतच्च गर्भानुत्पत्तौ तदुत्पत्तौ तु द्विगुणम् ।

तथाचोशना ।

गमने तु व्रतं यत्तु गर्भे तद्द्विगुणं भवेत् । इति ।

शूद्रां गर्भाधाने चतुर्विंशतिमते । तस्यामभिजातस्तु त्रीणि वर्षाणि चतुर्थकालसमये नक्तं भुञ्जीत इति ।

---

* किञ्चिद्दद्यादिति पाठान्तरम् । † त्रिरात्री प्रोषित इति पाठान्तरम् ।

वृषल्याञ्जनितापत्यो वृषल्यामभिजानतः ।

वृषली शूद्रा स्वभार्य्याभ्रान्त्या प्रातिलोम्येन गच्छतः शूद्रादेः प्रचेतसोक्तं द्रष्टव्यम् ।

शूद्रस्य ब्राह्मणीं मोहाद्गच्छतः शुद्धिमिच्छतः ।
पूर्णमेतत् व्रतं* ज्ञेयं माता यस्माद्धि तस्य सा ॥
पादहान्यान्यवर्णासु गच्छेत सार्व्ववर्णिकम्† । इति ।

कामतस्तु वधः ।

प्रातिलोम्ये वधः पुंसां नार्य्याः कर्णादिकर्त्तनम् ।

इति स्मरणात् । महापातकप्रकरणे तु शूद्रमग्नौ प्रक्षिपेदित्यादिवशिष्ठवचनं दर्शितं स्मरणीयमिति । अत्यन्तव्यभिचारिणीब्राह्मणीगमने संवर्त्तोक्तम् ।

कथञ्चिद्ब्राह्मणीं गच्छेत् क्षत्रियो वैश्यएव वा ।
कृच्छ्रं सान्तपनं वा स्यात् प्रायश्चित्तं विशुद्धये ॥
शूद्रस्तु ब्राह्मणीं गच्छेत् कथञ्चित्काममोहितः ।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति ॥ इति ।

स्त्रीणामप्यनुलोमव्यवाये तु पुरुषस्य तु यत्प्रायश्चित्तं तत्तदेव सम्पूर्णं प्रायश्चित्तं योजनीयम् ।

मनुः ।

यत्पुंसः परदारेषु तच्चैनाञ्चारयेद्व्रतम् । इति ।

---

* द्वादशवार्षिकव्रतं । † अन्यवर्णासु ब्राह्मणीभिन्नक्षत्रियादिषु चेद्गच्छेत् तदा सार्व्ववर्णिकं सर्व्ववर्णवधोक्तं प्रायश्चित्तं पादहान्या शूद्रेण कर्त्तव्यं क्षत्रियागमने पादोनं वैश्यागमने अर्द्धं शूद्रागमने पादं ।

अत्र

प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ।

इति न प्रवर्त्तते ।

यत्पुंसः परदारेषु सामान्येषु व्रतं स्मृतम् ।

व्यभिचारात्तु भर्त्तुः स्त्री तदशेषं समाचरेत् ॥

इति बृहस्पतिस्मरणात् । समानेषु सवर्णेषु एतदुत्कृष्टस्याप्युपलक्षणं । बलात्सवर्णोत्कृष्टोपभुक्तायाः संवर्त्तोक्तम् ।

बलात्प्रमथ्य भुक्ता चेत् दह्यमानेन चेतसा ।

प्राजापत्येन शुद्धिः स्यात्तस्यास्तत्पावनं महत्* ॥

तत्राशक्तौ ऋष्यशृङ्गोक्तम् ।

बलेन कामिता नारी सवर्णेन कथञ्चन ।

प्रायश्चित्तं त्रिरात्रं वै तस्याः शुद्ध्यर्थमेव च† ॥ इति ।

प्रातिलोम्यव्यवाये तु स्त्रीणां पृथक् प्रायश्चित्तं, तत्र महापातकप्रकरणे वशिष्ठोक्तं दर्शितं । संवर्त्तेन प्रायश्चित्तान्तरमभिहितम् ।

ब्राह्मणकामाद्गच्छेच्चेत् क्षत्रियं वैश्यमेव वा ।

गोमूत्रयावकैर्मासात्तदर्द्धाच्च विशुद्ध्यति ॥ इति ।

कामतोद्विगुणम् ।

षट्त्रिंशन्मते ।

ब्राह्मणी क्षत्रियवैश्ययोः सेवायामतिकृच्छ्रं कृच्छ्रातिकृच्छ्रौ चरेत् क्षत्रिययोषित् ब्राह्मणराजन्यवैश्यसेवायां

---

* परमिति पाठान्तरम् । † आदिशेदिति पाठान्तरम् ।

कृच्छ्रपादं कृच्छ्रार्द्धं प्राजापत्यं अतिकृच्छ्रं वैश्या-शूद्रयोः शूद्रसेवायां प्राजापत्यं ब्राह्मणराजन्यवैश्यसेवा-यान्त्वहोरात्रं त्रिरात्रं कृच्छ्रार्द्धमिति ।

वृहत्प्रचेताः ।

विप्रा शूद्रेण संयुक्ता न चेत्तस्मात्प्रसूयते ।
प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रश्चान्द्रायणत्रयम् ॥
चान्द्रायणे द्वे कृच्छ्रश्च विप्राया वैश्यसङ्गमे ।
कृच्छ्रचान्द्रायणे स्यातां तस्याः क्षत्रियसङ्गमे ॥
क्षत्रिया शूद्रसम्पर्के कृच्छ्रं चान्द्रायणद्वयम् ।
चान्द्रायणं सकृच्छ्रन्तु चरेद्वैश्येन सङ्गता ॥
शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम् ।
आनुलोम्येन कुर्व्वीत कृच्छ्रं पादावरोपितं ॥ इति ।

गर्भधारणे तु चतुर्विंशतिमते ।

विप्रगर्भे पराकः स्यात् क्षत्रियस्य तथैन्दवम् ।
ऐन्दवञ्च पराकञ्च वैश्यस्याकामकारतः ॥
शूद्रगर्भे भवेत् त्यागश्चाण्डालो जायते यतः ।
गर्भस्रावे ऋतुदोषैश्चरेच्चान्द्रायणत्रयम् ॥

इति कामकारे तु द्विगुणं । गर्भस्रावे चान्द्रायणत्रयं शूद्रगर्भ-स्राव एव यदा तु शूद्रगर्भप्रसवस्तदा प्रायश्चित्ताभाव एव ।

तथाच वशिष्ठः ।

ब्राह्मणक्षत्रियविशां भार्य्याः शूद्रेण सङ्गताः* ।

---

* उपभुक्ताः ।

अप्रसूता* विशुद्ध्यन्ति प्रायश्चित्तेन नेतरा ॥ इति ।
यदा संशुद्धगर्भे व्यभिचरति तदा प्रसवोत्तरकालं प्रायश्चित्तम् ।

अन्तर्वत्नी तु या नारी समेनाक्रम्य कामिता ।
प्रायश्चित्तं न कुर्य्यात्सा यावद्गर्भो विनिःसृतः ॥
जाते गर्भे व्रतं पश्चात्कुर्य्यान्मासन्तु यावकम् ।
न गर्भदोषस्तत्रास्ति संस्कार्य्यश्च यथाविधि ॥

इति स्मरणात्। आक्रम्य बलात् इच्छया पूर्व्वश्चेद्यदुक्तं तत्-द्विगुणं। यदा तु प्रायश्चित्तं न चिकीर्षति दर्पादिना तदा नार्य्याः कर्णादिकर्त्तनमित्यङ्गच्छेदः। अन्त्यजगमने तु स्त्रीणां प्रायश्चित्तविशेषः।

स्मृत्यन्तरे।

रजकान्त्यजशैलूषवेणुचर्म्मोपजीविनः।
ब्राह्मण्येतान् यदा गच्छेदकामादैन्दवत्रयम् ॥
चाण्डालं पुक्कशं म्लेच्छं श्वपाकं पतितं तथा।
ब्राह्मण्यकामतो गत्वा चान्द्रायणचतुष्टयम् ॥

कामतो द्विगुणं कार्य्यं अकामतः प्रायश्चित्तान्तरमपि स्मर्य्यते ।

चाण्डालेन तु संयोगं यदि गच्छेत्कथञ्चन ।
सशिखं वपनं कुर्य्याद्भुञ्जीत यावकौदनम् ॥
त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत् ।
आत्मना संमिते कूपे गोमयोदककर्द्दमे ॥

---

* अप्रजाता इति पाठान्तरम् ।

तत्र स्थित्वा निराहारा सा त्रिरात्रं ततः क्षिपेत्।
शङ्खपुष्पीं लतां मूलं पत्रं वा कुसुमं फलम्॥
क्षीरं सुवर्णसंमिश्रं क्वाथयित्वा ततः पिबेत्।
एकभक्तं चरेत्पश्चाद्यावत्पुष्पवती भवेत्॥
वहिस्तावच्च निवसेत् यावच्चरति तद्व्रतम्।
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्।
गोद्वयं दक्षिणां दद्यात् स तु* स्वायम्भुवोऽब्रवीत्॥

एतच्चाकामतः सकृद्गमने कामतः सकृद्गमने तु

ऋष्यशृङ्गः।

संपृक्ता स्यात्तथान्त्यैर्या सा कृच्छ्राब्दं समाचरेत्।
अन्तर्व्वत्नी तु युवतिः संपृक्ता चान्त्ययोनिना॥
प्रायश्चित्तं न सा कुर्य्याद्यावद्गर्भो न निःसृतः।
न प्रचारं गृहे कुर्य्यान्न चाङ्गेषु प्रसाधनम्॥
न शयीत समं भर्त्रा न वा भुञ्जीत बान्धवैः।
प्रायश्चित्तं गते गर्भे विधिं कृच्छ्रादिकं चरेत्।
हिरण्यमथवा धेनुं दद्याद्विप्राय दक्षिणाम्॥ इति।

कामतोऽन्त्यजसंसर्गाभ्यासे

उशना।

अन्त्यजेन तु सम्पर्के भोजने मैथुने कृते।
प्रविशेत् स† प्रदीप्तेऽग्नौ मृत्युनासौ‡ विशुद्ध्यति॥ इति।

---

* शुद्ध्येदिति पाठान्तरम्। † समिति पाठान्तरम्। ‡ सेति पाठान्तरम्।

यदा तु प्रायश्चित्तं न करोति दर्पादिना तदा पुंलिङ्गेनाङ्कनीया वध्या च अतएव

पराशरः ।

हीनवर्णोपभुक्ता या साङ्का* वध्याथवा भवेदिति ।

वधोऽत्र नासिकादिकर्त्तनमित्यपरार्के । पुरुषस्यान्त्यजागमने

बृहत्संवर्त्तः ।

रजकव्याधशैलूषवेणुचर्म्मोपजीविनः ।
एतासु ब्राह्मणो गत्वा चरेच्चान्द्रायणद्वयम् ॥

आपस्तम्बोऽपि ।

म्लेच्छीं नटीं चर्म्मकारीं रजकीं वरुडीन्तथा ।
एतासु गमनं कृत्वा चरेच्चान्द्रायणद्वयम् ॥
रजकश्चर्म्मकारश्च नटो वरुड एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते त्वन्त्यजाः स्मृताः ॥ इति ।

चाण्डाल्यादिगमने गुरुतरप्रायश्चित्तत्वात् गुरुतल्पप्रकरणे प्रसङ्गाद्दर्शितम् ।

उशना ।

बहूनामेकधर्म्माणामेकस्यापि यदुच्यते ।
सर्व्वेषां तद्भवेत्कार्य्यमेकरूपा हि ते स्मृताः ॥

यत्र पुक्कसादिगमने यत्प्रायश्चित्तविशेषो नाम्नातः तत्र चाण्डाल्यादिगमने यत्प्रायश्चित्तं तदेव कर्त्तव्यं । रजक्यादिगमने

---

* त्यक्त्वा वध्यापि सा भवेदिति ग्रन्थान्तरे पठितम् ।

यत्प्रायश्चित्तं तदेव सदृशीष्वपि कर्त्तव्यमित्यर्थः। पूर्व्वोक्तं चान्द्रायणद्वयं ब्राह्मणस्य कामतो रजक्यादिगमने क्षत्रियादीनान्तु पादपादोनं कल्पनीयम्। अकामतस्तु ब्राह्मणस्य संवर्त्तोक्तम्।

रजकव्याधशैलूषवेणुचर्म्मोपजीविनाम्।

स्त्रियो विप्रो यदा गच्छेत्कृच्छ्रं चान्द्रायणं चरेत्॥इति।

अत्राप्यशक्तस्य आपस्तम्बः।

अकामतः स्त्रियो गत्वा पराकव्रतमाचरेत्। इति।

रेतःसेकादर्व्वाक् निवृत्तौ तु शातातपोक्तम्।

कैवर्त्तीं रजकीञ्चैव वेणुचर्म्मोपजीविनीम्।

प्राजापत्यविधानेन कृच्छ्रेणैकेन शुद्ध्यति॥ इति।

कापालिकीकैवर्त्त्यादिषु ज्ञानादज्ञानाच्चाभ्यासे उशनसोक्तम्।

कापालिकान्नभोक्तॄणां तन्नारीगामिणां तथा।

ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्॥ इति।

अज्ञानाच्चाण्डाल्यादिगर्भाधाने द्वादशवार्षिकं तेनैवोक्तं द्रष्टव्यम्। चाण्डाल्यादिगर्भमारोप्य गुरुतल्पव्रतं कुर्य्यात्*।

चाण्डाल्यां गर्भमाधाय गुरुतल्पव्रतं चरेत्।

ज्ञानाद्वापस्तम्बोक्तम्।

अन्त्यजायां प्रसूतस्य निष्कृतिर्न विधीयते।

---

* चरेदिति पाठान्तरम्।

निर्वासनं क्रताङ्कस्य तस्य कार्य्यमसंशयम् ॥ इति।

एवमन्यान्यपि च वचनानि विषयविशेषेषु योज्यानि।

पारदार्य्यप्रसङ्गादन्यदपि किञ्चिदुच्यते।

याज्ञवल्क्यः।

अनियुक्तो भ्रातृजायां गच्छंश्चान्द्रायणं चरेत्।

घृताभ्यक्तादिनियोगप्रकारमन्तरेण भ्रातुर्ज्येष्ठस्य कनिष्टस्य वा जायां गच्छन्नित्यर्थः। एतच्च सकृदकामकारविषयम्।

कामकारे तु शङ्खोक्तम्।

परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्षञ्चरेत्

ज्येष्ठभार्य्यामनियुक्तो गच्छंस्तदेव कनिष्ठभार्य्याञ्चेति।

अकामतः सकृत् स्वभार्य्यायामपि रजस्वलायां गमने याज्ञवल्क्योक्तम्।

त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुध्यति। इति।

त्रिरात्रान्ते त्रिरात्रोपवासान्ते।

अकामतोऽभ्यासे कामतः सकृद्गमने च शातातपोक्तम्।

रजस्वलागमने सप्तरात्रमिति।

कामतोऽभ्यासे बृहत्संवर्त्तोक्तम्।

रजस्वलान्तु यो गच्छेद्गर्भिणीं पतितां तथा।

तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विशोधनम् ॥ इति।

कामतोऽत्यन्ताभ्यासे शङ्खोक्तं त्रैवार्षिकम्।

पादस्तु शूद्रहत्यायामुदक्यागमने तथा ॥ इति।

रजस्वलासु परदारेषु गमने रजस्वलागमनप्रायश्चित्तं पारदार्य्य-

निमित्तञ्च प्रायश्चित्तञ्च भवति। रजस्वलागमनप्रायश्चित्त-प्रसङ्गात् रजस्वलानामन्योऽन्यस्पर्शे प्रायश्चित्तमुच्यते।

वृद्धवशिष्ठः।

स्पृष्टे रजस्वलेऽन्योऽन्यं सगोत्रे त्वेकभर्त्तृके।
कामादकामतोवापि सद्यः स्नानेन शुद्ध्यतः॥

सवर्णाऽसपत्नीविषये तु

मार्कण्डेयः।

उदक्या तु सवर्णा या स्पृष्टा चेत्स्यादुदक्यया।
तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्यसंशयम्॥ इति।

एतच्चाकामतः। कामतस्तु

काश्यपः।

रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति॥

एवं क्षत्रियादीनामपि एतत्प्रायश्चित्तं चतुर्थेऽहनि स्नाना-नन्तरंकर्त्तव्यम्। तथाचाग्रे वक्ष्यते। यत्तु चतुर्थेऽहनि अशुद्धि-विषयं तद्दैविकपैत्रककर्म्मपरम्।

वृद्धवशिष्ठः।

स्पृष्ट्वा रजस्वलान्योऽन्यं ब्राह्मणी शूद्रयापि च।
कृच्छ्रेण शुद्ध्यते पूर्व्वा* शूद्री दानेन शुद्ध्यति॥

दानेन पादकृच्छ्रप्रत्याम्नायभूतनिष्कचतुर्थांशदानेन।

---

* कृच्छ्रेण प्राजापत्येन पूर्व्वा ब्राह्मणी।

तथा ।

स्पृष्ट्वा रजस्वलान्योऽन्यं ब्राह्मणी वैश्यजापि च ।
पादहीनं चरेत्पूर्व्वा कृच्छ्रपादं तथोत्तरा* ॥
स्पृष्ट्वा रजस्वलान्योऽन्यं क्षत्रिया शूद्रजापि च ।
त्रिरात्राच्छुध्यते पूर्व्वा त्वहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलान्योऽन्यं क्षत्रिया वैश्यजापि च ।
उपवासैस्त्रिभिः पूर्व्वा अहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलान्योऽन्यं वैश्या शूद्री तथैव च ।
शुद्धेऽहिनद्वयात्पूर्व्वा दिनेनैकेन चोत्तरा ।
वर्णानां कामतः सर्व्वं शुद्धिरेषा सनातनी ॥

अकामतो त्वर्द्धमुक्तं द्रष्टव्यं ।

रजस्वलां हीनवर्णां रजस्वला स्पृष्ट्वा न तावदश्नीयात् यावत् शुद्धा स्यात् सवर्णामसवर्णां वा स्पृष्ट्वा स्नात्वा शुध्यतीति ।

वृद्धवशिष्ठः ।

पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥

उपवासेन रजोदोषदिनानि† व्यतिक्रम्य नीत्वेत्यर्थः । एवं सर्व्वत्रापि दिनव्यतिक्रमो यत्र प्रायश्चित्तमाम्नातं, तथा

प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये द्व्यहएव तु ।

---

* उत्तरा च तदर्द्धत इति पाठान्तरमिति । † रजोदोषदिनानि दुष्टरजोदिनानि प्रथम द्वितीय तृतीय दिनानि इति यावत् ।

अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥

शूद्रयोच्छिष्टया स्पृष्टा शुना च त्र्यहमाचरेत् ।

एतत्कामतः स्पर्शेऽकामतो बौधायनोक्तम् ।

रजस्वला तु संस्पृष्टा चाण्डालान्त्यश्ववायसैः ।

तावत्तिष्ठेन्निराहारा यावत्कालेन शुद्ध्यति ॥ इति

रजोदर्शननिमित्तत्रिरात्ररूपकालेनेत्यर्थः । अत्राशक्तायास्तेनैवोक्तं ग्राह्यं ।

रजस्वला तु संस्पृष्टा ग्रामकुक्कुटशूकरैः ।

श्वभिः स्नात्वा क्षिपेत्तावद्यावच्चन्द्रस्य दर्शनम् ॥ इति ।

तथा ।

रजस्वला तु भुञ्जाना स्वान्त्यजादीन् स्पृशेद्यदि ।

गोमूत्रयावकाहारा षड्रात्रेणैव शुद्ध्यति ॥ इति ।

अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनम् ।

उच्छिष्टायाः परस्परस्पर्शने

अत्रिः ।

उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित्स्त्री रजस्वला ।

कृच्छ्रेण शुद्ध्यते पूर्व्वा शूद्रा दानैरुपोषिता ॥ इति ।

पूर्व्वा उत्कृष्टा ।

मार्कण्डेयः ।

द्विजान् कथञ्चिदुच्छिष्टान्नजः स्त्री यदि संस्पृशेत् ।

स्रावोच्छिष्टे त्वहोरात्रमूर्द्धोच्छिष्टे त्र्यहं क्षिपेत् ॥

स्रावोच्छिष्टं मूत्रपुरीषादिना ।

तथाच ।

मृतसूतकसम्पर्कं कृतं दृष्ट्वा कथं भवेत् ।
नास्नानकालमश्नीयाद्भुक्त्वा चान्द्रायणञ्चरेत् ॥

आस्नानकालं चतुर्थदिनपर्य्यन्तम् ।

मनुः ।

अप्रायत्ये समुत्पन्ने मलवद्वाससी यदि ।
अभिषेके तु भुक्तिः स्याद्दिनत्रयमभोजनम् ॥

अप्रायत्ये सूतकाद्यशौचे मलवत् वाससी रजस्वला अभिषेके भुक्तिः सद्यः स्नानेन भोजनं । एतच्च बालापत्याविषयं अशक्ताविषयं वा । अबालापत्यायास्तु दिनत्रयं भोजनाभावः । दिनत्रयमित्यवशिष्टकालोपलक्षणं दर्शितं । स्नानप्रकारस्त्वाह्निके नैमित्तिकस्नानेऽभिहितः । परिवित्तिप्रायश्चित्तानि परिवेदनप्रकरणेऽभिहितानि । वार्द्धुष्यलवणक्रिययोस्तु मनुयोगीश्वरोक्तगोवधप्रायश्चित्तानि जातिशक्त्याद्यपेक्षया योज्यानि ।

## अथ स्त्रीशूद्रविट्क्षत्रवधे ।

अत्र कर्मसाधनत्वादिगुणशालिन्यव्यभिचरितब्राह्मण्यादिस्त्रीवधे हारीतोक्तं द्रष्टव्यम् ।

षड्वर्षाणि राजन्ये प्राकृतं ब्रह्मचर्य्यं त्रीणि वैश्ये अर्द्धं शूद्रे क्षत्रियवद्ब्राह्मणीषु वैश्यवत् क्षत्रियायां शूद्रवच्च वैश्यायां शूद्रां हत्वा नवमासानिति ।

प्राकृतं ब्रह्मचर्य्यं ब्रह्महत्याप्रायश्चित्तं । एतच्च कामतोवधे । अकामतस्त्वर्द्धं । ईषद्व्यभिचारादिदोषदुष्टब्राह्मण्यादिवधे प्रचेत-सोक्तं ।

अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्दं षण्मासान् वा । क्षत्रियां हत्वा षण्मासान्मासत्रयं वा । वैश्यां हत्वा मासत्रयं सार्द्धमासं वा । शूद्रां हत्वा सार्द्धमासं मासार्द्धं द्वाविंशत्यहानि चेति ।

अत्र सर्व्वविकल्पेषु पूर्व्वः पूर्व्वः पक्षः कामकारविषयः । उत्तर उत्तरोऽकामकारविषयः । प्रातिलोम्येन क्षत्रियादिभिर्व्यभि-चारितानां ब्राह्मण्यादीनां वधे मनुयाज्ञवल्क्योक्तगोवध-प्रायश्चित्तानि शक्त्याद्यपेक्षया योज्यानि । अन्त्यजातिप्रसूतानां ब्राह्मण्यादीनां कामतोवधे ब्रह्मगर्भोक्तं ।

प्रतिलोमप्रसूतानां स्त्रीणां मासा वधे स्मृताः ।
अन्तरप्रभवाणाञ्च सूतानाञ्च चतुर्द्दिषट् ॥ इति ।

अस्यार्थः । प्रतिलोमप्रसूतानां स्त्रीणां वधे चतुर्द्दिषण्मासाः स्मृताः । अन्तरप्रभवाणाञ्च सूतादीनाञ्च वधे तथैव प्रसूतादि-वधविषया व्यवस्थोत्तरत्र वक्ष्यते । ब्राह्मणीहनने षण्मासाः क्षत्रियाहनने चत्वारः वैश्याया द्वाविति । शूद्रायाहनने मा-सिकव्रतं कल्प्यं । अकामतः पूर्व्वोक्तविषये याज्ञवल्क्योक्तं ।

दुर्वृत्तब्रह्मनृपविट्शूद्रयोषाः प्रमाप्य तु ।
दृतिन्धनुर्वस्तमविं क्रमाद्दद्याद्विशुद्धये ॥ इति ।

दृतिश्चर्म्ममयं जलभाण्डं, वस्तश्छागः, अविर्मेषः इदञ्चात्यन्त-

दरिद्रस्य तपस्यसमर्थस्य एतद्विपरीतस्य तु शक्त्याद्यपेक्षया दोषापेक्षया च दानतपसी कल्प्ये वैश्याहनने किञ्चिद्देयं वैसिकेन किञ्चिदिति गौतमस्मरणात् ।

अष्टमुष्टिर्भवेत्किञ्चिद्दत्तं वा स्वल्पकं जलम् ।
वैश्यां हत्वा जलं स्पृशेत् ॥

इत्यङ्गिरःस्मरणात् । निर्धनस्य मरुभूमिस्थितस्य अष्टमुष्टिदानं जलदानं वा इतरस्य किञ्चिदधिकं कल्पनम् । एवमन्यान्यपि विषयविशेषेषु योज्यानि ।

## अथ क्षत्रियादिवधे ।

अथ कामतो जातिमात्रक्षत्रियादिवधे याज्ञवल्क्योक्तं ।

वृषभैकसहस्रं गा दद्यात्क्षत्रवधे पुमान् ।
ब्रह्महत्याव्रतं वापि वत्सरत्रितयञ्चरेत् ॥
वैश्यहाब्दं चरेदेतद्दद्याच्चैव शतं गवाम् ।
षण्मासान् शूद्रहाप्येतद्धेनूर्दद्याद्दशाथ वा ॥

एकवृषभाधिकगोसहस्रदानं वा त्र्यब्दं व्रतञ्च क्षत्रवधे अत्यन्तधनाढ्यस्य हन्तुर्वृषभैकसहस्रदानं इतरस्य त्र्यब्दं । एवं वैश्यहननेऽपि व्यवस्था । एतद्ब्रह्महत्याव्रतं धेनूरचिरं प्रसूतावत्सा ।

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।
वृषभैकासहस्रागा दद्यात् शुद्ध्यर्थमात्मनः ।
त्र्यब्दं चरेद्वानियतो जटी ब्रह्महनि व्रतम् ॥

अकामत ईषद्दत्तस्य विट्शूद्रवधे ।

मनुः ।

वैश्येऽ*ष्टमांशो वृत्तस्थे† शूद्रे ज्ञेयोऽस्तु षोड़श । इति ।

द्वादशवार्षिकापेक्षयाष्टमांशः सार्द्धं वर्षं षोड़शांशो नवमासाः । एतद्दिगवलम्बनेन सार्द्धवर्षचतुष्टयमीषद्वृत्तस्थक्षत्रियहनने कल्प्यं । वृत्तस्थस्वरूपञ्च स्मृत्यन्तरे दर्शितम् ।

गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः ।
प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते ॥

कामतस्तु जातिमात्रक्षत्रियादिवधे वृद्धहारीतोक्तं ।

ब्राह्मणः क्षत्रियं हत्वा षड्वर्षाणि व्रतञ्चरेत् ।
वैश्यं हत्वा चरेदेकं व्रतं त्रैवार्षिकं द्विजः ॥
शूद्रं हत्वा चरेद्वर्षं वृषभैकादशाश्च गाः । इति ।

कामतः श्रोत्रियक्षत्रियादिवधेऽपि

स एव ।

तुरीयांशं क्षत्रियस्य वधे ब्रह्महणि व्रतम् ।
अर्द्धं वैश्यवधे कुर्य्यात्तुरीयं वृषलस्य च ॥ इति ।

यत्तु वशिष्ठः । ब्राह्मणो राजन्यं हत्वाष्टौ वर्षाणि व्रतञ्चरेदिति । तत्किञ्चिन्न्यूनगुणहनने नववार्षिकासमर्थस्य वा । एतत्तु क्षत्रियादिहन्तुर्ब्राह्मणस्य । क्षत्रियादिहन्तॄणां क्षत्रियादीनां पादपादहान्या कल्पनीयं । एवमुत्तरत्रापि । अकामतः श्रोत्रिय-

---

* वैश्ये इति पाठान्तरम् ।

† वृत्तस्थे इति पाठान्तरम् ।

यागस्थक्षत्रियादिवधे गौतमोक्तदानतपसोः समुच्चयः। ब्राह्मणस्य राजन्यवधे षाड्वार्षिकं प्राकृतं ब्रह्मचर्य्यं वृषभैकसहस्राश्च गा दद्यात्। वैश्यवधे त्रैवार्षिकं वृषभैकशताश्च गा दद्यात्। शूद्रवधे सांवत्सरिकं वृषभैकादशाश्च गा दद्यादिति। शूद्रस्य श्रोत्रियत्वं द्विजशुश्रूषा पञ्चमहायज्ञमन्त्रपाठश्च। यागस्थत्वं पञ्चमहायज्ञादिकरणं। अत्रैव किञ्चिन्न्यूनगुणस्य क्षत्रियस्य वधे गुणाधिकयोर्वैश्यशूद्रयोश्च वधे शङ्खोक्तं पूर्व्ववदमतिपूर्व्वश्चतुर्षु वर्णेषु प्रमाप्य द्वादश षट् त्रीन् संवत्सरञ्च व्रतान्यादिशेत् तेषामन्ते गोसहस्रं ततोऽर्द्धं अर्द्धञ्च तस्यार्द्धं दद्यात् सर्व्वेषामानुपूर्व्व्येणेति। मूर्द्धावसिक्तादिहनने तु ब्राह्मणापेक्षया न्यूनं क्षत्रियापेक्षया अधिकं इत्येवंप्रकारेण कल्पनीयं। मूर्द्धावसिक्तादिस्वरूपञ्च याज्ञवल्क्येन दर्शितम्।

विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारसवोऽपि च॥
वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥ इति।

विन्नासु विवाहितासु।

अथ वधप्रायश्चित्तप्रसङ्गात्प्रतिलोमवधप्रायश्चित्तम्।

तत्र कामतः सूतादिवधे शङ्खः।

सर्व्वेषामवकृष्टानां वधे प्रत्येकं चान्द्रायणमिति।

अत्र यद्यपि प्रत्येकं चान्द्रायणमिति सामान्येनाभिहितं तथापि सूतापेक्षया वैदेहकादीनां न्यूनत्वात्पादोनादि चान्द्रायणं कल्प्यं।

अतएव निबन्धान्तरेषु सूतवधे सम्पूर्णं चान्द्रायणं वैदेहकस्य वधे पादोनं। चाण्डालवधे अर्द्धं मागधस्य वधे पादोनं। चत्तरि पादद्वयं। आयोगववधेऽप्यर्द्धपादमित्युक्तम्। अकामतो वधेऽप्यङ्गिरसोक्तम्।

सर्व्वान्त्यजानां गमने भोजने सम्प्रमापणे।
पराकेण विशुद्धिः स्यादित्याङ्गिरसभाषितम्॥ इति।

अत्रापि सूतादिषु पूर्व्ववदेव व्यवस्था। आवृत्त्या सूतादिवधे ब्रह्मगर्भोक्तम्।

अन्तरप्रभवाणाञ्च सूतादीनाञ्चतुर्द्दिषट्। इति।

अत्र मास इत्यनुवर्त्तते। आवृत्त्या सूतस्य वधे षण्मासाः। वैदेहकस्य वधे चत्वारः चाण्डालवधे मागधवधे चत्वारः चत्तरि मासद्वयं आयोगववधेऽपि मासद्वयमेव।

सूतादिस्वरूपमाह याज्ञवल्क्यः।

ब्राह्मण्यां चत्रियात्सूतो वैश्याद्वैदेहकस्तथा।
शूद्राज्जातस्तु चाण्डालः सर्व्वधर्म्मवहिष्कृतः॥
चत्रिया मागधं वैश्यात् शूद्रात् चत्तारमेव च।
शूद्रादायोगवो वैश्या जनयामास वै सुतम्॥
माहिष्येण करण्यान्तु रथकारः प्रजायते।
असत्सन्तस्तु* विज्ञेयाः प्रतिलोमानुलोमजाः॥

निन्दितार्थोपजीवने मनुयोगीश्वराद्युक्तोपपातकसामान्यप्राय-

---

* असत्सन्तस्तु इति मिताक्षरायां पाठः।

श्चित्तानि जातिशक्त्याद्यपेक्षया योज्यानि। तथा नास्तिक्ये च योजनप्रकारः। अत्यन्ताभिनिवेशेन बहुकालं नास्तिक्याभ्यासेन शङ्खोक्तं।

> नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी मिथ्याभिशंसी इत्येते पञ्च संवत्सरं ब्राह्मणगृहे भैक्ष्यञ्चरेयुरिति।

अस्मिन्नेव विषये हारीतोक्तमपि। तच्च स्मृत्यन्तरतोऽवगन्तव्यं। अभ्यासे तूपपातकसामान्यप्रायश्चित्तानि। सकृत्करणे तु वशिष्ठोक्तं।

> नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा विरमेत् नास्तिक्यान्नास्तिकवृत्तिस्त्वतिकृच्छ्रमिति।

नास्तिकवृत्तिर्वेदनिन्दोपजीवी।

## अथ व्रतलोपः।

अत्र व्रतलोपानामवकीर्णत्वं। अवकीर्णिस्वरूपं प्रायश्चित्तमाह याज्ञवल्क्यः।

> अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम्।
> गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुध्यतीति॥

निर्ऋतिदेवताकं गर्द्दभमालभ्य यागः कर्त्तव्य इत्यर्थः। पशुयागे यथावपादिहोमाः क्रियन्ते तद्वदत्रापि कर्त्तव्यम्।

अत्र विशेषमाह वशिष्ठः।

> ब्रह्मचारी चेत् स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकाग्नौ

रक्षोदैवतं गर्द्दभं पशुमालभ्य नैर्ऋतं वा चरुं निर्वपेत् । तस्य जुहुयात्कामाय स्वाहा कामकामाय स्वाहा रक्षोदेवताभ्यः स्वाहा इति । पशोरभावे चरुः ।

मनुः ।

अवकीर्णी तु कालेन गर्द्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥
हुत्वाग्नौ विधिवद्धोमानन्ततश्च समित्यृचा ।
वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाहुतीः ॥
कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः ।
अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः ॥

पाकयज्ञविधानेन परिसमूहनपर्य्युक्षणादीतिकर्त्तव्यतया प्रधानाहुतिभ्यः पूर्व्वं वाताय स्वाहेत्यारभ्य वह्नये स्वाहेत्यन्तं चतुर्भिर्मन्त्रैराज्यहोमः । प्रधानहोमानन्तरं समासिञ्चन्तु इत्यृचा आज्यहोमः । इत्यपरार्कें स्मृतिमञ्जर्य्यान्तु प्रधानहोमानन्तरं समासिञ्चन्त्वित्यनेन* सुवर्चलादीनां† सर्पिषाहुतीर्जुहुयात् इति । ततश्च विकल्पः । रात्रिश्चामावास्यायाः कालः । तथाच तैत्तिरीयके यो ब्रह्मचार्य्यं विकिरेदमावास्यायां रात्रामग्निं प्रणीयेत्यादि । इदञ्चाशक्तस्य । पुनरश्रोत्रियब्राह्मणभार्य्यायां श्रोत्रियपत्न्यां वेश्यायाञ्च अवकीर्णित्वे गौतमोक्तं ।

तपःसमुचितो गर्द्दभपशुचर्व्वा गर्द्दभेनावकीर्णी निर्ऋतिं

* इत्यनयर्च्चेति पाठान्तरम् । † वातादीनामिति पाठान्तरम् ।

चतुष्पथे यजेत । तस्याजिनमूर्द्धबालं परिधाय लोहितपात्रः सप्तगृहाद्भैक्षं चरेत्कर्माचक्षाणः संवत्सरेण शुद्धेदिति ।

अत्र त्रिषवणस्नानमेककालभोजनञ्च मनूक्तं द्रष्टव्यं । गौतमेनोक्तेतिकर्त्तव्यतानुवृत्तौ शङ्खलिखितौ ।

गुप्तायां वैश्यायामवकीर्णी संवत्सरं त्रिषवणमनुतिष्ठेत् क्षत्रियायां द्वे वर्षे ब्राह्मण्यां त्रीणि वर्षाणीति ।

एतच्च गुणवत्क्षत्रियपत्नीगमनविषयं शूद्रायान्तु षाण्मासिकं कल्प्यम् ।

ईषदभिचारिणीष्वाङ्गिरसोक्तम् ।

अवकीर्णिनिमित्तन्तु ब्रह्महत्याव्रतञ्चरेत् ।
चीरवासास्तु षण्मासानिति ।

चीरं वस्त्रखण्डः । अत्यन्तव्यभिचरितासु शङ्खलिखितोक्तं ।

वृषल्यामवकीर्णः सचेलस्नानमुदकुम्भं दद्याद्ब्राह्मणाय वैश्यायाञ्चतुर्थकालाहारी ब्राह्मणान् भोजयेत् यवसभारञ्च गोभ्यो दद्यात् क्षत्रियायां त्रिरात्रमुपोषितो घृतपात्रं दद्यात् ब्राह्मण्यां षड्रात्रमुपोषितो गां दद्यात् । गोष्ववकीर्णः प्राजापत्यञ्चरेत् षण्ढायामवकीर्णः पलालभारं सीसमासकञ्च दद्यात् इति ।

एतच्च प्रायश्चित्तं द्विजातिमात्रविषयम् । यदाह शाण्डिल्यः ।

अवकीर्णी द्विजो राजा वैश्यश्चापि खरेण तु ।

इष्ट्वा भैक्षाशिनो नित्यं शुद्ध्यन्त्यब्दात्समाहिताः ॥ इति ।
यः स्त्रीसम्भोगमन्तरेण कामतो विसृजति दिवास्वापे वा यस्य प्रायश्चित्ताङ्गभूतब्रह्मचर्य्यवानवकीर्णी वा तस्य गर्द्दभपशोः उपलम्भश्च चरुर्वा यदाह

वशिष्ठः ।

एतदेव रेतसः प्रयत्नोत्सर्गे दिवास्वप्ने व्रतारम्भे चैव-मिति ।

एतदेव यागमात्रमेव ।

रात्रिस्वप्ने स्खलने तु मनुः ।

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥

वानप्रस्थादिविशेषमाह

शाण्डिल्यः ।

वानप्रस्थो यतिश्चैव खण्डने सति कामतः ।
पराकत्रयसंयुक्तमवकीर्णिव्रतञ्चरेत् ॥ इति ।

खण्डने ब्रह्मचर्य्यखण्डने । अवकीर्णिप्रसङ्गादन्यदपि किञ्चिदु-च्यते ।

संवर्त्तः ।

सन्न्यस्य दुर्म्मतिः कश्चित्प्रत्यापत्तिं व्रजेद्यदि ।
स कुर्य्यात्कृच्छ्रमश्रान्तः षण्मासान् प्रत्यनन्तरम् ॥ इति ।

षाण्मासिकाशक्तौ चान्द्रायणानि प्रत्यापत्तिं गार्हस्थ्यपरिग्रहः ।

पराशरः ।

य: प्रत्यवसितो विप्र: प्रव्रज्याया विनिर्गत: ।
अनाशकनिवृत्तश्च गार्हस्थ्यञ्चेच्चिकीर्षति ।
स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ॥ इति ।

षाण्मासिकाशक्तौ चान्द्रायणानि । तदशक्तौ कृच्छ्राणि । यस्तु मरणसन्न्यासी परमहंसाख्य: ।

तथाच प्रजापति: ।

तत्र परमहंसो नाम नदीपुलिने श्मशानदेशे तृणरहित-शाद्वलेषु शयान: सङ्कुसकचीरकौपीनकषायवान् यस्तु प्राणान् परित्यजति स परमहंसो नाम इति ।

अस्य मरणान्निवृत्तस्य यमोक्तं ।

जलाग्न्युद्बन्धनभ्रष्टा: प्रव्रज्यानशनच्युता: ।
विषप्रपतनप्रायशस्त्रघातहताश्च ये ॥
न वै ते प्रत्यवसिता: सर्व्वलोकवहिष्कृता: ।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन च* ॥ इति ।

शक्त्यपेक्षया चान्द्रायणं तप्तकृच्छ्रद्वयं वा । शस्त्रघातेति य: शस्त्रेणात्मानं व्यापादयति स चेन्मृतस्तदा तत्पुत्रादिर्यदि जीवति तदा तेनैव कर्त्तव्यमित्यर्थ: । एतच्च तत्तज्जात्युचितप्रायश्चित्तेन समुच्चीयते । जातिशक्त्याद्यपेक्षया एवं शास्त्रविहितमार्ग-

---

* जलाग्न्युद्बन्धनभ्रष्टा: प्रव्रज्यानशनच्युता: । विषप्रपतनप्रायशस्त्रघातच्युताश्च ये ॥ सर्व्वे ते प्रत्यवसिता: सर्व्वधर्मवहिष्कृता: । चान्द्रायणेन शुद्धेरन्तप्तकृच्छ्रद्वयेन वा ॥ इति शूलपाणिसम्मत: पाठ: ।

णात्मत्यागे द्रष्टव्यं। अत्राशक्तौ वशिष्ठोक्तं द्वादशरात्रं। आत्म-हननाध्यवसाये त्रिरात्रं। जीवन्नात्मत्यागी कृच्छ्रं द्वादशरात्रं चरेत्त्रिरात्रञ्चोपवसेदिति।

आपस्तम्बः।

चितिभ्रष्टा तु या नारी मोहाद्विचलिता ततः।
प्राजापत्येन शुद्धेत्तु तस्माद्वै पापकर्मणः॥

भर्त्रनुगमने चितिभ्रष्टेत्यर्थः। प्रासङ्गिकं परिसमाप्य ब्रह्म-चारिविषये किञ्चिदुच्यते। गुरुतरकार्य्यव्यग्रतया भैक्षाग्नि-कार्य्ययोः प्रत्येकं सप्तरात्रमकरणे याज्ञवल्क्योक्तम्।

भैक्षाग्निकार्य्यं त्यक्ता तु सप्तरात्रमनातुरः।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम्॥
उपस्थानं ततः कुर्य्यात्समासिञ्चन्त्वनेन तु।

कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा। कामापन्न-श्चाव विपन्नोऽस्मि कामकामाय स्वाहेति होममन्त्रौ। द्रव्यमाज्यं। समासिञ्चन्तु मरुतः समिन्द्रः सेन्द्रः बृहस्पतिः। सम्मायमग्निश्च सिञ्चन्तां यशसा ब्रह्मवर्च्चसे नेत्युपस्थानमन्त्रः। यदा तु कार्य्य-वैयग्राभावेऽपि भिक्षाचरणमग्निकार्य्यं वा त्यजति तदा मनूक्तम्।

अनातुरः सप्तरात्रमवकीर्णव्रतञ्चरेत्। इति।

यदा त्वेकाहो वा त्यजति तदा हारीतोक्तं।

ब्रह्मचारी सन्ध्यामुपास्योपस्थितः सावित्र्याः सहस्रेणा-दित्यमुपतिष्ठते। उपस्थितस्याग्निकार्य्यं व्रातपत्या

हुत्वातीतं सन्ध्याद्योपस्थितं कुर्य्यात्। अहन्यतीते पुनर्मनोव्रातपतिभ्यामिति।

उपस्थितः स्थितः अथवा कृतसूर्य्योपस्थानः। अग्ने व्रतपते व्रतं चरिष्यामीति। व्रातपती अतीतमग्निकार्य्यादिकमुपस्थितं क्रमप्राप्तमथवा सूर्य्योपस्थानं अग्रे अहन्यतीते एकदिनात्यये पुनर्मतः पुनर्वायुमागादित्यादिमन्त्रः। दिनद्वयादिपरित्यागे त्वेतदेव द्विगुणं त्रिगुणं सप्तरात्रपर्य्यन्तं कल्प्यं। सप्तरात्रानन्तरमवकीर्णिव्रतान्येव जातिशक्त्याद्यपेक्षया कल्प्यानि। तानि च गुरूणि लघूनि च पूर्व्वंदर्शितानि। यज्ञोपवीतादिनाशेऽपि हारीतः मनोव्रातपतीभिः मेखलादण्डाजिनयज्ञोपवीतावपातनाशेषु चतस्र आज्याहुतीर्हुत्वा पुनर्यथार्थं प्रतीयादसङ्कल्पद्रव्यभोजनेऽभ्युदितेऽभिनिर्मुक्ते वान्ते दिवास्वप्ने स्कन्दने नग्नं श्मशानमाक्रम्य द्व्यादींश्चाक्रम्य पूज्यातिक्रमे चैताभिरेव जुहुयादग्निमिन्धने स्थावरसरीसृपादीनां वधे यद्देवा देवहेलनमिति* कूष्माण्डीभिराज्यं जुहुयान्मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेदिति। मनोव्रातपतीभिरिति मनोज्योतिरित्यादि मनो†लिङ्गादिभिस्त्वमग्ने व्रते पश्यसीत्यादि व्रतलिङ्गादिभिर्यथार्थं समन्त्रकमभ्युदितेऽनिर्मुक्ते स्वप्ने यस्मिन्नस्तमेति स्वप्ने यस्मिन्नुदेति च।

---

* देवहेडनमन्त्रः ३४० पृष्ठे द्रष्टव्यम्। † मनोज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिदं तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वे देवा स इह मादयन्तामोम्प्रतिष्ठ:।

अंशुमानभिनिर्मुक्ताऽभ्युदितौ तौ यथाक्रमम् ॥ इत्यमरः । अग्नि-समिन्धने

याज्ञवल्क्यः ।

यन्मेऽद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत् ।
स्तनान्तरं भ्रुवोर्मध्यं तेनानामिकया स्पृशेत् ॥

यन्मेऽद्य रेतः पृथिवी पुनर्मामैत्विन्द्रियमिति द्वौ मन्त्रौ । तेन रेतसा अनामिकया रेतः स्पृष्ट्वा स्तनान्तरादिकं स्पृशेदित्यर्थः । केचन तेनेत्यङ्गुष्ठेनेति कथयन्ति अङ्गुष्ठानामिकाभ्यां स्तनान्तरादिकं स्पृशेदिति ।

मरीचिः ।

ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा ।
गायत्र्यष्टसहस्रेण प्राणायामेन शुध्यति ॥

अत्र यज्ञोपवीतादिनाशे यानि प्रायश्चित्तानि तानि सिद्धानि गृहस्थादीनामपि भवन्ति ।

शशादिमांसभक्षणे वशिष्ठः ।

ब्रह्मचारी चेन्मांसमश्नीयादुच्छिष्टभोजनीयं कृच्छ्रं द्वादशरात्रं चरित्वा व्रतं शेषं समापयेत्स चेद्गाधीयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्व्वमश्नीयादिति ।

मांसग्रहणं मधुन उपलक्षणार्थम् ।

तथाच याज्ञवल्क्यः ।

मधुमांसाशने कार्य्यः कृच्छ्रः शेषव्रतानि च ।
प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति ॥

कृच्छ्रत्रयं गुरुः कुर्य्याम्म्रियते प्रहितो यदि । इति ।
प्रायश्चित्तानन्तरं ब्रह्मचर्य्यव्रतान्यवशिष्टानि समापयेदित्यर्थः । चौरादिसङ्कुलदेशं प्रहितः । यत्स्वरूपतो भक्ष्यमांसादि तदेव गुरोरुच्छिष्टं कृत्वा औषधार्थं भक्षयेदित्यर्थः । सर्व्वं प्राश्नीयादिति सर्व्वग्रहणमभक्ष्यलशुनादिसङ्ग्रहार्थम् । एवंविधस्थले लशुनादिभक्षणानन्तरम् ।

बौधायनः ।

येनेच्छति विचिकित्सितुं स यदागदी भवति तदोत्थायादित्यमुपतिष्ठते हंसः शुचिषदिति* ।

वशिष्ठः ।

अकामतोपनतं मधु वाजसनेयकेन दुष्यतीति ।

अथ सुतविक्रये य एकपुत्रस्तं पुत्रमनापदि कामतो विक्रीणीते तदा पैठीनस्युक्तं ।

आरामतड़ागोदपानपुष्करिणीसुतासुतविक्रये† त्रिषवणस्नायी अधःशायी चतुर्थकालाहारः संवत्सरेण पूतो भवतीति ।

अकामतस्तदर्द्धं कल्पनीयम् । अनापद्यनेकपुत्रस्य चतुर्व्विंशतिमतोक्तम् ।

नारीणां विक्रयङ्कृत्वा चरेच्चान्द्रायणं व्रतम् ।

---

* हंसः शुचिषद्वसुरन्तरीक्षसद्धोता वेदिषदतिथिर्दुरोणसत् नृषद्वर सदृत सद्व्योम सदब्जा गोजा ऋतजा अद्रिजा ऋतं । † आरामतड़ागोदपानपुष्करिणीपुण्यसुकृतविक्रयेषु इति शूलपाणिसम्मतः पाठः । पुष्करसेतुसुतविक्रयं कृत्वा इति मिताक्षरायां पाठः ।

द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः॥ इति।

एतत्कामकारे। अकामकारे तु पराशरोक्तम्।

विक्रयी कन्यकानाञ्च कृच्छ्रं सान्तपनञ्चरेत्। इति।

अस्मिन्नेव विषये शङ्खः।

देवगृहप्रतिश्रयोद्यानारामसभाप्रपातड़ागपुण्यसेतु*-

विक्रयङ्कृत्वा कृच्छ्रञ्चरेत्। इति।

मनुयोगीश्वराद्युक्तान्युपपातकसामान्यप्रायश्चित्तानि तु जातिशक्त्याद्यपेक्षया योज्यानि। धान्यकुप्यपशुस्तेयस्य स्तेयप्रकरणे अभिहितमिति।

## अथ अयाज्ययाजने।

मनुः।

व्रात्यानां याजनङ्कृत्वा परेषामन्त्यकर्म्म च।

अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति॥

अन्त्यकर्म्म श्माशानिकं कर्म्म परोऽसपिण्डः शूद्रो वा असपिण्डोऽत्यन्ताभ्यासे शूद्रे सत्सत्करणेऽपि। अनभिचारिणि यस्याभिचारः, अहीनं यागविशेषस्तस्य। यत्तु पतितसावित्रीकान्नोपनयेत् नाध्यापयेत्। यश्च तानुपनयेत् अध्यापयेत् याजयेद्वा स उद्दालकव्रतञ्चरेदिति शातातपोक्तं तत्कामकारविषयम्।

---

* प्रतिश्रय आश्रयावासस्थानं उद्यानं क्षुद्रगृहवाटिका आरामः वृहदुपवनं वस्तुत उद्यानागम इत्येव पाठः साधुः आगमो वेदः तथाच चान्द्रायणं प्रकुर्व्वीत एकाहादिदविक्रये इति।

शूद्रायाज्ययाजने तु कामतो मनूक्तं, त्रैमासिकमकामतो योगीश्वरोक्तं मासव्रतादि शक्त्याद्यपेक्षया योज्यं कामतः शूद्रयाजनाभ्यासे प्रचेतसोक्तमेतं पञ्च तपांश्चावकाशजलशयनान्यनुतिष्ठेयुः क्रमेण ग्रीष्मवर्षाहेमन्तेषु मासं गोमूत्रं यावकमश्नीयुरिति। एते शूद्रयाजकाः। कामतोऽत्यन्ताभ्यासे गौतमेनोक्तं।

प्रतिषिद्धमन्त्रप्रयोगे सहस्रवाक् चेदिति*।

अत्र संवत्सरं प्राकृतब्रह्मचर्यं प्राकृतं प्रसिद्धम्। शूद्रमहत्या अप्रशस्तद्विजातिर्वा तस्य मन्त्रप्रयोगोऽध्यापनं याजनं वा स चेन्मन्त्रप्रयोगः सहस्रवाक् अत्यन्तमधिको बहुर्बहुर्भवतीति। सहस्रशब्दो बह्वर्थः। यानि लघूनि प्रायश्चित्तानि कृत्स्नद्रव्यपरित्यागपूर्वकप्राणायामसहस्रेत्यादीनि तान्यशक्तविषये योज्यानि।

मनुः।

शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः।
संवत्सरं यवाहारस्तत्पापमवसेधति ॥

भयत्राणार्थं प्रायश्चित्तार्थं वा समागतः शरणागतः तं शक्तश्चेत् परित्यजति। वेदविप्लावनं चाण्डालादिश्रुतिपथे अनध्यायेषु च पाठः। एतदपि गौतमीयेन समानविषयम्। कामतः सकृत्पतितादिश्रावणे वशिष्ठोक्तम्।

पतितचाण्डालशवश्रावणे त्रिरात्रं वाग्यता अनश्नन्त

---

* इति तु संहितासम्मतः पाठः। मिताचरायान्तु सहस्रवागुपतिष्ठेदिति पाठः।

आसीरन् सहस्रपरमं वा तदभ्यस्यन्तः पूता भवन्तीति। अवश्रावणं तत्सन्निधिपाठः। अकामतः षट्त्रिंशन्मतोक्त-चाण्डालश्रोत्रावकाशे श्रुतिस्मृतिपाठे एकरात्रमभोजनमिति।

तथा।

सर्पस्य नकुलस्यापि अजमार्जारयोस्तथा।
मूषिकस्य तथोष्ट्रस्य मण्डूकस्य च योषितः॥
पुष्पस्यैव तरीश्चापि शुनोऽश्वस्य खरस्य च।
अन्तरागमने सद्यः प्रायश्चित्तमिदं शृणु॥
त्रिरात्रमुपवासश्च त्रिरात्रश्चाभिषेचनम्।
ग्रामान्तरं वा गन्तव्यं जानुभ्यां नात्र संशयः॥ इति।

मातृपितृसुतत्यागतड़ागारामविक्रयेषूपपातकसाधारणप्रायश्चित्तानि जातिशक्त्याद्यपेक्षया योज्यानि।

## अथ कन्यादूषणे।

तत्र वर्णविषये त्रैमासिक द्वैमासिक चान्द्रायणाभिजात्याद्यपेक्षया योज्यानि। आनुलोम्येन मासिकपयोऽशनं प्राजापत्यं वा पूर्ववद्योज्यं क्षत्रियवैश्ययोः प्रातिलोम्ये मासिकं पयोऽशनं प्राजापत्यं वा पूर्ववद्योज्यं क्षत्रियवैश्ययोः प्रातिलोम्ये कन्यादूषणे हारीतोक्तम्।

कन्यादूषी सोमविक्रयी वृषलीपतिः कौमारदारत्यागी असुरामद्यपः शूद्रयाजको गुरोः प्रति[illegible]न्ता नास्तिक-

वृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभि-
शंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रति-
रूपकवृत्तिश्चेति पञ्चतपाश्चावकाश*जलशयनान्यनुति-
ष्ठेयुः ग्रीष्मवर्षाहेमन्तेषु मासमर्गामूत्रयावकमश्नीयुरिति।
शङ्कोताऽन्दकृच्छ्रमपि अस्मिन्नेव विषये। प्रातिलोम्येन दूषणे
शूद्रस्य वध एव परिविन्दकयाजनं कन्यादानं तस्यैव कौटिल्यं
व्रतलोपनम्।

आत्मनोऽर्थेऽक्रियारम्भो मद्यपस्त्रीनिषेवनम्।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च॥

इत्यादिषु मनुयाज्ञवल्क्याद्युक्तोपपातकसाधारणप्रायश्चित्तानि
पूर्ववद्योज्यानि। अत्र स्वाध्यायत्यागः सच्छास्त्रश्रवणकुटुम्ब-
पोषणव्यग्रतया। प्रकारान्तरेण त्यागे ब्रह्महत्यासमत्वम्।
अग्नित्यागे तु अनाहिताग्निप्रकरणे अभिहितम्।

## अथ द्रुमच्छेदे।

मनुः।

फलदानान्तु वृक्षाणां छेदने जाप्यमृक्शतम्।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम्॥

आहरणीयपञ्चमहायज्ञाद्यदृष्टार्थत्वे तु न दोषः। दृष्टार्थेष्वपि

---

* वर्षासु अभस्य मेघस्यावकाशः अनावृतस्थले वासः।

क्वचिदभ्यनुज्ञानं दर्शयति ।

वशिष्ठः ।

फलपुष्पोपगान् पादपान् न हिंस्यात्कर्षणकरणार्थञ्चोपहन्यात् । इति ।

शूद्रादीनान्तु जपानधिकाराद्दिरात्रादिकं कल्पनीयम् । अभ्यासापेक्षया उपपातकसाधारणप्रायश्चित्तान्यपि योज्यानि । स्त्रीहिंस्त्रौषधिजीविनं हिंस्त्रमन्त्रविधानञ्च व्यसनानीत्येषु पूर्व्ववदुपपातकसाधारणप्रायश्चित्तान्यपि योज्यानि ।

व्यसनाभ्यासे बौधायनोक्तम् ।

अथाशौचिकरणानि द्यूतमभिचारो अनाहिताग्नेः उञ्छवृत्तिः समावृत्तस्य भैक्ष्यचर्य्या तस्य गुरुकुले वास ऊर्द्धं चतुर्भ्यो मासेभ्यो यश्च तमध्यापयति । नक्षत्रनिर्द्देशनञ्चेति । द्वादशमासान्द्वादशार्द्धमासान् द्वादशवर्षान् द्वादशद्वादशाहान् द्वादशषड़हान् द्वादशत्र्यहांस्त्र्यहमेकाहमित्यशुचिकरनिर्द्देशः । इति ।

आत्मविक्रयशूद्रसेवयोः साधारणप्रायश्चित्तानि पूर्व्ववद्योज्यानि ।

बहुकालशूद्रसेवायान्तु बौधायनोक्तम् ।

समुद्रयानं ब्राह्मणस्य न्यासापहरणं सर्व्वपण्यव्यवहरणं भूम्यनृतं शूद्रसेवा यश्च शूद्रायामभिजायते तदपत्यञ्च भवति तेषान्तु निर्द्देशः चतुर्थकालमितभोजिनः* एभि-

---

* मिताक्षरायां मितभोजना: स्युरिति पाठः ।

रपोभुरपेयुः । सवनानुकल्पं स्थानासनाभ्यां विहरन्त: एते त्रिभिर्वर्षैस्तपघ्नन्ति पापमिति ।

हीनसख्येऽपि सामान्यप्रायश्चित्तानि योज्यानि । हीनयोनिषेवनं द्विविधम् अनूढसवर्णदारस्य केवलहीनवर्णोपयमः साधारणस्त्रीगमनञ्च ।

अत्र प्रथमेऽज्ञानकृते शातातपोक्तम् ।

ब्राह्मणो राजन्यापूर्व्वी कृच्छ्रं द्वादशरात्रञ्चरित्वा निविशेत्ताञ्चोपयच्छेदिति । वैश्यापूर्व्वी तप्तकृच्छ्रं शूद्रापूर्व्वी कृच्छ्रातिकृच्छ्रं । राजन्यश्चेद्वैश्यापूर्व्वी कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत्ताञ्चैवोपयच्छेत् शूद्रापूर्व्वी तु अतिकृच्छ्रं वैश्यश्चेच्छूद्रापूर्व्वी कृच्छ्रं द्वादशरात्रं चरित्वा ताञ्चैवोपयच्छेदिति ।

राजन्यापूर्व्वी सवर्णस्त्रीपरिणयनमन्तरेण क्षत्रियजातिकन्यापरिणयनवानित्यर्थः । प्रायश्चित्तानन्तरं सवर्णामुद्वाह्य पश्चादनुलोमेन विवाहः कर्त्तव्य इत्यर्थः । कामतस्तूपपातकसामान्यप्रायश्चित्तानि पूर्व्ववद्योज्यानि । पशुवेश्यागमने च कामतो यमोक्तं द्रष्टव्यम् ।

वेश्यागमनजं पापं व्यपोहन्ति द्विजातयः ।
पीत्वा सकृत्तु सन्तप्तं सप्तरात्रं कुशोदकम् ॥ इति ।

अकामतः संवर्त्तोक्तम् ।

पशुवेश्याभिगमने प्राजापत्यं विधीयते ।

इति सामान्यप्रायश्चित्तान्यपि ज्ञानाभ्यासापेक्षया योज्यानि ।

अत्र विशेषमाह लौकाचिः* ।

अभ्यासे द्विगुणावृत्तिर्मासादर्व्वाग्विधीयते ।
ततो मासगुणावृत्तिर्यावत्संवत्सरं भवेत् ॥
ततः संवत्सरगुणा यावत्पापं समाचरेत् । इति ।

एतद्बुद्धिपूर्व्वाभ्यासविषयम् ।

चतुर्व्विंशतिमते ।

सकृत्कृते तु यत्प्रोक्तं द्विगुणं तत्त्रिभिर्दिनैः ।
मासात्पञ्चगुणम्प्रोक्तं षण्मासाद्दशधा भवेत् ॥
संवत्सरात्पञ्चदश त्यूर्द्धाद्विंशगुणं भवेत् ।
ततोऽप्येवं प्रकल्प्यं स्याच्छातातपवचो यथा ॥ इति ।

एतदपि मतिपूर्व्वाभ्यासे एवं यत्रोपपातकादिष्वनुक्तप्रायश्चित्तेषु अभ्यासस्थले योज्यानि । जन्मप्रभृति साधारणस्त्रीदुष्टिषु अनवच्छिन्नाभ्यासे यमोक्तं गुरुतल्पव्रतं कुर्य्यात् । आश्रमस्वीकारमन्तरे सत्यनाश्रमवासे तु उपपातकसाधारणप्रायश्चित्तानि पूर्व्ववद्योज्यानि ।

असम्भवे तु हारीतोक्तम् ।

अनाश्रमी संवत्सरे प्राजापत्यं कृच्छ्रं चरित्वा आश्रममुपेयाद्द्वितीयेऽतिकृच्छ्रं तृतीये कृच्छ्रातिकृच्छ्रमत ऊर्द्धं चान्द्रायणमिति ।

परान्नपरिपुष्टता असच्छास्त्राभिगमनं कामकारेष्वधिकारिता

---

* लौगाक्षिरिति पश्चिमदेशीयाः पठन्ति ।

भार्य्याया विक्रयश्चैषामित्येषु साधारणप्रायश्चित्तानि पूर्व्ववद्यो-
ज्यानि। इत्युपपातकप्रायश्चित्तानि।

अथ भार्य्याविक्रयश्चैषामित्यत्र च शब्दोपात्तानामसत्प्रति-
ग्रहादीनां जातिभ्रंशकरादीनाञ्च प्रायश्चित्तानि। जातिभ्रंश-
करादिस्वरूपाणि मनुर्नाक्तानि।

ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः।
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम्॥
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्॥
कृमिकीटवयोहत्या मद्यानुगतभोजनम्।
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम्॥ इति।

वृद्धविष्णुः।

अतोऽन्यत्प्रकीर्णकमिति।

अतोऽन्यन्महापातकादि मलावहान्तादन्यत्। अत्रासत्प्रतिग्रहे
प्रायश्चित्तमभिधीयते। प्रतिग्रहस्यासत्त्वं त्रेधा दातृवशाद्देश-
कालवशाद्द्रव्यवशाच्च तद्यथा म्लेच्छचाण्डालपतितादेः
प्रतिग्रहे कुरुक्षेत्रादिदेशे उपरागादिकाले द्रव्यस्य सुरामेषी
मृतशय्योभयमुख्यादेः सङ्करभेदाद्द्रव्यभेदादपि त्रैविध्यम्।
तथा देवलः।

नवोत्तमानि चत्वारि मध्यमानि विधानतः।

अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥
अन्नं मधु दधि त्राणं गोभूरुक्माश्वहस्तिनः* ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥
विद्याद्याच्छादनं वासः परिभोगो धनानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥
उपानत्प्रेङ्खयानानि छत्रपात्रासनानि च ।
दीपकाष्ठफलादीनि चमसं बहुवार्षिकम् ॥
बहुत्वादर्थजातानां संख्या दैशेषु नेष्यते ।
अधमान्यवशिष्टानि सर्व्वदानान्यतो विदुः ॥

अतिदानं छान्दोग्येऽभिहितम् ।

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।

मनुः ।

यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेन शुद्ध्यन्ति जप्येन तपसैव तु ॥

जपित्वा त्रीणि सावित्र्याः सहस्राणीति ।

याज्ञवल्क्यः ।

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः ।
गायत्रीजप्यनिरतः शुद्ध्यतेऽसत्प्रतिग्रहात् ॥

प्रतिदिनं सहस्रत्रयं गायत्र्या जपः कर्त्तव्य इत्यर्थः । एतस्य

---

* क्वचित् क्वचित् पुस्तके रुक्मांश्च इति पाठो दृश्यते तन्न शोभनं तथात्वे नवमसंख्यानुपपत्तेः ।

दात्वनिन्दितद्रव्यस्य प्रतिग्रहे प्रायश्चित्तस्य गुरुत्वात् ।

चतुर्व्विंशतिमते ।

भिक्षामात्रं गृहीत्वा तु पुण्यं मन्त्रमुदीरयेत् ।
प्रतिग्रहेषु सर्व्वेषु पक्षांशं परिकल्पयेत् ॥
जपहोमादिकं कुर्य्यात्कृत्वा राज्ञः प्रतिग्रहे ।

परिकल्पयेद्द्विजेभ्यो दद्याद्यदा त्वनिन्दितेभ्यो निन्दितं द्रव्यं गृह्णाति निन्दितेभ्यो वानिन्दितं द्रव्यं गृह्णाति निन्दितेभ्यो वा-निन्दितं भूम्यादिकम् ।

चतुर्व्विंशतिमतोक्तम् ।

पवित्रेष्ट्या विशुध्यन्ति सर्व्वे घोराः प्रतिग्रहाः ।
ऐन्दवं वेदमृगा कदाचिन्मित्रविन्दया ॥
ऐन्दवेन मृगारेष्ट्या कदाचिन्मित्रविन्दया ।
देव्या लक्षजपेनैव शुद्ध्यन्ते दुष्प्रतिग्रहाः ॥ इति ।

देवी गायत्री । अत्रैवाभ्यासे चाण्डालादेः कुरुक्षेत्रे उपरागादौ । कृष्णाजिनादिप्रतिग्रहे वृद्धहारीतोक्तम् ।

राज्ञः प्रतिग्रहङ्कृत्वा मासमप्सु सदा वसेत् ।
षष्ठे काले पयोभक्षः पूर्णे मासि प्रमुच्यते ॥
तर्पयित्वा द्विजान् कामैः सततं नियतव्रतः । इति ।

हारीतः ।

मणिवासो गवादीनां प्रतिग्रहे सावित्र्याः सहस्रं जपेत्*

---

* गायत्र्यष्टसहस्रं जपेदिति मिताक्षरायां पाठः ।

पञ्च मध्यमे दशोत्तमे द्वादशरात्रं पयोव्रतम् ।

शतसहस्रमिति प्रतिग्रहेष्विति । प्रतिग्राह्यद्रव्यमध्यमत्वेन प्रतिग्रहस्य मध्यमत्वमेवमुत्तरत्वञ्च । मध्यमे प्रतिग्रहे पञ्च सहस्राणि उत्तमे दश एवमन्यान्यपि जातिशक्तिदेशकालाद्यपेक्षया योज्यानि ।

अथ जातिदुष्टच्छत्राकादिभक्षणे ।

तत्र मनुः ।

छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेत् द्विजः ॥
अमत्यैतानि षड्जग्ध्वा कृच्छ्रं सान्तपनञ्चरेत् ।
यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥

कामतोऽभ्यासे पातित्यं सुरापानसमत्वम् । अनभ्यासे तु चान्द्रायणम् । अतएव चान्द्रायणानुवृत्तौ

विष्णुः ।

लशुन पलाण्डु गृञ्जन विड्वराहश्व ग्रामकुक्कुट नरगोमांसभक्षणे च सर्व्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्य्यात् । इति ।

अत्रापि ब्राह्मणापेक्षया क्षत्रियादिषु पादपादोनं कल्प्यम् । शेषेषु छत्राकादिषड्व्यतिरिक्तेषु वार्त्ताकादिषु । एतच्चाकामतः सकृद्भक्षणे । अभ्यासे त्रिरात्रादि कल्प्यम् । कामतः सकृद्भक्षणे ।

मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ।

इति योगीश्वरोक्तं चिरात्रोक्तम् ।

अत्रैवाभ्यासे व्रतयमोक्तम् ।

खट्वा वार्त्ताकु कुम्भीक वृचनप्रभवांस्तथा ।
भूतृणं शिग्रुकञ्चैव खुखगड़ं कवकानि च ॥
एतेषां भक्षणङ्कृत्वा प्राजापत्यं चरेद्द्विजः । इति ।

खट्वा पक्षिविशेषः शाकविशेषो वा । वार्त्ताकं श्वेतं श्वेतवृन्ताकमिति देवलेन स्मरणात् । वृचनप्रभवा लोहिताः । लोहितान् वृक्षनिर्यासानिति स्मरणात् । तथाच शिग्रुरिति केचन । कवकं कणसर्षपशाकं तद्विशेषः कुरवुगडम् ।

यमः ।

तगडुलीयक कुम्भीक वृचनप्रभवांस्तथा ।
नालिकां नालिकेरीञ्च श्लेष्मान्तकफलानि च ।
एतेषां भक्षणङ्कृत्वा प्राजापत्यं चरेद्द्विजः ॥

एतदपि पूर्व्वोक्तविषये । नालिका नालिकेरी च शाके । नीलीभक्षणे च

आपस्तम्बः ।

भक्षयेद्यदि नीलीन्तु प्रमादाद्ब्राह्मणः क्वचित् ।
चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥ इति ।

कामतोऽभ्यासे तु द्विगुणादिकं कल्प्यम् । बलात्कारेण भक्षणे सुमन्तूक्तम् ।

लशुनपलाण्डुगृञ्जनभक्षणे सावित्र्यष्टसहस्रेण मूर्द्धि सम्पातयेदुपवासश्चेति ।

सम्पात उदविन्दुः कुशैः सम्मार्ज्जनं कुर्य्यादित्यर्थः। एवमन्येष्वप्य-भक्ष्येषु एकाहद्विरात्रादीनि यथायोग्यं योज्यानि ।

## अथ सन्धिन्यादिक्षीरपाने ।

अकामतः सक्कत्पाने मनूक्त एकाहोपवासः ।

अनिर्द्दशायाः गोः क्षीरमौष्ट्रमैकशफन्तथा ।

आविकं सन्धिनीक्षीरं सर्व्वसूक्तानि चैव हि ॥

दधि भक्ष्यञ्च शुक्तेषु* सर्व्वञ्च दधिसम्भवमित्यादि पठित्वा शेषेषूपवसेदह इत्युक्तत्वात् । कामतस्तु त्रिरात्रं याज्ञवल्क्योक्तं कामतोऽभ्यासे पैठीनस्युक्तं षड्रात्रं शङ्खोक्तं सप्तरात्रं शक्त्यपेक्षया। कामतोऽत्यन्ताभ्यासे शङ्खोक्तमेव पञ्चव्रतम् ।

यानि च ।

क्षत्रियश्चापि वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः ।

यः पिबेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत् ॥

इत्यादीनि यथायोग्यं योज्यानि । शूद्रस्य तु कपिलादुग्धपानं पातकमध्ये परिगणितमिति तत्प्रायश्चित्तानि शक्त्याद्यपेक्षया योज्यानि ।

## अथ मांसभक्षणे ।

तच्च मांसं द्विविधं अभक्ष्यं स्वभावदुष्टमसंस्कारदुष्टञ्च । तत्र स्वभावदुष्टं मनुक्तच्छागादि । अभक्ष्याणि द्विजातीनामित्युप-

---

* स्वभावतोमधुरं कालवशेन अम्लत्वं प्राप्तं शुक्तं ।

क्रम्य अनुपाकृतमांसानि देवानामिति मनुना अनुपाकृतच्छागादिमांसस्य अभक्ष्यत्वमुक्तम्। एवंविधस्याकामतः सकृद्भक्षणे श्रेपिघूपवसेदिति मनूक्तम्। कामतस्तु सोपवासस्त्र्यहं वसेदिति योगीश्वरोक्तम्।

अत्रैवाभ्यासेऽपि।

जग्ध्वा मांसमभक्ष्यन्तु सप्तरात्रान् यवान् पिबेत्। इति तेनैवोक्तं द्रष्टव्यम्।

वराहैकशफानाञ्च काककुक्कुटयोस्तथा।
क्रव्यानाञ्चैव सर्व्वेषामभक्ष्या ये च कीर्त्तिताः॥
मांसमूत्रपुरीषाणि प्राश्य गोमूत्रमेव च।
श्वगोमायुकपीनाञ्च तप्तकृच्छ्रं विधीयते॥
उपोष्य वा द्वादशाहं कुष्माण्डैर्जुहुयाद्घृतम्। इति।

कामतस्तप्तकृच्छ्रः। अभ्यासे कुष्माण्डसहितः पराकः। कुष्माण्डमन्त्राः कुष्माण्ड इत्यभिधीयते। अथवाकामतस्तप्तकृच्छ्रः कामतः कुष्माण्डसहितः पराकः। यत्तु शातातपेन गोमांसभक्षणे चान्द्रायणमित्युक्तं तत् प्रक्तविषयम्। एवमुच्चावचादिविषयविशेषे योज्यानि।

कामतोऽभ्यासेऽङ्गिरसोक्तम्।

नरकाकखराश्वानां जग्ध्वा मांसं गजस्य च।
एषां मूत्रपुरीषाणि द्विजश्चान्द्रायणञ्चरेत्॥ इति।

मूत्रपुरीषग्रहणं वसाशुक्रासृङ्मज्जाद्युपलक्षणम्। मूत्रपुरीषे गोमूत्रपुरीषव्यतिरिक्ते।

कामतोऽनभ्यासे शङ्खोक्तम्।

भुक्त्वा चोभयतोदन्तांस्तथा चैकशफानि च।

औष्ट्रं गव्यं तथा भुक्त्वा षड्मासान् व्रतमाचरेत्॥ इति।

औष्ट्रं गव्यं मांसम्।

कामतोऽत्यन्तानवच्छिन्नाभ्यासे स्मृत्यन्तरोक्तम्।

जग्ध्वा मांसं नराणाञ्च विड्वराहं खरं तथा।

गवाश्वकुञ्जरोष्ट्राणां सर्व्वं पञ्चनखं तथा*॥

क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात्संवत्सरं व्रतम्। इति।

एवं मूत्रपुरीषवसाशुक्रासृङ्मांसमज्जास्वपि पूर्व्वोक्तविषयेषु पूर्व्वोक्तप्रायश्चित्तानि योज्यानि। नेत्रश्रोत्रादिमलभक्षणे लध्वं कल्प्यम्। अकामतः सकृन्नखादिभक्षणे प्राचेतसं। नखकेशा-स्थिविष्ठाभक्षणेऽहोरात्रमभोजनात् शुद्धिरिति। अकामतः कल्प्यम्। मुखमात्रप्रवेशे तु

केशकीटनखम्प्राश्य मत्स्यकण्टकमेव च।

हेमतप्तं† घृतम्पीत्वा तत्क्षणादेव शुद्ध्यति॥ इति।

नश्यतीति स्मृत्यन्तरोक्तम्।

हारीतः।

कृमिकीटपिपीलिकाजलौकपतङ्गास्थिप्राशने।

गोमूत्रगोमयाहारस्त्रिरात्रेण विशुद्ध्यति॥ इति।

---

* गामश्वं कुञ्जरौष्ट्रौ च सर्व्वान् पञ्चनखांस्तथा इति शूलपाणिधृतः पाठः।

† स्वर्णनिर्मितपात्रे तप्तं।

## अथ विडालाद्युच्छिष्टभक्षणे ।

अकामतो विडालाद्युच्छिष्टभक्षणे एकरात्रं ब्राह्मीसुवर्चलां पिबेत् ।

तथाच मनुः ।

विडालकाकाख्वोच्छिष्टं जग्ध्वाश्वनकुलस्य च ।
केशकीटावपन्नञ्च पिबेद्ब्राह्मीं सुवर्चलाम् ॥ इति ।

अकामतोऽभ्यासेऽश्वकाकाद्यवलीढ़शूद्रोच्छेषणभोजने त्वतिकृच्छ्र इति शातातपोक्तं द्रष्टव्यम् ।

सकृद्भक्षणे विष्णूक्तम् ।

पक्षिश्वापदजग्धस्य रसस्यान्नस्य भूयसः ।
संस्काररहितस्यापि भोजने कृच्छ्रपादकमिति ॥

अभ्यासे यमोक्तम् ।

शुनामुच्छिष्टकं भुक्त्वा मासमेकं व्रती भवेत् ।
काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेदिति ॥

अथ यावकव्रतं प्रक्कतम् ।

वृद्धविष्णुः ।

ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रं पञ्चगव्यं पिबेद्वैश्योच्छिष्टाशने पञ्चरात्रं राजन्योच्छिष्टाशने त्रिरात्रं ब्राह्मणोच्छिष्टाशने त्वेकाहमिति ।

एतच्च कामतः सकृद्भक्षणे पञ्चगव्यप्राशनमाहारान्तरनिवृत्त्यर्थं*

* पञ्चगव्यातिरिक्तद्रव्यभोजननिवृत्त्यर्थं ।

तपसः क्लेशरूपत्वात् ।

अत्रैवाभ्यासे यमोक्तम् ।

भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुध्यति ।
भूभुजा सह भुक्त्वान्नं तप्तकृच्छ्रेण शुध्यति ॥
वैश्येन सह भुक्त्वान्नमतिकृच्छ्रेण शुध्यति ।
शूद्रेण सह भुक्त्वान्नं चान्द्रायणं समाचरेदिति ॥

अकामतः शङ्खोक्तम् ।

ब्राह्मणोच्छिष्टाशने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत्। क्षत्रियोच्छिष्टाशने ब्राह्मीरसविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत् । वैश्योच्छिष्टभोजने त्रिरुपोषितो ब्राह्मीं सुवर्च्चलां पिबेत् । शूद्रोच्छिष्टाशने षड्रात्रमभोजनमिति ।

अत्राभ्यासे द्वैगुण्यादिकं कल्प्यम् । क्वचिदुच्छिष्टभोजनस्याभ्यनुज्ञा दर्शितापस्तम्बेन । पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यमिति ।

अङ्गिराः ।

चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे ।
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् ।
षड्रात्रञ्च त्रिरात्रञ्च वर्णयोरनुपूर्व्वशः ॥ इति ।

अत्र सान्तपनं महासान्तपनम् । एतच्च कामतोऽकामतोऽर्द्धं कल्प्यम् ।

पराशरः ।

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।

मनस्तापेन शुध्येत द्रुपदानां शतं जपेदिति ॥

षट्त्रिंशन्मते ।

दीपोच्छिष्टन्तु यत्तैलं रात्रौ रथ्याहृतञ्च यत् ।

अभ्यङ्गाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुध्यतीति ॥

वृद्धशातातपः ।

पीतोच्छिष्टन्तु पानीयं पीत्वा तु ब्राह्मणः क्वचित् ।

त्रिरात्रन्तु व्रतं कुर्य्याद्वामहस्तेन वा पुनरिति ॥

एतच्च कामतः । अकामतस्तदर्द्धम् ।

शङ्खः ।

अमेध्यपतितचण्डालपुक्कशरजस्वलावधूतकुणिकुष्ठिकुनखिसंस्पृष्टानि भुक्त्वा कृच्छ्रं चरेदिति ।

कुणिर्हस्तविकलः । एतच्च कामतः अकामतस्तदर्द्धम् । रजकाद्यस्पृश्यस्पर्शे विष्णूक्तम् ।

भुक्त्वास्पृश्यैस्तथाशौचिकेशकीटैश्च दूषितम् ।

कुशोडुम्बरबिल्वाद्यैः पनसाम्बुजपत्रकैः ।

शङ्खपुष्पीसुवर्चादिक्वाथं पीत्वा विशुध्यतीति ॥

हारीतः ।

शूद्रेणोपहृतमभोज्यम् । कीटैर्व्वामेध्यसेविभिर्भुञ्जानेषु यस्तु शूद्र उपस्पृशेदनर्हत्वात् सम्पत्तौ भुञ्जानेषु वा यश्चोत्थाय उच्छिष्टं प्रयच्छेदाचामेतोद्धतशिरा* वा

---

* कुत्सितावेति पाठान्तरम् ।

यत्रान्नं दद्युस्तत्र प्रायश्चित्तमहोरात्रमिति।

क्रतुः।

यस्तु भुङ्क्ते द्विजः पङ्क्त्यामुच्छिष्टायां कथञ्चन।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यतीति॥

एतदकामतः।

कामतस्तु पराशरोक्तम्।

एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत्॥
मोहाद्भुञ्जीत यस्तत्र पङ्क्त्यामुच्छिष्टभोजनः।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं चरेत्॥ इति।

त्यजेत्पात्रम् अमृतापिधानमसीत्यनेनाग्नीकरणोदकपानं कृत्वा त्यजेदित्यर्थः।

शवादिसंपृक्तकूपाद्युदकपाने विष्णूक्तम्।

मृतपञ्चनखात् कूपादत्यन्तोपहताद्वोदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेद्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तं सर्व्वे वा ते पञ्चगव्यं पिबेयुरिति।

अत्यन्तोपहतान्मूत्रपुरीषादिभिः।

कामतो मानुषशवोपहतकूपजलपाने हारीतः।

क्लिन्ने भिन्ने शवे तोयं तत्रस्थं यदि तत्पिबेत्।
शुद्ध्यै चान्द्रायणं कुर्य्यात्तप्तकृच्छ्रमथापि वा॥
यदि कश्चित्प्रमादेन तत्र स्नायाद्द्विजोत्तमः।
जपंस्त्रिषवणस्नायी अहोरात्रेण शुद्ध्यतीति॥

अकामतो देवलोक्तम् ।

छिन्नं भिन्नं शवञ्चैव कूपस्थं यदि दृश्यते ।
पयः पिबेत्त्रिरात्रेण मानुषे द्विगुणं स्मृतमिति ॥

आपस्तम्बः ।

चाण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत् ॥
चरेत्सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः ।
तदर्द्धन्तु चरेद्वैश्यः शूद्रे पादं विनिर्दिशेदिति ॥

देवलः ।

यस्तु चाण्डालभाण्डस्थमज्ञानादुदकं पिबेत् ।
स तु त्र्यहेण शुद्धेत्तु शूद्रस्त्वेकेन शुद्ध्यतीति ॥

आपस्तम्बः ।

म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ॥
तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा ।
अकामान्नक्तभोजी स्यादहोरात्रन्तु कामतः ॥ इति ।

अत्रैवाभ्यासे प्राजापत्यं । एषु स्नात्वा च पीत्वा च प्राजापत्येन शुध्यतीति आपस्तम्बस्मरणात् । एषु अन्त्यजादिकूपादिषु ।

पराशरः ।

भाण्डस्थमन्त्यजानान्तु जलं दधि पयः पिबेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥
ब्रह्मकूर्चोपवासेन द्विजातीनाञ्च निष्कृतिः ।

शूद्रस्य चोपवासेन तदा दानेन शक्तित इति ॥

एतदकामतः । कामतो द्विगुणम् ।

आपस्तम्बः ।

मूत्रोच्चारं द्विजः कुर्य्यात् ह्यकृत्वा शौचमात्मनः ।
मोहाद्भुक्त्वा त्रिरात्रन्तु यवान् पीत्वा विशुद्ध्यतीति ॥
मूत्रं कृत्वा द्विजो मार्गे स्मृतिभ्रंशाज्जलं पिबेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यतीति ॥

कामतो द्विगुणं ।

संवर्त्तः ।

समुत्पन्ने तु यः स्नायी* भुञ्जीतापः पिबेत्तु वा ।
गायत्र्यष्टसहस्रं वा जपेत्स्नात्वा समाहितः ॥ इति ।

एतदकामतः ।

स्नानार्हस्तु यदा भुङ्क्ते द्विजो वै ज्ञानदुर्ब्बलः ।
प्राजापत्येन शुद्ध्येत कामादन्यस्तदर्द्धकः ॥

इति षट्त्रिंशन्मतेऽभिधानात् ।

## अथ वाग्दुष्टादिभक्षणे ।

पराशरः ।

वाग्दुष्टं भावदुष्टञ्च भाजने भावदूषिते ।
भुक्त्वान्नं ब्राह्मणः पश्चात्त्रिरात्रेण विशुद्ध्यतीति ॥

---

* स्नाने इति पाठान्तरम् ।

एतच्चाकामतः क्षत्रियादीनां कल्प्यम्। अकामतो गौतमोक्तं चतुर्दिनं घृतप्राशनञ्च।

वशिष्ठः।

अङ्काख्याने समुत्पन्ने अभोज्याभोज्यसंज्ञिते।
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु॥
अक्षारलवणां रूक्षां पिबेद्ब्राह्मीं सुवर्चलाम्।
त्रिरात्रं शङ्खपुष्पीञ्च ब्राह्मणः पयसा सह॥
पलाशबिल्वपत्राणि कुशान् पद्ममुडुम्बरम्।
अपः पिबेत्क्वाथयित्वा त्रिरात्रेण विशुध्यतीति॥

पलाशादिसहितमपः क्वाथयित्वेत्यर्थः। कालदुष्टशक्तादिभोजने ग्रहणकालादिभोजने चैकरात्रादिकं कामाकामादिभेदेन कल्प्यं।

अथाहुताद्यन्नभोजने लिखितः।

यस्य चाग्नौ न ध्रियते यस्य चाग्नौ न दीयते।
तदभोज्यं द्विजातीनां भुक्त्वा तूपवसेदहः॥
वृथाकृशरसंयावपायसापूपशष्कुली।
आहिताग्निर्द्विजो भुक्त्वा प्राजापत्यं समाचरेत्।
अनाहिताग्नेरेकाहः शेषेषूपवसेदहरिति॥

मनुनोक्तत्वात्।

तथा।

घृतहीनन्तु यो भुङ्क्ते नवं वाहुतिपञ्चकम्।
पश्चादघृतेन यो भुङ्क्ते भुक्त्वा चान्द्रायणञ्चरेत्॥

संवर्त्तः।

शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यतीति॥

तथा।

वटार्काश्वत्थपत्रेषु कुम्भीतिन्दूकपत्रयोः।
कोविदारकदम्बेषु भुक्त्वा चान्द्रायणं चरेत्॥
पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्।
वानप्रस्थो यतिश्चैव लभते चान्द्रकं फलमिति॥

पलाशपत्राणि वल्लीपलाशपत्राणि इति केचन।

## अथ हस्तदानादिक्रियादुष्टभक्षणे।

पराशरः।

माक्षिकं फाणितं शाकं गोरसं लवणं घृतम्।
हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनमिति॥

एतदकामतः। कामतः हारीतोक्तं त्रिरात्रम्।

वृद्धयाज्ञवल्क्यः।

ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्।
द्वयमेतदभोज्यं स्याद्भुक्त्वा तूपवसेदहरिति॥

क्रतुः।

शूद्रहस्तेन यो भुङ्क्ते पानीयं वा पिबेत्क्वचित्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति॥

आसनारूढपादो वा वस्त्रार्द्धप्रावृतोऽपि वा ।
मुखेन धमितं भुक्त्वा कृच्छ्रं सान्तपनं चरेत् ॥

आपस्तम्बः ।

नाप्रसविष्टकन्याया अश्नीयात्तद्गृहेऽपि वा ।
अथ भुङ्क्ते तु यो मोहात्कृच्छ्रं सान्तपनं चरेत् ॥

अप्रसविष्टकन्या अप्रसूतकन्या । पार्व्वणश्राद्धादिभोजने भरद्वाजः ।

भुङ्क्ते चेत्पार्व्वणश्राद्धे प्राणायामान् षडाचरेत् ।
उपवासस्त्रिमासादि वत्सरान्तं प्रकीर्त्तितः ॥
प्राणायामत्रयं द्वे*रहोरात्रं सपिण्डने ।
असरूपे स्मृतं नक्तं व्रतपारणके तथा ॥

असरूपे गुणशीलादिभिरसमाने ।

तथा ।

द्विगुणं क्षत्रियस्यैतत्त्रिगुणं वैश्यभोजने ।
साक्षाच्चतुर्गुणं ह्येतत् स्मृतं शूद्रस्य भोजने ॥ इति ।

आपद्विषयमामश्राद्धविषयमकामविषयं वा । एवमुत्तरत्रापि अल्पप्रायश्चित्तानि योजनीयानि । अधिकप्रायश्चित्तानि कामकारे अनापद्विषये बोद्धव्यानि ।

आपदि नवश्राद्धादिभोजने विष्णूक्तं ।

प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके ।

---

* ष्ठह्नाविति पाठान्तरम् ।

त्रैपक्षिके तदर्द्धन्तु पञ्चगव्यं हि मासिकमिति ॥

अनाशक्तस्य हारीतोक्तं ।

एकादशाहे तु त्र्यहे भुक्त्वा सञ्चयने* तथा ।

उपोष्य विधिवद्धुत्वा कुष्माण्डैर्जुहुयाद्घृतमिति ॥

अनापद्यपि स एव ।

चान्द्रायणं नवश्राद्धे प्राजापत्यन्तु मिश्रके ।

एकाहन्तु पुराणेषु प्रायश्चित्तं विधीयते ॥

मिश्रकं प्रथमसंवत्सरभवश्राद्धमिति केचन पुराणेषु संवत्सरानन्तरं भाविश्राद्धेषु केचन मिश्रकं प्रथमतोदीयमानमाद्यश्राद्धमिति। आद्यश्राद्धस्य द्विरावृत्तिः श्राद्धस्तवकेऽभिहिता। चान्द्रायणं नवश्राद्धे इत्यतः प्रथमनवश्राद्धादिविषयं। अथवा नवश्राद्धे चान्द्रायणं क्षत्रियनवश्राद्धविषयं।

द्वितीयनवश्राद्धादिषु षट्त्रिंशन्मतोक्तं ।

प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके ।

त्रैपक्षिके तदर्द्धं स्यात्पादो द्वैमासिके तथा ॥

पादोनकृच्छ्रमुद्दिष्टं षण्मासे च तथाब्दिके ।

त्रिरात्रं चान्यमासेषु प्रत्यब्दं तदहः स्मृतम् ॥

त्रैपक्षिके तदर्द्धं स्यादित्यादि कामकारविषयम्। षण्मासे च तथाब्दिक इत्येतत्प्रथमाब्दिकविषयम्। प्रत्यब्दं तदह इत्येतत्

---

* एकादशाहे त्र्यहं भुक्त्वास्थिसञ्चयं तथा इति क्वचित् पुस्तके पाठः ।

द्वितीयाब्दिकविषयम्। एतद्ब्राह्मणविषयम्। क्षत्रियादिश्राद्धभोजने तत्रैव।

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः।
त्रैपक्षिके सान्तपनं कृच्छ्रं मासद्वये स्मृतम्।
क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम्॥
वैश्यस्यार्द्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः।
शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम्॥
सार्द्धं चान्द्रायणं मासि त्रिपक्षे चैन्दवं स्मृतम्।
मासद्वये पराकः स्यादूर्द्धं सान्तपनं स्मृतमिति॥

शङ्खः।

चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः।
पक्षत्रयेऽपि कृच्छ्रः स्यात् षण्मासे कृच्छ्रएव तु॥
आब्दिके पादकृच्छ्रः* स्यादेकाहः पुनराब्दिके।
अत ऊर्द्धं न दोषः स्याच्छङ्खस्य वचनं यथा॥

एवंविधान्यन्यान्यपि लघुप्रायश्चित्तानि कामाकामजाति शक्तिस्तेनपतितक्लीबाद्यपाङ्क्तेयश्राद्धभोजनसर्पहत्यादि श्राद्धभोजनविषयविशेषापेक्षया योज्यानि।

तथाच भरद्वाजः।

चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मिणाम्॥

---

* कृच्छ्रपादः स्यादिति क्वचित् पुस्तके पाठः।

पतनानाशकैश्चैव विषोद्बन्धोदकैस्तथा।
भुक्तैषां षोड़शश्राद्धे कुर्य्यादिन्दुव्रतं* द्विजः॥
अपाङ्क्तेयान्नमुद्दिश्य श्राद्धमेकादशेऽहनि।
ब्राह्मणस्तत्र भुक्तान्नं शिशुचान्द्रायणं चरेत्॥
आमश्राद्धे तथा भुक्ते तप्तकृच्छ्रेण शुद्ध्यति।
सङ्कल्पिते तथा भुक्त्वा त्रिरात्रं क्षपणं भवेत्॥ इति॥

कामतो ब्रह्मचारिणो नवश्राद्धादिभोजने वृहद्यमोक्तं।

मधु मांसञ्च योऽश्नीयाच्छ्राद्धं सूतकमेव च।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समाचरेत्† ॥

इति अकामकृतोऽपि तेनैवोक्तम्।

मासिकादिषु योऽश्नीयादसमाप्ते व्रते द्विजः।
त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते।
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्ध्यतीति॥
आमश्राद्धे भवेदर्द्धं प्राजापत्यन्तु सर्व्वदेति।

षट्त्रिंशन्मते स्मरणात्। अनुक्तप्रायश्चित्तामावस्यादिश्राद्धभोजनेषु विशेषमाह उशनाः।

दशकृत्वः पिबेदपो गायत्र्याः श्राद्धभुक् द्विजः।
ततः सन्ध्यामुपासीत शुद्धेत्तु तदनन्तरमिति॥

तथा।

निवृत्तचूड़होमे तु प्राङ्नामकरणे तथा।

---

* चान्द्रायणं। † समापयेदिति पाठान्तरम्।

चरेत्सान्तपनं भुक्का जातकर्म्मणि चैव हि ॥
ततोऽन्येषु तु भुक्तान्नं संस्कारेषु द्विजोत्तमः ।
निर्योगादुपवासेन शुद्धते नित्यभोजनैः* ॥

धौम्यः ।

ब्रह्मौदने तु सोमे च सीमन्तोन्नयने तथा ।
जाते श्राद्धे नवश्राद्धे द्विजश्चान्द्रायणं चरेत् ॥

सोमसाहचर्य्याद्ब्रह्मौदनाख्यं कर्म्म आधानाङ्गभूतमिति कथयन्ति अत्र तत्तत्कर्म्माङ्गभूतादिश्राद्धभोजने एवैतत् प्रायश्चित्तं शक्त्याद्यपेक्षया योजनीयं ।

## अथाभोज्यान्नभोजने ।

अभोज्यान्नाश्च मनुना दर्शिताः ।

नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा ।
स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥
मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन ।
गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम् ॥
स्तेनगायनयोश्चान्नं तक्ष्णो† वार्द्धुषिकस्य च ।
दीक्षितस्य कदर्य्यस्य बद्धस्य निगडस्य च ॥
अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च ।

---

* नित्यभाजनैरिति क्वचित् पुस्तके पठितं । † तक्ष्णोरिति पाठान्तरम् ।

चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ॥
उग्रान्नं सूतिकान्नञ्च पर्य्याचान्तमनिर्दशम्* ।
अनर्च्चितं वृथामांसमवीरायाश्च योषितः ॥
द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम्† ।
पिशुनानृतिनोश्चैव क्रतुविक्रयकस्य च‡ ॥
शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च ।
कर्म्मारस्य निषादस्य रङ्गावतरणस्य च§ ॥
सुवर्णकर्त्तुर्व्वैणस्य¶ शस्त्रविक्रयिणस्तथा ।
श्ववतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च ॥
रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ।
मृष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्व्वशः ॥ इति ।

एवमादयोऽन्येऽपि स्मृत्यन्तरतोऽवगन्तव्याः ।

अन्यच्च प्रायश्चित्तं ।

भुक्त्वा चान्यतमस्यान्नममत्याक्षपणं त्र्यहं ।
मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव चेति ॥

अत्राभ्यासे मत्कोक्तं चान्द्रायणं गौतमोक्तकृच्छ्रद्दनं घृतप्राशनमापद्विषयं ।

---

* यत्रान्ने भुज्यमाने आचमनं क्रियते तत् पर्य्याचान्तं । अनिर्दशं सूतिकान्नं प्रेतान्नस्य वक्ष्यमाणत्वात् । † यस्मिन्नन्ने क्षवथुः कृतः । ‡ क्रतुविक्रयिणस्तथा इति मूलमनुसंहितायां पाठः । § रङ्गावतारकस्य च इति मूलमनुसंहितायां पाठः । ¶ वैणस्य वेणायाः वैणस्येति मूलमनुसंहितायां पाठः । वैणीवादिनजीवित इति कुल्लूकभट्टः । वेणाभेदनेन योजीवति वरुड इति विश्वरूप इति मेधातिथिः ।

आपस्तम्बः ।

बलाद्दासीकृता ये तु म्लेच्छचण्डालदस्युभिः ।
अशुभं कारिता कर्म्म गवादिप्राणिहिंसनम् ॥
उच्छिष्टमार्ज्जनञ्चैव तथा तस्यैव भोजनम् ।
खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ।
तत्स्त्रीणाञ्च तथा सङ्गस्ताभिश्च सहभोजनम् ॥
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ।
चान्द्रायणन्त्वाहिताग्नेः पराकस्त्वथवा भवेत् ॥
चान्द्रायणं पराकञ्च चरेत्संवत्सरोषितः* ।
संवत्सरोषितः शूद्रो मासार्द्धं यावकं पिबेत् ॥
मासमात्रोषितः† शूद्रः कृच्छ्रपादेन शुध्यति ।
ऊर्द्ध्वं संवत्सरात्कल्प्यम्प्रायश्चित्तं द्विजोत्तमैः ।
संवत्सरैस्त्रिभिश्चैव‡ तद्भावं स नियच्छति ॥ इति ।

लिखितः ।

परपाकनिवृत्तस्य परपाकरतस्य च ।
अपचस्य च भुक्तान्नं द्विजश्चान्द्रायणञ्चरेत् ॥

एतच्च कामतोऽभ्यासविषयम् । अनभ्यासे त्वर्द्धम् । अकामतस्त्रिरात्रमिति कल्प्यम् ।

* सांवत्सरोषित इत्यत्र संवत्सरं द्विज इति शूलपाणिसम्मतः पाठः । † मासमात्रेत्यत्र मासं विप्रोषित इति शूलपाणिसम्मतः पाठः । ‡ त्रिभिरित्यत्र चतुर्भिरिति शूलपाणिसम्मतः पाठः ।

तथा ।

गृहीत्वाग्नीन्समारोप्य पञ्चयज्ञान्निवर्त्तयेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥
पञ्चयज्ञांस्त्वयङ्कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तु यः ॥
गृहस्थधर्म्मवृत्तो यो दानेन परिवर्ज्जितः ।
ऋषिभिर्धर्म्मतत्त्वज्ञैरपचः स प्रकीर्त्तितः ॥ इति ।

अथाशौचान्नभोजने विष्णुः ।

ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य ताव-दशौचं यावत्तेषामशौचव्यपगमे प्रायश्चित्तं कुर्य्यादिति ।

कामकारे मार्कण्डेयः ।

भुक्त्वा तु ब्राह्मणाशौचे चरेत्सान्तपनं द्विजः ।
भुक्त्वा तु क्षत्त्रियाशौचे तथा कृच्छ्रो विधीयते ॥
वैश्याशौचे तथा भुक्त्वा महासान्तपनं चरेत् ।
शूद्रस्यैव तथा भुक्त्वा द्विजश्चान्द्रायणं चरेत् ॥

अनाभ्यासे अङ्गिरोक्तम् ।

शूद्रस्य सूतके भुक्त्वा षण्मासान्कृच्छ्रमाचरेत् ।
वैश्यस्य तु तथा भुक्त्वा त्रीन्मासान्व्रतमाचरेत् ॥
क्षत्त्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् ।
ब्राह्मणस्य तथाशौचे भुक्त्वा मासं व्रती भवेदिति ॥

अकामतः छागलेनोक्तं ।

अज्ञानाद्भुञ्जते विप्राः सूतके मृतके तथा ।

प्राणायामशतं कृत्वा शुध्यन्ति शूद्रसूतके ॥
वैश्ये षष्टिर्भवेद्राज्ञि विंशतिर्ब्राह्मणे दश ।
एकाहञ्च त्र्यहं पञ्च सप्तरात्रमभोजनम् ॥
तपःशुद्धिर्भवेद्विप्रः पञ्चगव्यं पिबेत्ततः ॥ इति ।
एकाहादयः क्रमेण ब्राह्मणाद्यशौचान्नभोजने विज्ञेयाः ।

## अथ जातिभ्रंशकरादिषु ।

एतत्स्वरूपञ्च प्रागेव दर्शितं ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोरित्यादिभिः मनुवचनैः रुजः कृत्वा रोमोत्पाटनादि घ्रेयं पूतिगन्धिः ।

अथ प्रायश्चित्तमाह स एव ।

जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया ।
चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥
सङ्करापात्रकृत्यासु मासःशोधनमैन्दवम् ।
मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहम् ॥

बृहस्पतिः ।

ब्राह्मणस्य रुजः कृत्वा रासभादिप्रमापणम् ।
निन्दितेभ्यो धनादानङ्कृच्छ्रार्द्धं व्रतमाचरेत् ॥

यमः ।

सङ्करीकरणङ्कृत्वा मासमश्नीत यावकं ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं समाचरेत् ॥

अपात्रीकरणङ्कृत्वा तप्तकृच्छ्रेण शुद्ध्यति ।
शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा ।
मलिनीकरणीयेषु तप्तकृच्छ्रविशोधनमिति ॥

जातिभ्रंशकरादिष्वप्यन्यतमकरणे मन्वाद्युक्तप्रायश्चित्तानि जातिशक्तिकामाकामसकृदभ्यासापेक्षया योज्यानि ।

कृमिकीटवयोहत्यामद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम् ॥

इत्यत्र कृमयः स्थविष्ठा अस्थिरहिता घुणादिजन्तवः ।
इतोऽपि चोद्दिष्टानस्थिजन्तुहनने याज्ञवल्क्यः ।

अस्थिमतां सहस्रन्तु तथानस्थिमतामन इति ।

अत्र शूद्रं हत्वा व्रतमित्यनुवर्त्तते । तच्च षण्मासव्रतम् । अस्थिमन्तः अनुक्तनिष्कृतयः कुक्कुटप्रभृतयः । अनस्थिमन्तो यूकमशकप्रभृतयः । अनः शकटं तत्परिपूर्णमित्यर्थः । अत्रोक्तं परिमाणापेक्षया न्यूनाधिकहनने प्रायश्चित्तमपि तथैव कल्पनीयम् ।

तथा ।

मार्ज्जारगोधानकुलमण्डूकांश्च पतत्रिणः ।
हत्वा त्र्यहं पिबेत्क्षीरङ्कृच्छ्रं वा पादकं चरेत् ॥

मनुः ।

पयः पिबेत्त्रिरात्रं वा योजनं वाध्वनो व्रजेत् ।
उपस्पृशेत्स्रवन्त्यां वा सूक्तं वा रैवतं जपेत् ।

उपस्पर्शः स्नानम् । एतच्चाकामतः कामतो द्विगुणं ।

कामतोऽभ्यासे वाशिष्ठम् ।

श्वमार्जारमण्डूकनकुलसर्पदहरमूषिकान् हत्वा कृच्छ्रं
द्वादशरात्रं चरेत् । किञ्चिच्च दद्यादिति ।

दहरः कुच्छुन्दरिरल्पमूषिको वा । एतच्च प्रत्येकवधे समुदिता-
नेकवधे तु सुमन्तूक्तं पाण्मासिकम् ।

मनुः ।

हत्वा हंसं बलाकञ्च वकं वर्हिणमेव च ।
वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥
क्रव्यादन्तु मृगान् हत्वा धेनुं दद्यात्पयस्विनीम् ।
अक्रव्यादौ वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥

याज्ञवल्क्यः ।

गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ।
खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायनः ॥
उरगेष्वायसो दण्डः पण्डके त्रपुसीसकम् ।
कोले घृतघटो देयः उष्ट्रे गुञ्जा हयेऽंशुकं ॥

पण्डको नपुंसकः । स च मृगपक्षिरूप एव न गोब्राह्मणादि-
रूपः । त्रपुसीसकं वा माषपरिमितम् ।

तथाच मनुः ।

अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः ।
पलालं भारकं षण्ढे सैसकञ्चैव माषकमिति ॥

पलालभारसैसकमाषयोर्विकल्पः ।

याज्ञवल्क्यः ।

तित्तिरी तु तिलद्रोणं गजादीनामशक्नुवन् ।
दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये ॥

कृच्छ्रमित्युपलक्षणम् । अतः शक्त्याद्यपेक्षया कृच्छ्राधिकङ्कल्पनीयम् ।

अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिदष्टौ च* पुष्कलम् ।
पुष्कलानि तु चत्वारि आढ़कः परिकीर्त्तितः ।
चतुराढ़को भवेद्द्रोण इत्येतन्मानलक्षणम् ॥

याज्ञवल्क्यः ।

फलपुष्पान्नरसजसत्वघाते घृताशनम् ।
किञ्चित्साख्थिवधे देयं प्राणायामस्त्वनास्थिके ॥

घृताशनमाहारानन्तरं परित्यागेन यत्र प्रायश्चित्तविशेषो नाम्नातस्तत्र किञ्चित्साख्थिमत इत्येतत् द्रष्टव्यम् ।

पराशरः† ।

---

* ग्रन्थान्तरे च अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलमित्येवं पाठो दृश्यते ।

† पराशरसंहितायामन्यथा पाठो दृश्यते यथा । हंससारसक्रौञ्चांश्च चक्रवाकं सकुक्कुटं । जालपादांश्च शरभमहोरात्रेण शुद्ध्यति । बलाकाटिट्टिभानाञ्च शकपारावतादिनां । आटिनाञ्च वकानाञ्च शुद्ध्यते नक्तभोजनात् । भासकाककपोतानां सारितित्तिरघातकः । अन्तर्ज्जले उभे सन्ध्ये प्राणायामेन शुद्ध्यति । गृध्रश्येनशिखिग्राहचासोलूकनिपातने । अपक्काशी दिनं तिष्ठेत्त्रिकालं मारुताशनः । वल्गुनीचटकानाञ्च कोकिलाखञ्जरीटकान् । लावकारक्तपादांश्च शुद्ध्यन्ते नक्तभोजनात् । कारण्डवचकोराणां पिङ्गलाकुररस्य च । भारद्वाजनिहन्ता च शुद्ध्यते शिवपूजनात् । भेरुण्डश्येनभासांं च पारावतकपिञ्जलान् । पक्षिणामेव सर्व्वेषामहोरात्रेण शुद्ध्यति । हत्वा नकुलमार्जारसर्पाजगरडुण्डुभान् । कृशरं भोजयेद्विप्रान् लोहदण्डश्च दक्षिणा । शल्लकीशशकागोधामत्स्यकूर्म्माभिपातने । हन्ताक-

हंससारसचक्राह्वक्रौञ्चकुक्कुटघातकः ।
मयूरमेषौ हत्वा च एकभक्तेन शुद्ध्यति ॥
मद्गुञ्च टिट्टिभञ्चैव शुकं पारावतं तथा ।
आड़िकाञ्च वकं हत्वा शुद्ध्येद्वै नक्तभोजनात् ॥
चाषकाककपोतानां सारितित्तिरघातकः ।
अन्तर्जले उभे सन्ध्ये प्राणायामेन शुद्ध्यति ॥
गृध्रश्येनविहङ्गानामुलूकस्य च घातकः ।
अपक्काशीदिनं तिष्ठेद्वौ कालौ मारुताशनः ॥
हत्वा मूषिकमार्ज्जारसर्पाजागरडुण्डुभान् ।
कृसरं भोजयेद्विप्रान् लौहदण्डश्च दक्षिणा ॥
सेधाकच्छपगोधानां शशशल्लकघातकः ।
वृन्ताकफलगुञ्जाशी अहोरात्रेण शुद्ध्यति ॥
मृगरोहिवराहाणामविकावस्तघातने ।
वृकजम्बूकऋक्षाणां तरक्षूणाञ्च घातकः ॥
तिलप्रस्थं त्वसौ दद्याद्वायुभक्षो दिनत्रयम् ।
गजमेषतुरङ्गोष्ट्रगवयानां निपातने ॥
प्रायश्चित्तमहोरात्रं त्रिसन्ध्यं चावगाहनम् ।

---

फलभोक्ता च त्वहोरात्रेण शुद्ध्यति। वृकजम्बुकऋक्षाणां तरक्षूणाञ्च घातने । तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयं । गजगवयतुरङ्गानां महिषोष्ट्रनिपातने । शुद्ध्यते समरात्रेण विप्राणां तर्पणेन च । मृगं रुरुं वराहञ्च अज्ञानादस्तु घातयेत् । अफालकृष्टमश्नीयादहोरात्रेण शुद्ध्यति । एवं चतुष्पदानाञ्च सर्व्वेषां वनचारिणां । अहोरात्रोषितस्तिष्ठेज्जपन् वै जातवेदसं ।

खरवानरसिंहानां चित्रकव्याघ्रघातकः ।
शुद्धिमेति त्रिरात्रेण ब्राह्मणानाञ्च भोजनैरिति ॥

याज्ञवल्क्यः ।

पुंश्चलीवानरखरैर्दष्टश्चोष्ट्रादिवायसैः ।
प्राणायामं जले कृत्वा घृतम्प्राश्य विशुद्धये* ॥

एतदशक्तविषयम् । शक्तस्य कल्प्यम् ।

यत्तु सुमन्तुवचनम् ।

श्वशृगालमहिषाजाविकखरकरभनकुलमार्ज्जारमूषिक-
प्लवकाकपुरुषदष्टानामापोहिष्ठीयाभिः† स्नानं प्राणा-
यामत्रयञ्चेति ।

तन्नाभेरधः ईषद्दष्टविषयं । सम्यग्दष्टविषये तु अङ्गिरसोक्तम् ।

ब्रह्मचारी शुना दष्टः सायं प्रातः पयः पिबेत् ।
गृहस्थश्चेत्त्रिरात्रन्तु एकाहं योऽग्निहोत्रवान् ॥
नाभेरूर्द्धन्तु दष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत्त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणमिति ॥

क्षत्त्रियादिषु पादोनं कल्पनीयम् ।

स्त्रीविषये तु पराशरोक्तम् ।

ब्राह्मणी तु शुना दष्टा जम्बूकोष्ट्रवृकेण‡ वा ।

---

* विशुध्यतीति पाठान्तरम् । † आपोहिष्ठादिमन्त्रैः । ‡ जम्बूकेन वृकेण वेति पाठा-न्तरम्, जम्बुकोष्ट्रेण वा गवा इति ग्रन्थान्तरसम्मतः पाठः ।

उदितं ग्रहनक्षत्रं* दृष्ट्वा सद्यः शुचिर्भवेत् ॥ इति ।

ब्राह्मणीत्युपलक्षणम् ।

व्रतस्थिताया विशेषस्तेनैवोक्तः ।

त्रिरात्रमेवोपवसेत् शुना दष्टा तु सव्रता ।
सघृतं यावकं भुक्त्वा व्रतशेषं समापयेदिति ॥

सव्रतेत्यत्र लिङ्गमविवक्षितम् अनुपादेयगतत्वात् ।

पुलस्त्यः ।

रजस्वला यदा दष्टा शुना जम्बूकरासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥
ऊर्द्धन्तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा ।
चतुर्गुणं स्मृतं मूर्ध्नि दष्टेऽन्यत्राप्लुतिर्भवेत् ॥

अन्यत्र अरजस्वलावस्थायाम् ।

शातातपः ।

शुनाघ्रातावलीढस्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनं शौचमग्निना चोपचूर्णनमिति† ॥

उपचूर्णनं तापनम् ।

मनुः ।

ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥
गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानमाचरेत् ।

---

* उदितं सोमनक्षत्रमिति ग्रन्थान्तरे पठितम् । † चोपचूलनमिति पाठान्तरम् ।

त्रिरात्रं पञ्चगव्याशी त्वधो नाभ्या विशुद्धति ॥
नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते कचित्* ।
षड्रात्रं तत्तदा प्रोक्तं प्राजापत्यं शिरोव्रणे ॥ इति ।

क्षत्रियादिषु पादपादोनं कल्प्यम्। श्वादिदंशनिमित्तव्रणे पूयादिनिःसरणे श्वादिदंशनिमित्तप्रायश्चित्तं पूयादिनिःसरणप्रायश्चित्तञ्च।

## अथ प्रकीर्णकप्रायश्चित्तानि।

तत्र याज्ञवल्क्यवचनानि प्रधानीकृत्याभिधीयन्ते।

प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः।
नग्नः स्नात्वा च भुक्त्वा† च गत्वा चैव दिवा स्त्रियम् ॥

खरयुक्तयानं रथादि। एवमुष्ट्रयानगः। उष्ट्रयानं समारुह्य खरयानन्तु कामतः इति मनुस्मरणात्। स्त्रियं स्वस्त्रियं कामकृते। अकामतः स्नानमात्रम्। उभयत्राभ्यासे कल्प्यम्। साक्षात् खरोष्ट्रारोहणे द्विगुणावृत्तिः कल्पनीया।

तथा।

गुरुं हुंकृत्य हूंकृत्य विप्रं निर्जित्य वादतः।
बध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ॥

---

* कृमिरिति पाठान्तरम् मिताक्षरायान्तु नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते कृमिः। षड्रात्रञ्च तदा प्रोक्तं प्राजापत्यं विशोधनमिति पठितम्। † शूलपाणिना तु भुक्त्वा इत्यत्र सुप्त्वा इति पठितम्।

अभ्यासे यमोक्तम् ।

वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया* ।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेदिति ॥

तथा ।

विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ।
विप्रदण्डोद्यमे कृच्छ्रः अतिकृच्छ्रो निपातने ॥

विप्रजिघांसया दण्डोद्यमे ।

बृहस्पतिः ।

काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् ।
अस्थिभेदेऽतिकृच्छ्रः स्यात्पराकस्त्वङ्गकर्त्तने ॥

यमः ।

पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया† ।
दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ॥

एतच्च कामकृते । अकामकृते प्रसादनमात्रमेव । असन्निहिताप्स्वप्सूदके वा कामतः मूत्रपुरीषाद्युत्सर्गे मनुः ।

विनाद्भिरप्सु वाप्यार्त्तः शारीरं सन्निषेव्य तु ।
सचेलो बहिराप्लुत्य गामालभ्य विशुद्ध्यति ॥

गामालभ्य स्पृष्ट्वा । कामतस्तु यमोक्तम् ।

---

* प्रायश्चित्तं विधीयते इति शूलपाणिसम्मतः पाठः । † प्रायश्चित्तं विधीयते इति शूलपाणिसम्मतः पाठः ।

आपद्गतो विना तोयं शारीरं यो निषेवते ।
एकाहः क्षपणं कृत्वा सचेलं स्नानमाचरेत् ॥

आपद्यभ्यासे सुमन्तूक्तम् ।

अप्स्वग्नौ वा मेहयतस्तप्तकृच्छ्रमिति ।

मनुः ।

वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥

यत्र श्रौतेषु स्मार्त्तेषु वा नित्यहोमादिषु लोपे सति प्रायश्चित्त-विशेषो नाम्नातस्तत्रोपवासः प्रायश्चित्तम्। आम्नातश्चेत्तेन सहाभोजनं समुच्चीयते।

स्नातकव्रताधिकारे क्रतुः ।

एतेषामाचाराणामेकैकव्यतिक्रमे गायत्र्यष्टशतं जप्यं कृत्वा पूतो भवतीति ।

बृहस्पतिः ।

अनिर्व्वर्त्त्य महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने कृच्छ्रार्द्धेन स शुद्ध्यति ॥

महायज्ञाः पञ्चमहायज्ञाः । एतच्च सकृत्करणे । अभ्यासे तु कृच्छ्रम् ।

तथा ।

ऋतौ तु न गच्छेद्भार्य्यां वासेऽपि कृच्छ्रार्द्धमाचरेत् ।

देवलः ।

स्वभार्य्यान्तु यदा क्रोधादगम्येति नरो वदेत् ।

प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव ।
षड्रात्रन्तु चरेद्वैश्यः त्रिरात्रं शूद्र आचरेत्* ॥

हारीतः ।

वहन् कमण्डलुं रिक्तमज्ञात ईप्सितभोजनम्† ।
अहोरात्रेण शुद्धिः स्याद्दिनजप्येन चैव हीति ॥

उपवासदिनजपयोः समुच्चयः ।

न पङ्क्तौ विषमं दद्यान्न याचेत न दापयेत् ।
प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः ॥
नदीसंक्रमहन्तुश्च कन्याविघ्नकरस्य च ।
समे विषमकर्त्तुश्च निष्कृतिर्नोपपद्यते ॥
त्रयाणामपि चैतेषां प्रायश्चित्तन्तु‡ मार्गितां ।
भैक्षलब्धेन चान्नेन द्विजश्चान्द्रायणं चरेत् ॥

संक्रम उदकावरणवर्त्म । समे विषमकर्त्ता पूजादौ । द्विजस्य§ चान्द्रायणम् । क्षत्रियादीनान्तु पादपादहान्या कल्पनीयम् ।

ऋष्यशृङ्गः ।

इन्द्रचापं पलाशाग्निं यद्यन्यस्य प्रदर्शयेत् ।
प्रायश्चित्तमहोरात्रं धनुर्दण्डौ च दक्षिणा¶ ॥

गौतमः ।

---

* एवञ्च इति क्वचित्पुस्तके पठितम् । † भोज्यद्रव्यं । ‡ प्रत्यासत्तिमिति क्वचित्पठितं क्वचिच्च पुस्तके मिताक्षरायाञ्च प्रत्यापत्तिमिति पाठः । § ब्राह्मणस्य इत्यर्थः । ¶ मिताक्षरायां क्वचित् पुस्तके च धनुर्दण्डश्च इति पाठः ।

न म्लेच्छाशुच्यधार्म्मिकैः सह सम्भाषेत। सम्भाष्यपुण्य-कृतो मनसा ध्यायेत्। ब्राह्मणेन वा सह सम्भाषेत। तल्पान्नधनलाभवधे पृथग्वर्षाणीति।

तल्पं भार्य्या। तल्पादीनां लाभस्य वधे विघ्नकरणे प्रथमं प्रत्येकं संवत्सरम्। प्रकृतब्रह्मचर्य्यमित्यर्थः।

हारीतः।

चाण्डालश्वपचानाञ्च सङ्करे समुपस्थिते।
अहोरात्रं त्रिरात्रं स्यात्त्रिरात्रे षड़हः स्मृतम्॥
अविज्ञातस्तु चाण्डालः समाहं निवसेद्यदि।
तस्याज्ञात्वोपासनस्य विप्राः कुर्य्युरनुग्रहम्॥
दधिक्षीरघृतैर्युक्तं कृच्छ्रं गोमूत्रयावकम्।
प्राशयेत्सह भृत्यैस्तु मासमेकं निरन्तरम्॥

तथा।

यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः।
सद्यः स्नानम्प्रकुर्व्वीत सोऽन्यथाप्रयतो भवेत्॥

वशिष्ठः।

दण्डोत्सर्गे राजैकरात्रमुपवसेत्। त्रिरात्रं पुरोहितः। कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा कुनखी श्यावदन्तकश्च कृच्छ्रं द्वादशरात्रं चरित्वोद्धरेयातामिति।

दन्तान्नखांश्च दुष्टानुत्पाटयेदित्यर्थः।

शङ्खः।

अश्वस्य शयनं यानमासनं पादुके तथा।

द्विजः पलाशवृक्षस्य त्रिरात्रन्तु व्रती भवेत् ॥
क्षत्रियस्तु रणे* पृष्टं दत्त्वा प्राणपरायणः ।
संवत्सरं व्रतं कुर्य्याच्छित्त्वा वृक्षं फलप्रदम् ॥
द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजोत्तमौ ।
अन्तरेण यदा गच्छेत् कृच्छ्रं सान्तपनं चरेत् ॥
होमकाले तथा दोहे स्वाध्याये दारसंग्रहे ।
अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत् ॥

दोहे यागाङ्गभूतदोहे । एतच्चाभ्यासे अनभ्यासे त्वर्द्धम् । सच्छिद्रादित्याद्यरिष्टदर्शनादावपि स एव दुःस्वप्नारिष्टदर्शनादौ घृतं हिरण्यं दद्यादिति ।

तथा ।

पादप्रतापनङ्कृत्वा स्नात्वा वह्निमधस्तथा ।
कुशैः प्रमृज्य पादौ तु दिनमेकं व्रती भवेत् ॥

देवलः ।

सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गौड्रान्† गत्वा संस्कारमर्हति ॥

एतच्च तीर्थयात्राव्यतिरेकेण ।

यमः ।

प्रत्यादित्यं न मेहेत‡ न पश्येदात्मनः शकृत् ।

---

* पृष्टमित्यत्र पृष्ठमिति पठितं मिताक्षरायां । † कलिङ्गौड्रान् इत्यत्र कलिङ्गान्ध्रान् इति मिताक्षरायां पठितं । ‡ मलमूत्रत्यागं न कुर्य्यात् ।

दृष्ट्वा सूर्य्यं निरीक्षेत ब्राह्मणान् गामथापि वा ॥

हारीतः।

क्षत्रियाभिवादने अहोरात्रमुपवसेत्। वैश्यस्यापि शूद्रस्याभिवादने त्रिरात्रमुपवासः।

तथा।

शय्यारूढ़पादुकोपानदारोपितपादोच्छिष्टान्धकारस्थश्राद्धकृज्जपदेवपूजाभिरताभिवादने त्रिरात्रमुपवासः स्यात् अन्यत्र निमन्त्रणे अन्यत्र भोजनेऽपि त्रिरात्रमिति।

आपस्तम्बः।

समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकं।
जपं होमञ्च कुर्व्वाणं नाभिवादयेत वै द्विजः* ॥

अत्रापि जपहोमसाहचर्य्याद्धारीतोक्तं त्रिरात्रमेव।

शङ्खः।

नोदकुम्भहस्तोऽभिवादयेन्न भैक्षहस्तो न पुष्पाज्यहस्तो नाशुचिर्न जपन् न देवपितृकार्य्यं कुर्व्वन् न शयान इति।

अत्रापि त्रिरात्रमेव।

याज्ञवल्क्यः।

देशङ्कालं वयः शक्तिम्पापञ्चावेक्ष्य यत्नतः।
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः ॥

यथा स्मृत्यन्तरे।

---

* जपं होमञ्च कुर्व्वाणं नाभिवादेत वै द्विजमिति मिताक्षरायां पठितम्।

हसितजृम्भितास्फोटनानि नाकस्मात्कुर्य्यात् ।

तथा ।

नोदन्वतोऽम्भसि स्नायान्न च श्मश्र्वादि कर्त्तयेत् ।

अन्तर्वत्न्याः पतिः कुर्व्वन्न प्रजा भवति ध्रुवमित्यादिषु*॥

प्रायश्चित्तं नाभिहितं । एवंविधस्थले देशाद्यपेक्षया कल्पनीयमित्यर्थः । इति प्रकीर्णकप्रायश्चित्तम् ।

## अथ मिथ्याभिशंसनप्रायश्चित्तम् ।

याज्ञवल्क्यः ।

महापापोपपापाभ्यां योऽभिशंसेन्मृषापरम् ।
अब्भक्षो मासमासीत स जापी नियतेन्द्रियः ॥

जपश्च शुद्धवतीनाम् ।

तथाच वशिष्ठः ।

ब्राह्मणमनृतेनाभिशंस्य पतनीयेन वा मासमब्भक्षः शुद्धवती वा वर्त्तयेदश्वमेधावभृथं वा गच्छेदिति ।

शुद्धवती शुद्धपदोपेता । एतच्च सवर्णविषये ।

आनुलोम्येन प्रातिलोम्येन वा मिथ्याभिशंसने दण्डानुसारेण कल्पनम् ।

---

* क्वचित् पुस्तके श्मश्र्वादिकर्त्तयेदिति पाठोदृश्यते क्वचिच्च पुस्तके शाखादि कर्त्तयेदिति पठितं परन्तु मिताक्षरायां श्मश्र्वादि कर्त्तयेदिति पाठदर्शनात् तदेव मूले निवेशितं । एवं क्वचिदादर्शपुस्तके धर्म्मतः ध्रुवमिति पाठसत्त्वेऽपि तादृशपाठे छन्दो न लगते अतोमिताक्षरायां क्वचिदादर्शपुस्तके च ध्रुवमिति पाठदर्शनात् तदेव मूले निवेशितम् ।

दण्डश्च याज्ञवल्क्येनोक्तः ।

प्रातिलोम्यापवादेषु द्विगुणास्त्रिगुणा दमाः ।

वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः ॥ इति ।

सत्यदोषाभिशंसने तु मिथ्याभिशंसनप्रायश्चित्तार्द्धम् । तथा । महापातकाभिशंसने मासमब्भक्षप्रायश्चित्तम् । तत्समतदतिदिष्टाभिशंसने त्वर्द्धं उपपातकाभिशंसने पाद इत्येवं कल्पनीयम् एवं प्रकीर्णकाभिशंसनेऽपि कल्पनीयम् । यत्तु शङ्खलिखितोक्तं नास्तिकः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसी चेत्येते षड्वर्षाणि ब्राह्मणगृहेषु भैक्षं चरेयुः षण्मासान् वा गामनुगच्छेयुरिति । तदभ्यासतारतम्यापेक्षया योजनीयम् ।

याज्ञवल्क्यः ।

अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा ।

निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव वा ॥

प्राजापत्यकृच्छ्राग्नेयपुरोडाशवायुदैवत्यपशूनां मध्येऽन्यतमं शक्त्याद्यपेक्षया योजनीयम् । यच्चैतेनैवाभिशस्तो व्याख्यात इति वसिष्ठेन मासमब्भक्षत्वमुक्तं तन्मिथ्याभिशापानन्तरं कञ्चित्काल* मकृतप्रायश्चित्तस्य ।

याज्ञवल्क्यः ।

यत्र यत्र च संकीर्ण†मात्मानं मन्यते द्विजः ।

* कञ्चित्कालमिति पाठान्तरम् । † समाकीर्णमिति पाठान्तरम् ।

तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा ॥

अथेत्यादिना महापातकादिपतनीयप्रायश्चित्तान्यकुर्व्वतो निष्कासनप्रकारः ।

याज्ञवल्क्यः ।

दासीकुम्भं वहिर्ग्रामान्निनयेरन् स्वबान्धवाः ।
पतितस्य वहिःकुर्य्युः सर्व्वकार्य्येषु चैव तम् ॥

ओइत्यादिना अकृतप्रायश्चित्तस्य पतितस्य कृते बान्धवाः सपिण्डा यदि प्रेषितया दास्या आनीतमुदकपूर्णघटं ग्रामाद्बहिर्निनयेरन् । अथवा सपिण्डादिप्रयुक्ता दास्येव पर्य्यस्येत् ।

तथाच मनुः ।

दासीघटमपां पूर्णं पर्य्यस्येत् प्रेतवद्यदा ।
अहोरात्रमुपासीरन् नाशौचं बान्धवैः सह ॥ इति ।

प्रेतवदिति प्राचीनावीतित्वादिप्राप्त्यर्थम् ।

अत्रापरं विशेषमाह स एव ।

पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैः सह ।
निन्दितेऽहनि सायाह्ने ज्ञातृत्विग्गुरुसन्निधौ ॥

निन्दितेऽहनि रिक्तातिथ्यादिषु ।

गौतमः ।

तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्व्वाण्युदकादीनि प्रेतकार्य्याणि कुर्य्युः । पात्रं वास्य विपर्य्यस्येयुर्दासः कर्म्मकरो वाऽवकरादमेध्य*पात्रमानीय घटान्

* क्वचिदादर्शपुस्तके प्रकरणादिति पाठो दृश्यते परन्तु बहुषु आदर्शपुस्तकेषु एवं मूल-

पूरयित्वा दक्षिणामुखः पदा विपर्यस्येदमुमनुदकं करोमीति। नामग्राहं तं सर्व्वेऽन्वारभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बन्धाश्च वीक्षेरन्नप उपस्पृश्य ग्रामं प्रविशन्ति अत ऊर्द्ध्वं तेन संभाष्य तिष्ठेदेकरात्रञ्जपन् गायत्रीमज्ञानपूर्व्वकं ज्ञानपूर्व्वं चेत्त्रिरात्रमिति।

अयमर्थः। यः पतितत्वादिना हेतुना त्याज्यत्वेनोक्तः। स* विद्यागुरूनाचार्य्यादीन् योनिसम्बन्धान् मातामहमातुलादींश्च पुत्रादयः† सन्निपात्य मेलयित्वा तेभ्यश्च त्यागकारणमावेद्य तैरनुमताः। पुत्रादयः सपिण्डाः सर्व्वाणि पिण्डोदकश्राद्धादीनि प्रेतकार्य्याणि जीवन्तमेव समुद्दिश्य कृत्वा पात्रं वास्य त्याज्यकृत्ये विपर्य्यस्येयुः। कथमित्यपेक्षायामाह दास इत्यादि। तयोर्मध्ये एकः अवकरात्पुरीषादिस्थानात् अशुचिपात्रमानीय दास्या नीतोदकघटात्तत्पात्रमुदकेन पूरयति। तदनन्तरं दक्षिणामुखोऽमुं देवदत्तं अनुदकं करोमि इत्यभिधाय पदा विपर्य्यस्येत्। तं विपर्य्यस्यन्तं त्याज्य सपिण्डाः पुत्रादयः प्राचीना-

---

गौतमसंहितायाम् अवकरादमेध्यपात्रमिति पाठदर्शनात् मुद्रितपुस्तके अवकरादिति पाठः सन्निवेशितः यद्यपि आदर्शपुस्तके अमेध्य एवं पाठो नास्ति तथापि मूलसंहितायां अमेध्यपाठदर्शनात् अशुचिपात्रमानीय इति स्वव्याख्यानाच्च मुद्रितपुस्तकेऽपि अमेध्यपदं सन्निवेशितम्। * सर्व्वेषु आदर्शपुस्तकेषु स इति पाठो दृश्यते परन्तु लिपिकरप्रमाद एव स इत्यस्य स्थाने तस्येत्येवं भवितुं युक्तम्। † पुत्रादय इत्यपपाठः अनन्वयात् पुत्रादयः सपिण्डा इत्यनेन पौनरुक्त्यापत्तेश्च।

वीतिनो मुक्तशिखा अन्वारभेरन् विद्यागुरवो योनिसम्बन्धाश्च वीक्षेरन् ततः स्नात्वा ग्रामं प्रविशन्ति । अत ऊर्द्ध्वमज्ञानात्तेन सम्भाष्य सावित्रीं जपन्नहोरात्रं तिष्ठेत् । ज्ञानात्तु त्रिरात्रं जपन्नित्येवम् । अथ महापातकादिपतनीयकर्म्मप्रायश्चित्तानन्तरं कर्त्तव्यम् ।

याज्ञवल्क्यः ।

चरितव्रत आयाते निनयेरन्नवं घटम् ।
जुगुप्सेरन्न चाप्येनं संपिबेयुश्च सर्व्वशः ॥

कृतप्रायश्चित्ते समागते नवमनुपहतम् उदकपूर्णकुम्भं शुभे जलाशये निनयेयुः प्रक्षिपेयुः । सर्व्वशः सर्व्वकार्य्येषु संपिबेयुः संव्यवहरेयुः ।

मनुः ।

प्रायश्चित्ते सुचरिते पूर्णकुम्भमपां नवम् ।
तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्यजलाशये ॥ इति ।

प्रास्येयुः प्रक्षिपेयुः ।

गौतमः ।

यस्तु प्रायश्चित्तेन शुद्धेत्तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमात् ह्रदात् पूरयित्वा स्रवन्तीभ्यो वा तत एनमप उपस्पर्शयेयुरथास्मै*तत्पात्रं दद्युस्तस्य प्रतिगृह्य जपेच्छान्ताद्यैः शान्ता पृथिवी शान्तं शिवमन्तरिक्षं यो

---

* क्वचित् आदर्शपुस्तके मूलसंहितायाम् अथास्मै इति पाठः ।

रीचेनस्तमिव गृह्णामीत्येतैर्यजुर्भिस्तरत्समन्दीभिः पावमानीभिः कुष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं ब्राह्मणाय दद्यात् गां वाचार्य्याय च । यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येदेतदेव शान्त्युदकं सर्व्वेषूपपातकेष्विति* ।

वशिष्ठः ।

तथाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यातः । इति । अभिषिक्तस्य पूर्व्वोक्तरीत्या कृतस्नानस्य प्रत्युद्धारो भवति । स च पुत्रजन्मना व्याख्यातः । पूर्व्वोक्तरीत्या प्रत्युद्धारानन्तरं जातकर्म्मादिसंस्कारैः संस्कुर्य्यादित्यर्थः ।

याज्ञवल्क्यः ।

घटेऽपवर्ज्जिते ज्ञातिमध्यस्थो यवसङ्गवाम् ।
प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥

घटेऽपवर्ज्जिते पूर्व्वोक्तरीत्या पुण्यह्रदादिषु घटे निक्षिप्ते यवसं तृणं गोभिः सत्कारस्तद्दत्ततृणभक्षणम् ।

हारीतः ।

स्वशिरसा यवसमादाय गोभ्यो दद्याद्यदि ताः† प्रतिगृह्णीयुरथैनं प्रवर्त्तयेयुरिति ।

गोभिरस्वीकरणे पुनः प्रायश्चित्तं कर्त्तव्यमित्यर्थादुक्तं भवति ।

---

* सर्व्वेषु आदर्शपुस्तकेषु एवं पाठो दृश्यते मूलगौतमसंहितायान्तु तस्य सर्व्वाण्युदकादीनि प्रेतकर्म्माणि कुर्य्युरेतदेव शान्त्युदकं सर्व्वेषूपपातकेषु । † यदि ताः प्रसुदिता गृह्णीयुरिति क्वचिदादर्शे प्रायश्चित्ततत्त्वादौ च पठितम् ।

## अथ स्त्रीणां विशेषपतनहेतवः ।

वशिष्ठः ।

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितः प्रतिलोमजः ।

याज्ञवल्क्यः ।

नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥

अपिशब्दात् ब्रह्महत्यादिपुरुषपतननिमित्तान्यपि । नीचो हीनवर्णः शूद्रः ।

तथा ।

पतितानामेष एव विधिः स्त्रीणां प्रकीर्त्तितः ।
वासो गृहान्तिके देयमन्नं वासः सरक्षणम् ॥

एष एव । यः पुरुषाणामकृतप्रायश्चित्तानां परित्यागविधिः । यश्च कृतप्रायश्चित्तानां परिग्रहविधिः सः । तत्र विशेषः । वासो गृहान्तिके देयमिति ।

अन्योऽपि विशेषस्तेनैवोक्तः ।

शरणागतबालस्त्रीहिंसकान् संपिबेन्न तु ।
चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् ॥

चीर्णव्रतान् कृतप्रायश्चित्तान् । न संपिबेत् न व्यवहरेदित्यर्थः* ।

इति प्रकाशप्रायश्चित्तानि ।

* न संवसेदिति प्रायश्चित्ततत्त्वादौ पठितम् ।

## अथ रहस्यकृतपापप्रायश्चित्तानि ।

कर्त्तृव्यतिरिक्तैरविज्ञातं पापं रहस्यमित्युच्यते। अतश्च परस्त्रीसम्भोगादिषु वुद्धादिभिः कर्त्तृभिः विज्ञातमपि पापं रहस्यमेव। कर्त्तृव्यतिरिक्तैरनभिज्ञातत्वात्। इदञ्च वक्ष्यमाणं प्रायश्चित्तं यदि कर्त्ता धर्म्मशास्त्रनिपुणस्तर्हि अन्यस्मै अनिवेद्यैव यथोचितं कुर्य्यात्। यदि स्वयमज्ञस्तदा केनापि रहस्यमहापातकादिकं कृतं तत्र तस्य पातकस्य का वा निष्कृतिरिति विदुषः पृष्ट्वा तद्व्रतमनुतिष्ठेत्। तच्च व्रतं द्विविधम्। वक्ष्यमाणाघमर्षणजपादि दानादि च। जपे विदुषोऽधिकारः। स्त्रीशूद्राणां दानादिषु। दानानि च स्मृत्यन्तरेषूक्तानि।

तथाच वृद्धवशिष्ठवृहस्पती।

यत्किञ्चित्कुरुते पापं जन्मप्रभृति मानवः।
अपि गोचर्म्ममात्रन्तु प्राहुर्वेदविदो जनाः॥
दशहस्तेन वंशेन दश वंशान् समन्ततः।
पञ्च वाप्यधिकं दद्यादेतद्गोचर्म्म उच्यते॥

वशिष्ठः।

सुवर्णनाभं कृत्वा तु सखुरं कृष्णमार्गकम्।
तिलैः प्रच्छाद्य यो दद्यात्तस्य पुण्यफलं शृणु॥
कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी।
ददाति यस्तु विप्राय सर्व्वं तरति दुष्कृतम्॥

तथा।

वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च वा ।
तिलान् क्षौद्रेण संमिश्रान् कृष्णान् वा यदि वेतरान् ॥
प्रीयतां धर्मराजो मे यद्वा मनसि वर्त्तते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

एवं माघस्नानादीन्यपि पुराणेष्ववगन्तव्यानि । शास्त्रतश्च स्त्रीशूद्राणामपि रहस्यप्रायश्चित्ताधिकारोऽस्ति ।

याज्ञवल्क्यः ।

अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ।
त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम् ।
अन्तर्जले विशुद्ध्येत गां दत्त्वा च पयस्विनीम् ॥

त्रिरात्रं यावत्कृतोपवासश्चतुर्थदिवसे अघमर्षणेन दृष्ट*मानुष्टुभं भाववृत्तदेवताकं ऋतञ्च सत्यञ्चेति सूक्तं† जलमध्ये निमग्नसकलशरीरस्त्रिर्जपेत् । अनन्तरं पयस्विनीं गां ब्राह्मणाय दत्त्वा शुद्ध्यति ।

तथा ।

लोमभ्यः स्वाहेति दिवा दिवसं मारुतायनः ।
जलेषु चाभिजुहुयाच्चत्वारिंशत् हुताहुतीः ॥

---

* दृष्टम् ऋषिः आनुष्टुभम् अनुष्टुप्छन्दः ।

† ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततो रात्रिरजायत ततः समुद्रोऽर्णवः ॥ १ ॥
समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ ३ ॥

अहोरात्रोषितस्तत्र रात्रावुदवासं कृत्वा प्रातरुदकादुत्तीर्य्य लोमभ्यः स्वाहेत्याद्यैरष्टभिर्मन्त्रैः*रेकैकेन पञ्च पञ्चाहुतीर्जुहुयात्। एतत्प्राणान्तिकप्रायश्चित्तनिमित्ते ब्रह्मवध इत्यपरार्के।

सुमन्तुः ।

देवद्विजगुरून् हत्वाप्सु निमग्नोऽघमर्षणं सूक्तं त्रिरावर्त्तयेन्मातरं भगिनीं गत्वा मातृष्वसारं स्नुषां सखीञ्चान्यद्वागम्यागमनं कृत्वाघमर्षणं वान्तर्जले त्रिरावर्त्तयेदेतस्मात् पूतो भवतीति ।

एतच्चाकामकृते ।

अस्मिन्नेव विषये गोदानाशक्तस्य मनूक्तम् ।

सव्याहृतिप्रणवकाः प्राणायामांस्तु षोड़श ।

अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥ इति ।

अकामतोऽभ्यासे गौतमोक्तम् ।

तद्व्रत एव ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषु प्राणायामैः श्रान्तोऽघमर्षणं जपेदिति ।

तद्व्रत एव श्रान्तः । अत्र त्रिंशद्रात्रव्रतं प्रकृतम् ।

कामकारे तु बौधायनोक्तम् ।

ग्रामात् प्राचीं चोदीचीं वा दिशमुपनिष्क्रम्य स्नातः

---

* लोमभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः स्वाहा मांसेभ्यः स्वाहा मांसेभ्यः स्वाहा स्नायुभ्यः स्वाहा स्नायुभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा ।

अर्हन्तूपवसेद्युक्तस्त्रिरक्कोऽभ्युपयन्नपः ।
मुच्यते पातकैः सर्व्वैस्त्रिर्जपित्वाघमर्षणम् ॥ इति ।

## अथ सुरापानप्रायश्चित्तम् ।

तत्र चत्वारिंशद्घृताहुतीरित्यनुवर्त्तमाने

याज्ञवल्क्यः ।

त्रिरात्रोपोषितो हुत्वा कुष्माण्डीभिर्घृतं शुचिः ।

कुष्माण्डीभिर्यद्देवा देवहेलन*मित्याद्याभिरृग्भिः चत्वारिंशदाज्याहुतीर्जुहुयात् । एतच्चाकामतः पैष्ट्याः सकृत्पाने गौड़ीमाध्व्योः पानाभ्यासे च द्रष्टव्यम् । अत्र कर्म्मणोऽन्ते गोदानं कर्त्तव्यम् । एतच्चाग्रे दर्शयिष्यते ।

अत्रैव विषये त्रिरात्रोपवासयुक्तकुष्माण्डीहोमाशक्तस्य मनूक्तम् ।

कौत्सं जप्त्वाप इत्येतद्वाशिष्ठञ्च प्रति ऋचम् ।

माहित्रं शुद्धवत् यच्च सुरापोऽपि विशुद्ध्यति ॥ इति ।

अत्र षोड़शकृत्व इति मासमिति चानुवर्त्तते । अतः प्रतिदिनं षोड़शकृत्वो मासपर्य्यन्तं नियताहारैरुक्तमन्त्रजपः कार्य्यः । अप इत्येतत् कौत्सं अप नः शोशुचदघं† इत्येतत्सूक्तं कुत्सदृष्टम् ।

---

* यद्देवहेलनमित्यादि मन्त्रः (७४० पृष्ठे १३श पङ्क्तौ द्रष्टव्यः) ।

† अप नः शोशुचदघमग्ने शुशुग्ध्या रयिं । अप नः शोशुचदघं ॥ १ ॥

सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघं ॥ २ ॥

प्रयद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघं ॥ ३ ॥

शुचिवासा उदकान्ते स्थण्डिलमुपलिप्य क्लिन्नवासाः सकृत्पूतेन पाणिनादित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत प्रातः शतं मध्याह्ने शतमपराह्ने शतमपरिमितं चोदितेषु नक्षत्रेषु प्रसृतयावकं प्राश्नीयात् ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते। द्वादशरात्रान्महापातकेभ्यो ब्रह्महत्यासुवर्णस्तेयसुरापानमेव वर्ज्जयित्वा एकविंशतिरात्रेण तान्यपि तरतीति।

एतदेव अकामतः श्रोत्रियाचार्य्यवनस्थवधेऽपि योज्यं। कामतः सकृत् श्रोत्रियादिवधे अकामतः अश्रोत्रियवधाभ्यासे च मनूक्तम्।

अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम्।
मुच्यते पातकैः सर्व्वैः पराकैः शोधितस्त्रिभिः॥ इति।

निमित्तकर्त्तृविषये च हारीतोक्तं द्रष्टव्यम्।

महापातकातिपातकोपपातकानामेकतमे सन्निपाते चाघमर्षणमेव त्रिर्ज्जपेदिति।

निर्गुणवधविषये अनुग्राहकविषये च विष्णूक्तम्।

ब्रह्महत्यां कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेन्धनेनाग्निं प्रज्वाल्याघमर्षणेनाष्टसहस्रमाहुतीर्जुहुयात्तदेतस्मात्† पूतो भवतीति।

हन्तुर्गुणवतो निर्गुणवधविषये प्रयोजकानुमन्तृविषये च मनूक्तम्।

* घृतस्य सक्थस्य इति मन्येथ। † ब्रह्महत्यापातकात्।

अर्हन्तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः ।
मुच्यते पातकैः सर्व्वैस्त्रिर्जपित्वाघमर्षणम् ॥ इति ।

## अथ सुरापानप्रायश्चित्तम् ।

तत्र चत्वारिंशद्घृताहुतीरित्यनुवर्त्तमाने

याज्ञवल्क्यः ।

त्रिरात्रोपोषितो हुत्वा कुष्माण्डीभिर्घृतं शुचिः ।

कुष्माण्डीभिर्यद्देवा देवहेलन*मित्याद्याभिर्ऋग्भिः चत्वारिंशदाज्याहुतीर्जुहुयात् । एतच्चाकामतः पैष्ट्याः सकृत्पाने गौड़ीमाध्व्योः पानाभ्यासे च द्रष्टव्यम् । अत्र कर्म्मणोऽन्ते गोदानं कर्त्तव्यम् । एतच्चाग्रे दर्शयिष्यते ।

अत्रैव विषये त्रिरात्रोपवासयुक्तकुष्माण्डीहोमाशक्तस्य मनूक्तम् ।

कौत्सं जप्त्वाप इत्येतद्वाशिष्ठञ्च प्रति ऋचम् ।
माहित्रं शुद्धवत् पञ्च सुरापोऽपि विशुद्ध्यति ॥ इति ।

अत्र षोड़शकृत्व इति माससमिति चानुवर्त्तते । अतः प्रतिदिनं षोड़शकृत्वो मासपर्य्यन्तं नियताहारैरुक्तमन्त्रजपः कार्य्यः । अप इत्येतत् कौत्सं अप नः शोशुचदघ† इत्येतत्सूक्तं कुत्सदृष्टम् ।

---

* यद्देवहेलनमित्यादि मन्त्रः (७४० पृष्ठे १३श पङ्क्तौ द्रष्टव्यः) ।

† अप नः शोशुचदघमग्ने शुशुग्ध्या रयिं । अप नः शोशुचदघं ॥ १ ॥
सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघं ॥ २ ॥
प्रयद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघं ॥ ३ ॥

वासिष्ठं प्रतीति ऋचं । प्रति स्तोमेभिरुषसं* वसिष्ठ इत्येतत् । माहित्रं महित्रीणामवरस्त्वि†त्येतत् । शुद्धवत्यः एतो न्विन्द्रं स्तवमित्याद्याः‡ । एतेषां मध्ये अन्यतमजपः ।

---

प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयं । अप नः शोशुचदघं ॥ ४ ॥
प्र यदग्नेः सहस्वतो विश्वतो यन्ति भानवः । अप नः शोशुचदघं ॥ ५ ॥
त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघं ॥ ६ ॥
द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघं ॥ ७ ॥
स नः सिन्धुमिव नावयाति पर्षा स्वस्तये । अप नः शोशुचदघं ॥ ८ ॥

(ऋग्वेद. १म. ९७ सू.)

* वसिष्ठ ऋषिः उषा देवता त्रिष्टुप् छन्दः ।

प्रति स्तोमेभिः उषसं वसिष्ठाः गीःऽभिर्विप्रासः प्रथमा अबुध्रन् ।
विऽवर्तयन्ती रजसी समन्ते आविःऽकृण्वती भुवनानि विश्वा ॥ १ ॥
एषा स्या नव्यमायुर्दधाना गूढ्वी तमः ज्योतिषा उषा अबोधि ।
अग्रे एति युवतिरह्रयाणा प्राचिकितत्सूर्यं यज्ञमग्निं ॥ २ ॥
अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

(ऋग्वेद. ७म. ८०सू.)

† महित्रीणां अवः अस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ।

(ऋग्वेद. १०म. १८५सू. १०ऋ.)

‡ एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरं । कृष्टीर्यो विश्वा अभ्यस्त्येक इत् । दम
अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः । घृतात् स्वादीयो मधुनश्च वोचत ॥ २० ॥
यस्यामितानि वीर्या नराधः पर्येतवे । ज्योतिर्न विश्वमभ्यस्ति दक्षिणा ॥ २१ ॥
स्तुहीन्द्रं व्यश्ववदनूर्मिं वाजिनं यमं । अर्यो गयं मंहमानं विदाशुषे ॥ २२ ॥
एव नूनमुपस्तुहि वैयश्वदशमं नवं । सुविद्वांसं चर्कृत्यं चरणीनां ॥ २३ ॥

(ऋग्वेद. ८म. २४सू.)

कामकारेऽपि तेनैवोक्तं द्रष्टव्यम् ।

मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ।

सुगुर्वप्युपहन्त्येनो जप्त्वा वा नम इत्यृचमिति ॥

होमजपयोर्विकल्पः । एतच्च संवत्सरं यावत् प्रत्यहं कार्य्यम् ।
शाकलमन्त्राः देवकृतस्यैनसोऽवयजनमसीत्यादयोऽष्टौ* । नम
इत्यृक् नम इदुग्रं नम आविवास इति† ।

कामतो महापातकसमुच्चये प्रत्येकस्याभ्यासे वापि तदुक्तमेव ।

महापातकसंयुक्तोऽनुगच्छेत् गाः समाहितः ।

अभ्यस्याब्दं पावमानीं भैक्षाहारो विशुद्ध्यतीति ॥ इति ।
पावमान्यः स्वादिष्ठया मदिष्ठयेत्याद्याः‡ ।

---

* ओं देवकृतस्यैनसोऽवयजनमसि स्वाहा । ओं पितृकृतस्यैनसोऽवयजनमसि स्वाहा ।
ओं मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । ओं आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ।
ओं यद्दिवा च नक्तञ्चैनश्चकृम तस्यावयजनमसि स्वाहा । ओं यत् स्वपन्तश्च जाग्रतश्चैनश्च-
कृम तस्यावयजनमसि स्वाहा । ओं यद्विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि स्वाहा ।
ओं एनस: एनसोऽवयजनमसि स्वाहा । ओं अग्नये स्विष्टिकृते स्वाहा ।

† नम इदुग्रं नम आ विवासे नमो दाधार पृथिवीमुत द्यां ।
नमो देवेभ्यो नमो ईश एषां कृतं चिदेनो नमसा विवसे ॥ (६म. ५१सू. ८व.)

‡ मधुच्छन्द ऋषिः पवमानः सोमो देवता गायत्रीच्छन्दः । (ऋग्वेद ९मण्डल १सूक्त)
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥
रक्षोहा विश्वचर्षणिरभि योनिमयो हतं । द्रुणामधस्थमासदत् ॥ २ ॥
वरिवोधा तमो भव मंहिष्ठो वृत्रहन्तमः । पर्षिराधो मघोनां ॥ ३ ॥
अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ ४ ॥
त्वामच्छा चरामसि तदिदर्थं दिवे दिवे । इन्दो त्वे न आशसः ॥ ५ ॥

# अथ सुवर्णस्तेयप्रायश्चित्तम् ।

तत्र त्रिरात्रोपोषित इत्यनुवृत्तौ

याज्ञवल्क्यः ।

ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः । इति ।

त्रिरात्रोपवासानन्तरं जलमध्ये स्थित्वा एकादशकृत्वो नमस्ते रुद्रमन्यव* इति शतरुद्रीयजपं कृत्वा शुद्ध्येदित्यर्थः ।

---

पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ६ ॥

तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश । स्वसारः पार्ये दिवि ॥ ७ ॥

तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिं । त्रिधा तु वारणं मधु ॥ ८ ॥

अभी ममघ्न्या उत श्रीणन्ति धेनवः शिशुं । सोममिन्द्राय पातवे ॥ ९ ॥

अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते । शूरो मघा च मंहते ॥ १० ॥

* नमस्ते रुद्रमन्यव उतोत इषवे नमः । बाहुभ्यामुत ते नमः ॥ १ ॥

या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २ ॥

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ३ ॥

शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥ ४ ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातु धान्यी-धराचीः परासुव ॥ ५ ॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चैनं रुद्रा अभितो दिक्षु श्रिताः सहस्रशो-वैषां हेड ईमहे ॥ ६ ॥

असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ॥ ७ ॥

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वा नोऽहन्तेभ्योऽकरन्नमः ॥ ८ ॥

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप ॥ ९ ॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ २ उत । अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ॥ १० ॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया परि भुज ॥ ११ ॥

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्नि धेहि तम् ॥ १२ ॥

अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥ १३ ॥

नमस्त आयुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ १४ ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ १५ ॥

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः । शष्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः ॥ १७ ॥

नमो बभ्लुशाय व्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमः सूतायाहन्त्यै वनानां पतये नमः ॥ १८ ॥

नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः ॥ १९ ॥

नमः कृत्स्नायतया धावते सत्वनां पतये नमो नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमः ॥ २० ॥

नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तं चरद्भ्यो विकृन्तानां पतये नमः ॥ २१ ॥

नम उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः ॥ २२ ॥

नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥ २३ ॥

नमस् सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमः ॥ २४ ॥

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ २५ ॥

नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो अरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो अर्भकेभ्यश्च वो नमः ॥ २६ ॥

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥ २७ ॥

नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥ २८ ॥

नमः कपर्दिने व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च ॥ ३० ॥

नम आशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ॥ ३१ ॥

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥ ३२ ॥

नमस्सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय नमः श्लोक्याय चावसान्याय च नम उर्वर्याय च खल्याय च ॥ ३३ ॥

नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥ ३४ ॥

नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥ ३५ ॥

नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च ॥ ३६ ॥

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥ ३७ ॥

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥ ३८ ॥

नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥ ३९ ॥

नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च नमो ऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥ ४० ॥

नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ४१ ॥

नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥ ४२ ॥

नमः सिकत्याय च प्रवाह्याय च नमः किंशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च ॥ ४३ ॥

नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्याय च नमः काट्याय च गह्वरेष्ठाय च ॥ ४४ ॥

नमः शुष्क्याय च हरित्याय च नमः पांसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥ ४५ ॥

नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखि-

हते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानां हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥ ४६ ॥

द्रापे अन्धसस्पते दरिद्र नीललोहित। आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मारोङ्मो च नः किञ्चनाममत् ॥ ४७ ॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामे अस्मिन्ननातुरम् ॥ ४८ ॥

या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी। शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥ ४९ ॥

परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः। अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥ ५० ॥

मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकम्बिभ्रदागहि ॥ ५१ ॥

विकिरिद्र विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रं हेतयो न्यमस्मन्निवपन्तु ताः ॥ ५२ ॥

सहस्राणि सहस्रशो बाह्वोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि ॥ ५३ ॥

असङ्ख्याता सहस्राणि ये रुद्रा अधिभूम्याम्। तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ५४ ॥

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि। तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ५५ ॥

नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपश्रिताः। तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ५६ ॥

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ५७ ॥

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ५८ ॥

तथाचात्रिः ।

एकादशगुणान् वापि रुद्रानावर्त्त्य धर्म्मवित् ।
महापापैरपि स्पृष्टो मुच्यते नात्र संशयः ॥ इति ।

शातातपेन विशेष उक्तः ।

मद्यं पीत्वा गुरुदारांश्च गत्वा
स्तेयं कृत्वा ब्रह्महत्याञ्च कृत्वा ।

---

ये भूतानामधिपतयो विशिखासः कपर्द्दिनः । तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ५९ ॥

ये पथाम्पथि रक्षस ऐलवृदा आयुर्युधः । तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ६० ॥

ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ६१ ॥

येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषां सहस्रयोजनेऽवधन्वानितन्मसि ॥ ६२ ॥

यएतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे । तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ६३ ॥

नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणादश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ ६४ ॥

नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतोचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोवन्तु ते नो मृड़यन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ ६५ ॥

नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीची र्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोवन्तु ते नो मृड़यन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ ६६ ॥

यजुर्वेदसंहिता, (माध्य, वाजस, १६ अ ।)

भस्मच्छन्नो भस्मशय्यां शयानो
रुद्राध्यायी मुच्यते सर्व्वपापैः ॥ इति ।

अत्रापि कर्म्मणोऽन्ते ब्राह्मणाय गौर्देया । एतच्चोत्तरप्रकरणे स्फुटीभविष्यति । एतच्चाकामतः । अत्रैवाभ्यासे द्विगुणं कल्प्यम् । कामतस्तु पूर्व्वप्रकरणप्रदर्शितं मन्त्रैः शाकलहोमीयैरिति मनूक्तं द्रष्टव्यम् ।

कामतोऽभ्यासे मनूक्तम् ।

महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः । इति ।

पूर्व्वप्रकरणोक्तं द्रष्टव्यम् । गुणवतोऽपहर्त्तुर्निर्गुणस्वामिकस्वर्णहरणे सुवर्णपरिमाणान्यूनपरिमाणहरणे अनुग्राहकप्रयोजकविषये च मनूक्तं द्रष्टव्यम् ।

सकृज्जप्त्वास्यवामीयं शिवसंकल्पमेव च ।
सुवर्णमपहृत्यापि क्षणाद्भवति निर्म्मलः ॥ इति ।

अस्यवामीयं अस्य वामस्य पलितस्य होतुरिति* सूक्तं

---

* अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥
सप्त युंजन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभिचक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ २ ॥
इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः ।
सप्तस्वसारो अभि सन्नवन्ते यत्र गवां निहिता सप्त नाम ॥ ३ ॥
को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्त्ति ।
भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुपगात् प्रष्टुमेतत् ॥ ४ ॥

पाकः पृच्छामि मनसाविजानन्देवानामेना निहिता पदानि ।
वत्से बष्कयेऽधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ ॥ ५ ॥
अचिकित्वाञ्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान् ।
वि यस्तस्तम्भ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥ ६ ॥
इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।
शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥ ७ ॥
मातापितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।
सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥
युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः ।
अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥
तिस्रो मातॄस्त्रीन् पितॄन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ॥ १० ॥
द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥ ११ ॥
पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥ १२ ॥
पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥ १३ ॥
सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।
सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥ १४ ॥
साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥ १५ ॥
स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥ १६ ॥
अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।

सा कद्रीची कं स्विदर्धं परागात्क स्वित्सूते नहि यूथे अन्तः ॥ १७ ॥
अवः परेण पितरं यो अस्यानुवेद पर एनावरेण ।
कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥
ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः ।
इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥ १९ ॥
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥ २० ॥
यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥ २१ ॥
यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ।
तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥ २२ ॥
यद्गायत्रे अधि गायत्रमाहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत ।
यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुः ॥ २३ ॥
गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।
वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः ॥ २४ ॥
जगता सिन्धुं दिव्यस्तभायद्रथन्तरे सूर्यं पर्यपश्यत् ।
गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्ररिरिचे महित्वा ॥ २५ ॥
उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥ २६ ॥
हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ २७ ॥
गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुंपयते पयोभिः ॥ २८ ॥
अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥ २९ ॥

अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम्।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः॥ ३०॥
अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः॥ ३१॥
य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश॥ ३२॥
द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्।
उत्तानयोश्चम्वो र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात्॥ ३३॥
पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम॥ ३४॥
इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम॥ ३५॥
सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः॥ ३६॥
न वि जानामि यदिवेदमस्मि निण्यः सन्नद्धो मनसा चरामि।
यदा मागन् प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः॥ ३७॥
अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।
ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम्॥ ३८॥
ऋचो अक्षरे परमे व्योमन्यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते॥ ३९॥
सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती॥ ४०॥
गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्॥ ४१॥
तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः।

द्विपञ्चाश दृक्संख्याकं शिवसंकल्पं शिवसंकल्पादृष्टं* षडृचम् ।

ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥ ४२ ॥
शकमयं धूममारादपश्यं विषूवता पर एनावरेण ।
उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥ ४३ ॥
त्रयः केशिन ऋतुथा विचक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥ ४४ ॥
चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ ४५ ॥
इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ ४६ ॥
कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥ ४७ ॥
द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।
तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥ ४८ ॥
यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः ॥ ४९ ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ५० ॥
समानमेतदुदकमुच्चैत्यव चाहभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१ ॥
दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् ।
अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥ ५२ ॥

ऋग्वेदसंहिता (१म. १६४ सू. । २अ. ३अ.) ।

* यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।

## अथ गुरुतल्पप्रायश्चित्तम् ।

तत्र चत्वारिंशदघृताहुतीरित्यतश्चत्वारिंशत्पदानुवृत्तौ

याज्ञवल्क्यः ।

सहस्रशीर्षजापी तु मुच्यते गुरुतल्पगः ।

गौर्देया कर्म्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥ इति ।

सहस्रशीर्षजापी* ताच्छील्ये णिनिः । अतएव जपावृत्तिर्गम्यते । आवृत्तिसंख्या चत्वारिंशत्पदे नियम्यते ।

वृहद्विष्णुः ।

त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः शुध्येत् । इति ।

---

दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥
येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्व्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥
येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन सर्व्वम् ।
येन यज्ञस्तायते सप्त होता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्व्वमोतम्प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥
सुषारथिरश्वानिव यन् मनुष्यान्नेनीयते भीशुभिर्व्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरञ्जविष्ठन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥
यजुर्वेदसंहिता, (माध्य, वाजस, ३४अ ।)

* सहस्रशीर्षा मन्त्रः ७६६ पृष्ठे २१ पङ्क्तौ ।

होमेऽपि चत्वारिंशत्संख्यान्वेति। पृथगेभिः पयस्विनीति। एभिः सुराप सुवर्णस्तेय गुरुतल्पगैस्त्रिभिरपि पृथक् पृथक् त्रिरात्रव्रतस्यान्ते गौर्देयेत्यर्थः। एतच्चाकामकारे।

अत्रैव विषये त्रिरात्रोपवाससहितगोदानाशक्तस्य मनूक्तं द्रष्टव्यम्।

हविष्मन्तीयमभ्यस्य न तमंह इतीति च।
जप्त्वा च पौरुषं सूक्तं मुच्यते गुरुतल्पगः॥ इति।

अत्र मासमित्यनुवर्त्तते षोडशेति च। मासं नियताहारः सन् उक्तसूक्तानामन्यतमसूक्तस्य जपः षोडशसंख्याकः कार्य्यः। हविष्मन्तीयं हविष्मन्तमजरं स्वर्विदीत्येतत्। न तमंहः न तमंहो न दुरितं कुतश्चनेति*। इतीति च इति वा इति मे मन

---

* न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः।
विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते॥ ५॥
त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे।
बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती॥ ६॥
उत वा यो नो मर्चयादनागसोऽरातीवा मर्त्तः सानुको वृकः।
बृहस्पते अप तं वर्त्तया पथः सुगं नो अस्यै देववीतये कृधि॥ ७॥
त्रातारन्त्वा तनूनां हवामहेऽवस्पर्त्तरधिवक्तारमस्मयुम्।
बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन्॥ ८॥
त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि।
या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः॥ ९॥
त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा।
मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि॥ १०॥

इति*। पौरुषं सूक्तं सहस्रशीर्षेति। अकामतोऽध्यावे

अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः।
असि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद्दमिता वीळुहर्षिणः ॥ ११ ॥
अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति।
बृहस्पते मा प्रणक्तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥ १२ ॥
भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनं धनम्।
विश्वा इदर्यो अभिदिप्स्वो मृधो बृहस्पतिर्वि ववर्हा रथाँ इव ॥ १३ ॥
तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम्।
आविस्तत्कृष्व यदसत्त उक्थ्यं बृहस्पते वि परिरापो अर्दय ॥ १४ ॥
बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ १५ ॥
मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः।
आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥ १६ ॥
विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत्साम्नः साम्नः कविः।
स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हन्ता मह ऋतस्य धर्तरि ॥ १७ ॥
तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः।
इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥ १८ ॥
ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १९ ॥

ऋग्वेद. (२म. २३सू. २अ, ६अ)।

* इति वा इति मे मनो गामश्वं सनुयामिति। कुवित्सोमस्यापामिति ॥ १ ॥
प्र वाता इव दोधत उन्मा पीता अयंसत। कुवित्सोमस्यापामिति ॥ २ ॥
उन्मा पीता अयंसत रथमश्वा इवाशवः। कुवित्सोमस्यापामिति ॥ ३ ॥
उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियं। कुवित्सोमस्यापामिति ॥ ४ ॥
अहं तष्टेव वन्धुरं पर्यचामि हृदा मतिम्। कुवित्सोमस्यापामिति ॥ ५ ॥

द्विगुणम् । कामतस्तु सुरापानप्रकरणप्रदर्शितमन्त्रैः शाकल-होमीयैरिति मनूक्तं द्रष्टव्यम् ।

कामतोऽभ्यासे षट्त्रिंशन्मतोक्तम् ।

महाव्याहृतिभिर्होमस्तिलैः कार्य्यो द्विजन्मना ।
उपपातकशुद्ध्यर्थं सहस्रपरिसंख्यया ।
महापातकसंयुक्तो लक्षहोमेन शुद्ध्यति ॥ इति ।

व्यभिचारिणीगमने तु यमोक्तं द्रष्टव्यम् ।

जपेतवास्यवामीयं पावमानीरथापि च ।
कुन्तापं वालखिल्यांश्च निवित्प्रैषान् वृषाकपिम् ।
होतॄन् रुद्रान् सकृज्जप्त्वा मुच्यते सर्व्वपातकैः ॥ इति ।

गुरुतल्पातिदेशविषयेषु तत्समेषु च क्रमेण पादोनमर्द्धञ्च कल्प-नीयम् ।

## अथ संसर्गिप्रायश्चित्तम् ।

तत्र येन पातकिनोपसृष्टेन सह संसर्गः पूर्व्वोक्तकालाव-

---

नहि मे अक्षिपच्चनाच्छान्त्सुः पञ्च कृष्टयः । कुवित्सोमस्यापामिति ॥ ६ ॥
नहि मे रोदसी उभे अन्यं पक्षञ्चन प्रति । कुवित्सोमस्यापामिति ॥ ७ ॥
अभि द्यां महिना भुवमभी मां पृथिवीं महीम् । कुवित्सोमस्यापामिति ॥ ८ ॥
हन्ताहं पृथिवीमिमांनि दधानीह वेह वा । कुवित्सोमस्यापामिति ॥ ९ ॥
ओषमित् पृथिवीमहं जंघनानीह वेह वा । कुवित्सोमस्यापामिति ॥ १० ॥
दिवि मे अन्यः पक्षो अधो अन्यमचीकृषम् । कुवित्सोमस्यापामिति ॥ ११ ॥
अहमस्मि महामहोऽभिनभ्यमुदीषितः । कुवित्सोमस्यापामिति ॥ १२ ॥
गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः । कुवित्सोमस्यापामिति ॥ १३ ॥

ऋग्वेदसंहिता (१०म, ११९सू, ८अ, ६व ।)

चिको येन कृतः स तत्प्रायश्चित्तमेव कुर्य्यात् । न तु रहस्य-पातकिसंसर्गिणः संसर्ग एव दुर्ज्ञेय इति कथं संसर्गप्रायश्चित्त-प्राप्तिः । उच्यते । परदारगमनवत्संसर्गकर्त्तृपुरुषव्यतिरिक्तपुरुषा-न्तरानवगमादस्त्येव संसर्गप्रायश्चित्तप्राप्तिः । अथ संसर्गकर्त्ता पापकर्त्तुः पापयुक्तत्वपरिज्ञाने रहस्यमेव न भवतीति चेत् । माता नब्रूयात् साक्षात् ब्रह्महत्यादिकर्त्तृ रहस्यपापयुक्तत्वम् । तत्संसर्गिणस्तु पापं रहस्यमेव । एवमतिपातक्यादिसंसर्गिणो-ऽपि तदीयमेव प्रायश्चित्तं विज्ञेयम् ।

## अथोपपातकादिप्रायश्चित्तम् ।

याज्ञवल्क्यः ।

प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥

अनादिष्टस्य प्रकीर्णकस्य । उपपातकेष्वजानतः सकृत्कृतेषु शतं प्राणायामाः । अभ्यासे कामतश्च द्विगुणं कल्प्यम् । जातिभ्रंश-करादिषु किञ्चिन्न्यूनं कल्पनीयम् ।

बौधायनः ।

अपि वा चक्षुःश्रोत्रघ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणा-यामैः शुद्ध्यति ।

एतत्प्रकीर्णकाभिप्रायम् ।

तथा ।

शूद्रस्त्रीगमनान्नभोजनेषु पृथक् पृथक् । सप्ताहं सप्त

सप्त प्राणायामान् धारयेत् ।

एतदुपपातकविशेषाभिप्रायम् ।

अभक्ष्याभोज्यामेध्यप्राशनेषु तथावापण्यविक्रयेषु मधु मांस घृत तैल लाक्षा लवण रसान्नवर्ज्जेषु यच्चान्यदप्येवं युक्तं स्यात् सार्द्धमासं द्वादश द्वादश प्राणायामान् धारयेत् ।

एतदप्युपपातकविशेषाभिप्रायम् ।

तथा ।

अथ पातकोपपातकवर्जं यच्चान्यदप्येवं युक्तं स्यात् अर्द्ध-मासं द्वादश द्वादश प्राणायामान् धारयेत् ।

एतच्च जातिभ्रंशकराद्यभिप्रायम् ।

तथा ।

अथ पातकपतनीयवर्जं यच्चान्यदप्येवं युक्तं मासं द्वादश द्वादश प्राणायामान् धारयेत् ।

एतच्च गोवधाद्युपपातकविषयम् ।

तथा ।

अथ पातकवर्जं यच्चान्यदप्येवं युक्तं द्वादशार्द्धमासं* द्वादश द्वादश प्राणायामान् धारयेत् ।

एतच्चोपपातकमहापातकमध्यवर्त्यतिदिष्टतल्पमविषयम् ।

तथा ।

---

* षण्मासानित्यर्थः ।

अथ पातकेषु संवत्सरं द्वादश द्वादश प्राणायामान् धारयेदिति।

एतच्च महापातकविषयम्। अभक्ष्याभोज्ये तूपक्रम्योक्तं प्रायश्चित्तपञ्चकमत्यन्ताभ्यासे समुच्चये वा वेदितव्यम्।

मनुः।

एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम्।
अवेत्यृचं जपेदब्दं यत्किञ्चिदमितीति च॥

अवेति। अव ते हेलो वरुण नमोभिरित्येषा। यत्किञ्चेदं वरुण दैव्य* इत्येषा च। संख्याया अनुक्तत्वात् आवश्यककर्माविरोधिकालेषु जपः कार्य्यः। एतदभ्यासविषये योज्यम्।

अकामतोरेतोविण्मूत्रप्राशने याज्ञवल्क्योक्तं द्रष्टव्यम्।

ओङ्काराभिष्टुतं सोमसलिलं पावनं पिबेत्।
कृत्वा तु रेतोविण्मूत्रप्राशनं हि द्विजोत्तमः॥

सोमसलिलं सोमलतारसं ओङ्कारेणाभिमन्त्रितं पिबेत्।

कामतस्तु सुमन्तूक्तम्।

रेतोविण्मूत्रप्राशनं कृत्वा लशुनपलाण्डुगृञ्जनकुम्भीकादीनामन्येषाञ्च अभक्ष्याणां भक्षणं कृत्वा हंसग्रामकुक्कुटश्वशृगालादिमांसभक्षणं कृत्वा ततः कण्ठमात्रमुदकमवतीर्य्य शुद्धवतीभिः प्राणायामं कृत्वा ब्रह्मणा

---

* यत्किञ्चेदं वरुणदैव्ये जनेभिद्रोहं मनुष्याश्चरामसि अचित्तीमत्तवधर्म्मा युयोपिम मानस्तस्मादेनसो देव रीरिषः। ऋग्वेद ७म, ८९सू. ५श्लोक।

व्याहृतिभिः करगमुदकं पीत्वा तदेतस्मात् पूतो भवतीति ।

ब्राह्मणा ओङ्कारेण व्याहृतिभिश्चाभिमन्त्रितं पिबेदित्यर्थः ।

मनुः ।

प्रतिग्राह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् ।
जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात् ॥

मानसिक उपपातके अज्ञानकृते प्रकीर्णके च याज्ञवल्क्योक्तम्

निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।
त्रैकाल्यसन्ध्याकरणं तत्सर्वं विप्रणश्यति ॥

शातातपोऽपि ।

अनृतं मद्यगन्धञ्च दिवामैथुनमेव च ।
पुनाति वृषलान्नञ्च बहिः सन्ध्याह्युपासिता ॥ इति ।

---

आचारप्रविवेचनाय विदुषां प्राचां प्रपञ्चाधिकाः
श्रौतस्मार्त्तपथे पृथुश्रमजुषां ग्रन्था न सन्तीति न ।
सैषा मत्कृतिरत्र कश्चन गुणो यद्यस्ति सम्भाव्यताम्
कर्त्ता चेन्न चिरन्तनः किमियता हीयेत वः सज्जनाः ॥

ये केचिदत्र सगुणानपि दूषयन्ति
सन्तोऽप्यसन्त इति तेन विचारणीयाः ।
ये तु प्रगल्भमतयः कृतयश्च येषां
लोकेषु ते कृतिमिमामवधारयन्तु ॥

इति मदनपारिजाते मदनक्षितिपालदानजलरूढे ।
नवमः स्तवकोऽयमभूदामोदाक्रष्टपण्डितभ्रमरः ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परा शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमियात्
इयं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः ॥

इति श्रीपण्डितपारिजातभट्टारमल्लेत्यादिविरुदराजीविराजमानस्य
श्रीमदनपालस्य निबन्धे मदनपारिजाताभिधे नवमः
स्तवकः समाप्तः ।

समाप्तोऽयं मदनपारिजातः ग्रन्थः ।



# शुद्धाशुद्धनिर्णयः ।

## मूलस्य ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| पञ्चशाब्दक्रमं | पञ्चषाब्दक्रमं | १ | ८ |
| आकाङ्क्ष तत्र च | आकाङ्क्षतेऽत्र च | ११ | ८ |
| परस्य | वरस्य | १५ | १७ |
| यस्मिन्यस्मिन् | यस्मिन् कस्मिन् | २६ | १८ |
| न्यासोऽथ नाशनः | नासोऽघनाशनः | ६६ | १७ |
| सन्ध्या नित्यमुपासते | सन्ध्यां नित्यमुपासते | ७२ | २३ |
| मासाद्विप्रोऽर्द्धपञ्चमात् | मासान्विप्रोऽर्द्धपञ्चमान् | ८४ | ५ |
| अधीष्य | अधीष्व | १०० | ६ |
| भार्य्येव न सा | भार्य्यैव न सा | १४० | १६ |
| यद्दागामिक्रियामुख्यः | यद्दागामिक्रियामुख्य | १८१ | १५ |
| कार्य्यन्तया | कार्य्यस्तया | २०२ | १८ |
| कुसीदमपि तं | कुसीदमपि तत् | २३० | ४ |
| नमत्येतावानेव | नम इत्येतावानेव | २३१ | ६ |
| शूद्राः | शूद्रः | २३२ | ७ |
| ग्रन्थिं | ग्रन्थिः | २४० | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| धर्म्मद्रवाः | धर्म्मद्रवी | २५१ | १३ |
| सर्व्वतीराणि | सर्व्वतीर्थानि | २६५ | ४ |
| मनुष्ययज्ञस्य | मनुष्ययज्ञश्च | २८२ | २ |
| शुध्येन | शुद्देन | २८८ | १८।१८ |
| अतन्वित | अतन्द्रित | ४१० | २१ |
| अयस्रस्तरे | अघस्रन्तरे | ४१५ | ५ |
| अयश्रस्तर | अघस्रस्तर | ४१५ | ७ |
| संग्रणं | संग्रहणं | ४१८ | ६ |
| बालमूली | तालमूली | ५५४ | ६ |
| वंशान्तराणां | वंशाग्राणां | ५५५ | १ |
| प्रसिद्धत्वा | प्रतिषिद्धत्वे | ५५५ | १ |
| कुण्डगोलो | कुण्डगोलो | ५५८ | ८ |
| श्वेनाजीवी | श्वेनजीवी | ६८८ | ४ |
| एताञ्वै | एताञ्चे | ७६१ | ३ |
| स्यावदन्त | श्यावदन्त | ७७४ | १३ |
| पार्षद | पर्षदि | ७७५ | ४ |
| एवमुत्क्रष्टवर्णषु | एवमुत्कृष्टवर्णेषु | ७८० | २ |
| कीर्णा | कीर्णि | ७८३ | १० |
| भिक्षासम्भावे | भिक्षासम्भवे | ७८८ | ८ |
| शाली | शालि | ७९१ | ४ |
| जहोमि | जुहोमि | ७९९ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ह्लोमा | लोमा | ७९९ | १९ |
| यायि | याजि | ८२२ | १० |
| र्वीना | र्वीला | ८२२ | १३ |
| यायि | याजि | ८२२ | १९ |
| वस्त्रद्वयं | वस्त्रवद्वं | ८३० | १२ |
| राजन्य | राजान | ८३० | १७ |
| निर्गुणं | निर्गुणः | ८३१ | १७ |
| अनल्पे | अत्यल्पे | ८३२ | ३ |
| आत्मानं | आत्मनी | ८३२ | ११ |
| ह्नत्वा | क्तत्वा | ८३२ | १५ |
| ० | उपमन्युः | ८३९ | ६ |
| स्वश्रुः | स्वसुः | ८४६ | १ |
| प्रयुक्तास्त्वस्येव | प्रयुक्तान्त्वस्येव | ८६८ | १ |
| शृङ्गानां | शृङ्गाणां | ८६९ | २ |
| ब्रह्मशब्दवाच्या | ब्रह्महशब्दवाच्या | ८७३ | २ |
| पुरुषानां | पुरुषाणां | ८७३ | ११ |
| ताञ्चैवोपच्छेत् | ताञ्चैवोपयच्छेत् | ८८५ | ४ |
| कल्पगो, प्रसूतावत्सा | कल्पगो, प्रसूतवत्सा | ९०४ | २ |
| सत्सरस्य | वत्सरस्य | ९०६ | ८ |
| ब्रह्मचार्य्यं | ब्रह्मचार्य्यः | ९०९ | १७ |

## टीकायाः ।

| अशुद्धम् | शुद्धम् | पृष्ठे |
|---|---|---|
| एवं वैश्येन | एवं वैश्यायां वैश्येनेत्यादि | १० |
| संकृतिपूतिमाषनश्लिष्टमनुश्चैवगवानां प्रत्येकमाङ्गिरसगौरिवीतसां- कृत्यचिनामकप्रवरचतुष्टयं । | सांकृतिपूतिमाषतश्लिष्टमनुश्चैवगवानां प्रत्येकमाङ्गिरसगौरिवीतसांकृत्य इति त्रयः प्रवराः | १०८ |
| पश्चिमस्यां दिशि | पश्चिमदिशि | १६८ |
| एतद्वचनं मनोरिति कृत्वा ग्रन्थ- कारैर्लिखितं | एतद्वचनं विष्णुपुराणमिति कृत्वा ग्रन्थकारैर्लिखितं किन्तु विष्णुपुराणे एतद्वचनं न लभ्यते परन्तु | २०४ |
| अवसानप्रमाणेन अवसानवदन्य- परिमाणेन | अवसानविधानेन वह्निनामाधारोप- योगिद्रव्यग्रहणेन | २३४ |
| शैप | शेप | २०१ |
| तपती | तपसी | २०१ |
| कालेन सह देशः कालदेशः तस्मात् कालदेशात् । कालात् वर्षा- कालप्रयुक्तात् शैत्यदेशप्रयुक्ता- च्चेत्यर्थः । | देशेन सह कालः देशकालः तस्मात् देशकालात् । देशात् अवतर- णादयोग्यदेशप्रयुक्तात् वर्षादि- कालप्रयुक्ताच्चेत्यर्थः । | २७२ |
| यावोदकैः | यवोदकैः | २८६ |
| यवां | गोमन्त्राणां | २८९ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| पिशाची गुह्यकः सिद्धो भूतोऽमी देवयोनयः इत्यमरोक्तेः भूतग्रामचतुर्व्विधमित्यनेन एतच्चतुर्विधं परिगृह्यते। | भूतग्रामश्चतुर्विध उक्तः कालिकापुराणे २९ अध्याये। यथा हते वराहस्य गणे भर्गमासाद्य ते गणाः। चतुर्भागाः स्वयं भूत्वा भूतं कर्म्मेति वै जगुः॥ भूतत्वमभवत्तेषां चतुर्भागवतान्तथा। वचनात्पद्मजातस्य भूतग्रामास्ततो मताः॥ यो लोकविदितः पूर्व्वं भूतग्रामश्चतुर्विधः। यतस्तेभ्योऽधिका यत्तैस्तद्भूतग्राम उच्यते। इति वः सर्व्वमाख्यातं भूताः शम्भुगणा यथा॥ | २९१ | १ |
| पितृपत्नीमात्राणामित्यर्थः | केवलपितृपत्नीशब्द एव उपात्त इति न तथाच सर्व्वशब्दसमभिव्याहारेण पितृपत्नीशब्द उपात्त इत्यन्वयः। | २९४ | १ |
| गङ्गायामिति देशान्तरीयः पाठः | गङ्गायामिति ग्रन्थान्तरीयः पाठः। | २९५ | २ |
| देशा | ग्रन्था | ३७९ | १ |
| देशा | ग्रन्था | ३८३ | १।२ |
| चैत्रे | चैत्री | ४०४ | २ |
| कन्दशालायां तलयन्त्रे | कन्दुशालायां तैलयन्त्रे | ४५० | २ |
| देशा | ग्रन्था | ४७७ | ५ |
| देशा | ग्रन्था | ४९१ | १ |

